किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी ।
कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ? ॥ १० ॥
उच्छ्वासान्तेऽप्यखिन्नास्ते येषां वक्त्रे सरस्वती ।
कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः ? ॥ ११ ॥
कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥ १२ ॥

---

कविभिरनिबद्ध इति यावत् । अर्थः अभिधेयः अर्थोऽभिधेयो रैवस्तुप्रयोजननि-वृत्तिष्वित्यमरः । अग्राम्या अधमप्रयुज्यमाना वाक्प्रपञ्च ग्राम्यः स च दोषविशेषत्वेन ख्यातः तद्वर्जिता जातिः रचनं श्लेषः शब्दार्थोभयवृत्तिरलङ्कारविशेषः अक्लिष्टः अदुर्बोध इति यावत् रसः शृङ्गारादिः स्फुटः सुव्यक्तः तथा विकटः वैकट्यं हि पदानां नृत्यत्प्रायत्वं तद्गुणविशिष्टः बन्धः गुम्फनमित्यर्थः एतत् कृत्स्नं सर्वं एकत्र एकस्मिन् कवयितरीति शेषः प्रदेशे वा दुष्करं दुर्लभमिति यावत् एते गुणा एकस्मिन् न दृश्यन्ते एतच्च सर्वगुणशालित्वं सहृदयप्रीतिकरमिति भावः ॥ ९ ॥

प्रागुक्तगुणवती रचनैव सर्वत्राद्रियते इति प्रकटयति किमिति । यस्य काव्य-सन्दर्भवाक् सर्ववृत्तान्तगामिनी सर्वविषयप्रकाशिनी प्रागुक्तनवार्थादिसर्वगुणप्रका-शिनी च भारतीव महाभारतकथा इव दिगन्तरं अन्यां दिशं न प्राप्नोति न गच्छति तस्य कवेः काव्येन किम् ? न किमपि प्रयोजनमित्यर्थः यत् सर्वेण न समाद्रियते तत् काव्यं विफलमेवेति भावः ॥ १० ॥

अधुना सर्वानेव कवीन् नमस्करोति उच्छ्वासेति । येषां वक्त्रे वदने सरस्वती वाग्देवी विलसतीति शेषः उच्छ्वासस्य वाग्विश्रान्तिस्थानस्य प्रकरणसमाप्तेरित्यर्थः अन्ते अवसानेऽपि अखिन्नाः अनन्तररचने जातप्रतिभावत्त्वात् अनिवृत्ता इति यावत् आख्यायिकाम् इतिवृत्तं कुर्वन्तीति तथोक्ताः इति वृत्तरचयितार इति यावत् ते प्रसिद्धाः कवीश्वराः कविश्रेष्ठाः कथं न वन्द्याः ? अपि तु वन्द्या एवेत्यर्थः सर्वानेव आख्यायिकाकारान् कवीन् वन्दे इति निष्कर्षः ॥ ११ ॥

कवीनामिति । कर्णस्य दुर्योधनसुहृदः वीरविशेषस्य एव गोचरः स्थानं कर्णः श्रवणमेव गोचरः तं कर्णसमीपे एकपुरुषघातिनी शक्तिरस्तीति श्रुतिगोचरमिति यावदिति वा गतया प्राप्तया वासव इन्द्रः तेन दत्ता तया अन्यत्र वासवानु-

पद[illegible]ो हारी कृतवर्णक्रमस्थितिः।
[illegible]न्द्रस्य गद्यबन्धो नृपायते ॥ १२ ॥
[illegible]मग्राम्यमकरोत् सातवाहनः।
वि[illegible]ः कोषं रत्नैरिव सुभाषितैः ॥ १४ ॥
कीर्त्ति[illegible]स्य प्रयाता कुमुदो[illegible]
सागर[illegible] ॥

---

[illegible]प्राप्ता स्त्री वासवद[illegible]तग्रन्थस्य तया शक्त्या तदाख्येन अस्त्रविशेषेणे-त्यर्थः पाण्डुपुत्राणां पाण्डवानां युधिष्ठिरादीनामिव वासवदत्तया तदाख्यसन्दर्भेण कवीनां दर्पः अहङ्कारः नूनं निश्चितम् अगलत् ध्वंसमवापेत्यर्थः। इन्द्रदत्तामेक-पुरुषघातिनीं शक्तिमवेक्ष्य पाण्डवा यथा विजयाशारहिता हतदर्पा आसन् तथा वासवदत्तासन्दर्भस्य चारुतामवलोक्य सर्वे कवयः इतः समुत्कर्षं कर्त्तुमक्षमा हता-हङ्कारा अभवन्निति निष्कर्षः। एतेन वासवदत्ताग्रन्थस्यातीव समुत्कर्ष उक्तः। उपमालङ्कारः ॥ १२ ॥

पदेति। पदानां सुप्तिङन्तानां बन्धः रचनाविशेषः स्वमण्डलावष्टम्भश्च तेन [illegible]ज्ज्वलः समुद्भासितः हारी मनोहरः हारालङ्कारशाली च अहारीति पाठे नास्ति हा[illegible]री हरो यस्मात् तथाभूतः अन्यत्र न हरति कस्यापि धनमित्यहारीत्यर्थः कृता वर्णानाम् अक्षराणां ब्राह्मणादीनाञ्च क्रमेण रीतिपरीपाट्या मर्यादानुसारेण च स्थितिः सन्निवेशः अवस्थानञ्च यस्मिन् येन वा तथोक्तः भट्टारः प्रभुः हरिचन्द्रः तदाख्यः कश्चित् कविविशेषः तस्य गद्यबन्धः गद्यग्रन्थः पद्यबन्ध इति पाठान्तरं नृपः राजा स इवाचरतीति नृपायते राजवत् समुद्भासते इत्यर्थः। हरिचन्द्रकवेः काव्यं सर्वश्रेष्ठमिति तात्पर्य्यम् ॥ १३ ॥

अविनाशिनमिति। सातवाहनः तदाख्यः कविः शुद्धा निर्दोषा जातिः अल-ङ्कारविशेषो येषु तथाविधैः सुभाषितैः शोभनैः वाक्यैः रत्नैरिव अविनाशिनम् अन-श्वरम् अतिरमणीयत्वेन चिरप्रचलितमिति भावः। अग्राम्यं ग्राम्यदोषवर्जितं कोशं काव्यभाण्डारम् अकरोत् ॥ १४ ॥

कीर्त्तिरिति। प्रवरसेनस्य तदाख्यस्य कवेः अन्यत्र प्रवे प्लवने रसो रागो येषां ते प्रवरसाः वानराः तेषामिनः स्वामी तस्य वानरराजस्य सुग्रीवस्येत्यर्थः कीर्त्तिः

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥ १६॥
निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।

---

काव्यप्रणयनजं यशः यशः कीर्त्तिः समज्ञा चेत्यमरः। कुमुदवत् उज्ज्वला प्रदीप्ता यद्वा कुः पृथिवी तस्य मुत् आनन्दः तया उज्ज्वला, अन्यच्च कुमुदेन तदाख्येन वानरसेनापतिना उज्ज्वला प्रशस्ता सेतुना तदाख्यकाव्यग्रन्थेन अन्यच्च तदाख्यया प्रसिद्धेन मार्गेण कपिसेनेव वानरचमूरिव स[illegible]स्य परं पारं प्रयाता गता। यथा वानरसेना सेतुबन्धेन सागरमुत्तीर्य्य सागरपारस्थितां लङ्कां गता तथा प्रवरसेनस्य यशः तदीयकाव्यग्रन्थस्य प्रचारेण सागरमपि उत्तीर्य्य देशान्तरं गतमिति निर्गलितोऽर्थः॥ १५॥

सूत्रेति। भासः तदाख्यः कविः सूत्रं धरतीति सूत्रधारः नाटकाभिनेतृप्रधानपुरुषविशेषः स्थपतिश्च तेन कृतः आरम्भो येषां तैः बह्वी भूमिका अनुकरणावस्थाविशेषेण वेशपरिवर्त्तः कक्षा च येषु तथोक्तैः पताका वीजं विन्दुः पताका च प्रकरं कार्य्यमेव च, अर्थप्रकृतयः पञ्चेति पञ्चविधानां तृतीया अर्थप्रकृतिः सा च यद्वृत्तन्तु परार्थं स्यात् प्रधानस्योपकारकम्। प्रधानवच्च कल्प्येत सा पताकेति कीर्त्त्यते इत्युक्तलक्षणा वैजयन्ती च तया सहितैः देवकुलैरिव देवमन्दिरैरिव नाटकैः रूपकभेदैः उक्तञ्च दर्पणकारेण। तत् रूपारोपात्तु रूपकमिति। नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्। विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः। सुखदुःखसमुद्भूति नानारसनिरन्तरम्। पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्। दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहनेऽद्भुतम्॥ चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः। गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितमिति च॥ यशः कीर्त्तिं लेभे प्राप। उपमालङ्कारः॥ १६॥

निर्गतास्विति। निर्गतासु उच्चरितमात्रास्वित्यर्थः आस्तां तावद्यावद्रतिरिति भावः अभिनवमुद्भिन्नासु च मधुरा मनोहारिण्यः सान्द्राः घनाः गाढतया प्रयुक्ता इति यावत्। अन्यच्च मधु विद्यते यासु ता मधुरा मकरन्दशालिन्य इत्यर्थः सान्द्राः घनाः पूर्णावस्थां गता इति भावः तथाविधासु मञ्जरीष्विव कुसुमवल्लरीष्विव

प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥ १७ ॥
समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा ॥ १८ ॥
आढ्यराजकृतोत्साहैर्हृदयस्थैः स्मृतैरपि।
जिह्वान्तः कृष्यमाणेव न कवित्वे प्रवर्त्तते ॥ १९ ॥

---

कालिदासस्य सूक्तिषु शोभनेषु वाक्येषु कस्य जनस्य वा प्रीतिः न भवतीति शेषः। अपि तु सर्वस्यैव सहृदयस्य असहृदयस्य च प्रीतिर्भवत्येवेत्यर्थः।

मधुरसान्द्रास्वित्यत्र मधुरसार्द्रास्विति पाठे मधु च्योद्रं तद्वत् अतीव सुस्वाद इति भावः रसः शृङ्गारादिः अन्यत्र मधुरसः मकरन्दः तेन आर्द्रासु संसिक्तासु पूर्णास्विति भावः। उपमालङ्कारः ॥ १७ ॥

समुद्दीपितेति। समुद्दीपितः समुत्तेजितः कन्दर्पः कामः यया बहूनां कामिजनानां वर्णनश्रवणात् कामाविशेन शृङ्गाररसः समुद्भवति हि, तथाचोक्तम् ऋतुमाल्यालङ्कारप्रियजनगान्धर्वकाव्यसेवाभिः। उपवनगमनविहारैः शृङ्गाररसः समुद्भवतीति। तथोक्ता अन्यत्र समुद्दीपितः नेत्रानलेन ज्वालितः दग्ध इति यावत् कन्दर्पः कामः यस्या तथोक्ता, कृतं गौर्य्या ईश्वर्य्याः प्रसाधनम् आराधनं नायकेन नरवाहनदत्तेनेति भावः यस्यां तथाभूता अन्यत्र कृतम् अनुष्ठितं गौर्य्या पार्वत्या कर्त्तृभूतया प्रसाधनम् आराधनं हरस्येति भावः यद्वा गौर्य्याः कर्म्मभूतायाः प्रसाधनम् अलङ्करणं हरेण कर्त्रेति भावः यस्यां तथाभूता बृहत्कथा तदाख्यम् इतिहासकाव्यं हरलीलेव कस्य जनस्य विस्मयाय आश्चर्य्याय गर्वपरिहाराय वा नो भवतीति शेषः अपि तु सर्वस्यैव कवेः सामाजिकजनस्य च विस्मयाय भवतीत्यर्थः। उपमालङ्कारः ॥ १८ ॥

आढ्येति। आढ्यराजो नाम कश्चित् कविः तेन कृताः प्रणीता ये उत्साहाः सन्दर्भविशेषाः तैः हृदयस्थैः चित्तनिहितैः मनसा पर्य्यालोचितैरित्यर्थः। अपि किंवा स्मृतैः कदाचित् स्मरणपदवीं गतैः सद्भिः जिह्वा रसना मदीयेति भावः अन्तःकृष्यमाणेव तया तव वाङ्निःसारणप्रयासे एतेषाम् उत्साहानां पुरस्तादित्याशयेनेति भावः कवित्वे कवित्वं प्रकटयितुमित्यर्थः न प्रवर्त्तते नोत्सहते। उत्साहसन्दर्भं ईदृशनीरसः यतस्ये मम सन्दर्भः न सुष्ठु प्रतिभातुं शक्नोतीति भावः।

तथापि नृपतेर्भक्त्या भीतो निर्वहणाकुलः।
करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम्॥ २०॥
सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः।
शब्दैराख्यायिका भाति शय्येव प्रतिपादकैः॥ २१॥
दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे।
कथञ्चित् नीयते शय्यां कथा नववधूरिव॥ २२॥

---

आढ्यराजकृतोत्साहैरित्यत्र आढ्यराजकृतोच्छ्वासैरिति पाठे उच्छ्वासास्तदाख्यकाव्यभेदास्तैरित्यर्थः। उत्प्रेक्षालङ्कारः॥ १९॥

तथापीति। तथापि जिह्वाया अन्तःक्षुभ्यमाणत्वेऽपि नृपतेः राज्ञः श्रीहर्षस्य सत्प्रवर्तकस्येति भावः भक्त्या अनुरागपारवश्येनेति भावः निर्वहणे परिसमाप्तौ आकुलः परिसमाप्तिर्भवेन्न वेति संशयान इति यावत् अतएव भीतः सहृदयसमाजे अप्रतिभो भविष्यामीति त्रस्तः सन् आख्यायिका इतिहास एव अम्भोधिः समुद्रः तस्मिन् जिह्वया प्लवनं सन्तरणमेव चापलं चपलकर्म चापल्यं वा करोमि। रूपकमलङ्कारः॥ २०॥

सुखेति। सुखस्य आलोचनाजनितस्य निरतिशयानन्दस्य प्रबोधः प्रकृष्टानुभवः यद्वा सुखेन प्रबोधः प्रकृष्टं व्यवहारादीनां ज्ञानम् उक्तञ्च मम्मटभट्टेन। काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे इति। तेन ललिता मनोहारिणी अन्यत्र सुखात् सुखस्वापात् प्रबोधः जागरणं तेन ललिता मनोरमा आख्यायिका इतिहासकाव्य सुवर्णानां सुप्रयुक्तानां वर्णानाम् अक्षराणाम् उक्तञ्च दर्पणे। एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवतीति। अन्यत्र सुवर्णानां हेम्नां घटनया योजनया अन्यत्र कारुकर्मसङ्घटनेन उज्ज्वलैः प्रदीप्तैः प्रतिपादकैः विवक्षितार्थबोधकैः शब्दैः अन्यत्र प्रतिपादकैः सोपानविशेषैः चरणन्यासपीठैर्वा शय्येव पर्य्यङ्क इव आभाति राजते। प्रतिपादुकैरिति पाठान्तरम्। उपमालङ्कारः॥ २१॥

दर्शयन्तीति। मुखे प्रारम्भे वदने च खेदं वैरस्यभावजनितं विरागमिति यावत्। अन्यत्र अनिच्छाजनितं क्लेशमित्यर्थः दर्शयन्ती प्रकटयन्ती तथा पदे पदे प्रतिपदप्रयोगान्ते इति भावः अन्यत्र प्रतिपादविक्षेपमित्यर्थः प्रस्खलन्ती विराम

जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः।

सकलप्रणयिमनोरथसिद्धिश्रीपर्वतो हर्षः ॥ २२ ॥

एवमनुश्रूयते ( १ ) पुरा किल भगवान् स्वलोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः सुनासीरप्रमुखैर्गीर्वाणैः परिवृतो ब्रह्मोद्याः कथाः कुर्वन् अन्याश्च निरवद्या विद्यागोष्ठीर्भावयन् कदाचिदासाञ्चक्रे। (२) तथा-

---

स्पृशन्ती अन्यत्र विच्यवन्ती अतएव नववधूरिव नवोढ़ानायिकेव कथा आख्यायिकाकाव्यं कथञ्चित् अतिप्रयत्नेनेत्यर्थः शय्यां सहृदयहृदयरूप विश्रान्तिस्थानम् अन्यत्र शयनं नीयते प्राप्यते। रूपमालङ्कारः ॥ २१ ॥

साम्प्रतं ग्रन्थनायकमाशिषा संवर्द्धयति जयतीति। ज्वलन् दीप्यमानः प्रताप एव अनलः अग्निः स एव प्राकारः सालः प्रकारावरणः साल इत्यमरः तेन कृता जगतां रक्षा येन तथाभूतः तथा सकलानां प्रणयिनाम् अर्थिनां मनोरथस्य अभीष्टस्य सिद्धौ सम्पूरणे श्रियां सम्पदां पर्वतः गिरिः हर्षयति आनन्दयति जनानिति हर्षः तदाख्यः नृपतिः जयति सर्वोत्कर्षेण वर्त्तते। जयति ज्वलदित्यत्र जय ज्वलदिति पाठे त्वं जय इति व्याख्यायते। रूपकमलङ्कारः ॥ २२ ॥

(१) एवमिति। अनुश्रूयते परम्परया आकर्ण्यते। किलेति प्रसिद्धौ। भगः ऐश्वर्य्याष्टकं विद्यते अस्येति भगवान् तदुक्तम् ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः ज्ञानविज्ञानयोश्चैव षण्णां भग इतीङ्गनेति। स्वलोकं स्वस्य आत्मनः लोकं स्वलोकं ब्रह्मलोकमित्यर्थः। परमे सर्वोत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी ब्रह्मा। विकासिनि विकस्वरे। पद्ममेव विष्टरः आसनं तस्मिन् पद्मविष्टरः। सुनासीरप्रमुखैः इन्द्रप्रभृतिभिः। इन्द्रश्चवाः सुनासीरः पुरुहूतः पुरन्दर इत्यमरः। सुष्ठु नासीरः अग्रगं सैन्यं यस्य स इन्द्रः इति व्युत्पत्तिः। गीर्वाणैः देवैः गीर्वाणा दानवारय इति देवपर्य्यायेष्वमरः। ब्रह्मोद्याः ब्रह्म वेदः वेदस्तत्त्वं तपो ब्रह्मेत्यमरः। परमात्मा वा उद्यते कथ्यते कीर्त्त्यते इति यावत् याभिः तथाभूता ब्रह्मोदिता इति पाठे ब्रह्मणा वेदेन उदिताः उक्ता इत्यर्थः अन्याः वेदबाह्या इत्यर्थः निरवद्याः अनिन्द्याः विद्यागोष्ठीः ज्ञानालोचिनीः सभाः। विभावयन् सम्पादयन्। आसाञ्चक्रे वतस्थे।

सीनञ्च तं त्रिभुवनप्रतीच्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरःसरा महर्षयः सिषेविरे। केचित् ऋचः स्तुतिचतुराः समुदचारयन्। केचिदपचितिभाञ्जि यजूंषि अपठन्। केचित् प्रशंसासामानि जगुः। अपरे विवृतकर्मक्रियातन्त्रान् मन्त्रान् व्याचचक्षिरे। विद्याविसंवादकृताश्च तत्र तेषाम् अन्योन्यस्य विद्याविवादाः प्रादुरभवन्।

(३) अथातिरोषणः प्रकृत्या महातपा मुनिः अत्रेः तनयः तारापतेः भ्राता नाम्ना दुर्वासा द्वितीयेन मन्दपालनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान्धो विस्वरम् अकरोत्। सर्वेषु च शापभयप्रतिपन्नमौनेषु मुनिषु अन्यालापलीलया अवधीरयति कमलसम्भवे च कुमारी किञ्चिदुन्मुक्तबालभावे भूषितनवयौवने नवे वयसि वर्त्तमाना गृहीतचामरप्रचलभुजलता पितामहमुपवीजयन्ती,

---

(२) तथासीनमिति। तथा तेन प्रकारेण आसीनम् उपविष्टं त्रिभुवनप्रतीच्यं त्रिलोकीपूज्यं प्रतीच्यः पूज्य इत्यमरः। ऋचः ऋग्वेदान्। स्तुतिचतुराः स्तुतिषु स्तोत्रपाठेषु चतुराः दक्षाः। समुदचारयन् सम्यक् उच्चारितवन्तः। अपचितिभाञ्जि अपचितिं पूजां भजन्ते इति तथोक्तानि पूजासम्बद्धानीत्यर्थः पूजासपर्य्यापचितिरित्यमरः। यजूंषि मन्त्राख्यवेदभागानित्यर्थः। प्रशंसासामानि स्तुतिपराणि सामानि सङ्गीतमयान् वेदभागानित्यर्थः। जगुः गीतवन्तः। विवृतकर्म्मक्रियातन्त्रान् विवृतानि प्रकटितानि कर्म्मक्रियाणां कार्य्यानुष्ठानानां तन्त्राणि प्रकरणानि यैः येषु वा तान् विद्याविसंवादकृताः विद्यानां दर्शनादीनां विसंवादेन मतभेदेन कृता जनिताः। विवृतक्रतुक्रियातन्त्रान् इति पाठान्तरम्।

(३) अतिरोषणः अतिकोपनः। प्रकृत्या स्वभावेन। तारापतेः चन्द्रस्य। मन्दपालनाम्नेत्यत्र मन्दुपालनाम्नेति पाठान्तरम्। कलहायमानः कलहं कुर्वन्। गायन् सङ्गीतस्वरेण पठन्। विस्वरं विकृताः स्वरा उदात्तादयः यस्मिन् तथाभूतं

(४) निर्भर्त्सनताड़नजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुल्लसमाना शिष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा मदननगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितयं सलीलम् उत्कलहंसकुलकलालापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया विद्वन्मानसनिवासलग्नेन गुणकलापेनेव अंसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया भास्वन्मध्यनायकम् अनेकमुक्तानु-

---

यथा तथा। दुर्वाससि तथा विस्वरं साम गायति यदि कश्चित् दोषमुत्कीर्त्तयति तदा तं प्रति अनेन शापोत्सर्गः क्रियते इत्याशयेनाह शापभयप्रतिपन्नमौनेषु शापात् भयं शापभयं तेन प्रतिपन्नं अङ्गीकृतं मौनं यैः तथाभूतेषु। अन्यालापलीलया अपरकथाच्छलेनेत्यर्थः। अवधीरयति अवज्ञां कुर्वति दुर्वाससं प्रतीति शेषः। कमलसम्भवे पद्मयोनौ ब्रह्मणीत्यर्थः। कुमारीत्यतः प्राक् भगवतीति विशेषणत्वेन क्वचित्पाठः तत्र भगवती प्रागुक्तषड़ैश्वर्य्यशालिनीत्यर्थः। कुमारी अनूढ़ा बाला कौमारव्रतं ब्रह्मचर्य्यं वहती वा। किञ्चिदुन्मुक्तबालभावे ईषद्विगतशैशवे इत्यर्थः। गृहीतचामरप्रचलभुजलता गृहीतेन चामरेण वालव्यजनेन प्रचला चञ्चला भुज एव लता यस्याः तथोक्ता। प्रचलद् भुजलता इति पाठान्तरम्। पितामहं ब्रह्माणम्। उपवीजयन्ती आराधयन्ती।

(४) निर्भर्त्सनेति। निर्भर्त्सनाय विस्वरपाठकं दुर्वाससं प्रति तिरस्करणाय ताड़नं प्रहारः तेन जनितः उद्भूतः रागो लौहित्यं ययोः तथाभूताभ्याम् स्वभावारुणाभ्यां सहजरक्ताभ्याम्। समुल्लसमाना सम्यक् विद्योतमाना। पदक्रममुखरेण पदयोः क्रमः विक्षेपः तेन मुखरं सशब्दं रणदित्यर्थः तेन। वाचालितचरणा वाचालितौ वदन्तौ चरणौ यस्याः तथोक्ता; मदननगरतोरणस्तम्भविभ्रम मदनस्य कामस्य नगरं अवस्थानस्थानं तस्य तोरणः बहिर्द्वारं तोरणोऽस्त्री बहिर्द्वारमित्यमरः। तस्य स्तम्भौ तयोः विभ्रम इव विभ्रमः विलासः यस्य तथाभूतं जङ्घाद्वितयम् ऊरुयुगलम्। मदनेत्यत्र धर्मेति पाठान्तरम् अप्रसिद्धत्वादुपेक्ष्यम्। उत्केति उत्कानाम् उत्सुकानां कलहंसानां कुलस्य कलः मधुरास्फुटरवः स एव आलापः तद्वति। मेखलादाम्नि काञ्चीगुणे। विद्वन्मानसनिवासलग्नेन विदुषां मानसं

यातम् अपवर्गमार्गमिव हारमुरसा समुद्वहन्ती (५) वदन-प्रविष्टसर्वविद्यावधूचरणालक्तकरसपाटलेन इव स्फुरता दशन-च्छदेन विराजमाना संक्रान्तकमलासनकृष्णाजिनप्रतिमां मधुरगीताकर्णनावतीर्णशशिहरिणाम् इव कपोलस्थलीं दधाना तिर्य्यक् सावज्ञम् उन्नमितैकभ्रूलता श्रोत्रमेकम् (६) विस्वर-श्रवणकलुषितं प्रक्षालयन्तीव अपाङ्गनिर्गतेन लोचनांशुजल-प्रवाहेण इतरश्रवणेन च विकसितसिन्धुवारमञ्जरीजुषा हसतेव प्रकटितविद्यामदा श्रुतिप्रणयिभिः प्रणवैरिव कर्णा-वतंसकुसुममधुकरकुलैः उपास्यमाना सूक्ष्मविमलेन प्रज्ञा-

---

हृदयं तत्र निवासः स्थावस्थितिः तेन लग्नं संसक्तं तेन गुणकलापेनेव उपवीत-सूत्रसङ्गेनेव। अ सावलम्बिना स्कन्धविलम्बमानेन ब्रह्मसूत्रेण यज्ञोपवीतेन। भास्व-न्मध्यनायकं भास्वान् दीप्यमानः मध्यनायकः मध्यमणिः यस्य यत्र वा तम्। अनेक-मुक्तानुयातम् अनेकाभिर्मुक्ताभिः मुक्ताफलैः अनुयातं ग्रथितम् अपवर्गमार्गमिव मुक्तिपथमिव अपवर्गमार्गस्य मुक्ताजालस्य च विशुद्धस्वच्छत्वात्तथोत्प्रेक्षितम्।

(५) वदनेति। वदने मुखे प्रविष्टानां सर्वासां विद्यानामेव वधूनां नारीणां चरणेषु ये अलक्तकरसा लाक्षाद्रवाः तेन पाटलः रक्तः तेनेव। स्फुरता विलसता। दशनच्छदेन ओष्ठाधरेणेत्यर्थः। संक्रान्तेति संक्रान्ता सलग्ना कमलासनस्य ब्रह्मणः कृष्णाजिनस्य कृष्णमृगचर्म्मणः प्रतिमा प्रभा यस्मिन् तथाभूताम् अतएव मधुरेति मधुरस्य गीतस्य आकर्णनाय श्रवणाय अवतीर्णः उपस्थितः शशिनः चन्द्रस्य हरिणः कलङ्करूपो मृगो यत्र तादृशीं कपोलस्थलीं गण्डदेशम्। तिर्य्यक् कुटिलं यथा तथा। सावज्ञम् अवज्ञया विस्वरपाठकं दुर्वाससं प्रति जनितयेति भावः सह वर्त्तमानं यथा तथा। उन्नमितैकभ्रूलता उन्नमिता ऊर्द्धं नीता एका भ्रूलतेव यया तथोक्ता। श्रोत्रं कर्णम्।

(६) विस्वरेति। विस्वरश्रवणेन विरुद्धस्वराकर्णनेन कलुषितं दूषितं कलङ्कितमिति यावत् अपाङ्गनिर्गतेन नेत्रप्रान्तनिर्गलितेन। लोचनांशुजलप्रवाहेण लोचनस्य नयनस्य अंशवः किरणा एव जलानि तेषां प्रवाहः स्रोतः तेन। इतर-

प्रतानेनेव अंशुकेनाच्छादितशरीरा वाङ्मयमिव निर्मलं दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास।

(७) दृष्ट्वा च तां तथा हसन्तीं स मुनिः आः पापे! दुर्गृहीतविद्यालवावलेपदुर्विदग्धे माम् अपि उपहससि इत्युक्त्वा शिरःकम्पविशीर्य्यमाणबन्धविशरैः उन्मिषत्तडित्तन्तु-पिङ्गलिम्नो जटासञ्चयस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण

---

श्रवणेन अपरकर्णेन। विकसितेति विकसिता विकासं गता या सिन्दुवारस्य पुष्पतरुविशेषस्य मञ्जरी वल्लरी तद्जुषा तच्छालिना अतएव हसतेव दुर्वाससं प्रति कृतावहेलनजनितं हासं कुर्वतेव। प्रकटितेति प्रकटितः प्रकाशितः विद्यामदः विद्याजनितोऽहङ्कारः यया तादृशी। श्रुतिप्रणयिभिः श्रुतिभिः कर्णैः सह यः प्रणयः स विद्यते येषां तैः श्रुतिसुखं जनयद्भिरिति यावत् मधुरध्वनित्वादिति भावः अन्यत्र श्रुतिषु वेदेषु प्रणयः सर्वोत्कर्षेण प्रियता तद्वद्भिः। प्रणवैरिव ब्रह्मप्रतिपादक-मन्त्रविशेषैरिव। कर्णावतंसकुसुममधुकरकुलैः कर्णभूषणीकृतपुष्पलग्नभ्रमरवृन्दैः उपास्यमाना सेव्यमाना। प्रज्ञाप्रतानेन प्रज्ञा प्रकृष्टा मतिः तस्याः प्रतानः प्रसरः तेनेव। अंशुकेन वसनेन। वाङ्मयमिव विद्यामिव। दशनज्योत्स्नालोकं दन्त-चन्द्रिकाद्योतमिव। विकिरन्ती वर्षन्ती।

(७) पापे इत्यत्र पापकारिणीति पाठान्तरम्। दुर्गृहीतेति दुर्गृहीतः दुरभ्यस्तः यः विद्यालवः विद्यालेशः स्वल्पमात्रा विद्येत्यर्थः तेन अवलेपः गर्वः तेन दुर्विदग्धा दुर्विनीता तत्सम्बुद्धौ। मामपि दुर्वाससमपीत्यर्थः। शिरःकम्पेति शिरसः कम्पेन घूर्णनेन विशीर्य्यमाणा विच्याव्यमानाः ये बन्धविसराः बन्धनसञ्चयाः तैः। उन्मिषन् उद्यन् तडित्तन्तूनां विद्युद्दाम्नां पिङ्गलिमा पिङ्गत्वं यस्य तथाभूतस्य। जटासञ्चयस्य जटासमूहस्य। शिरःकम्पशीर्य्यमाणबन्धविशरारोरुन्मिषत्पिङ्गलिम्नो जटाकलाप-स्येति पाठे शिरःकम्पेन शीर्य्यमाणो यो बन्धः तेन विशरारोर्विस्रंसमरस्य। उन्मिषन् पिङ्गलिमा यस्य तथाभूतस्य जटाकलापस्य जटासमूहस्येत्यर्थः। रोचिषा अर्चिषा शोचिषेति पाठे स एवार्थः रोचिः शोचिरुभे स्त्रियाविस्यमरः। सिञ्चन्निव वर्षन्निव रोषदहनद्रवेण कोपाग्निप्रस्रवेण।

दश दिशः (८) कृतकालसन्निधानामिव अन्धकारितललाटपट्टाष्टापदाम् अन्तकान्तःपुरमण्डनपत्रभङ्गमकरिकां भ्रुकुटिमाबध्नन् अतिलोहितेन चक्षुषा अमर्षदेवतायै रुधिरोपहारमिव प्रयच्छन् निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भयपलायमानां वाचमिव निरुन्धन् अंसस्रंसिनः शापशासनपट्टस्येव ग्रथ्नन् ग्रन्थिम् अन्यथा कृष्णाजिनस्य स्वेदकणप्रतिबिम्बितैः शापभयात् शरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्वावयवः कोपकम्पतरलिताङ्गुलिना करेण प्रसादनलग्नाम् अक्षरमालामिव अक्षमालाम् आक्षिप्य कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह।

---

(८) कृतेति। कृतं कालस्य अन्तकस्य सन्निधानम् उपस्थितिर्यस्यां तथाभूताम्। अन्धकारितेति अन्धकारितं ललाटपट्टमेव अष्टापदं हेम यया तादृशीम्। अन्तकेति अन्तकस्य यमस्य अन्तःपुरम् अवरोधकामिनीमित्यर्थः तस्य मण्डनाय अलङ्करणाय पत्रभङ्गस्य मकरिका मकराकारकिसलयच्छेद इत्यर्थः तां रूपकमलङ्कारः। अन्तकमण्डनेति पाठस्तन्मण्डनमकरिकाया अयुक्तत्वादुपेक्ष्यः। भ्रुकुटिं भ्रूभङ्गिम् आतन्वन् कुर्वन्नित्यर्थः। अतिलोहितेन अतिरक्तेन। रुधिरोपहार रक्तरूपं पूजाद्रव्यम्। अमर्षदेवतायै अमर्षः क्रोधः तस्य अधिष्ठात्री वा देवता तस्यै। रुधिरोपहारमित्यत्र स्वरुधिरोपहारमिति पाठान्तरम्। प्रयच्छन्नर्पयन्। निर्दयेति निर्दयं दृढं यथा तथा दष्टः दशनच्छदः अधरो येन तथाभूतः। दन्तांशुच्छलेन दशनकिरणनिर्गमनव्याजेन। भयपलायमानां भयात् शापाद्विनिवर्त्तनादिति भावः पलायमानां प्रतिष्ठमानाम्। निरुन्धन् निरुद्धां कुर्वन्। निर्दयदष्टदशनच्छदभयपलायमानामिव वाचं रुन्धन् दन्तांशुच्छलेनेति पाठे निर्दयं यथा तथा दष्टः यो दशनच्छदः तस्मात् भयेन पलायमानामितीति समासः। अंसस्रंसिनः स्कन्धावलम्बिनः संरम्भादिति भावः कृष्णाजिनस्य कृष्णमृगचर्म्मणः शापस्य शासनपट्टः सनन्दफलकं तस्येव तस्य स्वतः शुक्लत्वात् लिपिकृष्णत्वाच्च स्वेतबिन्दुचित्रितकृष्णाजिनतुल्यत्वात् तथोत्प्रेक्षितम्। ग्रन्थिं अन्यर। सुक्ष्मातिशयात् अन्यप्रकारेषु

(९) अत्रान्तरे स्वयम्भुवोऽभ्यासे समुपविष्टा देवी मूर्त्तिमती पीयूषफेनपटलपाण्डुरं कल्पद्रुमदुकूलवल्कलं वसाना बिसतन्तुमयेनांशुकेन उन्नतस्तनमध्यबद्धगात्रिकाग्रन्थिः तपोबलनिर्जितत्रिभुवनजयपताकाभिरिव तिसृभिर्भस्मपुण्ड्रकराजिभिर्विराजितललाटाजिरा स्कन्धावलम्बिना सुधाफेनधवलेन तपःप्रभावकुण्डलीकृतेन गङ्गास्रोतसेव योगपट्टकेन विरचितवैकक्ष्यका सव्येन ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव स्फटिककमण्डलुं करेण कलयन्ती दक्षिणमक्ष-

---

विकृतभावेनेति भावः ग्रथ्नन् बध्नन्। स्वेदेति स्वेदकणेषु रोषजनितेषु घर्मबिन्दुषु प्रतिबिम्बितैः प्रतिफलितैः। प्रतिपन्नसर्वावयवः समाश्रितसमस्तदेहः। कोपकम्पतरलिताङ्गुलिना कोपेन यः कम्पः तेन तरलिताश्चलिता अङ्गुलयो यस्य तथोक्तेन कोपतरलिताङ्गुलिनेति पाठान्तरम्। प्रसादनलग्नां प्रसादनार्थं सान्त्वनार्थं लग्ना समागता तां प्रसादलग्नामिति पाठेऽपि स एवार्थः। अक्षरमालामिव वर्णावलीमिव अक्षमालां जपमालिकाम् आक्षिप्य परित्यज्येत्यर्थः विक्षिप्येति पाठेऽपि स एवार्थः। कामण्डलवेन कमण्डलुस्थितेन। समुपस्पृश्य आचम्य।

(९) अत्रान्तरे इत्यादि। अभ्यासे अन्तिके। पीयूषेति पीयूषममृतं तस्य फेनपटलं फेनराशिः तद्वत् पाण्डुरं शुभ्रम्। कल्पद्रुमेति कल्पद्रुमस्य सुरतरुभेदस्य दुकूलं वसनमिव वल्कलं तत्। वसाना परिदधाना। बिसतन्तुमयेन मृणालसूत्रमयेन। अंशुकेन सूक्ष्मवसनेन। उन्नतेति उन्नतयोः स्तनयोर्मध्ये बद्धा गात्रिकाग्रन्थिर्ग्रन्थिविशेषः यया तथोक्ता। तपोबलेति तपसां चान्द्रायणादीनां बलेन निर्जितस्य नितरां जितस्य त्रिभुवनस्य जयपताकाभिरिव जयध्वजैरिव तपोनिर्जितत्रिभुवनजयपताकाभिरिव इति पाठान्तरम्। भस्मपुण्ड्रकराजिभिः विभिर्भस्मकृततिलकैरित्यर्थः। विराजितललाटाजिरा विराजितं शोभितं ललाटाजिरं भालचत्वरं यस्याः तथाभूता। सुधाफेनधवलेन अमृतफेनपाण्डुरेण फेनधवलेनेति पाठान्तरम्। तपःप्रभावकुण्डलीकृतेन तपसां प्रभावेण बलेन कुण्डलीकृतेन कुण्डलवत् वर्तुलतां नीतेन सङ्कोचं नीतेनेति भावः। योगपट्टकेन तदाख्येन उपवीताकारेण अभेदे तृतीया। विरचितवैकक्ष्यका विरचितं गृहीतं वैकक्ष्यकं

मालाकृतपरिक्षेपम् (१०) कम्बुनिर्मितोर्मिकादन्तुरितं तर्जनतरलिततर्जनीकम् उत्क्षिपन्ती हस्तम् आः पाप! क्रोधोपहत! दुरात्मन्! अज्ञ! अनात्मज्ञ! ब्रह्मबन्धो! मुनिखेटकापसदनिराकृत! आत्मस्खलितविलक्ष! कथम् सकलसुरासुरमुनिमनुजवृन्दवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसि इत्यभिदधाना (११) रोषविमुक्तवेत्रासनैः ओङ्कारमुखरितमुखैः उत्क्षेपदोलायमानजटाभारभरितशिरोभिः परिकरबन्धभ्रमितकृष्णाजिनच्छायाश्यामायमा-

---

तिर्य्यग् वक्षसि विक्षिप्तो हारविशेषः यया तथाभूता वैकक्ष्यकाकारं यौगपट्टं धारयन्तीत्यर्थः। सव्येन वामेन। ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव ब्रह्मणः उत्पत्तिः यस्मात् तत् पुण्डरीकं श्वेतपद्मं पुण्डरीकं सिताम्भोजमित्यमरः तस्य मुकुलमिव कलयन्तीं धारयन्ती। अक्षमालाकृतपरिक्षेपम् अक्षमालया जपमालया कृतः परिक्षेपः वेष्टनं यस्य तम् अक्षमालापरिक्षेपमिति पाठे अक्षमालया परिक्षेपः यस्य तथोक्तम्।

(१०) कम्बुनिर्म्मितोर्म्मिकादन्तुरितं कम्बुः शङ्खः शङ्खः स्यात् कम्बुरस्त्रियामित्यमरः तेन निर्म्मिता या ऊर्म्मिका अङ्गुरीयकं तेन दन्तुरितः दन्तवत् कृतः युक्त इति भावः तम्। तर्जने आक्रोशने तरलिता चलिता तरङ्गितेति पाठे तरङ्गवत् कृता तर्जनी प्रदेशिनी यस्य तम्। हस्तमित्यत्र करमिति पाठान्तरम्। क्रोधोपहत! क्रोधेन उपहतः विनाशं गतः तत्सम्बुद्धिः आत्मविनाशार्थमेव ते क्रोध इति भावः ब्रह्मबन्धो निकृष्टब्राह्मण! मुनिखेटक मुनिखेट इति पाठद्वयं मुनिषु ये खेटा अधमाः तेषु अपसदाः नीचाः। तैः निराकृतः तेभ्योऽपि दूषितत्वात् ताड़ित इत्यर्थः। तत्सम्बुद्धौ निराकृते इति पाठे मुनिखेटापसदैः निराकृतिः निराकरणं दूरीकरणं यस्य तथोक्तः तत्सम्बुद्धिः। आत्मस्खलितेति आत्मनः स्वस्य स्खलितदोषं विस्वरपठनजनितमिति भावः तेन विलक्षः लज्जितः लज्जां प्राप्तुं योग्य इत्यर्थः तत्सम्बुद्धिः।

(११) रोषेति। रोषेण दुर्वाससं प्रति क्रोधेन विमुक्तानि त्यक्तानि वेत्रासनानि वेतसनिर्म्मितानि आसनानि यैः तथोक्तैः। ओङ्कारेति ओङ्कारेण मुखरितं ध्वनितं मुखं येषां तैः सततं प्रणवमुच्चरद्भिरिति भावः। उत्क्षेपेति उत्क्षेपेण

नदिवसैः (१२) अमर्षनिश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिः अग्निहोत्रपवित्र-भस्मस्मेरललाटैः कुशतन्तुचारुचामरचीरचीवरिभिः आषा-ढिभिः प्रहरणीकृतदण्डकमण्डलुमण्डलैः मूर्त्तैश्चतुर्भिर्वेदैः सह वृषीमपहाय सावित्री समुत्तस्थौ।

ततो मर्षय (१३) भगवन्! अभूमिरेषा शापस्येत्यनु-नाथ्यमानोऽपि विबुधैः उपाध्याय! स्खलितमेकं क्षमस्वेति बद्धाञ्जलिपुटैः प्रसाद्यमानोऽपि स्वशिष्यैः पुत्र! मा कृथा-स्तपसः प्रत्यूहमिति निवार्य्यमाणोऽप्यत्रिणा रोषावेशवि-वशो दुर्वासा दुर्विनीते! व्यपनयामि ते विद्यालवावलेपविशेष-

---

उत्थानैव दोलायमानैः चलद्भिरित्यर्थः जटाभारैः जटासमूहैः भरितानि आपूरितानि शिरांसि येषां तैः। परिकरेति परिकरबन्धः कटिबन्धः तेन भ्रमितं घूर्णितं यत् कृष्णाजिनं तस्य छायया कान्त्या प्रभया छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमना-तपे इत्यमरः। श्यामायमाना कालिमानमापद्यमाना दिवसाः यैः तथाभूतैः।

(१२) अमर्षेति अमर्षेण क्रोधेन यः निश्वासः स एव दोला दोलनयन्त्रं पूरणरे-चनोभयरूपत्वात् निश्वासस्येति भावः तया प्रेङ्खोलितः आन्दोलितः ब्रह्मलोकः यैः तथा-भूतैः सोमरसमिव सोमो नाम लताविशेषः तस्य रसः तमिव। स्वेदविसरव्याजेन घर्म्मप्रसरच्छलेन। स्रवद्भिः क्षरद्भिः। अग्निहोत्रेति अग्निहोत्रस्य पवित्रं विशुद्धं यत् भस्म तेन स्मेरा विकस्वरा ललाटा येषां तैः। कुशेति कुशानां तन्तवः सूत्राणि एव चारूणि मनोज्ञानि चामराणि येषां तथाभूताः कुशतन्तुचारुचामराः तथा चीराणि वस्त्रखण्डानि चीवराणि कौपीनानि सन्ति येषां तथोक्ताः तैः। आषा-ढिभिः पलाशदण्ड आषाढः तद्वद्भिः। प्रहरणीकृतेति प्रहरणीकृताः प्रहरणार्थम् उद्धृताः क्रोधादिति भावः दण्डाः कमण्डलुमण्डलानि कमण्डलुसमूहाश्च यैः तथा-भूतैः। मूर्त्तैः देहवद्भिः। वृषीम् आसनम्।

(१३) मर्षय क्षमस्व। अभूमिः अस्थानम् अयोग्यस्थानमित्यर्थः। अनुनाथ्य-मानः प्रार्थ्यमानः। अनुशास्यमान इति पाठे उपदिश्यमानः इति अर्थः। उपाध्याय

जनिताम् उन्नतिमिमाम् अधस्ताद्गच्छ मर्त्यलोकम् इत्युक्त्वा तच्छापोदकं विससर्ज। ततः प्रतिशापदानोद्यतां सावित्रीं सखि! संहर रोषम् असंस्तुतमतयोऽपि जात्यैव द्विजन्मानो माननीया इत्यभिदधाना सरस्वती एव न्यवारयत्।

अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान् कमलोत्पत्तिलग्नमृणालसूत्रामिव (१४) धवलयज्ञोपवीतिनीं तनुमुद्वहन् उद्गच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य्य शापकलकलम् अतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सुधीरमुवाच ब्रह्मन्! न खलु साधुसेवितोऽयं पन्थाः येनासि प्रवृत्तः निहन्त्येष

---

आचार्य्येति सम्बोधनम्। स्खलितम् अपराधमित्यर्थः। प्रत्यूहं विघ्नं शापदाने तपसः क्षयादिति भावः। अत्रिणा दुर्वाससः पित्रा। दुर्विनीते दुष्टे!। व्यपनयामि नाशयामि। अधस्तात् अधोभूमिम्। विससर्ज तत्याज। असंस्तुतेति न संस्तुता न विशुद्धेति यावत् मतिः येषां तथाभूताः। असंस्कृतमतय इति पाठान्तरेऽप्ययमेवार्थः।

(१४) कमलेति। कमलात् नारायणनाभिपद्मात् या उत्पत्तिः जन्म स्वस्येति भावः तया हेतुभूतया लग्नं संसक्तं मृणालसूत्रं योनिपद्मस्येति भावः यस्यां तथाभूतामिव। उद्गच्छदिति उद्गच्छन् उदयमानः अच्छस्य विशदस्य अङ्गुलीयकमरकतस्य मरकतनिर्म्मिताङ्गुरीयकस्येत्यर्थः मयूखलताकलापः किरणावलीसमूहः यस्मात् तथाभूतेन। त्रिभुवनेति त्रिभुवनस्य उपप्लवः संचयः तस्य प्रशमाय कुशापीडं कुशतनुसमूहं धारयतीति तथोक्तेनेव कुशानां माङ्गलिकत्वेन अमङ्गलनाशकत्वादिति भावः। भावीति भाविनः भविष्यतः कृतयुगस्य सत्ययुगस्य आरम्भे यः सूत्रपातः न्यासः तमिव। दशनकिरणैः दन्तमयूखैः। सरस्वतीति सरस्वत्याः शप्ताया इति भावः प्रस्थानं ब्रह्मलोकात् मर्त्यलोके गमनमित्यर्थः तस्य मङ्गलपटहः

आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यतीति। एतावदभिधाय विसर्जितसुरासुरमुनिमनुजमण्डलः ससम्भ्रमोपगतनारदस्कन्धविन्यस्तहस्तः समुचिताह्निककरणाय उदतिष्ठत्। सरस्वत्यपि शप्ता किञ्चिदधोमुखी (१७) धवलकृष्णशारां कृष्णाजिनलेखामिव तपसि दृष्टिमुरसि पातयन्ती सुरभिनिश्वासपरिमललग्नैर्मूर्त्तैः शापाक्षरैरिव षट्चरणचक्रैराकृष्यमाणा शोकशिथिलितहस्ता अधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुररवव्याहारहृतैः भवनकलहंसकुलैः ब्रह्मलोकनिवासिहृदयैरिवानुगम्यमाना समं सावित्र्या गृहमगात्।

अत्रान्तरे सरस्वत्यवतरणवार्त्तामिव कथयितुं मध्यलोकमवततार अंशुमाली (१८) क्रमेण च मन्दायमाने मुकुलितविसिनीविरहव्यसनविषण्णसरसि वासरे मधुमदमुदितकामिनीकोपकुटिलकटाक्षक्षिप्यमाणे इव क्षेपीयः

---

असविरहितामित्यत्र असविरहदुःखितामिति पाठान्तरम्। समुचिताह्निककरणाय समुचितं यत् आह्निकं दिवसकार्यं तस्य करणं तस्मै।

(१७) धवलकृष्णसारां धवलः श्वेतः कृष्णः नीलः ताभ्यां शारा शवला संवलितेत्यर्थः ताम्। कृष्णाजिनलेखामिव कृष्णमृगचर्म्मश्रेणीमिव। तपसि तपश्चरणाय। षट्चरणचक्रैः भ्रमरनिवहैः। षट्चरणकदम्बकैरिति पाठान्तरम्। शोकेति शोकेन शापजनितेन दुःखेनेत्यर्थः शिथिलितौ तेजोरहितौ हस्तौ यस्या सा अधोमुखीभूतेन अधोमुखतां गतेन। नखेति नखमयूखानां नखकिरणानां जालकं समूहः तेन। नूपुरेति नूपुरयोः रवा निस्वना एव व्याहाराः वचनानि व्याहार उक्तिर्लपितं भाषितं वचनं वच इत्यमरः। तैः हृता आकृष्टाः तैः। नूपुरव्याहाराहृतैरिति पाठान्तरम्।

(१८) अंशुमाली सूर्यः। मध्यलोकं मर्त्त्यभूमिम्। मन्दायमाने प्रायश्च विगच्छतीति यावत्। मुकुलितेति मुकुलितानां मुकुलतां मन्तुं प्रवृत्तानामिति

क्षितिधरशिखरमवतरति (१८) तरुणतरकपिलपनलोहिते लोकैकचक्षुषि भगवति सवितरि प्रस्नुतमहिष्युधःक्षरत्क्षीर-धाराधवलितेषु आसन्न-चन्द्रोदयोद्दामक्षीरोदक्षालितेषु इव दिव्याश्रमोपशल्यकेषु अपराह्णप्रचारप्रचलिते चामरिणि चामीकरतटताडनरटितरदने रदति (२०) सुरस्रवन्तीरोधांसि स्वैरम् ऐरावते प्रस्तानेकविद्याधराभिसारिकासहस्रचर-

---

यावत्। बिसिनीनां पद्मिनीनां विरहः कान्तस्य सूर्य्यस्य विच्छेद इति यावत् एव व्यसनं दुःखं तेन निषस्य विषादं गतं निजकन्यानामिव स्वोदरवर्त्तिनीनां पद्मिनीनां दर्शनादिति भावः सरः सरोवरं यस्मिन् तथाभूते। मुकुलितबिसिनीविसरव्यसनविषसमसरसीति पाठे विसरः समूह इत्यर्थः। मधुमदेति मधुमदेन मद्यपानजनितेन उल्लासेन मुदिताः सञ्जातमन्मथाः सम्भोगार्थिन्य इति यावत्। याः कामिन्यः तासां कोपेन कथमयमिदानीमपि नः सम्भोगान्तरायी न अस्तमेति इति क्रोधेन कुटिलः वक्रः यः कटाक्षः तेन क्षिप्यमाणे इव दूरीक्रियमाणे इव। क्षेपीयः अतिक्षिप्रम् अतिशीघ्रं क्षितिधरशिखरम् अस्ताचलचूडाम्।

(१८) तरुणेति। तरुणतरः अतियुवा यः कपिः वानरः तस्य लपनं मुखं तद्वत् लोहितः रक्तः तस्मिन्। लोकचक्षुषि लोकानां जगतां एकमद्वितीयं चक्षुः तस्मिन्। प्रस्नुतेति प्रस्नुतात् प्रस्नुतात् महिष्याः ऊधसः स्तनात् क्षरन्ति यानि क्षीराणि दुग्धानि तेषां धारावत् धवलितानि शुभ्राणि तेषु। आसन्नेति आसन्नः सन्निहितः चन्द्रोदयेन उद्दामः उद्वेलः यः क्षीरोदः क्षीरसागरः तेन क्षालितानि धौतानि तेषु इव। दिव्याश्रमोपशल्यकेषु दिव्या आश्रमाः तेषाम् उपशल्यानि अन्तभागाः तेषु ग्रामान्त उपशल्यं स्यादित्यमरः। प्रस्नुतमुखमाहिषीयूथक्षरत्क्षीर-धवलितेषु आसन्नचन्द्रोदयोद्दामक्षीरोदलहरीक्षालितेष्विवेति पाठान्तरम्। अप-राह्णेति अपराह्णे अह्नोऽपरभागे पश्चिमभागे यः प्रचारः प्रकर्षेण चरणं तस्मै प्रच-लितः प्रवृत्त इति यावत् तस्मिन्। चामरिणि चामरशालिनि। चामीकरेति अत्र चामीकरशब्देन सुमेरुर्लक्ष्यते। तथा च चामीकरस्य सुवर्णाद्रेः सुमेरोरि-त्यर्थः तटेषु यत् ताड़नं वप्रक्रीड़ेत्यर्थः तेन रटिता ध्वनिता रदना दन्ता यस्य तथा-भूते। रदति विलिखति।

(२०) सुरस्रवन्तीरोधांसि मन्दाकिनीतटानि। स्वैरं यदृच्छयेत्यर्थः। प्रस्तु-

णालक्तकरसानुलिप्त इव प्रकटयति च तारापथे पाटलतां तारापथ-प्रस्थित-सिद्धदत्तदिनकरास्तमयार्घ्यावर्जिते रञ्जितककुभि कुसुम्भभासि स्रवति पिनाकिप्रणतिमुदितसन्ध्यास्वेद इव रक्तचन्दनद्रवे वन्दारुमुनिवृन्दारकवृन्दवध्यमानसन्ध्याञ्जलिवने (२१) ब्रह्मोत्पत्तिकमलसेवासमागतसकलकमलाकर इव राजति ब्रह्मलोके समुच्चारिततृतीयसवनब्रह्मणि ब्रह्मणि ज्वलितवैतानज्वलनज्वालाजटालाजिरेषु (२२) आरब्धधर्मसाधनशिबिरनीराजने-

---

तेति प्रवृत्तानां प्रचलितानां कान्तं प्रति अभिसरन्तीनामित्यर्थः विद्याधराभिसारिकाणाम् अभिसारिणीनां विद्याधरीणामित्यर्थः सहस्रस्य चरणालक्तकरसैः चरणलाक्षाद्रवैः अनुलिप्त इव अनुरञ्जित इव। प्रकटयति प्रकाशयति। पाटलतां रक्तताम्। तारापथे नक्षत्रमार्गे गगनवर्त्मनीत्यर्थः। तारापथेति तारापथेषु गगनमार्गेषु प्रस्थितैः प्रचलितैः सिद्धैः देवयोनिविशेषैः दत्तानि दिनकराय सूर्याय यानि अस्तमयार्घ्याणि अस्तगमनकालदेयानि अर्घ्याणि तैभ्यः आवर्जितः प्रकीर्णः तस्मिन्। रञ्जितककुभि रक्तीकृतदिशि। कुसुम्भभासि कुसुम्भं रक्तपुष्पविशेषः तद्वत् भाः दीप्तिः यस्य तादृशे। स्रवति चरति। पिनाकीति पिनाकिने हराय या प्रणतिः प्रणामः तत्र मुदिता उल्लासं गता या सन्ध्या तस्याः स्वेद इव घर्मसलिल इव। वन्दारुमुनीति वन्दारुभिः वन्दनशीलैः मुनिवृन्दारकाणां मुनिमुख्यानां वृन्दैः समूहैः बध्यमानं संयम्यमानं सन्ध्यायाम् अञ्जलिवनम् अञ्जलिसमूहः यस्मिन् तथाभूते सन्ध्यावन्दनार्थं क्रियमाणाञ्जलिपुटे इत्यर्थः।

(२१) ब्रह्मेति ब्रह्मणः उत्पत्तिः जन्म यस्मात् तत् कमलं नारायणनाभिपङ्कजमित्यर्थः तस्य सेवायै समागताः सकलाः कमलाकराः कमलसमूहाः यस्मिन् तथाभूते इव। राजति दीप्यमाने। समुच्चारितेति समुच्चारितं तृतीयसवने सायंकालीनस्नाने ब्रह्म वेदः येन तथाभूते। ज्वलितेति ज्वलितस्य प्रदीप्तस्य वैतानज्वलनस्य यज्ञाग्नेः ज्वालाभिः शिखाभिः जटालानि व्याप्तानि अजिराणि अङ्गनानि येषां तादृशेषु।

(२२) आरब्धेति आरब्धं कृतारम्भं धर्मसाधनं धर्मार्जनहेतुः शिबिरस्य स्कन्ध

ष्विव सप्तर्षिमन्दिरेषु अघमर्षणमुषितकिल्बिषगदोल्लाघलघुषु यतिषु सन्ध्योपासनासीनतपस्विपंक्तिपूतपुलिने प्लवमानपद्मयोनियानहंसदन्तुरोर्मिणि मन्दाकिनीजले जलदेवतातपत्रे पत्त्ररथकुलकलत्रान्तःपुरसौधे निजमधुरसामोदिनि मधुकृतमधुपमुदि मुमुदिषमाणे कुमुदवने दिवसावसानताम्यत्तामरसमधुरससपीतिव्रते (२२) सुषुप्सति मृदुमृणालकाण्डकण्टककण्डूयनकुण्डलितकन्धरे धुतपक्षराजिवी-

---

वारस्य नीराजनं शान्तिकर्मविशेषः येषु तथोक्तेषु । अघमर्षणेति अघानि पापानि मर्षयतीति नाशयतीति अघमर्षणो वैदिकमन्त्रविशेषः तेन मुषितानि हृतानि किल्बिषाणि पापानि गदा रोगाश्च तैः उल्लाघा स्वस्था अतएव लघवः सुवहदेहा इत्यर्थः तेषु । यतिषु चतुर्थाश्रमिषु । सन्ध्येति सन्ध्योपासनायै आसीनैः उपविष्टानां तपस्विनां पंक्तिभिः पूतानि पवित्रीकृतानि पुलिनानि सैकतानि यस्य तादृशे । प्लवमानेति प्लवमानः सन्तरन् यः पद्मयोनेर्ब्रह्मणः यानहंसः वाहनमरालः तेन दन्तुराः सञ्जातदन्ता इवेत्यर्थः ऊर्मयस्तरङ्गाः यस्य तथोक्ते । प्लवमाननलिनयोनियानहंसहासदन्तुरितोर्म्मिणीति पाठे प्लवमानः यः नलिनयोनेः पद्मयोनेः यानहंसः तस्य हासेन उल्लासेन प्रभया वा दन्तुरिताः संवलिता ऊर्म्मयः तरङ्गा यस्य तथाभूते । जलदेवतेति जलदेवतायाः जलाधिष्ठात्र्या देव्याः आतपत्रं छत्रं तस्मिन् तथाभूते इत्यर्थः । पत्त्ररथेति पत्त्ररथानां पक्षिणां कुलं समूहं तस्य कलत्राणि स्त्रियः पक्षिण्य इत्यर्थः तेषां अन्तः पुरस्य सौधं हर्म्यम् भूत मित्यर्थः तस्मिन् । निजेति निजेन स्वकीयेन मधुरसेन मकरन्देनेत्यर्थः आमोदते उल्लसतीति तथोक्ते मध्विति मधुना कृता मधुपानां भ्रमराणां मुद् आनन्दो यत्र तथाभूते । मुमुदिषमाणे विकाशं जिगमिषतीत्यर्थः । दिवसेति दिवसस्य अवसानेन ताम्यन्ति क्लिश्यन्ति यानि तामरसानि रक्तपद्मानि तेषां मधुरसस्य पीतिः पानं तेन सह वर्त्तमानं सपीति व्रतं नियमः यस्य तथाभूते युगपत् ताम्यत्तामरसमधुरसं पीतवतीत्यर्थः । दिवसावसानताम्यत्तामरसमधुरसमधुसपीतिपीते इति पाठे दिवसावसानेन ताम्यतां [अचिरं क्लिश्यतां तामरसानां मधुरस्य मधुनः सपीति सह पानं यथा तथा पीतं पानं येन तथाभूते ।

(२३) सुषुप्सति निदिद्रासति । मृद्विति मृदुना कोमलेन मृणालकाण्डस्य

जितराजीवरजसि राजहंसयूथे तटलताकुसुमधूलिधूसरित-सरिति सिद्धपुरपुरन्ध्रिधम्मिल्लमल्लिकागन्धग्राहिणि सायन्तने (२४) तनीयसि निशानिश्वासनिभे नभस्वति सङ्कोचोदञ्चदुच्चकेसरकोटिसङ्कटकुशेशयकोशकुटीकुटिलशायिनि षट्चरणचक्रे नृत्योद्धूतधूर्जटिजटाटवीकुटजकुड्मलनिभे नभस्तलं स्तवकयति (२५) तारागणे सन्ध्यानुबन्धताम्रे परिणमत्तालफलत्विषि कालमेघमेदुरे मेदिनीं निमीलयति

नालदण्डस्य कण्टकेन यत् कण्डूयनं कण्डूतिः तेन कुण्डलिता साचीकृतेत्यर्थः कन्धरा ग्रीवा येन तादृशे। धुतेति धुताभिः कम्पिताभिः पक्षराजिभिः पक्षसमूहैः वीजितं सञ्चालितम् उत्पातितमित्यर्थः राजीवानां श्वेतकमलानां रजः परागः येन तथोक्ते। तटेति तटेषु या लताः तासां कुसुमानि तेषां धूलिभिः परागैः धूसरिता धूसरतां नीताः सरितः नद्यः येन तथोक्ते। सिद्धेति सिद्धानां देवयोनिविशेषाणां पुरे नगरे याः पुरन्ध्र्यः स्त्रियः तासां धम्मिल्लेषु संयतकेशेषु धम्मिल्लाः संयताः कचा इत्यमरः। तेषु या मल्लिकास्तदाख्यकुसुमानि तासां गन्धग्राही सौरभवानित्यर्थः तस्मिन्।

(२४) तनीयसि मन्दसञ्चारिणि इत्यर्थः। निशानिःश्वासनिभे निशा रजनी नायिकेति भावः तस्या निःश्वासः तत्सदृशे। सङ्कोचेति सङ्कोचे निमीलने उदञ्चताम् उद्गच्छताम् उच्चकेसराणाम् समुन्नतकिञ्जल्कानां किञ्जल्कः केशरोऽस्त्रियामित्यमरः। कोटिभिः अग्रभागैः सङ्कटानि आकीर्णानि यानि कुशेशयानि कमलानि तेषां कोशा अभ्यन्तरभागा एव कुट्यः क्षुद्रगृहाणि तेषु कुटिलं कुण्ठितं यथा तथा शेते इति तथाभूते। कुटी कुटिलशायिनि इत्यत्र कुशेशय कीटरकुटीरशायिनि इति पाठे तादृशा ये कुशेशयाः तेषां कीटराख्येव अभ्यन्तरा एव कुटीराणि क्षुद्रगृहाणि तेषु शेते इति तथोक्ते इत्यर्थः। षट्चरणचक्रे भ्रमरवृन्दे। नृत्येति नृत्येषु नर्त्तनेषु उद्धूतानि उत्पतितानि धूर्जटेः हरस्य जटाटवेः जटारूपात् अरण्यात् इत्यर्थः यानि कुटजकुड्मलानि तन्निभे तत्सदृशे नृत्यतो हरस्य जटाजूटात् उत्पतितकुटजकुड्मलसदृशे इत्यर्थः।

(२५) स्तवकयति गुच्छस्तवकवदाचरतीत्यर्थः। सन्ध्येति सन्ध्यायाः अनुबन्धेन

नववयसि तमसि तरुणतरतिमिरपटलपाटनपटीयसि समुन्मिषति यामिनीकामिनीकर्णपूरचम्पककलिकाकदम्बके प्रदीपप्रकरे (२६) प्रतनुतुहिनकिरणालोकपाण्डुनि आश्यानतीलनीरमुच्यमानकालिन्दीकूलबालपुलिनायमाने शातक्रतवे क्रशयति तिमिरम् आशामुखे खमुचि मेचकितविकचितकुवलयसरसि शशधरकरनिकरकचग्रहाविले विलो-

---

अनुसरणेन आताम्रम् ईषत्ताम्रवर्णं तस्मिन्। अतएव परिणमदिति परिणमत् परिपक्वतां गच्छत् यत् तालफलं तस्य त्विष इव त्विषः कान्तयः यस्य तथाभूते। परिणमत्तालफलत्वक् त्विषीति पाठान्तरम्। कालमेघमेदुरे कालमेघः कृष्णमेघः तद्वत् मेदुरः स्निग्धः तस्मिन्। निमीलयति स्थगयति आच्छादयतीत्यर्थः। नववयसि अभिनवजाते इत्यर्थः। तमसि तिमिरे। तरुणेति तरुणतराणां अभिनवजातानां तिमिरपटलानां अन्धकारसमूहानां पाटने निरसने पटीयान् अतिशयेन पटुः तस्मिन्। समुन्मिषति ज्वलति। यामिनी एव कामिनी तस्याः कर्णपूरः कर्णभूषणम् एवं चम्पककलिका कदम्बकं तस्मिन् तन्निभे इति भावः। प्रदीपप्रकरे प्रदीपनिचये।

(२६) प्रतन्विति प्रतनुभिः अभिनवोदितत्वात् अल्पाल्पैः तुहिनकिरणस्य शीतरश्मेः चन्द्रस्य आलोकैः उद्योतैः आलोको दर्शनोद्द्योता वित्यमरः पाण्डु तस्मिन् पाण्डुवर्णे इत्यर्थः। प्रतनुतुहिनकिरणलावण्यालोकपाण्डुनीति पाठे तुहिनकिरणस्य लावण्यालोकैः प्रभाप्रकाशैः पाण्डु तस्मिन्नित्यर्थः। आश्यानेति आश्यानं ईषच्छुष्कं नीलनीरैः कृष्णवर्णसलिलैः मुच्यमानं त्यज्यमानं मुक्तेति पाठे मुक्तं त्यक्तं कालिन्दीकूलस्य यमुनातीरस्य बालपुलिनं नवोत्थितं सैकतं तद्वदाचरतीति तथोक्ते। शतं क्रतवो यज्ञा यस्य स शतक्रतुः इन्द्रः तस्य इदं यद्वा स अधिष्ठाता यस्य तत् शातक्रतवम् ऐन्द्रमित्यर्थः तस्मिन्। क्रशयति कृशं कुर्वति खण्डयतीत्यर्थः। आशामुखे दिङ्मुखे। खमुचि खमाकाशं मुञ्चतीति तथोक्ते आकाशं त्यक्त्वा भूमण्डलमाक्रामतीति भावः। मेचकितेति मेचकितं श्यामलतां नीतं विकचितानां विकचेति पाठे विकचानां विकासं गतानां कुवलयानां नीलोत्पलानां सरः सरोवरं येन तादृशे। शशधरेति शशधरस्य चन्द्रस्य करनिकरैः किरणसङ्घैः हस्तसमूहैरिति ध्वनिः यः कचग्रहः केशाकर्षणं तेन आविलं मालिन्यं नीतं तस्मिन्

यमाने मानिनीमनसीव (२७) शबरीचिकुरचये चाषपक्षत्विषि तमसि उदिते भगवति उदयगिरितटनिकरकुहरहरिखरनख-मुख-निवह-हेतिनिहत-निजहरिणगलगलित-रुधिरचयनिचितमिव लोहितं वपुः उदयरागधरमिव विभावरीवध्वा धारयति श्वेतभानौ (२८) अचलच्युत-चन्द्रकान्तजलधाराधौत इव ध्वस्ते ध्वान्ते (२९) गोलोक-

---

अतएव विलीयमाने विलयं गच्छति अन्योऽपि केशाकर्षणेन विमानिती लज्जया विलयं गच्छतीति भावः।

(२७) मानिनीमनसीव मानिनीनां मानवतीनां कान्तं प्रति कुपितानामिति यावत् नारीणां मनसीव हृदये इव शबरीणां शबराङ्गनानां चिकुरचये केशनिचये चिकुरः कुन्तलो वालः कचः केशः शिरोरुह इत्यमरः। विलीयमाने इत्यस्याधिकरणम्। चाषपक्षत्विषि चाषो नाम पक्षिविशेषः तस्य पक्षवत् त्विषः प्रभा यस्य तादृशे। उदयगिरीति उदयगिरेः उदयाचलस्य तटनिकरेषु प्रस्थभागेषु यानि कुहराणि गह्वराणि तेषु ये हरयः सिंहाः स्थिता इति भावः तेषां खराः तीक्ष्णा ये नखाः तेषां मुखनिवहा अग्रसमूहा एव हेतयः अस्त्राणि तैः निहतः नाशितः यो निजहरिणः स्वोत्सङ्गस्थः मृग इत्यर्थः तस्य गलात् कण्ठात् गलितैः निःसृतैः रुधिरचयैः रक्तसमूहैः निचितमिव व्याप्तमिव उदयगिरिशिखरकटककुहरहरिखरनखरनिवहहेतिनिहतनिजहरिणगलितरुधिरनिचयनिचितमिवेति पाठे उदयगिरेः शिखरेषु कटकेषु नितम्बेषु च यानि कुहराणि तेषु ये हरयः स्थिता इति भावः तेषां खरनखरनिवहेन तीक्ष्णनखसमूहेन निहतस्य निजहरिणस्य गलितेन रुधिरनिचयेन निचितमिवेत्यर्थः अतएव लोहितं रक्तम्। उदयरागधरम् उदये यो रागः लौहित्यं तस्य धरतीति धरम्। विभावरीवध्वाः विभावरी रात्रिरेव वधूः तस्याः।

(२८) श्वेतभानौ शुभ्रकिरणे चन्द्रमसीत्यर्थः। अचलेति अचलात् उदयगिरेरित्यर्थः च्युतानां निर्गलितानां चन्द्रकान्तानां मणिविशेषाणां ये चन्द्रोदये प्रस्रवन्तीति प्रसिद्धिः। जलधाराभिः धौतमिव क्षालितमिव तस्मिन् अतएव ध्वस्ते ध्वंसं गते। ध्वान्ते तमसि।

गलितदुग्धविसरवाहिनि दन्तमयमकरमुखमहाप्रणाले इव पूरयितुम् प्रवृत्ते (पयोनिधिमिन्दुमण्डले) स्पष्टे प्रदोषसमये सावित्री शून्यहृदयाम् इव किम् अपि ध्यायन्तीं सास्रां सरस्वतीमवादीत् सखि ! त्रिभुवनोपदेशदानदक्षायाः तव पुरो जिह्रा जिह्रेति मे जल्पन्ती । जानासि एव या दुर्वंश्या (३०) विसंष्ठुलाः गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः क्षणभङ्गिन्यो नातिक्रमणीया न रमणीया दैवस्य वामा वृत्तयः । निष्कारणा च निकारकणिकापि उद्वेजयति मनस्विनोऽपि मानसम् असद्दृशजनात् आपतन्ती । अनवरतनयनजलधारासिच्यमानः तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति । अतिसुकुमारञ्च जनं सन्तापपरमाणवो मालतीकुसुममिव म्लानिम् आनयन्ति । महतां च उपरि निपतन् अणुरपि सृणिरिव करिणां क्लेशः कदर्थनाय अलम् ।

---

(२९) गोलीकेति । गोलीकात् गवां लीकात् मयूखनिचयात् वा गलितान् निःसृतान् दुग्धविसरान् क्षीरप्रस्रवान् वहतीति तथाभूते । दन्तेति दन्तमयं गजदन्तनिर्मितमित्यर्थः यत् मकरमुखं मकराख्य-जलजन्तुवदनं तदेव महान् प्रणालः जलनिःसरणमार्गः तस्मिन्निव प्रवृत्ते प्रस्तुते । पयोनिधिं सागरं पूरयितुं भर्त्तुम् । सास्रां अश्रुमुखीमित्यर्थः । पुरोऽग्रतः । जिह्रेति लज्जते । जल्पन्ती आलपन्ती । दुर्वंश्याः वश्यताम् आपादयितुमशक्याः ।

(३०) विसंष्टुलाः निमर्य्यादाः निर्दाक्षिण्याः निष्ठुराः दैवस्य अदृष्टस्य वामाः प्रतिकूलाः याः क्षणभङ्गिण्यः क्षणमात्रेण विध्वंसिन्यः नातिक्रमणीयाः अतिक्रमितुमशक्याः वृत्तयः व्यवहाराः ता दुर्जन इव गुणवत्यपि जने पतन्तीति जानास्येवेत्यन्वयः । या इत्यत्र यादृश्य इति पाठान्तरम् । निष्कारणा अहेतुका निकारकणिका परिभवलेश इत्यर्थः । उद्वेजयति व्यथयति कलुषयतीति पाठेऽपि स एवार्थः । असदृशजनात् अयोग्यजनात् । विपल्लवः विपदो लेशः पल्लवशून्यश्च सन्तापपरमा-

(२१) सहजस्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः । दारयति दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः । सा न अर्हसि एवं भवितुम् । अभूमिः खलु असि दुःखक्ष्वेडाङ्कुरप्रभवानाम् । अपि च पुराकृते कर्म्मणि बलवति शुभेऽशुभे वा फलकृति तिष्ठति अधिष्ठातरि प्रष्ठे पृष्ठतश्च कोऽवसरो विदुषि शुचाम् । इदन्तु ते त्रिभुवनमङ्गलैककमलम् अमङ्गलभूताः कथमिव मुखम् अपवित्रयन्ति अश्रुबिन्दवः । तदलम् अनया कथया अधुना कथय कतमं भुवो भागम् अलङ्कर्त्तुम् इच्छसि । कस्मिन् अवतितीर्षति (२२) पुण्यभाजि प्रदेशे ते हृदयम् । कानि वा तीर्थानि अनुग्रहीतुम् अभिलषसि । केषु वा धन्येषु तपोवनधामसु तपस्यन्ती स्थातुमभिवाञ्छसि । सज्जोऽयम् अनुसरणचतुरः सहपांशु-

---

यवः खेदलेशाः उष्मबिन्दवश्च । आनयन्ति प्रापयन्ति । अणुरपि अत्यल्पोऽपि घृणिरिव अङ्कुश इव । कदर्थनाय व्यथनाय ।

(२१) सहजेति सहजं स्वाभाविकं स्नेहपाशग्रन्थिना प्रणयरज्जुग्रन्थिना बन्धनं यासां तथाभूताः । क्रकचपातः क्रकचः करपत्त्रं तस्य पातः अङ्गेषु पातनं स इव संस्तुतजनविरहः संस्तुताः परिचिताः प्रणयिन इति यावत् संस्तवः स्यात् परिचय इत्यमरः जनाः तेषां विरहः विच्छेदः । एवं भवितुं इत्थं स्वजनविरहिणी भवितुमित्यर्थः । अभूमिः अयोग्यस्थानमित्यर्थः । दुःखेति दुःखमेव क्ष्वेडो विषं तस्य अङ्कुराः प्ररोहाः तेषां प्रभवाः तेषाम् । पुराकृते प्राक्तने इति यावत् । फलकृति शुभाशुभफलदातरि । अधिष्ठातरि ईश्वरे प्रष्ठे सर्वश्रेष्ठे नियन्तरीत्यर्थः तिष्ठतीत्यनेनान्वयः । विदुषि विद्वज्जने शुचां शोकानां अवसरः स्थानं कः ? न कोऽपीत्यर्थः ईश्वरेच्छया शुभाशुभकर्मफलानि सर्वैरेव भुज्यन्ते तदत्र विद्वांसो न शोचन्तीति तात्पर्य्यम् । इदन्त्वित्यत्र इदञ्चेति पाठान्तरम् अपवित्रयन्ति अपवित्रं कुर्वन्ति ।

(२२) अवतितीर्षति अवतरितुमिच्छति । तीर्थानि पुण्यदेवाश्रि सन्त्यः प्रस्तुतः सद् मन्तुमिति शेषः । अनुसरणचतुरः आनुगत्यनिपुणः । उपचरणचतुर इति

क्रीड़ापरिचयपेशलः प्रेयान् सखीजनः । कृतक्षितितलावतरणसङ्कल्पा अनन्यशरणा चाद्यैव प्रभृति प्रपद्यस्व मनसा वाचा क्रियया च सर्वविद्याविधातारं धातारञ्च स्वश्रेयसाय (२२) स्वचरणरजःपविचितत्रिदशासुरमौलिं सुधासूतिकलिकाकल्पितावतंसकं देवदेवं त्रिभुवनगुरुं त्र्यम्बकम् अम्बिकापतिम् । अल्पीयसैव कालेन स ते शोकविरतिं करिष्यतीति ।

(२४) मुक्तमुक्ताफलधवललोचनजललवा सरस्वती प्रत्यवादीत् प्रियसखि ! त्वया सह विचरन्त्या न मे काञ्चिदपि पीड़ाम् उत्पादयिष्यति ब्रह्मलोकविरहः शापशोको वा केवलं कमलासनसेवासुखमार्द्रयति मे हृदयम् । अपि च त्वमेव वेत्सि मे भुवि धर्म्मसाधनानि सर्वयोगयोग्यानि

---

पाठे सेवाचतुर इत्यर्थः । सहेति सह पांशुक्रीड़ायां समेत्य धूलिक्रीड़ने यः परिचयः समासक्तिः तेन पेशलः परवश इत्यर्थः त्वदधीन इति यावत् । कृतेति कृतः क्षितितले भूमण्डले अवतरणसङ्कल्पो यया तथाभूता । क्षितितलावतरणायेति पाठान्तरम् । अनन्यशरणा नास्ति अन्यत् शरणं रक्षिता यस्याः तथोक्ता शरणं गृह रक्षित्रोरित्यमरः । प्रपद्यस्व प्राप्नुहि आश्रयेत्यर्थः प्रतिपद्यस्वेति पाठान्तरम् । धातारं रक्षितारं स्वश्रेयसाय निजमङ्गलाय । त्रातारं स्वःश्रेयसस्येति पाठे स्वःश्रेयसस्य मङ्गलस्य त्रातारमित्यन्वयः ।

(२२) स्वचरणेति स्वस्य चरणरजसा पदरेणुना पविचिताः पाविताः त्रिदशानां देवानां असुराणाञ्च मौलयः किरीटाः धम्मिल्ला वा येन तथोक्तं मौली किरीटधम्मिल्लावित्यमरः । चरणरजःपविचितत्रिदशासुरमिति पाठान्तरम् । सुधेति सुधासूतिश्चन्द्रः तस्य कला एव कलिका तया कल्पितः अवतंसकः ललाटभूषणमिति यावत् येन तं कल्पितकर्णावतंसमिति पाठे कर्णावतंसः कर्णभूषणमित्यर्थः स त्र्यम्बकः शोकविरतिं शोकशान्तिं शापशोकविरतिम् इति पाठान्तरम् ।

(२४) मुक्तेति मुक्ताः पातिताः मुक्ताफलवत् धवलाः शुभ्राः लोचनजललवाः अश्रुबिन्दवः येन तथाभूता । धर्म्मसाधनानीत्यत्र धर्म्म धामानीति पाठे धर्म्मधामानि धर्म्म

स्थातुम् स्थानानि इत्येवमभिधाय विरराम। रणरणकोपनीयमानप्रजागरा च उन्मीलितलोचनैव तां निशामनयत्।

अन्येद्युः उदिते भगवति (३५) त्रिभुवनशेखरे तुरङ्गमुखखणखणायितखरखलीनकर्षणक्षतक्षरत्क्षतजेनेव पाटलितवपुषि उदयाचलशिखरचूड़ामणौ जरत्कृकवाकुचूड़ारुणारुणपुरःसरे विरोचने रोचमाने (३६) नातिदूरवर्त्ती पितामहविमानहंसपालः पर्य्यटन् अपरवक्त्रम् उच्चैः अगायत्।

---

चिन्तानीत्यर्थः। सर्वयोगयोग्यानीत्यत्र समाधिसाधनानि योगयोग्यानि इति पाठे समाधिश्चित्तैकाग्र्यं तत् साधनानि। योगो जीवात्मनोः ऐक्यचिन्तनं तद्द योग्यानि उक्तञ्च। आदौ समाधि मातिष्ठेत्ततो योग मुपाक्रमेदिति। रणरणकेति रणरणकेन उत्कण्ठया उपनीयमानः उपनीतेति पाठे जातः जायमानः प्रजागरः यस्याः तथोक्ता उन्मीलितलोचनेत्यत्र अनिमीलितलोचनेति पाठान्तरम्।

(३५) त्रिभुवनशेखरे त्रिलोकीशिरोभूषणभूते इत्यर्थः। तुरङ्गेति तुरङ्गाणां अश्वानां सप्तानामिति शेषः अस्य सप्ताश्वत्वादिति भावः मुखेषु खणखणायिताः खणखणशब्दवन्त इति यावत् खराः तीक्ष्णाः खलीनाः कविकाः तेषां कर्षणेन क्षरत् निःसरत् अश्वानां मुखेभ्य इति भावः क्षतजं रक्तं तेनेव। खणखणायमानस्खलत्खलीनक्षतनिजतुरगमुखक्षिप्तेन क्षतजेनेव इति पाठे खणखणायमानाः स्खलन्तः ये खलीनाः तैः क्षतानि निजानां तुरगाणां मुखानि तैः क्षिप्तं निर्गलितं तेन। पाटलितवपुषि रक्तकलेवरे। उदयाचलशिखरचूड़ामणौ इत्यत्र उदयाचलचूड़ामणौ इति पाठान्तरम्। जरदिति जरन् स्थविरः यः कृकवाकुः ताम्रचूड़ः तस्य चूड़ा शिखरं तद्वत् अरुणः रक्तवर्णः अरुणः निजसारथिः यस्य तथाभूते। विरोचने सूर्य्ये। रोचमाने दीप्यमाने।

(३६) नातिदूरवर्त्ती पितामहविमानहंसपालः। नातिदूरवर्त्ती अनतिदूरस्थः पितामहस्य ब्रह्मणः विमानहंसस्य वाहनभूतमरालस्य पालः रक्षकः। नातिदूरवर्त्ती विविक्त पितामहवाहनहंसकुलपाल इति पाठान्तरम्। अपरवक्त्रं तदाख्यम् आख्यायिकासु प्रयोज्यं वृत्तम्।

(२७) तरलयसि हृदयं किमुत्कं कामकलुषमानसवाससालिते !।
अवतर कलहंसि ! वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥

तत् श्रुत्वा सरस्वती पुनरचिन्तयत् (२८) अहमिवानेन पर्य्यनुयुक्ता । भवतु मानयामि मुनेर्वचनम् इत्युक्त्वा उत्थाय कृतमर्त्यलोकावतरणसङ्कल्पा परित्यज्य वियोगविक्लवं स्वपरिजनं ज्ञातिवर्गमपरिगणय्य त्रिः प्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनयन्ती निवर्त्तितानुयायिव्रतिव्राता ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम ।

ततः क्रमेण ध्रुवपदप्रवृत्तां (२९) धर्म्मधेनुमिव अधो धाव-

---

(२७) तरलयसीति । अकलुषम् अनाविलं स्वतः स्वच्छमित्यर्थः मानसं तदाख्यं सर इत्यर्थः यद्वा अकलुषं निर्म्मलं मानसं यस्य सः अकलुषमानसो ब्रह्मा तस्मिन् अथवा अकलुषं मानसं येषां ते अकलुषमानसा विद्वांसः तेषु वासेन लालिता विनोदिता तत्सम्बुद्धिः हे अकलुषमानसवासलालिते ! किं कथम् उत्सुकाम् उत्कण्ठाव्यञ्जिकामिति यावत् कातरामिति भावः हृदयं तरलयसि इतस्ततो विक्षिपसि ? हे कलहंसि ! वापिकां दीर्घिकाम् अन्यत्र उप्यन्ते कर्म्माणि अस्यामिति वापिका कर्म्मभूमिरित्यर्थः तां मर्त्त्यलोकमित्यर्थः अवतर अवतीर्णा भव। नचास्यां चिरस्थितिरित्याह पुनरिति पुनरपि पङ्कजानां लक्षणया काञ्चनकमलानाम् आलयः तं मानसं सर इत्यर्थः अन्यत्र पङ्कजालयं पद्मयोनिं यास्यसि प्राप्स्यसि ।

(२८) अहमिवेति अनेन यानहंसपालेन अहं पर्य्यनुयुक्तेव व्याजेन बोधितेव । मुनेः दुर्वाससः । वचनं शापवाक्यम् । मानयामि अङ्गीकरोमि प्रतिपालयामीत्यर्थः । वियोगविप्लवं वियोगः स्वविच्छेद एव विप्लवः आपद् यस्य तं वियोगविक्लवमिति पाठे सुगम एवार्थः अपरिगणय्य अगणयित्वा अवगणय्येति पाठान्तरम् । अवगणय्य इत्यधिकः पाठः तत्र अवगणय्य सावित्रीं विना नान्यपरिजनेत्यर्थः । चतुर्मुखं ब्रह्माणम् । अनुनयन्ती सान्त्वयन्ती । निवर्त्तितेति निवर्त्तिताः मया सह मा गच्छतेति निषिद्धा अनुयायिनः अनुगच्छन्तः व्रतिनां तापसानां व्राताः सङ्घाः यया तथोक्ता । अनुनयनिवर्त्तितानुयायिव्रतिव्रातेति पाठान्तरम् ।

मानधवलपयोधराम् उद्धुरध्वनिम् अन्धकान्तकमौलि-मालतीमालिकाम् आलीयमानवालखिल्यरुद्धरोधसम् (४०) अरुन्धतीधौततारवत्वचं त्वङ्गत्तुङ्गतरङ्गतरत्तरलतरतारता-रकां तापसवितीर्णतरलतिलोदकपुलिनाम् (४१) आप्लवन-पूतपितामहपातितपितृपिण्डपाण्डुरितपारां पर्य्यन्तसुखसुप्त-

---

(३९) ध्रुवेति। ध्रुवस्य नित्यस्य वस्तुनः विष्णोरित्यर्थः पदात् आकाशाद्वा प्रवृत्तां निःसृतां धर्म्मधेनुमिव धर्म्माय धेनुः धर्म्मधेनुः होमधेनुरित्यर्थः तामिव। अध इति अधो धावमानं निःसरत् धवलं शुभ्रं पयः जलं दुग्धञ्च यस्यास्ताम् अन्यत्र अधो धावमानाः अधोमुखाः धवलाः पयोधराः स्तना यस्यास्ताम्। उद्धुर-ध्वनिम् उद्धुरा उत्कटाः कलकलायमाना इत्यर्थः ध्वनयः यस्याः ताम् अन्यत्र उद्भटनिनादाम्। अन्धकेति अन्धको नाम कश्चिदसुरः तस्य अन्तयति नाशयतीति अन्तकः हर इत्यर्थः तस्य मौलिः जटाजूटमिति भावः तस्य मालतीमालिका मालती-पुष्पमाला ताम्। अन्धकमथनेति पाठेऽपि स एवार्थः। आलीयमानेति आलीय-मानैः अतिक्षुद्रत्वात् विलयं गच्छद्भिरिवेति भावः वालखिल्यैः मुनिविशेषैः रुद्धं संश्लिष्टं रोधस्तटं यस्याः ताम्।

(४०) अरुन्धत्या वशिष्ठपत्न्या धौता क्षालिता तरोरियं तारवी तरुसम्बन्धिनी त्वक् यस्यां तथोक्ताम्। त्वङ्गत्तुङ्गतरङ्गतरत्तरलतरतारतारकामिति त्वङ्गत्सु चलत्सु तुङ्गेषु उन्नतेषु तरङ्गेषु तरन्त्यः प्रतिफलन्त्यः तरलतराः अतिचञ्चलाः तारा महान्तः तारका यस्यां ताम्। तापसेति तापसैः मुनिभिः वितीर्णानि दत्तानि तरलानि तरङ्गसङ्गात् चञ्चलानि तिलोदकानि तिलयुक्ततर्पणसलिलानि पुलिनेषु सैकतेषु यस्याः ताम्। तापसवितीर्णतरलतिलोदकपुलकितपुलिनामिति पाठे तापसैः वितीर्णेन दत्तेन तरलेन तिलोदकेन पुलकितानि उल्लासितानि उद्भासितानीत्यर्थः पुलिनानि यस्याः तामित्यर्थः।

(४१) आप्लवनेति आप्लवनेन स्नानेन पूतः पवित्रः यः पितामहः ब्रह्मा तेन पातितैः अर्पितैः पितृपिण्डैः पितृभ्योऽग्निष्वात्तादिभ्यः दत्तैः पिण्डैः पाण्डुरितः पाण्डुवर्णीकृतः पारः तटभूमिर्यस्यास्तथोक्ताम्। पर्य्यन्तेति पर्य्यन्तेषु प्रान्तदेशेषु सुखेन सुप्तानां निद्रितानां सप्तानाम् ऋषीणां मरीच्यादीनां कुशा एव शयनानि

सप्तर्षिकुशशयनसूचितसूर्य्यग्रहणसूतकोपवासाम् (४२) आचमनशुचिशचीपतिमुच्यमानशिवार्चनकुसुमनिकरशारां शिवपुरपतितनिर्म्माल्यमन्दारदामकाम् (४३) अनादरदारितमन्दरदरीदृषदम् अनेकनाकनायककामिनीकुचकलसलुलितविग्रहां ग्राहग्रावग्रामस्खलितमुखरबहुस्रोतसं (४४) सुषुम्णासूतशशिसुधाशीकरस्तवकतारकिततीरां धिषणाग्निकार्य्यधूमधूसरितसैकतां सिद्धविरचितवालुकालिङ्गलाञ्छन-

शय्याः तैः सूचितः, अनुमितः सूर्य्यग्रहणस्य सूतके अशौचेन उपवासोऽनशनं यस्याः तां सूर्य्यग्रहणजनिताशौचे सप्तर्षयः अनशनेन कुशशयनमधिशयन्तीति भावः। पर्य्यन्तसुप्तेति पाठान्तरम्।

(४२) आचमनेति। आचमनेन शुचिः पूतः यः शचीपतिः इन्द्रः तेन मुच्यमानैः अर्घ्यमाणैः शिवार्चनकुसुमनिकरैः शिवपूजापुष्पसमूहैः शारा विचित्रवर्णा ताम्। आचमनशुचि शचीपतिमुच्यमानार्चनकुसुमनिकरशारामिति पाठान्तरम्। शिवेति। शिवपुरात् कैलासादित्यर्थः। पतितं निर्म्माल्यं निवेदितं शिवायेति भावः मन्दारदामकं मन्दारपुष्पमाल्यं यस्यां तथोक्ताम्।

(४३) अनादरेति। अनादरेण अवहेलया दारिताः खण्डिताः महाजवेनेति भावः मन्दरदर्य्यां मन्दराचलगुहायां दृषदः प्रस्तरा यया ताम्। अनेकेति अनेकेषां बहूनां नाकनायकानां देवानां याः कामिन्यः कान्ताः तासां कुचकलसैः स्तनकुम्भैः लुलितः सञ्चालितः विग्रहः कलेवरं जलरूपमिति भावः यस्याः ताम्। अनेकनाकनायकनिकायकामिनीकुचकलसविलुलितविग्रहामिति पाठे अनेका बहवः नाकनायकानां निकायस्य निवासस्य याः कामिन्यः तासां कुचकलसैर्विलुलितः विग्रहः यस्यास्तामित्यर्थः। ग्राहेति ग्राहाणां जलजन्तुभेदानां ग्रावग्रामाणां प्रस्तरसमूहानाञ्च स्खलितेन इतस्ततः पतनेन मुखराणि शब्दितानि बहूनि स्रोतांसि यस्याः ताम्। ग्राहग्रावग्रामस्खलनमुखरितस्रोतसमिति पाठान्तरम्।

(४४) सुषुम्णेति। सुषुम्णा नाम रविरश्मिविशेषः तया सूतः उत्पन्नः यः शशी चन्द्रः तस्य सुधानाम् अमृतानाम् अमृतमयमयूखानामिति यावत् शीकर-

त्रासविद्रुतविद्याधरां, निर्मोकपट्टिकामिव (४५) गगनोरगस्य लीलाललाटिकामिव त्रिपिष्टपस्य विक्रयवीथीमिव पुण्यपण्यसञ्चयस्य दत्तार्गलामिव नरकनगरस्य अंशुकोष्णीषपट्टिकाम् इव सुमेरोः दुकूलकदलिकामिव कैलासकुञ्जरस्य पद्धतिम् इव अपवर्गस्य (४६) नेमिमिव कृतयुगस्य

---

स्तवकैः बिन्दुगुच्छैः तारकितं तारकाराजितमिदं इति भावः तीरं यस्याः ताम्। सुषुम्णास्रुतशशिसुधाशीकरस्तवकतारकिततीरामिति पाठे सुषुम्णाख्यरविरश्मेः स्रुतः निःसृतो यः शशीत्यर्थः अन्यत् समानं तदुक्तम्। अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशीति। धिषणेति धिषणस्य बृहस्पतेः बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुरित्यमरः यत् अग्निकार्य्यम् अग्निहोत्रव्यापारः तस्य धूमेन धूसरितानि मलिनीकृतानि सैकतानि यस्याः ताम्। सिद्धेति सिद्धैः देवयोनिविशेषैः विरचितानि पूजार्थं विनिर्मितानि यानि वालुकालिङ्गानि वालुकामयशिवलिङ्गानि तेषां लङ्घनात् त्रासेन भयेन सिद्धदेयशापजनितेनेति भावः विद्रुताः पलायिता विद्याधरा देवयोनिभेदाः यस्याः ताम्। निर्मोकपट्टिकामिव कञ्चुकपटीमिव। निर्मोकमुक्तिमिवेति पाठे निर्मोकस्य कञ्चुकस्य मुक्तिः तामिव कृदभिहितो भावो द्रव्यं प्रकाशते इति न्यायात् मुक्तनिर्मोकमिवेत्यर्थः।

(४५) गगनमेव उरगः सर्पः तस्य गगनस्य कृष्णवर्णत्वात् निर्मोकस्य शुक्लवर्णत्वाच्च तथोत्प्रेक्षते। लीलाललाटिकामिव विलासार्थं भालभूषणमिवेत्यर्थः। त्रिपिष्टपस्य स्वर्गस्य त्रयाणां पिष्टपानां समाहार इति समासे त्रिपिष्टपं त्रिलोकं तस्य। त्रिपिष्टपविटस्येति पाठे त्रिपिष्टपमेव विटः धूर्त्तलम्पटविशेषः तस्य। विक्रयवीथीमिव विक्रयस्थानमिव यद्वा विक्रयपरम्परामिव। पुण्यानि पण्यानीव विक्रेयद्रव्याणीव तेषां सञ्चयः समूहः तस्य पुण्यपण्यस्येति पाठान्तरम्। दत्तार्गलामिव दत्ता अर्गला द्वाररोधकदण्डविशेषः तामिव। नरकनगरस्य नरकमेव नगरं तस्य। नरकनगरद्वारस्येति पाठान्तरम्। अंशुकेति अंशुकं सूक्ष्मवसनं तेन निर्मिता उष्णीषपट्टिका शिरोवेष्टनपटी तामिव। सुमेरोरित्यत्र सुमेरुनृपस्येति पाठे सुमेरुर्नृप इव तस्य। उपमिति समासः। दुकूलकदलिकामिव वस्त्रनिर्मितवैजयन्तीमिव। कैलासकुञ्जरस्य कैलासः कुञ्जर इव तस्य कैलासाद्रिगजस्य। पद्धतिमिव सरणिमिव। अपवर्गस्य कैवल्यस्य।

सप्तसागरराजमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकम् अवतरत् अपश्यत च अम्बरतलस्थितैव हारम् इव वरुणस्य आतपत्रनिकरमिव चन्द्राचलस्य शशिमणिनिष्यन्दम् इव विन्ध्यस्य कर्पूरद्रुमद्रवप्रवाहमिव दण्डकारण्यस्य लावण्यरस-प्रस्रवणमिव दिशां स्फटिकशिलापट्टशयनमिव अम्बरश्रियः (४७) स्वच्छशिशिरसुरसवारिपूर्णं भगवतः पितामहस्य अपत्यं हिरण्यबाहुनामानं महानदं यं जनाः शोण इति कथयन्ति। दृष्ट्वा च तं तदीयरामणीयकहृतहृदया तस्यैव तीरवासम् अरोचयत उवाच च सावित्रीं सखि! मधुरमयूरवि-रुतयः (४८) कुसुमपांशुपटलसिकतिलततलाः पुष्पपरिमल-

---

(४६) नेमिमिव धारामिव। कृतयुगचक्रस्य कृतं सत्यं युगं चक्रमिव तस्य अविरतघूर्णमानत्वादिति भावः। सप्तेति सप्तानां सागराणां समाहारः सप्तसागरं तस्य यद्वा सप्त च ते सागराश्चेति सप्तसागराः तेषां महिषी प्रधानपत्नी तां यद्वा सप्तसागरराजः क्षीरसमुद्रः तस्य महिषी। अवातरदित्यत्र अवततारेति पाठान्तरम्। अम्बरतलस्थितैव आकाशस्थितैव। हारमिव मुक्तामालामिव। वरुणस्य जलाधि-पतेरिति भावः। आतपत्रनिकरमिव छत्रपरम्परामिव चन्द्राचलस्य चन्द्राख्यस्य पर्वतस्य। आतपपत्रनिकरमिवेत्यत्र अमृतनिर्झरमिव इति पाठान्तरम्। शशि-मणिनिष्यन्दमिव चन्द्रकान्तनिर्झरमिव। कर्पूरेति। कर्पूरद्रुमस्य कर्पूरतरोः द्रवप्रवाहः निष्यन्दपरम्परा तमिव। स्फटिकेति स्फटिकशिला स्फटिकमणिः तस्याः पट्टमेव शयनं शय्या तदिव। अम्बरश्रियः गगनलक्ष्म्याः।

(४७) स्वच्छेति। स्वच्छानि निर्मलानि शिशिराणि शीतलानि सुरसानि सुस्वादानि वारीणि जलानि तैः पूर्णः तम्। हिरण्यबाहुनामानमित्यत्र हिरण्य-बाहुनामानमिति पाठान्तरम्। तदीयेति तस्य इदं तदीयं यत् रामणीयकं मनो-हरत्वं तेन हृतम् आकृष्टं हृदयं यस्याः तथाभूता। तीरवासमित्यत्र तीरे वास-मिति पाठान्तरम्। मधुरेति मधुराः मनोहारिण्यः मयूराणां विरुतयः निनादाः।

(४८) कुसुमेति। कुसुमानां पांशुपटलैः परागनिचयैः सिकति[illegible]

मत्तमधुपश्रेणीवीणारणितरमणीया प्रीणयन्ति मां मन्दाकिनीद्युतेरस्य महानदस्योपकण्ठभूमयः पक्षपाति च मे मनः अत्रैव स्थातुम् इति । अभिनन्दितवचना च तथेति तया तस्य पश्चिमे तीरे वासमरोचयत् । एकस्मिंश्च शुचौ शिलातलसनाथे तटलतामण्डपे गृहबुद्धिं बबन्ध । विश्रान्ता च नातिचिरादुत्थाय सावित्र्या सार्द्धम् उच्चितार्चनकुसुमा सस्नौ (४९) पुलिनपृष्ठप्रतिष्ठापितशिवलिङ्गा च भक्त्या परमया पञ्चब्रह्मपुरःसरां सम्यङ् मुद्रां बबन्ध । विहितपरिकरा अविगीताग्रहा (५०) अवनिपवनगगनतपनतुहिनकिरणदहनसलिलयजमानमयीर्मूर्त्तीरष्टावपि ध्यायन्ती सुचिरमष्ट-

---

सैकतवन्तः तरूणां वृक्षाणां तलाः तलदेशाः । पुष्पेति पुष्पाणां परिमलेन सौरभेण मत्तानां मधुपानां भ्रमराणां श्रेणीसङ्घः सैव वीणा तस्याः रणितेन शब्देन रमणीयाः । परिमलमत्तमधुपवेणीति पाठे परिमलेन पुष्पाणामिति भावः मत्तानां मधुपानां वेणी श्रेणीत्यर्थः । मन्दाकिनीद्युतेः मन्दाकिन्या द्युतिरिव द्युतिर्यस्य तथोक्तस्य । मन्दीकृतमन्दाकिनीद्युतेरिति पाठे मन्दीकृता खर्वीकृता मन्दाकिन्या द्युतिः येन तथाभूतस्येत्यर्थः । पक्षपाति प्रणयीत्यर्थः स्निग्धमिति यावत् । मन इत्यत्र हृदयमिति पाठान्तरम् । वासमरोचयदित्यत्र समवातरदिति पाठान्तरम् । शिलातलसनाथे शिलाखण्डसमन्विते । तटलतामण्डपे तटस्थितलतानिर्म्मितवासगृहे । बबन्ध कृतवती । सस्नौ स्नातवती ।

(४९) पुलिनेति । पुलिनस्य सैकतदेशस्य पृष्ठे उपरि प्रतिष्ठापितं संस्थापितं शिवलिङ्गं यया तथोक्ता । पञ्चेति पञ्च ब्रह्माणि सद्योजातवामदेवाघोरतत्पुरुषेशानरूपाणि पुरःसराणि अग्रगण्यानि यस्यां तादृशीं मुद्रां कराङ्गुलियोगविशेषरूपां सम्यक् यथाविधि बबन्ध कृतवती प्रथमं सद्योजातपूजाविधायिनी ततः वामदेवपूजासम्पादनी तत्पश्चात् अघोरपूजासाधनी तदनन्तरं तत्पुरुषार्च्चासम्पादनी अनन्तरम् ईशानपूजाविधायिनीत्येवं पञ्च मुद्राविधानेन पञ्च ब्रह्माणि पूजयामास इति भावः । विहितपरिकरा कृतपूजाविधाना । अविगीताग्रहा अविगीतः अनिन्द्यः आग्रहः अभिनिवेशः यस्याः तथाभूता विशिष्टयत्नवतीत्यर्थः ।

(५०) अवनीति । अवनिः क्षितिः पवनो वायुः तपनः सूर्य्यः तुहिनकिरणः

पुष्पिकामदात् अयत्नोपनतेन फलमूलादिना अस्ततरसमपि (५१) अतिशिशयिषमाणेन तेन च स्वादुना शिशिरेण शोणवारिणा शरीरस्थितिम् अकरोत् (५२) अतिवाहितदिवसा च तस्मिन् एव लतामण्डपशिलातले कल्पितपल्लवशयना सुष्वाप। अन्येद्युरपि अनेनैव क्रमेण नक्तन्दिनम् अत्यवाहयत्।

एवमतिक्रामत्सु दिवसेषु गच्छति च काले (५३) याममात्रमिव गते रवौ इतरस्यां दिशि (५४) प्रतिशब्दपूरितगह्वरं गम्भीरतरं (५५) तुरङ्गमह्रेषितोद्यममशृणोत्। उपजातकुतूहला च निर्गत्य लतामण्डपाद्विलोकयन्तो (५६) विकचकेतकगर्भपत्रपाण्डरं रजःसङ्घातं नातिदवीयसि प्रदेशे संमुखम्

---

सोमः दहनोऽग्निः सलिलं जलं यजमानः याज्ञिकः एतदात्मिका इति अवन्यादिमय्यः ताः अष्टौ मूर्तीः शिवस्येति भावः। ध्यायन्ती चिन्तयन्ती। अष्टपुष्पिकाम् अष्टौ पद्मादिपुष्पविशेषान् अदात् दत्तवती। अयत्नोपनतेन अनयायासोपलब्धेन। फलमूलादिनेत्यत्र फलमूलेन।

(५१) अतिशिशयिषमाणेन अतिशययितुमिच्छता। स्वादुना सुस्वादेन स्वादिनेति पाठे अतिस्वादवतेत्यर्थः। शिशिरेण शीतलेन। शोणवारिणा शोणनदसलिलेन।

(५२) अतिवाहितदिवसा अतिक्रान्तदिना।

(५३) याममात्रमिव प्रहरमात्रमिव गते उदिते। याममात्रोद्गते इति पाठे प्रहरमात्रोद्गते इत्यर्थः। इतरस्याम् अन्यस्याम् उत्तरस्याम् इति पाठान्तरं दिशीत्यत्र ककुभीति पाठान्तरम्।

(५४) प्रतिशब्देति। प्रतिशब्देन प्रतिध्वनिना पूरितानि गह्वराणि यस्य तं प्रतिशब्दपूरितवनगह्वरमिति पाठान्तरम्। गम्भीरतरमित्यत्र गम्भीरतारतरमिति पाठे गम्भीरश्चासौ तारो महांश्चेति गम्भीरतारः अतिशयेन गम्भीरतारः गम्भीरतारतरः तम्।

(५५) तुरङ्गमेति। तुरङ्गमाणां ह्रेषितानि शब्दविशेषाः तेषाम् उद्यमः उद्योगः तं तुरङ्गह्रेषितह्रादमिति पाठे तुरङ्गाणां ह्रेषितमेव ह्रादः निनादः तम्।

(५६) विकचेति। विकचं विकसितं यत् केतकगर्भपत्रं तद्वत् पाण्डरं

आपतन्तम् अपश्यत्। क्रमेण च (५७) सामीप्योपजायमानाभिव्यक्तिनि तस्मिन् एव महति शफरोदरधूसरे रजसि पयसीव मकरचक्रं प्लवमानं पुरः प्रधावमानेन(५८)प्रलम्बकुटिलकचपल्लवघटितललाटतटचूलिकेन (५९) धवलदन्तपत्रद्युतिहसितकपोलभित्तिना (६०) पिनद्धकृष्णागुरुपङ्कच्छुरणकषायकञ्चुकेन (६१) उत्तरीयकृतशिरोवेष्टनेन (६२) वामप्रकोष्ठनिविष्टहाटककटकेन (६३) द्विगुणपट्टिकागाढ-

---

शुभम्। केतकीत्यत्र केतकीति पाठान्तरम्। रजःसङ्घातं धूलिसञ्चयम्। नातिदवीयसि अनतिदूरवर्त्तिनीत्यर्थः। आपतन्तम् आगच्छन्तम्।

(५७) सामीप्येति। सामीप्येन नैकट्येन उपजायमाना अभिव्यक्तिः स्फुटता यस्य तादृशे। शफरेति शफरस्य मत्स्यविशेषस्य उदरवत् धूसरं तस्मिन्। मकरः मकरचक्रं मकरा जलजन्तुभेदाः तेषां चक्रं समूहः तदिव। प्रधावमानेन द्रुतगामिनेत्यर्थः।

(५८) प्रलम्बेति। प्रलम्बेन प्रकर्षेण लम्बमानेन कुटिलेन कचः केशः पल्लव इव कोमलत्वात् तेन घटिता बद्धा ललाटतटे भालदेशे चूलिका चूड़ा येन यथोक्तेन चूलिकेनेत्यत्र जूटकेनेति पाठे स एवार्थः।

(५९) धवलेति। धवलस्य श्वेतस्य दन्तपत्रस्य गजदन्तनिर्म्मितकर्णाभरणभेदस्य द्युतिः प्रभा तया हसितः उद्भासितः कपोलभित्तिः गण्डदेशः यस्य तेन। दन्तपत्रेत्यत्र दन्तपत्रिकेति पाठान्तरम्।

(६०) पिनद्धेति। पिनद्धः परिहित. कृष्णागुरुपङ्कस्य गन्धद्रव्यविशेषद्रवस्य छुरणेन अधिवासनेन कषायः सुरभिः कञ्चुकः वारवाणः यस्य तेन। पिनद्धकृष्णागुरुपङ्ककल्कच्छुरणकृष्णशवलकषायकञ्चुकेनेति पाठे पिनद्धः कृष्णागुरुपङ्क एव कल्कः चूर्णं तस्य च्छुरणात् संश्लेषात् कृष्णः शवलः सतोऽन्यवर्णत्वात् चित्रितः कषायः सुरभिः कञ्चुको येन तथाभूतेन।

(६१) उत्तरीयेति। उत्तरीयेण कृत शिरोवेष्टनम् उष्णीषं येन तथोक्तेन।

(६२) वामेति। वामे प्रकोष्ठे प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोरित्युक्ते

ग्रन्थिग्रथितासिधेनुना सततव्यायामकृशकर्कशशरीरेण वनहरिणयूथेनेव मुहुर्मुहुः (६४) उड्डीयमानेन लङ्घितसमविषमावटविटपेन कोणधारिणा कृपाणपाणिना च (६५) सेवागृहीतविविधवनकुसुमफलमूलपर्णेन चल चल याहि याहि अपसर्प अपसर्प पुरः प्रयच्छ पन्थानम् इति अनवरतकृतकलकलेन युवप्रायेण सहस्रमात्रेण पदातिबलेन सनाथम् अश्ववृन्दं ददर्श ।

मध्ये च तस्य सार्द्धचन्द्रेण मुक्ताफलजालिना (६६) विविध-

---

करावयवे निविष्टं धृतं हाटककटकं स्वर्णवलयं येन तथोक्तेन स्पष्टहाटककटकेन इति पाठान्तरम् ।

(६३) द्विगुणेति । द्विगुणा द्विरावृत्ता या पट्टिका पट्टवसनखण्डं तस्या गाढ़ेन कठिनेन ग्रन्थिना ग्रथिता बद्धा असिधेनुका छुरिका येन तथोक्तेन । सततेति सततेन अविरतेन व्यायामेन अङ्गचालनविशेषेण कृशं कर्कशं कठिनञ्च शरीरं यस्य तेन । सततेत्यत्र अनवरतेति पाठान्तरम् । वनहरिणयूथेनेव वन्यमृगदलेनेव । वातहरिणयूथेनेव इति पाठे वातहरिणा ये वाताभिमुखं धावन्ति तेषां यूथं तेनेवेत्यर्थः ।

(६४) उड्डीयमानेन अतिवेगेन धावतेति भावः खमुड्डीयमानेन इति पाठे खमाकाशम् उड्डीयमानेन उत्पतता अतिवेगेन धावतेति स एवार्थः । लङ्घितेति लङ्घितः अतिक्रान्तः समानां विषमाणाम् अवटानाम् उन्मार्गाणाञ्च स्थानानामिति भावः विटपः विस्तरः येन तथाभूतेन । कोणधारिणा लगुड़धरेणेत्यर्थः । कृपाणपाणिना असिधारिणेत्यर्थः ।

(६५) सेवेति । सेवायै स्वामिनः स्वाभीष्टदेवस्य वा सेवार्थं गृहीतानि विविधानि वनस्य कुसुमानि फलानि मूलानि पर्णानि पत्राणि च येन तथोक्तेन । याहि याहि गच्छ गच्छ अपसर्प अपगच्छ । पुरः अग्रतः । प्रयच्छ देहि । युवप्रायेण तरुणबहुलेन सहस्रं मात्रा परिमाणं यस्य तेन सहस्रपरिमितेन इत्यर्थः । सनाथं सहितम् । सार्द्धचन्द्रेण अर्द्धचन्द्रः तेन समानं सार्द्धचन्द्रं तेन । मुक्ताफलजालिना मुक्ताफलानां मौक्तिकानां जालं समूहः मालेति भावः तद्वता । मुक्ता-

रत्नखण्डखचितेन शङ्खक्षीरफेनपिण्डपाण्डरेण क्षीरोदेनेव स्वयं लक्ष्मीं दातुमागतेन गगनगतेन आतपत्रेण कृतच्छायम् अच्छाच्छेन आभरणदीधितीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेन अनुगम्यमानम् आनितम्बावलम्बिन्या मालतीशेखरस्रजा (६७) सकलभुवनविजयाय अर्जितया रूपपताकयेव विराजमानम् समुत्सर्पिभिः शिखण्डकपद्मरागमणेः अरुणैः अंशुजालैः (६८) अदृश्यमानवनदेवताविधृतैः बालपल्लवैरिव प्रमृज्यमानमार्गरेणुम्

---

फलजालमालिनेति पाठे मुक्ताफलानां जालं समूहः तस्य माला स्रक् तद्वतेत्यर्थः।

(६६) विविधेति विविधानां रत्नानां खण्डैः खचितं रञ्जितं तेन। शङ्खेति शङ्खः क्षीरं दुग्धं फेनपिण्डं फेनचयः तद्वत् पाण्डरं शुभ्रं तेन फेनपिण्डेत्यत्र फेण पाण्डुरेण इति पाठान्तरम्। क्षीरोदेनेव क्षीरसागरेणेव लक्ष्मीजनकेनेति भावः। गगनगतेन अन्तरीक्षवर्त्तिना। आतपत्रेण छत्रेण। कृतच्छायं कृता छाया अनातपं कान्तिश्च यस्य तं छाया सूर्य्यप्रिया कान्तिरित्यमरः। अच्छाच्छेन स्वच्छेन अतिशोभनेन इत्यर्थः अच्छेन इति पाठान्तरम्। निवहेन समूहेन। दर्शनानुरागलग्नेन दर्शने अवलोकने यः अनुरागः आसक्तिः तेन लग्नं समासक्तं तेन। दिशां चक्रवालेन मण्डलेन इव। आनितम्बावलम्बिन्या आनितम्बं नितम्बपर्य्यन्तम् अवलम्बते इति तथोक्तया आनितम्बविलम्बिन्या इति पाठे स एवार्थः। मालतीशेखरस्रजा मालतीकुसुमनिर्म्मितशिरोमालया।

(६७) सकलेति। सकलानां भुवनानां विजयाय पराजयार्थम् अर्जितया लब्धया विजयार्जितयेति समस्तं पाठान्तरम्। रूपपताकयेव सौन्दर्य्यवैजयन्त्येव। समुत्सर्पिभिः समुद्गच्छद्भिः उत्सर्पिभिरिति पाठान्तरम्। शिखण्डकपद्मरागमणेः शिखण्डकं शिरोभूषणं यः पद्मरागमणिः तस्य। अरुणैः रक्तैः अंशुजालैः प्रभानिवहैः शिखण्डमण्डिकापद्मरागमणेरिति पाठे शिखण्डमण्डिका चूड़ाभरणमित्यर्थः। अंशुजालैरित्यत्र अंशुकजालैरिति पाठान्तरम्।

(६८) अदृश्यमानेति। अदृश्यमानया वनदेवतया वनाधिदेव्या विधृतैः। बालपल्लवैरिव नवकिसलयैरिव। प्रमृज्यमानमार्गरेणुं प्रमृज्यमाना अप-

अरुणवपुषं ( ६८ ) वकुलकुड्मलमण्डलीमुण्डमालामण्डनमनोहारिणा कुटिलकुन्तलस्तवकमालिना मौलिना निमीलितातपम् आपिबन्तमिव दिवसम् ( ७० ) पशुपतिमुकुटमृगाङ्कद्वितीयशकलघटितस्येव ( ७१ ) सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनःशिलापङ्कपिङ्गलेन लावण्येन लिम्पन्तम् इवान्तरिक्षम् ( ७२ ) अभिनवयौवनावष्टम्भप्रगल्भदृष्टिपाततृणीकृतत्रिभुवनस्य चक्षुषः प्रथिम्ना

---

नीयमानाः मार्गरेणवः अध्वगमनात् अङ्गलग्ना धूलयः यस्य तादृशम् । अरुणवपुषं रक्तदेहम् । प्रक्ष्ज्यमानमार्गरेणुपरुषमिति पाठे प्रक्ष्ज्यमानं परिक्लिश्यमानं मार्गरेणुभिः अध्वरजोभिः परुषम् आविलमिति यावत् । वपुः शरीरं यस्य तथाभूतमित्यर्थः ।

( ६९ ) वकुलेति । वकुलकुड्मलानां वकुलमुकुलानां मण्डली माला एव मुण्डमाला तया मण्डनं शोभा तेन मनोहारिणा । कुटिलेति कुटिलः भङ्गिमान् यः कुन्तलानां केशानां स्तवकः गुच्छः तेषां माला समूहः तद्वता मौलिना किरीटेन शिरोभूषणेन इत्यर्थः मौली किरीटधम्मिल्लौ इत्यमरः । निमीलितातपं निर्वापितसौरमयूखं मौलिप्रभातिशय्यादिति भावः । अतएव दिवसम् आपिबन्तमिव ग्रसन्तमिव ।

( ७० ) पशुपतीति । पशुपतेः हरस्य मुकुटः शिरोभूषणभूतं यः मृगाङ्कः अर्द्धचन्द्रः इत्यर्थः तस्य द्वितीयम् अपरं शकलं खण्डं तेन घटितस्येव निर्म्मितस्येव इत्यर्थः अर्द्धचन्द्राकृतेरिति भावः । पशुपतिजटामुकुटमृगाङ्केति पाठे पशुपतेर्जटासु यत् मुकुटं मृगाङ्कः तस्येति योजना ।

( ७१ ) सहजेति । सहजा स्वाभाविकी या लक्ष्मीः श्रीः तया समालिङ्गितः समन्वितः तस्य । ललाटपट्टस्य भालफलकस्य । मनःशिलेति मनःशिला रक्तवर्णो धातुविशेषः तस्य पङ्कः द्रवः तद्वत् पिङ्गलं गौरं तेन । लावण्येन मुक्ताफलेषु च्छायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणेन अङ्गप्रभाविशेषेण ।

( ७२ ) अभिनवेति । अभिनवस्य अचिरप्रवृत्तस्य यौवनस्य अवष्टम्भेन समा-

(७३) विकचकुवलयकुमुदकमलसरःसहस्रसञ्छादितदशदिशं शरत्समयसम्पदमिव प्रवर्त्तयन्तम् (७४) आयतनयनदीर्घसीमान्तसेतुबन्धेन (७५) ललाटपट्टिकाशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा घोणावंशेन विराजमानम् (७६) अतिसुरभिसहकारकालकर्पूरलवङ्गपारिजातपरिमललुब्धमत्तमधुकरकोलाहलमुखरेण

---

र्षेण प्रगल्भः चतुरः यो दृष्टिपातः अवलोकनविशेषः तेन तृणीकृतं तुच्छीकृतं त्रिभुवनं येन तथाभूतस्य। प्रथिम्ना विस्तारेण।

(७३) विकचेति। विकचानां विकसितानां कुवलयानां नीलोत्पलानां कुमुदानां कमलानाञ्च सरःसहस्रैः सरोवरसङ्घैः संछादिता दश दिशो यया तथोक्तां शरत्समयसम्पदमिव शरत्कालिकश्रियमिव। शरदमिव इति पाठान्तरम्। प्रवर्त्तयन्तं प्रकटयन्तम्।

(७४) आयतेति। आयतयोः विशालयोः नयनयोर्यो दीर्घः प्रशस्तः सीमान्ते सेतुबन्धः तेन तथाभूतेन इत्यर्थः। आयतनयननदीसीमान्तसेतुबन्धेन इति पाठे आयते नयने एव नद्यौ तयोः सीमान्तेषु सेतुबन्धः तेन बद्धसेतुभूतेन इत्यर्थः।

(७५) ललाटेति। ललाटपट्टिका ललाटफलकम् एव शशिमणिशिलातलं चन्द्रकान्तपाषाणतलं तस्मात् गलितं निःसृतं तेन। कान्तिसलिलस्रोतसेव लावण्यजलप्रवाहेणेव। ललाटपट्टिकेत्यत्र ललाटतटेति पाठान्तरम्। द्राघीयसा अतिदीर्घेण। घोणावंशेन नासादण्डेन इत्यर्थः। विराजमानमित्यत्र शोभमानमिति पाठान्तरम्।

(७६) अतिसुरभीति। अतिसुरभि अतिशयेन सौरभवत् अतएव सहकारः अतिसौरभं चूतफलं तन्मुकुलं वा कालकर्पूरं लवङ्गं पारिजातं पारिजातकुसुममित्यर्थः तेषां परिमलेषु लुब्धानां लोलुपानां मत्तानां मधुकराणां भ्रमराणां कोलाहलैः झणत्कारैः मुखरं सशब्दं तेन। सहकारादिभ्योऽपि मनोहरसौरभलोभादिति भावः। सहकारकालकर्पूरेत्यत्र सहकारकर्पूरकक्कोललवङ्गपारिजातपरिमलमुचेति पाठे कक्कोलं वनकर्पूरं गन्धद्रव्यभेद इति यावत्। ततः पूर्ववत् द्वन्द्वसमासः ततः तेषामिव परिमलं मुञ्चतीति तथोक्तेन। ततो मत्तमधुकरकुलकोलाहल-

मुखेन सनन्दनवनं वसन्तमिव वमन्तम् (७७) आसन्नसुहृत्परिहाससम्भाषणेन उत्तानमुखमुग्धहसितैः (७८) दशनज्योत्स्नास्नपितदिङ्मुखैः पुनःपुनर्नभसि सञ्चारिणं चन्द्रालोकमिव कल्पयन्तं (७९) कदम्बमुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिखण्डकण्ठाभरणस्य (८०) प्रेङ्खतः प्रभया समुत्सर्पन्त्या सकुसुमहरितकुन्दपल्लवकण्ठावतंसमिवोपलक्ष्यमाणम् (८१) आमोदिमृगम-

---

मुखरेणेति पाठः। सनन्दनवनं नन्दनवनं तदाख्यदेवोद्यानं तेन सह वर्त्तमानम्। वमन्तम् उद्गिरन्तम्। मुखस्य नन्दनवनवत् तत्तत्सौरभशालित्वादिति भावः।

(७७) आसन्नेति। आसन्नेन सन्निहितेन सहचारिणेत्यर्थः सुहृदा मित्रेण सह यत् परिहाससम्भाषणं परिहासालापः तेन। उत्तानेति उत्तानस्य उन्नमितस्येत्यर्थः मुखस्य मुग्धानि मनोज्ञानि हसितानि स्मितानि तैः। आसन्नसुहृत्परिहासभावनोत्तानितमुखमुग्धहसितैरिति पाठे आसन्नेन सुहृदा यः परिहासः तस्य भावना भावावबोधः तस्मिन् उत्तानितम् उन्नमितं यत् मुखं तस्य मुग्धानि हसितानि तैः।

(७८) दशनेति। दशनानां दन्तानां ज्योत्स्नया प्रभयेत्यर्थः स्नपितानि धौतानीति यावत् दिङ्मुखानि येषु तथोक्तैः। कल्पयन्तं विस्तारयन्तम्।

(७९) कदम्बेति। कदम्बमुकुलवत् स्थूलं यत् मुक्ताफलयुगलं मौक्तिकयुग्मं तस्य मध्ये अध्यासितम् अधिश्रितं मरकतं तदाख्यं रत्नं यस्य यत्र वा तथाभूतस्य। त्रिखण्डकण्ठाभरणस्य त्रिगुणकण्ठहारस्येत्यर्थः द्वयोर्द्वयोः मुक्ताफलयोर्मध्ये मरकतरत्नसिक्थं ग्रथितत्रिरावृत्तहारस्येति भावः। त्रिकण्टककर्णाभरणस्येति पाठे त्रीणि कण्टकानि कण्टकसदृश्यः शलाका इत्यर्थः यत्र तादृशं यत् कर्णाभरणं कर्णभूषणं तस्येत्यर्थः।

(८०) प्रेङ्खतः दीप्यमानस्य ज्वलत इत्यर्थः दोलतो वा। समुत्सर्पन्त्या समुद्गच्छन्त्या। सकुसुमेति सकुसुमः पुष्पसहितः हरितः हरिद्वर्णः कुन्दपल्लवः कण्ठावतंसः कण्ठभूषणं यस्य तथाभूतमिव। कृतसकुसुमहरितकुन्दपल्लवकर्णावतंसमिति पाठे कृतः सकुसुमः हरितः कुन्दपल्लवः कर्णावतंसः कर्णभूषणं यस्य तथोक्तमित्यर्थः।

दपङ्कलिखितमकरमुखपत्रभङ्गभास्वरं भुजयुगलम् उद्दाममकराक्रान्तशिखरमिव मकरकेतुदण्डद्वयं दधानं धवलब्रह्मसूत्रसीमन्तितं (८२) सागरमथनसामर्षगङ्गास्रोतःसन्दानितमिव मन्दरं देहमुद्वहन्तं (८३) कर्पूरक्षोदमुष्टिच्छुरणपांशुलेनेव युवतिजनकुचचक्रवाकमिथुनविपुलपुलिनेन उरःस्थलेन स्थूलभुजायामपुञ्जीकृतं पुरो विस्तारयन्तमिव दिक्चक्रं पुरस्तात् ईषत् (८४) अधोनाभिनिहितैककोणकमनीयेन पृष्ठतः कक्ष्याधिक्षिप्तपल्लवेनोभयतः

---

(८१) आमोदीति। आमोदी सौरभवान् यः मृगमदपङ्कः कस्तूरिकारसः तेन लिखितः चित्रितः मकरमुखः मकराख्यजलजन्तुभेदवदनरूप इति यावत्। पत्रभङ्गः पत्ररचना तेन भास्वरं राजमानं भुजयुगलं बाहुयुग्मम्। उद्दामेति उद्दामेन उद्भटेन मकरेण आक्रान्तं शिखरम् अग्रभागः यस्य तादृशम्। मकरकेतुदण्डद्वयं कामस्य दण्डयुगलम्। धवलेति धवलेन शुभ्रेण ब्रह्मसूत्रेण यज्ञोपवीतेन सीमन्तितं संयतं सन्नद्धमित्यर्थः।

(८२) सागरेति। सागरस्य क्षीरोदस्य मथनेन सामर्षा सक्रोधा पतिद्रोहादिति भावः या गङ्गा तस्याः स्रोतसा प्रवाहेण सन्दानितमिव बद्धमिव। मन्दरं मन्दराचलम्।

(८३) कर्पूरेति। कर्पूरस्य क्षोदः चूर्णं तस्य मुष्टिः मुष्टिधृतकर्पूरचूर्णमित्यर्थः तस्य च्छुरणं क्षेपणं [illegible] यावत् तेन पांशुलं धवलमित्यर्थः। तेन। कर्पूरक्षोदच्छुरणपांशुलेनेति पाठान्तरम्। युवतीति युवतिजनस्य कुचावेव स्तनावेव चक्रवाकमिथुनं तस्य विपुलं वृहत् पुलिनं सैकतं तेनेव। कान्तोच्चकुचचक्रवाकयुगलविपुलपुलिनेनेति पाठे कान्तायाः उच्चकुचावेव चक्रवाकयुगलं तस्य विपुलं पुलिनं तेनेत्यर्थः। उरःस्थलेन वक्षःस्थलेन स्थूलेति स्थूलेन महता भुजयोः आयामेन विस्तारेण पुञ्जीकृतं समाहृतम्। दिक्चक्रं दिङ्मण्डलं पुनः विस्तारयन्तमिव प्रसारयन्तमिव। पुरस्तात् अग्रतः।

(८४) अधोनाभीति। नाभेरधः अधोनाभि तत्र निहितः एकः कोणः अग्रविशेषः तेन कमनीयं मनोज्ञं तेन। पृष्ठतः पश्चाद्भागे। कक्ष्येति कक्ष्यया

संवलनप्रकटितोरुविभागेन हारीतहरिता निविड़निपीड़ितेन अधरवाससा (८५) विभक्ततनुतरमध्यभागम् अनवरतश्रमोपचितमांसकठिनविकटमकरमुखसंलग्नजानुभ्यां (८६) विशालवक्षःस्थलोपलवेदिकोत्तम्भनशिलास्तम्भाभ्यां चारुचन्दनस्थासकस्थूलकान्तिभ्याम् ऊरुदण्डाभ्याम् उपहसन्तमिव ऐरावतकरायामम् (८७) अतिभरभरितोरुभागभारवहनखेदेनेव तनुतरं जङ्घाकाण्डं वहन्तं (८८) कल्पपादपपल्लवपाटलस्य उभयपार्श्वविलम्बिनः पदद्वयस्य दोलाय-

---

मेखलया अधिक्षिप्तः संयतः पल्लवः प्रान्तभागो यस्य तेन। उभयतः उभयोः भागयोः संवलनेन सङ्कोचनेन प्रकटितः प्रकाशितः ऊर्वोर्विभागः येन तादृशेन। हारीतहरिता हारीतः पक्षिविशेषः तद्वत् हरित् नीलवर्णमित्यर्थः तेन। हारीतहरितेनेति पाठेऽपि स एवार्थः। निविड़निपीड़ितेन सुदृढ़संयमितेन। अधरवाससा परिधानवसनेन।

(८५) विभक्तेति। विभक्तः प्रकटितः तनुतरः अतिकृशः मध्यभागः कटिदेशः यस्य तम्। विभक्तेत्यत्र विभज्यमानेति पाठान्तरम्। अनवरतेति अनवरतेन सततेन श्रमेण उपचितं प्रवृद्धं यत् मांसं तेन कठिनं दृढ़ं विकटं वृहत् यत् मकरमुखं जानुनोरुपरिभागः तेन संलग्ने संबद्धे जानुनी ययोः ताभ्याम्।

(८६) विशालेति। विशालं वृहत् यत् वक्षःस्थलं तदेव उपलवेदिका पाषाणनिर्म्मिता वेदिका तस्या उत्तम्भनाय उद्धा[illegible]णाय शिलास्तम्भौ पाषाणनिर्म्मितौ स्तम्भौ तत्स्वरूपावित्यर्थः। ताभ्याम्। चार्विति चारुणा मनोज्ञेन चन्दनस्थासकेन चन्दनालङ्करणेन स्थूला अतिशयिता कान्तिर्ययोः ताभ्याम्। ऐरावतकरायामम् ऐरावतशुण्डादण्डविस्तारम्।

(८७) अतिभरेति। अतिभरेण अतिभारेण भरितयोः पूर्णयोः ऊरुभागयोः ऊर्वोः भारस्य वहनेन धारणेन यः खेदः श्रमः तेनेव। तनुतरं कृशतरम्। जङ्घाकाण्डं जानुनोः अधोभागरूपं स्तम्भम्। तनुतरजङ्घाकाण्डमिति पाठे तनुतरः जङ्घाकाण्डो यस्येति समासयोजना।

(८८) कल्पपादपेति। कल्पपादपस्य कल्पतरोः पल्लवः किसलयः तद्वत्

मानैर्नखमयूखजालकैः (८९) अश्वमण्डनचामरमालामिव रचयन्तम् अभिमुखमुच्चैरुदञ्चद्भिः अतिचिरमुपरि विश्राम्यद्भिरिव वल्गनविकटं पतद्भिः खुरैः खण्डितभुवि प्रतिक्षणं (९०) दशनग्रहविमुक्तिखणखणायितखलीने दीर्घघोणलीननालिके ललाटपट्टिकालुलितचामीकरचक्रे (९१) शिञ्जानशातकुम्भमयानशोभिनि मनोरंहसि गोलाङ्गूलकपोलकान्तिरोमणि नीलसिन्धुवारवर्णे वाजिनि समारूढम् उभयत्र पर्याणपट्टाश्लिष्टहस्ताभ्याम् आसन्नपरिचार-

---

पाटलं रक्तं तस्य। कल्पपादपपल्लवद्वयस्येव पाटलस्येति पाठान्तरम्। उभयपार्श्वविलम्बिनः उभयोः पार्श्वयोः विलम्बते इति तथोक्तस्य उभयपार्श्वावलम्बिन इति पाठान्तरम्। नखमयूखजालकैः नखकिरणसमूहैः नखमयूखैरिति पाठान्तरम्।

(८९) अश्वेति। अश्वस्य स्ववाहनस्येति भावः मण्डनम् अलङ्कारः चामरमाला तामिव। रचयन्तं कल्पयन्तम्। उदञ्चद्भिः उत्पतद्भिः। विश्राम्यद्भिरिव विश्रामं गच्छद्भिरिवेत्यर्थः। वल्गनविकटं वल्गनेन गतिविशेषेण विकटम् उद्भटं यथा तथा। वलितविकटमिति पाठे वलितं गतिविशेषः तेन विकटं चित्रमिति केचिद्व्याचक्षुः। खण्डितभुवि खण्डिता कुट्टिता भूः क्षितिः येन तथोक्ते।

(९०) दशनेति। दशनैः दन्तैः ग्रहः ग्रहणं विमुक्तिः त्यागः ताभ्यां खणखणायितः खणखणशब्दवत् कृतः खलीनः कविका येन तथोक्ते। दशनविमुक्तिखणखणायितखलीने इति पाठे दशनैर्विमुक्तिः अपसारणं तेन खणखणायितः खलीनो येन तथोक्ते इत्यर्थः। दीर्घेति दीर्घायां बृहत्यां घोणायां नासिकायां लीना लग्ना नालिका कविका यस्य तादृशे। ललाटेति ललाटपट्टिकायां भालफलके लुलितं चञ्चलितं वेगादिति भावः चामीकरचक्रं स्वर्णचक्रं यस्य तथाविधे। ललाटलुलितचारुचामीकरचक्रके इति पाठान्तरम्।

(९१) शिञ्जानेति। शिञ्जानं स्वनत् यत् शातकुम्भयानं स्वर्णनिर्मितमाल्यविशेषः तेन शोभते इति तथोक्ते। मनोरंहसि मनस इव रंहः रयः यस्य तादृशे मनोजवे इत्यर्थः। गोलाङ्गूलेति गोलाङ्गूलः वानरविशेषः तस्य कपोलवत् कान्तिर्येषां तादृशानि रोमाणि यस्य तथोक्ते। नीलेति नीलं यत् सिन्धवारं तत्

काभ्यां (९२) दोधूयमानधवलचञ्चरीकायुगलम् अग्रतः पठतो बन्दिजनस्य सुभाषितम् उत्कण्टकितकपोलफलकेन लग्नोत्पलकेसरपक्ष्मशकलेनेव मुखशशिना भावयन्तम् (९३) अनङ्गयुगावतारमिव दर्शयन्तं चन्द्रमयीमिव सृष्टिम् उत्पादयन्तं विलासप्रायमिव जीवलोकं जनयन्तम् (९४) अनुरागमयमिव सर्गान्तरमानयन्तं शृङ्गारमयमिव दिवसमापादयन्तं रागराज्यमिव प्रवर्त्तयन्तम् आकर्षणाञ्जनमिव चक्षुषो: वशीकरणमन्त्रमिव मनसः स्वस्थावेशचूर्णम् इव इन्द्रियाणाम् सन्तोषमिव कौतुकस्य (९५) सिद्धयोगमिव सौभाग्यस्य पुनर्जन्मदिवसमिव मन्मथस्य

---

कुसुममित्यर्थः तस्येव वर्णो यस्य तथाभूते। वाजिनि अश्वे। वाजिनि महतीत्यधिकपाठे महति महोन्नते वाजिनीत्यर्थः। उभयत्रेति उभयत्र उभयोः पार्श्वयोरित्यर्थः। पर्य्याणेति पर्य्याणपट्टः अश्वपृष्ठस्थितासनविशेषः पर्य्याणं तदेव पट्टः फलकं तस्मिन् आश्लिष्टः अर्पितः हस्तः वाम इति भावः याभ्यां तथोक्ताभ्याम्। उभयत्रेत्यत्र उभयत इति पाठान्तरम्।

(९२) दोधूयमानेति। दोधूयमानं वीज्यमानं धवलं श्वेतं चञ्चरीकायुगलं चामरयुगलं यस्य तम्। चञ्चरिकेत्यत्र चामरिकेति पाठे स्पष्टम्। उत्कण्टकितकपोलफलकेन उत्कण्टकिते रोमाञ्चिते इति यावत् कपोलफलके गण्डतटे यस्य तथाभूतेन। लग्नेति लग्नानि संसक्तानि उत्पलस्य कुमुदस्य केसरपक्ष्मशकलानि किञ्जल्कखण्डानि यस्मिन् तेनेव। भावयन्तं चिन्तयन्तम्।

(९३) अनङ्गेति। अनङ्गस्य कामस्य युगे समयविशेषे अवतारः पृथिव्यामवरोहणं तमिव दर्शयन्तम्। अवतीर्णमनङ्गमिव जीवलोकं दर्शयन्तमिति भावः।

(९४) अनुरागातिशयादिति भावः। एवमुत्तरत्र। सर्गान्तरम् अन्यां सृष्टिम्। आपादयन्तं जनयन्तम्। रागराज्यं रागो विषयेषु घनस्नेहः तस्य राज्यं तत्। आकर्षणाञ्जनं वशीकरणकज्जलम्। स्वस्थावेशचूर्णमिव स्वस्थं यथा तथा आवेशयतीति तथाभूतं चूर्णं वशीकरणार्थचूर्णद्रव्यविशेषः तदिव।

(९५) सिद्धियोगमिव सिद्धये कार्य्याणामिति भावः। योगः उपायः

रसायनमिव यौवनस्य एकराज्यमिव रामणीयकस्य कीर्त्तिस्तम्भमिव रूपस्य कुलकोषमिव लावण्यस्य पुण्यकर्मपरिणाममिव संसारस्य ( ९६ ) प्रथमाङ्कुरमिव कान्तेः सर्गाभ्यासफलमिव प्रजापतेः प्रतापमिव विभ्रमस्य यशःप्रवाहमिव वैदग्ध्यस्य अष्टादशवर्षदेशीयं कञ्चित् युवानम् अद्राक्षीत् ।

पार्श्वे च तस्य द्वितीयम् ( ९७ ) संसक्ततुरगं परं प्रांशुम् उत्तप्ततपनीयस्तम्भावदातं परिणतवयसमपि व्यायामबलीयांसं नीचनखश्मश्रुकेशं शुक्तिखलतिम् ईष-

---

तमिव । रसायनमिव गुणान्तराधानमिव । रामणीयकस्य सौन्दर्य्यस्य । एकराज्यमिव एकमद्वितीयं राज्यमिव । कुलकोशमिव वंशवित्तमिव । पुण्येति पुण्यानां कर्मणां परिणामः फलं तमिव ।

( ९६ ) प्रथमाङ्कुरमिव प्रथमः मुख्यः आद्यो वा अङ्कुरः प्ररोहः तमिव । कान्तेरित्यत्र कान्तिलताया इति पाठे कान्तिरेव लता तस्याः । सर्गाभ्यासफलमिव सर्गः सृष्टिः तस्य अभ्यासः पुनःपुनरनुशीलनं तस्य फलं तदिव । विभ्रमस्य विलासस्य । यशःप्रवाहमिव यशसां प्रस्रवणमिव । वैदग्ध्यस्य नैपुण्यस्य । अष्टादशवर्षदेशीयम् अष्टादशवर्षवयसमिवोपलक्ष्यमाणमित्यर्थः ।

( ९७ ) संसक्ततुरगं तुरगेण संसक्तः तं तुरगारूढमित्यर्थः अपरसंसक्ततुरगमिति पाठे अपरेण तुरगेण संसक्तः तमित्यर्थः अत्र समासश्चिन्त्यः । परम् अत्यर्थं प्रांशुम् उच्चदेहमित्यर्थः । उत्तप्तेति उत्तप्तं प्रज्वलितं यत् तपनीयं काञ्चनं तस्य स्तम्भवत् अवदातः गौरः तं अवदातः सितो गौरो वलक्षो धवलोऽर्जुन इत्यमरः । उत्तप्ततपनीयस्तम्भाकारमिति पाठान्तरम् । परिणतवयसं परिपक्ववयसं स्थविरमिति यावत् । व्यायामबलीयांसं व्यायामेन सततावयवचालनया बलीयान् अतिबलशाली तम् । व्यायामकठिनकायमिति पाठे स्पष्टम् । नीचनखश्मश्रुकेशं नीचा नता लम्बमाना इत्यर्थः नखाः श्मश्रवः केशाश्च यस्य तथोक्तम् । नीचनखश्मश्रुकचमिति पाठान्तरम् । शुक्तिखलतिं शुक्तिवत् खलतिः खल्लाटः यस्य तं प्रस-

तुन्दिलं (९८) अनुल्बणोदारवेशतया जरामपि विनयमिव शिक्षयन्तं गुणानपि गौरवमिव आपादयन्तं महानुभावतामपि शिष्यतामिव जनयन्तम् आचार्य्यस्य आचार्य्यकमिव कुर्वाणं धवलवारबाणधारिणं लसत्तनुदुकूलपट्टिकापरिश्लिष्टमौलिं पुरुषम्।

अथ स युवा (९९) पुरोयायिनां यथादर्शनं प्रतिनिवृत्य विस्मयमानमनसां कथयतां पदातीनां सकाशात् उपलभ्य दिव्याकृति तत् कन्यायुगलम् उपजातकुतूहलः प्रतूर्णतुरगो दिदृक्षुः तं लतामण्डपोद्देशम् आजगाम। दूरादेव च तुरगादवततार निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यामेव सविनयमुपससर्प। कृतोपसंग्रहणौ तौ सावित्री समं सरस्वत्या किसलयासनदानादि-

---

वर्णाखलतिमित्यर्थः तुन्दिलं लम्बोदरमित्यर्थः। रोमशोरःस्थलमित्यधिकपाठे रोमशं बहुलोमयुक्तमित्यर्थः उरःस्थलं वक्षःस्थलं यस्य तथोक्तमित्यर्थः।

(९८) अनुल्बणेति अनुल्बणं सततं उदारवेशतया विशुद्धपरिच्छदतया। अनुल्बणोदारवेशतयेति पाठे अनुल्बणः अनुत्कटः सौम्य इत्यर्थः उदारो विशुद्धो वेशो यस्य तस्य भावः तत्ता तया। गुणानपि विनयदाक्षिण्यादीनपि। गौरवमिव आपादयन्तमित्यत्र गरिमाणमिवानयन्तमिति पाठान्तरम्। महानुभावतां महासत्त्वताम्। जनयन्तमित्यत्र आनयन्तमिति पाठान्तरम्। आचार्य्यस्य गुरोः। आचारस्येति पाठे आचारस्य सौजन्यस्येति यावत्। आचार्य्यकमिव आचार्य्यस्य कर्म आचार्य्यकं तदिव। धवलवारबाणधारिणं धवलवर्मधरम्। लसदिति लसन्त्या शोभमानया तन्वा सूक्ष्मया दुकूलपट्टिकया पट्टवसनखण्डिकया परिश्लिष्टः परिवेष्टितः मौलिर्धम्मिल्लो यस्य तम्। धौतदुकूलपट्टिकापरिवेष्टितमौलिमिति पाठान्तरम्।

(९९) पुरोयायिनाम् अग्रयायिनाम्। यथादर्शनं दर्शनमनतिक्रम्य यथादर्शनं दर्शनानुसारेणेत्यर्थः दृष्टैवेत्यर्थः। विस्मयमानमनसां विस्मयमान चमत्-

नौ कुसुमफलार्घ्यावसानेन वनवासोचितेन आतिथ्येन यथा-क्रमम् उपजग्राह। आसीनयोश्च तयोः आसीना नातिचिर-मिव स्थित्वा तं द्वितीयं प्रवयसम् उद्दिश्य अब्रवीत् आर्य्य ! (१००) सहजलज्जाधनस्य प्रमदाजनस्य प्रथमाभिभा-षणं शालीनता विशेषतो वनमृगीमुग्धस्य कुमारी-जनस्य। केवलम् इयम् (१०१) आलोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयति उदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः। (१०२) प्रथमदर्शने च उपायनमिवोपनयति सज्जनः प्रणयम्। अप्रगल्भमपि जनं प्रभवता प्रश्रयेण अर्पितं मनो

---

कुर्वत् मनः येषां तथाभूतानाम्। विस्मितमनसामिति पाठान्तरम्। उपलभ्य विदित्वा। उपजातकुतूहलः सञ्जातदर्शनाभिलाष इत्यर्थः। प्रतूर्णतुरगः विद्रुत-तुरङ्गमः। उपससर्प उपजगाम। कृतोपसंग्रहणौ कृतम् उपसंग्रहणं समादरेण ग्रहणं ययोः तथाभूतौ। किसलयासनदानादिना पल्लवरचितासनदानादिना। कुसुमफलार्घ्यावसानेन कुसुमेन फलेन च यत् अर्घ्यं पूजनविशेषः तदेव अवसानं यस्य तेन। सकुसुमफलार्घ्यावसानेनेति पाठोऽपि स्पष्टः। यथाक्रमं यथानियमम् उपजग्राह समादृतवती। आसीनयोः उपविष्टयोः तयोः युवप्रवयसोरित्यर्थः। आसीना उपविष्टा।

(१००) सहजेति सहजया स्वभावजातया लज्जया घनः पूर्ण इत्यर्थः तस्य। प्रथमाभिभाषणं प्रथमं प्राक् युवजनसमीपे तदीयाभिभाषणादिति भावः अभिभाष-णम् आलपनम्। शालीनता धृष्टता चापल्यमित्यर्थः। वनमृगीमुग्धस्य वनस्य मृगी हरिणी तद्वत् मुग्धः सरलः तस्य कुमारीजनस्येत्यत्र कुलकुमारीजनस्येति पाठान्तरम्। इयं श्रोत्रवृत्तिः इत्यनेनान्वयः श्रोत्रवृत्तिः श्रवणेन्द्रियव्यापारः।

(१०१) आलोकनेति आलोकनेन दर्शनेन युवयोरिति भावः कृतार्थं चरि-तार्थं तस्मै चक्षुषे नयनाय स्पृहयन्ती स्पृहां कुर्वती नयनवत् स्वयमपि कृतार्थतां गन्तुमभिलषन्तीत्यर्थः। उदन्तेति उदन्तस्य वृत्तान्तस्य युवयोरिति शेषः श्रवणे कुतूह-लिनी सञ्जातकुतूहला सती प्रेरयति अभिभाषितुं मामिति शेषः।

(१०२) प्रथमेति प्रथमं नवमित्यर्थः दर्शनं तस्मिन्। उपायनमिव उपदा-

मधु इव वाचालयति। अयत्नेनैव च अतिनम्रे साधौ धनुषीव गुणः परां कोटिमारोपयति विस्रम्भः। जनयन्ति च विस्मयम् अतिधीरधियाम् अपि अदृष्टपूर्वा दृश्यमाना जगति सुष्ठुसृष्ट्यतिशयाः। यतस्त्रिभुवनाभिभावि रूपमिदमस्य महानुभावस्य कुमारस्य(१०२) सौजन्यपरतन्त्रा चेयं देवानां बुधस्यातिभद्रता कारयति कथां नतु युवतिजनसहोत्था तरलता। तत् कथय अत्र आगमनेन अपुण्यभाक् कतमो विक्रमजृम्भितविरहव्यथया शून्यतां नीतो देशः। क्व वा गन्तव्यम्। को वा अयम् (१०४) अपहृतहरहुङ्काराहङ्का-

---

मिव प्रणयम् उपनयति प्रदर्शयति इत्यर्थः। उपनयन्ति सज्जना इति बहुवचनान्तं पाठान्तरम्। प्रभवता प्रभुणा महतेति भावः प्रश्रयेण विनयेन सज्जनानामिति भावः अर्पितम् उद्दीपितं मनः चित्तं मधु इव मद्यमिव अप्रगल्भमपि मुग्धमपि जनं वाचालयति वाचालं करोति। गुणः विनयादिः मौर्वी च। परां कोटिं परम-मुत्कर्षम्। धनुषः शिखाञ्च। विस्रम्भः विश्वासः समौ विस्रम्भविश्वासावित्यमरः अतिधीरधियाम् अतिशयेन धीरा धीर्बुद्धिर्येषां तथाभूतानामपि। अदृष्टपूर्वाः पूर्व-मदृष्टाः। सुष्ठुसृष्ट्यतिशयाः शोभनाः सृष्टिविशेषा इत्यर्थः। स्रष्टृविसृष्ट्यतिशया इति पाठे स्रष्टुः विधातुः विसृष्टिः विशिष्टा सृष्टिः तस्या अतिशयाः उत्कर्षाः पर-मोत्कृष्टसृष्टवस्तूनीति यावत्।

(१०२) सौजन्येति सौजन्यस्य परतन्त्रा पराधीना इयं देवानाम् अतिभद्रता अतिशयेन शिष्टाचारः बुधस्य विद्वज्जनस्य प्रियस्येति पाठे प्रियस्य प्रियजनस्य समीपे इति भावः कथां कारयति कथयतीत्यर्थः। युवतिजनसहोत्था युवतिजनानां सहोत्था स्वाभाविकी तरलता चपलता नतु कथां कारयतीत्यनुषङ्गः। अत्र युवति-जने इत्यत्र कुमारीजने इति पाठो युज्यते। तत् तस्मात् कथय ब्रूहि। अत्र आगमनेन कतमो देशः अपुण्यभाक् पुण्यवर्जितः क्वत इत्यर्थः यतः विक्रमजृम्भितविरहव्यथया विक्रमेण बलेन जृम्भिता उद्दीपिता या विरहव्यथा वियोगपीड़ा युवयोरिति भावः शून्यतां नीतः यस्मात् देशात् भवन्तावागतौ स देश इदानीं युवयोः विरहेण नितरां दुःखितो जात इति तस्य अपुण्यभाक्त्वमिति भावः। कुत्र भवतोर्निवास इति प्रश्न-

रोऽपर इव अनन्यजो युवा। किन्नाम्नः सम्भृततपसः पितुः अयम् अमृतवर्षी कौस्तुभमणिरिव हरेर्हृदयमाह्लादयति। का वास्य त्रिभुवननमस्या प्रभातसन्ध्येव महतस्तेजसो जननी जननी। कानि वा अस्य पुण्यभाञ्जि भजन्ति अभिख्याम् अक्षराणि। आर्य्यपरिज्ञानेऽप्ययमेव क्रमः कौतुकानुरोधिनो हृदयस्य।

इत्युक्तवत्यां तस्यां प्रकटितप्रश्रयोऽसौ प्रत्यवादीत् आयुष्मति! (१०५) सतां हि प्रियंवदता कुलविद्या। न केवलमाननं हृदयमपि च ते चन्द्रमयमिव सुधाकर करशीतलैराह्लादयति वचोभिः (१०६) सौजन्यजन्मभूमयो भूयसा शुभेन कर्मणा शिल्पकला इव भवादृश्यो

---

निष्कर्षः। विजृम्भितविरहव्यथ इति पाठे विजृम्भिता उद्दीपिता विरहव्यथा यस्य तथाभूत इत्यर्थः।

(१०४) अपहृतेति अपहृतः नाशितः हरस्य हुङ्काराहङ्कारः हुङ्कारगर्वः येन तथाभूतः हरकोपाग्निना अदग्ध इति भावः। अनन्यजः आत्मभूः कामः इत्यर्थः। को वेत्यत्र कस्य वेति पाठे कस्य जनस्य अयं युवा इत्यन्वयः। किन्नाम्नः किमाख्यस्य। त्रिभुवननमस्या त्रिलोकीपूज्या। प्रभातसन्ध्येव प्रातःसन्ध्येव। पुण्यभाञ्जि पुण्यवन्तीत्यर्थः। अभिख्यां संज्ञाम्। अक्षराणि वर्णाः, किन्नामधेयोऽयमिति भावः। आर्य्यपरिज्ञानेऽपि साधुज्ञानेऽपि अयं साधुरिति सामान्यतः परिज्ञानेऽपि कौतुकानुरोधिनः विशिष्टज्ञानलालसस्येत्यर्थः अयमेव क्रमः नियमः प्रश्नस्येति शेषः।

(१०५) प्रकटितप्रश्रयः प्रदर्शितविनयः। प्रत्यवादीदित्यत्र प्रतिव्याजहारेति पाठान्तरम्। सतामिति। सतां साधूनाम्। प्रियंवदता प्रियभाषित्वं कुलविद्या वंशक्रमानुसारिणी विद्या सहजा विद्या इत्यर्थः।

(१०६) सौजन्येति। सौजन्यस्य सदाचारस्य जन्मभूमयः उत्पत्तिस्थानानि भूयसा अतिबहुलेन अमेन पुण्येन कर्मणा कार्य्येण शिल्पकला इव शिल्पविद्या इव।

दृश्यन्ते (१०७) दूरे तावत् अन्योन्यस्यालापाः अभिजातैः सह दृष्टोऽपि मिश्रीभूता महतीं तुष्टिम् आरोपयन्ति। श्रूयताम् एष खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवःस्वस्त्रितयतिलकस्य (१०८) अदभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य (१०९) सुरासुरमुकुटमणिशिलातलशयनदुर्ललितपादपङ्कजस्य (११०) निजतेजःप्रसरप्लुष्टपुलोम्नः च्यवनस्य वहिर्वर्त्ति जीवितं दधीचो नाम तनयः। जननी

---

सज्जननिर्म्माणशिल्पकला इति पाठे सन्तो जनाः सज्जनाः तेषां निर्म्माणे शिल्पकला इत्यर्थः दृश्यन्ते इत्यत्र जायन्ते इति पाठान्तरम्।

(१०७) दूरे इति अन्योन्यस्य परस्परस्य सज्जनानामिति शेषः। आलापाः भाषणानि दूरे तावत् तिष्ठन्त्विति शेषः। ते खलु तुष्टिमारोपयन्तीति का कथेति भावः। अभिजातैः सत्कुलजैः सह मिश्रीभूताः दृष्टोऽपि दृष्टयोऽपि परस्परदर्शनानि अपीत्यर्थः महतीं तुष्टिं प्रीतिम् आरोपयन्ति जनयन्ति। तुष्टिमित्यत्र भूमिमिति पाठे महतीं भूमिं स्थानं स्वर्गमिति यावत्। आरोपयन्ति नयन्ति। एष इत्यत्र अयमिति पाठान्तरम्। भूषणम् अलङ्कारः। भार्गववंशस्य भृगोरयं भार्गवः तस्य वंशः कुलं तस्य। भूरिति भूः पृथिवी भुवः अन्तरीक्षं स्वः स्वर्गः तेषां त्रितयं तस्य तिलकं ललाटभूषणविशेषः तस्य।

(१०८) अदभ्रेति। अदभ्रो महान् अदभ्रं बहुलं बह्वित्यमरः। प्रभावः तपःसामर्थ्यमिति यावत् तेन स्तम्भितः संरुद्धः जम्भारिः इन्द्रस्य भुज एव स्तम्भः येन तथोक्तः तस्य पुरा किल अश्विनीकुमाराभ्याम् आवां यज्ञभागभुजौ कुर्विति चिरं प्रार्थितोऽयं तथेति प्रतिपद्य ताभ्यां भागं ददत् इन्द्रेण क्रुद्धेन वज्रधरेण रोषितः ततश्चास्य स वज्रहस्तः स्तम्भितोऽभूदिति पुराणवार्त्ता अत्र अनुसन्धेया।

(१०९) सुरासुरेति। सुराणाम् असुराणाञ्च मुकुटेषु यानि मणिशिलातलानि रत्नभूतप्रस्तराः तेषु शयनेन दुर्ललितं दुर्विनीतम् अत्याहतमिति यावत् पादपङ्कजं चरणसरसिजं यस्य तथाभूतस्य सुरासुरवन्द्यस्येति भावः पादपङ्करुहस्य इति पाठान्तरम्।

(११०) निजेति। निजानां तेजसां प्रसरेण प्रथिम्णा प्लुष्टः दग्धः पुलोमा

च अस्य जितजगतः (१११) अनेकपार्थिवसहस्रानुयातस्य शर्य्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम। तां खलु देवीं द्विमूर्त्तिं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात् स्वगृहम् आनाययत्। असूत च सा तत्र देवी दीर्घायुषम् एनम्। अनेहसा अवर्द्धत तत्रैव अयम् आनन्दितज्ञातिवर्गो बालस्तारकराज इव राजीवलोचनो राजगृहे। भर्त्तृभवनमागच्छन्त्यामपि मातरि न (११२) आसेचनकदर्शनमिमम् अमुञ्चत् मातामहो मनोविनोदनं नप्तारम्। अशिक्षत च अयं तत्रैव सर्वा विद्याः सकलाः कलाश्च।

कालेन च उपारूढयौवनम् इमम् आलोक्य अहमिव असौ अपि अनुभवतु सुखकमलावलोकनानन्दम् अस्य इति मातामहः कथं कथमप्येनं पितुरन्तिकम् अधुना व्यसर्जयत्। मामपि

---

नाम राक्षसी येन तथोक्तास्य। पुरा भृगोः पत्नी अन्तर्वत्नी पुलोम्ना राक्षसेन ह्रियमाणा आसीत् तदानीं गर्भस्थोऽसौ महामुनिर्गर्भात् चुच्योत। ततश्च अन्वर्थनाम्ना अनेन च्यवनेन राक्षसोऽसौ कोपदृष्ट्या दग्ध इति पुराणवार्त्ता। वहिर्वर्त्ति वहिर्वर्त्तते इति वहिर्वर्त्ति वहिःस्थितम्। वहिर्वर्त्तीति पाठान्तरम्। जितजगतः जगद्विजयिनः।

(१११) अनेकेति। अनेकानि बहूनि पार्थिवानां राज्ञां सहस्राणि तैः अनुयातः सेवित इति यावत् तस्य। शर्य्यातस्य तदाख्यस्य सम्राज इति शेषः। त्रिभुवनकन्यारत्नं त्रिभुवने याः कन्याः तासु रत्नं रत्नभूतेत्यर्थः। द्विमूर्त्तिं द्वे मूर्त्ती यस्याः तां स्वतो गर्भजन्मना च मूर्त्तिद्वयवतीमित्यर्थः गर्भिणीति भावः अन्तर्वत्नीमिति पाठे अन्तर्वत्नीं गर्भिणीमित्यर्थः। अनेहसा कालेन। तारकराज इव चन्द्र इव। राजीवलोचनः पद्मनेत्रः। मातरीत्यत्र दुहितरीति पाठान्तरम्।

(११२) आसेचनकेति। आसेचनकं तत् आसेचनकं दृष्टेर्नास्त्यन्तो यस्य दर्शने इत्युक्तलक्षणम् अतितृप्तिकरमिति यावत् दर्शनं यस्य तथाभूतम्। मनोविनोदनं मनःप्रीतिजननम्। नप्तारं दौहित्रम्। कलाः चतुःषष्टिविधाः कामविद्याः।

तस्य देवस्य (११३) सुगृहीतनाम्नः शर्यातस्य आज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुम् अवधारयतु भवती। पितुः पादमूलम् आयान्तं मया साभिसारम् अकरोत् स्वामी (११४) तद्धि नः कुलक्रमागतं राजकुलम्। उत्तमानाञ्च चिरन्तनता जनयति अनुजीविनि अपि जने कियन्मात्रमिव मन्दाक्षम्। अक्षीणः खलु दाक्षिण्यकोशो महताम्। इतश्च गव्यूतिमात्रे एव पारेशोणं तस्य भगवतः च्यवनस्य स्वनाम्ना नियमितव्यपदेशं च्यावनं नाम चैत्ररथकल्पं काननं निवासः। तदवधिरेव नौ यात्रा। यदि

---

(११३) उपारूढयौवनं प्राप्तयौवनम्। असौ च्यवनः। कथं कथमपि अतिकृच्छ्रेण। व्यसर्जयत् प्रेषयामास। सुगृहीतेति। सुगृहीतं नाम येन तथोक्तस्य। भृत्यपरमाणुं क्षुद्रतरं भृत्यमित्यर्थः। आयान्तम् आगच्छन्तम् एनमिति शेषः। मया साभिसारं ससहायं मत्सहचरमित्यर्थः। स्वामी प्रभुः नृपतिरित्यर्थः।

(११४) तद्धि न इति तत् राजकुलं नः अस्माकं कुलक्रमागतं वंशपरम्परया सेवितमिति यावत् हि अवधारणे। उत्तमानां सज्जनानां चिरन्तनता चिरानुगत्यमिति भावः। मन्दाक्षं लज्जां मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जेत्यमरः। अनुजीविनि अनुजीव्य चलति सेवके इति यावत् कियन्मात्रमिव अल्पमात्रमिव। चिरानुगत्येन सम्यग् भृत्यभावे महतां लज्जा जायते इति मामनुजीविनमपि स्वदौहित्रसहचरं कृतवानिति भावः। खलु यतः महतां दाक्षिण्यकोशः औदार्य्यभाण्डारम् अक्षीणः न क्षयं गच्छतीत्यर्थः। स्वस्य दाक्षिण्यातिशय्यात् तथा कृतवानिति भावः। इतश्च अस्मात् प्रदेशाच्च पारेशोणं शोणस्य नदस्य पारे इति पारेशोणं गव्यूतिमात्रे गव्यूतिः क्रोशयुगं तदेव तन्मात्रं तस्मिन् गव्यूतिः स्त्री क्रोशयुगमित्यमरः तदन्ते इत्यर्थः अत्यन्ते गम्यमाने अध्ववाचकात् सप्तमी। स्वनाम्ना निजाख्यया नियमितं निर्दिष्टम् अभिहितमित्यर्थः निर्मितव्यपदेशमिति पाठे निर्मितः कृतः व्यपदेशः संज्ञा यस्य तथोक्तं चैत्ररथकल्पं चैत्ररथं नाम कुवेरोद्यानं तस्मादीषदूनम्। नौ आवयोः। यात्रा गमनम्। तदवधिरेवेत्यत्र तदवधिश्चेति पाठान्तरम्।

च (११५) गृहीतक्षणदाक्षिण्यम् अनवहेलं वा हृदयम् अस्माकम् उपरि भूमिर्वा प्रसादानाम् अयं जनः श्रवणार्हो वा ततो न विमाननीयोऽयं नः प्रथमः प्रणयः कुतूहलिनो हृदयस्य। वयमपि शुश्रूषवो प्रथमवृत्तान्तम् आयुष्मत्योः। न इयम् आकृतिर्दिव्यतां व्यभिचरति। गोत्रनामनी तु श्रोतुम् अभिलषति नौ हृदयम्। तत् कथय कतमो वंशः स्पृहणीयतां जन्मना नीतः। का च इयम् अत्रभवती भवत्याः समवाय इव विरोधिनां पदार्थानाम्। तथाहि सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च पुण्डरीकमुखी हरिणलोचना च

---

(११५) गृहीतेति। गृहीतं क्षणदाक्षिण्यं स्वल्पकालिकसौजन्यं येन तथाभूतम्। अनवहेलं नास्ति अवहेला अवज्ञा यस्य तादृशम्। प्रसादानाम् अनुग्रहाणां भूमिः पात्रम्। श्रवणार्हः श्रोतुं योग्यः। विमाननीयः अनादरणीयः न विस्मरणीय इति यावत् नः अस्माकम् अयं प्रथमः आद्यः प्रणयः समागमः। शुश्रूषवः श्रोतुमिच्छवः। व्यभिचरति अतिक्रामति दिव्यतां विना ईदृशी आकृतिर्न सम्भवतीति भावः। गोत्रनामनी कुलनामधेये। नौ आवयोः। स्पृहणीयतां स्पृहायोग्यताम्। जन्मनेत्यत्र तवभवत्या जन्मनेति पाठान्तरम्। अत्रभवती मान्या पूज्या वा। विरोधिनां परस्परविरुद्धानां पदार्थानां वस्तूनां समवाय इव सम्मेलनमिव दृश्यते इति शेषः। भवत्या इत्यत्र भवत्याः समीपे इति पाठान्तरम्। तथाहि तमेवार्थं जानीहीत्यर्थः। सन्निहितबालान्धकारा सन्निहिताः सङ्गताः बालाः केशा अन्धकारा इव अन्यत्र बाला अभिनवा अन्धकारा तथाभूता। भास्वन्मूर्त्तिः भास्वती दीप्यमाना मूर्त्तिः यस्याः तथोक्ता अन्यत्र भास्वतः सूर्य्यस्य मूर्त्तिः। अत्र सूर्य्यमूर्त्तिसमीपे अन्धकार इति विरोधः उपमिति समासे बहुव्रीहिसमासे च तत्परिहारः। पुण्डरीकमुखी पुण्डरीकं श्वेतपद्मं तद्वत् मुखं यस्याः अन्यत्र पुण्डरीकः तदाख्यो दिग्गजविशेषः तस्येव मुखं तस्याः तथोक्ता। हरिणलोचना हरिणस्येव लोचने यस्याः अन्यत्र हरिणस्येव लोचने यस्याः तथोक्ता अत्र पक्षान्तरे विरोधः पूर्वपक्षे समाधानम्।

(११६) बालातपप्रभाधरा कुमुदहासिनी च समदहंसस्वना समुन्नतपयोधरा च (११७) कमलकोमलकरा (११८) हिमगिरिशिलापृथुनितम्बा च करभोरुर्विलम्बितगामिनी च अमुक्तकुमारभावा स्निग्धतारका चेति।

---

(११६) बालातपेति। बालातपः अभिनवसूर्य्यालोकः तस्य प्रभेव प्रभा यस्य तथाभूतः अधरो यस्याः तथोक्ता अन्यत्र बालातपस्य प्रभां धरतीति तथोक्ता। कुमुदहासिनी कुमुदवत् हासो विद्यते यस्याः तथोक्ता अन्यत्र कुमुदैः हसतीति कुमुदहासिनी कुमुदिनीत्यर्थः। अत्र पूर्वमविरोधः पश्चाद्विरोधः समदहंसस्वना मदेन सह वर्त्तमानः समदः मत्त इत्यर्थः। स चासौ हंसश्चेति समदहंसः तस्येव स्वनो नादः यस्याः तथोक्ता अन्यत्र समदः मत्ततान्यञ्जक इत्यर्थः हंसस्य स्वनो यस्यां तथाभूता। कलहंसस्वनेति पाठे कलः मधुरः हंसस्येव स्वनो यस्याः तथोक्ता अन्यत्र कलः हंसस्य स्वनो यस्यां तथोक्ता। समुन्नतपयोधरा समुन्नतौ तुङ्गौ पयोधरौ कुचौ यस्याः तथोक्ता अन्यत्र समुन्नताः समुन्नद्धाः पयोधरा मेघा यस्यां तथोक्ता प्रावृडिति भावः। पूर्वत्र समाधानं पश्चात् हंसानां शरद्येव मत्तताजननं न प्रावृषीति विरोधः।

(११७) कमलेति। कमलं पद्मं तद्वत् कोमलौ करौ यस्याः तथोक्ता अन्यत्र कमलवत् कोमलाः मृदुलाः कराः किरणा यस्याः तथोक्ता।

(११८) हिमेति। हिमगिरेः हिमालयस्य शिलावत पृथुः विशालः नितम्बः यस्याः तथोक्ता अन्यत्र पृथुनितम्बा हिमगिरिशिलेति व्यत्ययेनान्वयः। पृथुः महान् नितम्बः कटकं यस्याः तथाभूता। प्रागविरोधः पश्चात् तादृशशिलायाः कोमलकरतासम्भवाद्विरोधः। करभोरुः करभः मणिबन्धादाकनिष्ठं करस्य वहिर्भागः मणिबन्धादाकनिष्ठं करस्य करभो वहिरित्यमरः। तद्वत् ऊरू यस्याः सा अन्यत्र करभस्य उष्ट्रस्य इव ऊरू यस्याः सा तथा विलम्बितं मृदुमन्दं सविलासमित्यर्थः गच्छतीति तथोक्ता। अन्यत्र विलम्बितम् अतिमन्दं गच्छतीति तथोक्ता। प्रागविरोधः पश्चात् करभस्य द्रुतगामित्वाद्विरोधः विलम्बितगमनेति पाठान्तरम्। अमुक्तकुमारभावा न मुक्तः न त्यक्तः कुमारभावः बाल्यमित्यर्थः यया तथोक्ता अन्यत्र न मुक्तः कुमारे कार्त्तिकेये भावो भक्तिर्यया तथोक्ता स्निग्धतारका स्निग्धा स्नेहव्यञ्जिका प्रणयप्रकटिनीत्यर्थः तारका अक्ष्णः कनीनिका यस्याः तथोक्ता अन्यत्र स्निग्धः स्नेहपात्रमित्यर्थः

सा तु अवादीत् आर्य्य ! श्रोष्यसि कालेन (११९) भूयसो दिवसान् अत्र स्थातुम् अभिलषति नौ हृदयम् । अल्पीयांश्चायमध्वा । परिचय एव प्रकटीकरिष्यति । आर्य्येण न विस्मरणीयोऽयमनुषङ्गदृष्टो जन इत्यभिधाय तूष्णीमभूत् । दधीचस्तु नवाम्भोभारगम्भीराम्भोधरध्वाननिभया भारत्या नर्त्तयन् (१२०) वनलताभवनभाजो भुजगभुजः सुधीरमुवाच आर्य्ये ! करिष्यति प्रसादम् आर्य्या आराध्यमाना पश्यामः तातम् उत्तिष्ठ व्रजाम इति । तथेति च तेन अभ्यनुज्ञातः शनकैः उत्थाय कृतनमस्कृतिः उच्चचाल । तुरगारूढं च तं प्रयान्तं सरस्वती सुचिरम् उत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत् । उत्तीर्य्य शोणम् अचिरेणैव कालेन दधीचः पितुः आश्रमपदं जगाम । गते च तस्मिन् सा तामेव दिशम् विलोकयन्ती सुचिरमतिष्ठत् कृच्छ्रादिव च सञ्जहार दृशम् ।

---

तारकः तदाख्यदैत्यविशेषः यस्याः तथाभूता । कुमारभक्तायाः कुमारस्तु तारकं प्रति द्वेष्टी विरुद्ध इति पूर्वार्थे तत्परिहारः ।

(११९) भूयसो बहून् । अल्पीयान् अत्यल्पः । अध्वनः मार्गस्य परिचयः गव्यूतिमात्रपरिमाणं प्रकटीकरिष्यति प्रकाशयिष्यति । निकटस्थितयोः आवयोः अचिरात् परिचयं प्राप्स्यसीति भावः । अनुषङ्गदृष्टः अनुषङ्गेन कार्यान्तरव्यासङ्गेन दृष्टः अवलोकितः । नवाम्भोभारेति नवानाम् अम्भसां जलानां भारेण गम्भीरो योऽम्भोधरः मेघः तस्य ध्वानः नादः तन्निभया तदनुरूपया भारत्या वाचा । नर्त्तयन् नृत्यं कारयन् ।

(१२०) वनेति वनलता एव भवनानि गृहाणि भजन्ते इति तथोक्तान् भुजगान् भुङ्क्ते इति भुजगभुजो मयूरान् मयूरा मेघगर्जनेन नृत्यन्तीति प्रसिद्धिः ।

अथ मुहूर्त्तमिव स्थित्वा स्मृत्वा च तां तस्य रूपसम्पदं पुनः पुनः (१२१) व्यस्मयत अस्याः हृदयम्। भूयोऽपि चक्षुः आचकाङ्क्ष तद्दर्शनम्। अवशेव केनाप्यनीयत तामेव दिशं दृष्टिः। अप्रहितमपि मनस्तेनैव सार्द्धम् अगात्। अजायत च नवपल्लव इव लतायाः कुतोऽपि अनुरागः चेतसि। सालसेव शून्येव सनिद्रेव दिवसम् अनयत्। अस्तमुपयाति च प्रत्यक्पर्य्यस्तमण्डले लाङ्गलिकास्तवकसदृशत्विषि कमलिनीकामुके (१२२) कठोरसारसशिरःशोणशोचिषि सावित्रे त्रयीमये तेजसि (१२३) तरुणतरतमालश्यामले च मलिनयति व्योम

---

प्रसादम् अनुग्रहम्। आर्य्या आराध्यमाना सेव्यमाना। पश्चात् तातमित्यत्र पश्चात् तावत्तातमिति पाठान्तरम्। उच्चचाल प्रतस्थे। उत्तम्भितपक्ष्मणा उत्तम्भितानि ऊर्द्धं स्थिरीकृतानि पक्ष्माणि लोमानि यस्य तेन निश्चलतारकेण स्थिरतारेण। पितुर्जनकस्य च्यवनस्य। विलोकयन्ती आलोकयन्तीति पाठान्तरम्। कृच्छ्रादिव अतिकष्टेनैव दृशं चक्षुः संजहार न्यवर्त्तयत्।

(१२१) व्यस्मयत विस्मयमगच्छत्। अवशेव पराधीनेव। अप्रहितमपि अनियुक्तमपि। लतायाः इत्यत्र वनलतायाः इति पाठान्तरम्। कुतोऽप्यनुराग इत्यत्र कुतोऽप्यस्या अनुराग इति पाठान्तरम्। उपयाति उपगच्छति। प्रत्यक्पर्य्यस्तमण्डले प्रतीच्यां पश्चिमायां दिशीत्यर्थः पर्य्यस्तं पतितं मण्डलं यस्य तथाभूते। लाङ्गलिकेति लाङ्गलिका फलिनी तस्या इदं लाङ्गलिकं यत् स्तवकं गुच्छः तेन सदृशी त्विट् प्रभा यस्य तथोक्ते ईषद्रक्तपिङ्गले इति भावः। लाङ्गलिकास्तवकताम्रत्विषीति पाठे लाङ्गलिकास्तवकवत् ताम्रा रक्ताः त्विषो यस्य तथोक्ते इत्यर्थः।

(१२२) कठोरेति कठोरः परिणतः स्थविर इत्यर्थः यः सारसः पक्षिभेदः तस्य शिर इव शोणा रक्ता शोचिः दीप्तिः यस्य तथाभूते। सावित्रे सवितुरिदं सावित्रं तस्मिन्। त्रयीमये ऋग्यजुःसाम्नां त्रितयं त्रयी वेदास्त्रयी स्मृतेत्युक्तेः तदात्मके त्रय्येव विद्या तपतीति श्रुतेः।

(१२३ तरुणेति तरुणतरः अभिनवः तमालः तदाख्यवृक्षभेदः तद्वत्

व्योमव्यापिनि तिमिरसञ्चये सञ्चरत्सिद्धसुन्दरीनूपुररवा-नुसारिणि च मन्दं मन्दं मन्दाकिनीहंस इव समुत्सर्पति गगनतलं (१२४) कृतसन्ध्याप्रणामा निशा-शशिनि मुख एव निपत्य विमुक्ताङ्गी पल्लवशयने तस्थौ। सावित्री अपि कृत्वा यथाक्रियमाणं सायन्तनं क्रियाकला-पम् उचिते शयनकाले किसलयशयनमभजत जात-निद्रा च सुष्वाप।

इतरा तु मुहुर्मुहुः अङ्गवलनैः (१२५) विलुलितकि-सलयशयनतला निमीलितलोचनापि नाभजत निद्राम् अचिन्तयच्च मर्त्यलोकः खलु सर्वलोकानाम् उपरि—, यस्मिन् एवंविधानि सम्भवन्ति त्रिभुवनभूषणानि सकलगुणग्राम-गुरूणि रत्नानि। तथाहि तस्य (१२६) मुखलावण्यविन्दुः इन्दुः। तस्य च चक्षुषो विक्षेपाः (१२७) कुमुदकुवलयक-

---

श्यामलः नीलः तस्मिन्। व्योम आकाशं मलिनयति मलिनीकुर्वति व्योमव्या-पिनि गगनाच्छादिनि। सञ्चरदिति सञ्चरन्तीनाम् इतस्ततो गच्छन्तीनां सिद्ध-सुन्दरीणां नूपुररवम् अनुसरति अनुगच्छतीति तथोक्ते। मन्दं मन्दं शनैः शनैः। समुत्सर्पति समुद्गच्छति।

(१२४) कृतेति। कृतः सन्ध्यायां सन्ध्यायै वा प्रणामः यया तथाभूता उपा-सितसन्ध्येति यावत्। निशामुख एव प्रदोष एव न पुनः शयनोचिते काले इति भावः विमुक्ताङ्गी निहितकलेवरा। सायन्तनक्रियाकलापं सन्ध्याकालिककार्य-जातम्। (१२५) अङ्गवलनैः अङ्गस्य इतस्ततः चालनैः विलुठनैरिति यावत्।

विलुलितेति। विलुलितं विपर्यस्तं किसलयशयन[illegible]ं यस्याः तथा-भूता। किसलयशयनीयेति पाठान्तरम्। सर्वलोकानां सर्वेषां लोकानां स्वर्ग-मर्त्यपातालानाम् इत्यर्थः निर्द्धारे षष्ठी उपरि श्रेष्ठ इत्यर्थः। सकलगुणग्रामगुरूणि सकला गुणाः विनयदाक्षिण्यादयः तेषां ग्रामः समवायः तेन गुरूणि महान्ति।

(१२६) मुखेति। मुखस्य लावण्यानां कान्तिविशेषाणां विन्दुः लेशः।

मलाकरा:। तस्य च अधरमणेर्दीधितयो विकसितबन्धूकवनराजय:। तस्य च अङ्गस्य परभागकरणम् अनङ्ग:। आ:! पुण्यभाञ्जि तानि चक्षूंषि चेतांसि यौवनानि वा स्त्रैणानि येषाम् असौ अविषयो दर्शनस्य। क्षणं तु दर्शयता च तम् अन्यजन्मजनि कृतेनैव मे फलितम् अधर्मेण। का प्रतिपत्तिरिदानीम्। इति चिन्तयन्त्येव कथंकथमपि समुपजातनिद्रा क्षणमशेत सुप्ता च तम् एव दीर्घलोचनं ददर्श (१२८) स्वप्नासादितद्वितीयदर्शना च आकर्णाकृष्टकार्मुकेण मनसि निर्दयमताड्यत मकरकेतुना। प्रतिबुद्धाया मदनशरताडितायाश्च तस्या वार्त्तामिव उपलब्धुम् अरति:

---

इन्दु: चन्द्र:। सुखलावण्यप्रवाहस्य निष्यन्दबिन्दु: इति पाठान्तरम्। चक्षुषो: नयनयो: विक्षेपा: विसरणानि निपाता इत्यर्थ:।

(१२७) कुमुदेति। कुमुदानि कैरवाणि कुवलयानि नीलोत्पलानि कमलानि पद्मानि तेषाम् आकरा निचया:। विकचकुमुदेत्यादि पाठान्तरम्। दीधितय: मयूखा:। परभागकरणं परभागस्य उत्कर्षस्य करणं साधनम्। उपकरणमिति पाठे उपक्रियते अनेनेति उपकरणं साधनसामग्रीत्यर्थ:। आ इति खेदे। पुण्यभाञ्जि पुण्यानि भजन्ते इति तानि पुण्यवन्तीत्यर्थ: स्त्रैणानि स्त्रीणाम् इमानि स्त्रीसम्बन्धीनि इत्यर्थ: यद्वा स्त्रीणां समूहा: स्त्रैणानि नारीजातय इत्यर्थ:। येषां चक्षु:प्रभृतीनाम् असौ युवा अविषय: अगोचर: यै: असौ न दृष्ट: तेषाम् सुखेन अवस्थितिरिति पुण्यभाक्त्वमिति भाव:। फलितम् अधर्मेण इत्यत्र फलितम् धर्मेण इति पाठो न युज्यते। अधर्मवशादेव अस्य दर्शनं जातं तेनैव मे ईदृशी विकृतिरिति भाव:। येषाम् असौ विषय इति पाठे तु फलितं धर्मेण इति पाठो युज्यते। अस्य क्षणसाक्षात्कारेणैव जन्मसाफल्यमिति पुण्यभाक्त्वमिति भाव:। प्रतिपत्ति: इतिकर्त्तव्यता। समुपजातनिद्रा इत्यत्र उपजातनिद्रा इति पाठान्तरम्।

(१२८) स्वप्नेति। स्वप्ने आसादितं प्राप्तं द्वितीयं दर्शनं तस्येति भाव: यया तथाभूता। प्रतिबुद्धाया जागरितायाः। अरति: वस्तुवैराग्यरूपा कामदशा

आजगाम। तथाहि ततःप्रभृति (१२९) कुसुमधूलिधवलिताभिर्वनलताभिः अताड़ितापि वेदनाम् अधत्त। मन्दमारुतविधुतैः कुसुमरजोभिः अदूषितलोचना अपि अश्रुजलं मुमोच (१३०) हंसपक्षतालवृन्तचयविधुतैः शोणशीकरैः असिक्तापि आर्द्रतामगात् (१३१) प्रेङ्खत्कादम्बमिथुनाभिरनूढापि अघूर्णत वनकमलिनीकल्लोलदोलाभिः (१३२) विघटमानचक्रवाकयुगलविसृष्टैः अस्पृष्टापि श्याम-ताम् आततान विरहनिश्वासधूमैः। पुष्पधूलिधूसरैः अदष्टापि व्यचेष्टत मधुकरकुलैः।

---

तथाचोक्तं दर्पणे। अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः। अधृतिः स्यात् अनालम्बनतन्मयोन्मादमूर्च्छनाः। मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इहेति। दुःखासिकेति केचित्।

(१२९) कुसुमेति। कुसुमानां धूलिभिः परागैः धवलिता व्याप्ततया श्वैत्यमापन्ना इत्यर्थः ताभिः। वेदनां व्यथाम् अधत्त अनुबभूव। ताडनलतास्पर्शे प्रत्युत सुखमेव भवेत् अस्यास्तु न तथेत्यरतिरिति भावः। एवमुत्तरत्र द्रष्टव्यम् अदूषितलोचना अकलुषितनयना।

(१३०) हंसेति हंसानां पक्षा एव तालवृन्तचयाः व्यजनसङ्घाः तैः विधुता विक्षिप्ताः तैः। हंसपक्षतालवृन्तव्रातवातविततैरिति पाठे तालवृन्तानां व्राताः समूहाः तेषां वातैः वितताः विस्तृताः विक्षिप्ता इत्यर्थः तैः इत्यर्थः। शोणशीकरैः शोणस्य नदस्य शीकरा अम्बुकणाः तैः। शीकरोऽम्बुकणाः स्मृत इत्यमरः। आर्द्रतां जाड्यम्।

(१३१) प्रेङ्खदिति प्रेङ्खन्ति सञ्चरन्ति कादम्बानां कलहंसानां मिथुनानि युगलानि यासु तथाविधाभिः। वनकमलिनीकल्लोलदोलाभिः वनेषु जलेषु याः कमलिन्यः पद्मिन्यः ता एव कल्लोलदोलाः तरङ्गरूपा दोलनयन्त्राणि ताभिः अनूढापि अनुपवेशितापि अघूर्णत अकम्पत।

(१३२) विघटमानेति विघटमानैः विच्छेदं गच्छद्भिः इत्यर्थः चक्रवाकाणां युगलैः मिथुनैः विसृष्टाः त्यक्ताः तैः विरहनिश्वासधूमैः विरहे ये निश्वासाः ते धूमा

(१२२) अथ गणरात्रापगमे निवर्त्तमानस्तेनैव वर्त्मना तं देशम् आगत्य तथैव निवारितपरिजनः छत्रधारद्वितीयो विकुक्षिर्डुढौके। सरस्वती तु तं दूरादेव संमुखमापतन्तं दृष्ट्वा ससम्भ्रम् उत्थाय वनमृगीव उद्ग्रीवा विलोकयन्ती मार्गपरिश्रान्तम् अस्नपयत् इव धवलितदशदिशा दृशा।

कृतासनपरिग्रहन्तु तं प्रीत्या सावित्री पप्रच्छ आर्य्य! कच्चित् कुशली कुमारः? इति। सोऽब्रवीत् आयुष्मति! कुशली स्मरति च भवत्योः केवलममीषु दिवसेषु (१२४) तनीयसीमिव तनुं बिभर्त्ति अविज्ञायमानां च अनिमित्तां शून्यतामिवाधत्ते। अपिच अन्वक् समागमिष्यति एव मालती इति नाम्ना वरवर्णिनी वार्त्तां वो विज्ञातुम्—उच्छ्वसितं हि सा कुमारस्येति। तच्छ्रुत्वा पुनरपि सावित्री समभाषत अतिमहानुभावः खलु कुमारो यत् एवम् अविज्ञायमाने क्षणदृष्टेऽपि जने परिचितिम्

---

इव तैः। श्यामतां मलिनताम् आततान प्राप आससादेति पाठान्तरम्। पुष्पेति पुष्पाणां धूलिभिः परागैः धूसराः कपिशाः तैः मधुकरकुलैः भ्रमरसङ्घैः अदृष्टापि व्यचेष्टत तेषां झङ्कारैर्व्यथिता भूमौ विलुण्ठितवतीत्यर्थः।

(१२२) अथानन्तरं गणरात्रापगमे गणरात्र बह्वी निशाः तस्य अपगमे अतिक्रमे बहुनिशासु गतासु इत्यर्थः। डुढौके प्राप उपतस्थे इत्यर्थः। अस्नपयत् इव स्नपयामासेव।

धवलितेति धवलिता श्वेतीकृता दश दिशः यया तथाभूतया। (१२४) तनीयसीम् अतिशयेन कृशाम्। शून्यतामिव अभावमिव आधत्ते अनुभवतीत्यर्थः। अन्वक् मत्पश्चात् अविलम्बेनेति भावः। वरवर्णिनी उत्तमाङ्गना काचिदिति शेषः। वो युष्माकं तव सरस्वत्याश्च इत्यर्थः वार्त्तां प्रवृत्तिम्। सा मालती कुमारस्य दधीचस्य उच्छ्वसितं जीवनमित्यर्थः प्राणसमा इति भावः अविज्ञायमाने अज्ञातकुलशीले इति

अनुबध्नाति। तस्य हि गच्छतो यदृच्छया कथमपि अंशुकमिव मार्गलतासु मानसम् अस्मासु मुहूर्त्तम् आसक्तम् आसीत्। अमूल्यं हि सौजन्यम् आभिजात्येन वः स्वामिसूनोः। अलसः खलु लोको यदेवं (१२५) सुलभसौहार्द्दानि येन केनचिन्न क्रीणाति महतां मनांसि। सोऽयम् औदार्य्यातिशयः कोऽपि महात्मनाम् इतरजनदुर्लभो येन उपकरणीकुर्वन्ति त्रिभुवनम् इति। विकुक्षिः उच्चावचैः आलापैः सुचिरमिव स्थित्वा यथाभिलषितं देशम् अयासीत्।

(१२६) अथ अपरेद्युः उदिते भगवति द्युमणौ उद्दामद्युतौ अभिद्रुततारके तिरस्कृततमसि तामरसिनीविकासव्यसनिनि सहस्ररश्मौ शोणम् उत्तीर्य्य आयान्तौ तरलदेहप्रभावितानच्छलेन अत्यच्छं सकलं शोणसलिलमिव आन-

---

भावः। परिचितिं परिचय प्रणयमिति यावत् अनुबध्नाति आदधाति। महानुभावाः स्वपरविवेकरहिताः सर्वमेव स्वं मन्यन्ते इति भावः। यदृच्छया अकस्मादित्यर्थः अंशुकमिव वसनमिव। मार्गलतासु पथि स्थितासु वल्लीषु अपरिचितासु इति भावः। अमूल्यं महामूल्यम् आभिजात्येन सद्वंशप्रसूतत्वेन। स्वामिसूनोः प्रभुकुमारस्य। अलसः निश्चेष्टः मूढो वा।

(१२५) सुलभेति सुखभानि सौहार्द्दानि येषां तानि महतां मनांसि येन केनचित् सामान्येन वस्तुनेति भावः न क्रीणाति। औदार्य्यातिशयः अतिशयेन औदार्य्यम् कोऽपि अनिर्वचनीयः। इतरजनदुर्लभः क्षुद्रजन-दुष्प्रापः। येन औदार्य्यातिशयेन उपकरणीकुर्वन्ति वशीकुर्वन्तीत्यर्थः। उच्चावचैः नानाविधैः।

(१२६) अपरेद्युः अन्यस्मिन् अहनि। द्युमणौ दिवोमणिः तस्मिन्। गगनरत्ने इत्यर्थः सूर्य्ये इति यावत्। उद्दामद्युतौ उद्दामा उत्कटा उष्णेति यावत् द्युतिः यस्य तस्मिन्। अभिद्रुततारके अभिद्रुताः सन्ताडिताः तारका नक्षत्राणि येन तथोक्ते नक्षत्रतिरोधानकारिणि इत्यर्थः तिरस्कृततमसि दूरीकृतान्धकारे। तामरसिनीविकासव्यसनिनि तामरसिन्यः रक्तोत्पलिन्यः तासां विकासे व्यसनम् आसक्तिः

यन्ती (१३७) स्फुटितातिमुक्तककुसुमस्तवकसमत्विषि सटाले महति मृगपताविव गौरी तुरङ्गमे स्थिता सलीलम् उरोबध्रारोपितस्य (१३८) तिर्य्यगुत्कर्णतुरगाकर्ण्यमान-नूपुरपटुरणितस्य अतिबहलेन पिण्डालक्तकेन पल्लवितस्य (१३९) कुङ्कुमपिञ्जरितपृष्ठस्य चरणयुगलस्य प्रसरद्भिः अति-लोहितैः प्रभाप्रवाहैः उभयतः ताडनदोहदलोभागतानि किसलयितातिरिक्तरक्ताशोकवनानि इव आकर्षयन्ती (१४०) सकलजीवलोकहृदयहठहरणघोषणयेव रशनया शिञ्जान-जघनस्थला धौतधवलनेत्रनिर्म्मितेन निर्मोकलघुतरेण

---

विद्यतेऽस्येति तथाभूते। आयान्ती आगच्छन्ती तरलेति तरला चञ्चला विकासिनी इत्यर्थः या देहप्रभा तासां वितानः विस्तारः स एव छलं तस्य छलं वा तेन। अत्यच्छम् अतिनिर्मलम्। आनयन्ती सहचरीकुर्वतीत्यर्थः।

(१३७) स्फुटितेति स्फुटितः योऽतिमुक्तककुसुमस्तवकः माधवीलतापुष्पगुच्छः तेन समाः त्विषः कान्तयः यस्य तथोक्ते। सटाले जटावति। मृगपताविव सिंहे इव। गौरी गौरवर्णा पार्वती च। उरोबध्रारोपितस्य उरोबध्रा अश्वपृष्ठारूढस्य चरणस्थापनार्थम् द्रव्यविशेषः तत्रारोपितस्य स्थापितस्य चरणयुगलपदस्य विशेषणमिदम्।

(१३८) तिर्य्यगिति तिर्य्यग् साचि यथा तथा उत्कर्णेन उन्नमितकर्णेन तुरगेण अश्वेन आकर्ण्यमानं श्रूयमाणं नूपुरयोः पटु स्पष्टं रणितं यस्य तथाभूतस्य। अतिबहलेन अतिप्रभूतेन पिण्डालक्तकेन घनलाक्षारसेन पल्लवितस्य नवकिसलयवदाचरत इत्यर्थः।

(१३९) कुङ्कुमेति कुङ्कुमेन पिञ्जरितं रञ्जितं पृष्ठं यस्य तादृशस्य। उभयतः उभयोः पार्श्वयोरित्यर्थः। ताडनेति ताडनं प्रहार एव दोहदो गर्भाभिलाषः तत्र लोभः तेन आगतानि। पादाहतः प्रमदया विकसत्यशोक इति कविसमयप्रसिद्धिः। किसलयितानि सञ्जातपल्लवानि अतएव अतिरिक्तानि विस्तृतानि अशोकवनानि तानि।

(१४०) सकलेति सकलानां जीवलोकानां हृदयानि चेतांसि तेषां हठेन सहसा हरणं तस्य घोषणा वाद्यविशेषानुगता वचनानीत्यर्थः तयैव। रशनया मेखलया।

आप्रपदीनेन कञ्चुकेन (१४१) तिरोहिततनुलता तनुकञ्चुकाभ्यन्तरदृश्यमानैः आम्लानचन्दनधवलैः अवयवैः (१४२) स्वच्छसलिलाभ्यन्तरविभाव्यमानमृणालकाण्डेव सरसी कुसुम्भरागपाटलं पुलकबन्धचित्रं चण्डातकम् अन्तः स्फुटं स्फटिकभूमिरिव रत्ननिधानमादधाना हारेण (१४४) आमलकीफलनिस्तलमुक्ताफलेन स्फुरितस्थूलग्रहगणशारा शारदीव (१४५) श्वेतविरलजलधरपटलावृता द्यौः कुचपूर्ण-

---

शिञ्जानेति शिञ्जानं रणत् जघनस्थलं यस्याः तथोक्ता:। धौतेति धौतं अतएव धवलं नेत्रं वस्त्रविशेषः तेन निर्मितः कृतः तेन। निर्मोकः सर्पकञ्चुकः तद्वत् लघुतरः तेन। आप्रपदीनेन पादाग्रं प्रपदं प्रपदात् आ आप्रपदं पादाग्रपर्य्यन्तं तत् व्याप्नोतीति तथोक्तेन पादाग्रपर्य्यन्ताच्छादिनेत्यर्थः।

(१४१) तिरोहितेति तिरोहिता आवृता तनुरेव अङ्गमेव लता वल्ली यया तथोक्ता। तन्विति तनोः सूक्ष्मस्य कञ्चुकस्य वर्मणः गात्रावरणस्येत्यर्थः अभ्यन्तरेषु दृश्यमानाः तैः। आम्लानेति आम्लानानि ईषच्छुष्काणि चन्दनानि तैः धवलाः तैः।

(१४२) स्वच्छेति स्वच्छानि निर्मलानि सलिलानि तेषां अभ्यन्तरेषु विभाव्यमानः लक्ष्यमाणः मृणालकाण्डः मृणाललता यस्याः यस्यां वा तथाभूता।

(१४३) कुसुम्भेति कुसुम्भरागेण कुसुम्भवर्णेन पाटलं रक्तम्। पुलकबन्धेन विविधवर्णरचितबिन्दुन्यासेन चित्रं मनोज्ञमित्यर्थः। चण्डातकम् अर्द्धोरुकम् ऊरोरधः पर्य्यन्तपाति वसनविशेषम्। अन्तःस्फुटम् अभ्यन्तरोज्ज्वलमित्यर्थः। रत्ननिधानं निहितं रत्नमित्यर्थः। आदधाना धारयन्ती।

(१४४) आमलकीति आमलकीफलानीव निस्तलानि वर्तुलानि मुक्ताफलानि यत्र तादृशेन तादृशमुक्ताफलग्रथितेनेत्यर्थः। निस्तुलेति पाठे निस्तुलानि तुलारहितानि निरुपमानीत्यर्थः मुक्ताफलानि यत्र तादृशेनेत्यर्थः। स्फुरितेति स्फुरितैः राजितैः स्थूलैः ग्रहगणैः तारामण्डलैः शारा विचित्रा। शारदीव शरत्कालीनेव।

(१४५) श्वेतेति श्वेतैः जलापगमात् शुभ्रतां गतैः विरलैः अल्पाल्पैः जलध-

कलशयोरुपरि रत्नप्रालम्बमालिकाम् (१४६) अरुणहरितकिरणकिसलयिनीं कस्यापि पुण्यवतो हृदयप्रवेशवनमालिकामिव बद्धां धारयन्ती (१४७) प्रकोष्ठनिविष्टस्य एकैकस्य हाटककटकस्य मरकतमकरवेदिकासनाथस्य (१४८) हरितीकृतदिगन्ताभिः मयूखसंहतिभिः स्थलकमलिनीभिरिव लक्ष्मीशङ्कया अनुगम्यमाना (१४९) बहलताम्बूलकृष्णिकान्धकारितेन अधरसम्पुटेन (१५०) मुखशशिपीतं ससन्ध्यारागं

---

राणां मेघानां पटलैः निचयैः आवृता व्याप्ता। द्यौः अन्तरीक्षम्। कुचेति कुचौ स्तनौ पूर्णकलशाविव तयोरुपरि रत्नप्रालम्बमालिकां रत्नहारमालाम्।

(१४६) अरुणेति अरुणेन रक्तेन हरितेन श्यामलेन किरणेन मयूखेन पद्मरागमरकतानामिति भावः किसलयाः नवपल्लवा सन्ति अस्यां तादृशीं सञ्जातकिसलयामिवेत्यर्थः। हृदयप्रवेशेति हृदये प्रवेशः तस्मै वनमालिका पत्रपुष्पग्रथिता माला तामिव पूर्णकुम्भोपरि वनमालाप्रदानं प्रसिद्धम्। कोऽपि पुण्यवान् अस्या हृदयं प्रवेक्ष्यतीति तन्मङ्गलार्थं पूर्णकुम्भस्थापनमिति भावः।

(१४७) प्रकोष्ठेति प्रकोष्ठे निविष्टः धृतः तस्य। हाटककटकस्य स्वर्णवलयस्य। मरकतेति मरकतस्य हरिन्मणिभेदस्य मकरवेदिका मकराकारा पीठिका यस्मिन्नेद इत्यर्थः तया सनाथः युक्तः तस्य तदलङ्कृतस्येति भावः।

(१४८) हरितीकृतेति हरितीकृताः श्यामीकृता दिगन्ताः दिग्विभागाः याभिः तथोक्ताभिः मयूखसंहतिभिः किरणावलीभिः। स्थलकमलिनीभिरिव स्थलपद्मिनीभिरिव पत्रपुष्पसहिताभिरिति भावः। लक्ष्मीशङ्कया लक्ष्मीरियं पद्महस्ता पद्मविलासिनीति भावः इति बोधेन अनुगम्यमाना अनुस्रियमाणा।

(१४९) बहलेति बहलेन पुनः पुनः चर्वितेनेति भावः ताम्बूलेन या कृष्णिका कृष्णवर्णरेखा तया अन्धकारितः सञ्जातान्धकारः तेन। अधरसम्पुटेन अधररूपसमुद्गकेन।

(१५०) मुखेति। मुखमेव शशी चन्द्रः तेन पीतं ग्रस्तम्। ससन्ध्यारागं सन्ध्यारागः सन्ध्याकालिकलौहित्यं तेन सह वर्त्तमानम्। अधरस्य स्वतो लौहित्यात् ताम्बूलकृष्णिकायोगाच्च तथोत्प्रेक्षितम्। वमन्ती उद्गिरन्ती।

तिमिरमिव वमन्ती (१५१) विकचनयनकुवलयकुतूह-
लालीनया अलिकुलसंहत्या नीलांशुकजालिकयेव निरुद्धा-
र्द्धवदना नीलीरागनिहितनीलिम्ना (१५२) शितिगल-
गलशितिना वामश्रवणाश्रयिणा दन्तपत्त्रेण कालमेघपल्ल-
वेनेव विद्युदिव द्योतमाना वकुलफलानुकारिणीभिः
तिसृभिः मुक्ताभिः कल्पितेन बालिकायुगलेन अधोमुखेन
(१५३) आलोकजलवर्षिणा सिञ्चन्तीव अतिकोमले भुज-
लते दक्षिणकर्णावतंसितया (१५४) केतकीगर्भपलाश-
लेखया रजनीकरजिह्वयेव लावण्यलोभेन (१५५)
लिह्यमानकपोलतला तमालश्यामलेन मृगमदामोदनि-
ष्यन्दिना तिलकबिन्दुना मुद्रितमिव मनोभवसर्वस्वं वदनम्

---

(१५१) विकचेति। विकचे विकस्वरे नयने कुवलये इव तयोः कुतूहलात् आलीना संसक्ता तयेव। नीलांशुकजालिकया नीला अंशुकजालिका जाला-कारमंशुकमित्यर्थः तया। निरुद्धम् आच्छादितम् अर्द्धवदनं वदनार्द्धं यया तथा-भूता। अध्वगमने चक्षुषि कीटादिपतनशङ्कयेति भावः। नीलीति नीलीरागेण निहितः अर्पितः नीलिमा नीलत्वं यत्र तादृशेन।

(१५२) शितिगलेति। शितिगलः नीलकण्ठः हर इत्यर्थः तस्य गलः कण्ठः तद्वत् शिति नीलमित्यर्थः तेन। वामश्रवणाश्रयिणा वामकर्णधृतेन। दन्तपत्त्रेण कर्ण-भूषणेन कालमेघपल्लवेन नीलमेघकिसलयेन। बालिकायुगलेन वलयद्वयेन।

(१५३) आलोकेति। आलोक उद्योतः प्रभेत्यर्थः आलोकौ दर्शनोद्योतौ इत्यमरः। जलं तं वर्षतीति तेन। दक्षिणेति दक्षिणे कर्णे अवतंसिता अलङ्कारत्वेन धृता तया।

(१५४) केतकीति। केतक्या गर्भपलाशः अभ्यन्तरपत्रं स एव लेखा रेखा तया। रजनीकरजिह्वयेव रजनीकरस्य चन्द्रस्य जिह्वा रसना तयेव।

(१५५) लिह्यमानेति। लिह्यमानं चुम्ब्यमानं कपोलतलं गण्डभागः यस्याः तथोक्ता। तमालश्यामलेन तमालवत् श्यामलः कृष्णः तेन। मृगमदेति मृग-

उद्वहन्ती ( १५६ ) ललाटलासकस्य सीमन्तचुम्बिनः चटुलतिलकमणेः उदश्वता चटुलेन अंशुजालेन रक्तांशुकेनेव कृतशिरोऽवगुण्ठना ( १५७ ) पृष्ठप्रेङ्खदनादरसंयमनशिथिलजूटिकाबन्धा नीलचामरावचूलिनीव ( १५८ ) चूड़ामणिमकरिकासनाथा मकरकेतुकेतुपताका कुलदेवतेव चन्द्रमसः पुनः सञ्जीवनौषधिरिव पुष्पधनुषः वेलेव ( १५९ ) रागसागरस्य ज्योत्स्नेव यौवनचन्द्रोदयस्य महानदीव रतिरसामृतस्य कुसुमोद्गतिरिव सुरततरोः

---

मदस्य कस्तूरिकाया: आमोदः सौरभं तं निष्यन्दते चरतीति तथोक्तेन । तिलकस्य मृगमदद्रवकृतत्वादिति भावः मुद्रितं चिह्नितम् । मनोभवसर्वस्वम् अनङ्गसर्वस्वधनं सुखस्यैव सर्वोत्कर्षेण कामोद्दीपकत्वादिति भावः ।

( १५६ ) ललाटेति । ललाटे लासकः नर्त्तकः स्फुरन्नित्यर्थः तस्य । सीमन्तचुम्बिनः सीमन्तः केशमध्यवर्त्ति वर्त्माकाररेखाविशेषः तं चुम्बति स्पृशतीति सीमन्तचुम्बी तस्य सीमन्तस्पर्शिनः इत्यर्थः । चटुलः तरलः यः तिलकमणिः तिलकाकारपद्मरागमणिविशेषः तस्य तस्मात् । उदश्वता उद्गच्छता । चटुलेन इतस्ततः प्रसरता । अंशुजालेन । किरणसमूहेन । रक्तांशुकेनेव रक्तवसनेनेव । कृतेति कृतं शिरसः अवगुण्ठनं यया तथाभूता ।

( १५७ ) पृष्ठेति । पृष्ठे प्रेङ्खन् लम्बमानः अनादरसंयमनेन हेलाबन्धनेन शिथिलः स्खलितः जूटिकाबन्धः केशपाशः यस्याः तथाविधा । नीलेति नीलं चामरमेव अवचूलं ध्वजाधोवर्त्ति वसनं विद्यतेऽस्या इति तथोक्ता ।

( १५८ ) चूड़ामणीति । चूड़ायां या मणिमकरिका मकराकारमणिः इत्यर्थः तया सनाथा सहिता अतएव मकरकेतोः कामस्य केतुपताकेव ध्वजपताकेव । कुलदेवतेव वंशाधिष्ठात्री देवीव । पुनः सञ्जीवनौषधिरिव हरकोपानलदहनानन्तरं पुनः सञ्जीवनं सम्यग् जीवनप्राप्तिः तस्य ओषधिरिव लताविशेष इव ।

( १५९ ) रागेति । रागः भोगस्पृहा सागर इव तस्य वेलेव तीरभूमिरिव यद्वा प्रवाहपरम्परा इव । वेला स्यात् तीरनीरयोरित्यमरः । कुसुमोद्गतिरिव पुष्पोद्गम इव । सुरततरोः सुरतं स्त्रीपुरुषयोरन्योन्यस्पर्शविशेषः तदेव तरुः तस्य ।

बालविद्येव वैदग्ध्यस्य कौमुदीव कान्तेः धृतिरिव धैर्य्यस्य गुरुशालेव गौरवस्य वीजभूमिरिव विनयस्य गोष्ठीव गुणानां मनस्वितेव महानुभावतायाः तृप्तिरिव तारुण्यस्य (१६०) कुवलयदलदामदीर्घलोचनया पाटलाधरया (१६१) कुन्दकुड्मलस्फुटदशनया शिरीषमालासुकुमारभुजयुगलया (१६२) कमलकोमलकरया वकुलसुरभिनिश्वसितया चम्पकावदातया कुसुममय्येव ताम्बूलकरङ्कवाहिन्या (१६३) महाप्रमाणाश्वतरारूढया अनुगम्यमाना (१६४) कतिपयपरिचारकपरिकरा मालती समदृश्यत । दूरादेव च दधीचप्रेम्णा सरस्वत्या लुठि-

---

बालविद्येव अभिनवा विद्येव । वैदग्ध्यस्य विलासविशेषस्य । कौमुदीव चन्द्रिकेव । प्रभेवेत्यर्थः । धृतिरिव सन्तोष इव उत्कर्ष इवेत्यर्थः । गुरुशालेव गुरुगृहमिव । यद्वा गुर्वीशाला गुरुशाला सेव । वीजभूमिरिव वीजदेशमिव । गोष्ठीव समाज इव समवाय इवेत्यर्थः । मनस्वितेव प्रशस्तमनःशालित्वमिव । तृप्तिरिव सन्तोषसीमेवेत्यर्थः । तारुण्यस्य यौवनस्य ।

(१६०) कुवलयेति । कुवलयदलदाम नीलोत्पलदलमाला तद्वत् दीर्घे आयते लोचने नयने यस्याः तथोक्तया । पाटलाधरया रक्ताधरया ।

(१६१) कुन्देति । कुन्दानां माल्यकुसुमविशेषाणां कुड्मलानीव स्फुटा उज्ज्वला दशना दन्ता यस्याः तथाभूतया । शिरीषेति शिरीषाणां तदाख्यपुष्पविशेषाणां मालावत् सुकुमारं सुकोमलं भुजयुगलं बाहुयुगलं यस्याः तथोक्तया ।

(१६२) कमलेति । कमलं पद्मं तद्वत् कोमलौ करौ पाणी यस्याः तथोक्तया । वकुलेति वकुलवत् सुरभि सुगन्धि निश्वसितं यस्याः तथाविधया । चम्पकावदातया चम्पककुसुमवत् गौरवर्णया । अतएव कुसुममय्येव पुष्पमय्येव । ताम्बूलकरङ्कवाहिन्या ताम्बूलानां करङ्कः भाजनविशेषः तं वहतीति तथोक्तया ।

(१६३) महेति । महत् प्रमाणं परिमाणं यस्य तादृशः योऽश्वतरः अश्वायां गर्दभेन जातः अश्वाकारपशुविशेषः तम् आरूढा आश्रिता तया ।

(१६४) कतिपयेति । कतिपये नात्यर्थं नातिबहवो इति यावत् परि-

तेव मनोरथैः आकृष्टेव कुतूहलेन प्रत्युद्गतेवोत्कलिकाभिः आलिङ्गितेव उत्कण्ठया अन्तःप्रवेशितेव हृदयेन स्नपितेव आनन्दाश्रुभिः विलिप्तेव स्मितेन वीजितेव उच्छ्वसितैः आच्छादितेव चक्षुषा अभ्यर्चितेव वदनपुण्डरीकेण सखीकृतेव आशया सविधम् उपययौ। अवतीर्य्य च तुरगात् दूरादेव अवनतेन मूर्ध्ना प्रणामम् अकरोत् आलिङ्गिता च ताभ्यां सविनयम् उपाविशत्। सप्रश्रयं ताभ्यां सम्भाषिता च पुण्यभाजम् अमन्यत अकथयच्च दधीचसन्दिष्टं शिरसि विनिहितेन अञ्जलिना नमस्कारम् अग्रहाच्च आकारतः प्रभृति अग्राम्यतया तैः तैः अतिपेशलैः आलापैः सावित्रीसरस्वत्योः मनसी।

क्रमेण च अतीते मध्यन्दिनसमये शोणम् अवतीर्णायां सावित्र्यां स्नातुम् उत्सारितपरिजना साकूता मालती (१६५) कुसुमप्रस्तरशायिनीं समुपसृत्य सरस्वतीम् आबभाषे देवि! विज्ञाप्यं नः किञ्चिदस्ति रहसि अतो मुहू-

---

चारकाः भृत्याः परिकराः सहचराः यस्याः तथोक्ता। सरस्वत्या कर्त्तृभूतयेति शेषः लुण्ठितेव हृतेव। उत्कलिकाभिः औत्सुक्यैः। विलिप्तेव विशेषेण दत्तलेपनेव। उच्छ्वसितैः निश्वाससमूहैः। सविधम् अन्तिकम्। सप्रश्रयं सविनयम्। ताभ्यां सावित्रीसरस्वतीभ्याम्। पुण्यभाजं पुण्यवन्तम् आत्मानमिति शेषः। पुण्यभाजमात्मानम् इति पाठान्तरम्। दधीचसन्दिष्टं दधीचप्रेषितं नमस्कारम् अकथयत् इत्यन्वयः। अग्रहात् वशीचकारेत्यर्थः। आकारतः प्रभृति आकारात् तथाविधात् पूर्वोक्तात् सौम्यादिति भावः। प्रभृतीति अव्ययम्। अग्राम्यतया अनिपुणजनव्यवहाररहितयेत्यर्थः। अतिपेशलैः अतिकोमलैः सौजन्यपूर्णैरिति भावः। मनसी अग्रहादित्यस्य कर्म्मपदम्। उत्सारितपरिजना अपसारितसेवकजना। साकूता हृदयनिहितगूढभावेत्यर्थः।

सम् अवधानदानेन प्रसादं क्रियमाणम् इच्छामीति। सरस्वती तु दधीचसन्देशाशङ्किनी किं वक्ष्यतीति (१६६) स्तनविनिहितवामकरनखकिरणदन्तुरितम् उद्भिद्यमान-कुतूहलाङ्कुरनिकरम् इव हृदयम् उत्तरीयदुकूलवल्कलैक-देशेन संछादयन्ती गलता अवतंसपल्लवेन श्रोतुं श्रवणेन इव धावमानेन (१६८) अनवरतश्वाससन्दोहदोलायितां जीविताशामिव समासन्नलताम् अवलम्बमाना समुत्फुल्लस्य मुखशशिनो लावण्यप्रवाहेण शृङ्गाररसेनेव प्लावयन्ती

---

(१६५) कुसुमेति कुसुममेव प्रस्तरः शयनं तत्र शेते इति तथोक्ताम्। दधीचेति दधीचस्य सन्देशः वाचिकम् आशङ्कते तर्कयतीति तथाविधा सती।

(१६६) स्तनेति स्तने विनिहितस्य अर्पितस्य वामकरस्य नखानां किरणेन दन्तुरितं सञ्जातदन्तमिव स्थितमित्यर्थः। उद्भिद्यमानेति उद्भिद्यमानाः उद्भेदं गच्छन्तः कर्मकर्त्तरि शानच्प्रत्ययः। कुतूहलाङ्कुराणां कौतुकप्ररोहाणां निकरा यस्य तथोक्तम्।

(१६७) उत्तरीयेति उत्तरीयं यत् दुकूलं चौमाम्बरं तदेव वल्कलं तस्य एकदेशः तेन। गलता स्खलता। अवतंसपल्लवेन कर्णभूषणीकृतकिसलयेन श्रवणेनेव श्रोत्रेन्द्रियेणेव।

(१६८) अनवरतेति अनवरता अविच्छिन्नाः श्वासानां सन्दोहा एव दोला तां प्रापिता यथा दोलायिता तां दोला यथा दोलने स्वस्थानात् निर्गच्छति तथा पुनः स्वस्थानम् आगच्छति तद्वत् निश्वासः शरीराभ्यन्तरात् निर्गच्छति पुनश्च उच्छ्वासरूपेण शरीराभ्यन्तरम् आगच्छतीति दोलास्थितामिवेति भावः। समासन्नलतां सन्निहितां व्रततिम्। अवलम्बमाना आश्रयन्ती। लावण्यप्रवाहेण लावण्यस्रोतसा। शृङ्गाररसेनेव रतिप्रधानो रसः शृङ्गाररसः तेनेव। तदुक्तं दर्पणे। उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते। परोढ़ां वर्जयित्वात्र वेश्याञ्चाननुरागिणीम्। आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः। चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्। भ्रूविक्षेपकटाक्षादिः अनुभावः प्रकीर्त्तितः। त्यक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः। स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवत इति।

जीवलोकं (१६९) कुसुमपरिमललग्नैः मधुकरकदम्बकैः मदनानलदाहश्यामलैः मनोरथैरिव निर्गत्य मूर्त्तैः उत्क्षिप्यमाणा कुसुमशयनीयात् (१७०) स्मरशरसंज्वरिणी मन्दं मन्दम् उदगात् उपांशु कथयेति (१७१) कपोलतलप्रतिविम्बितां लज्जयेव कर्णमूलं मालतीं प्रवेशयन्ती मधुरया गिरा सुधीरम् उवाच सखि ! मालति ! किमर्थम् एवम् अभिदधासि । का अहम् अवधानदानस्य । शरीरस्य प्राणानां वा सर्वस्य अप्रार्थितोऽपि प्रभवत्येव अतिपेशलः चक्षुष्यो जनः । सा न काचित्—या न भवसि मे—स्वसा सखी प्रणयिनी प्राणसमा च । नियुज्यतां यावतः कार्य्यस्य क्षमं (१७२) क्षोदीयसो गरीयसो वा शरीरकम् इदम् । अनवस्करम् आस्रवं मे त्वयि हृदयम् । प्रीत्या प्रतिसरा विधेया अस्मि ते । व्याहर वरवर्णिनि ! विवक्षितमिति ।

सा तु अवादीत् देवि ! (१७३) जानासि एव माधुर्य्यं

---

(१६९) कुसुमेति । कुसुमानां परिमलेन सौरभेण लग्नानि संसक्तानि तैः मधुकरकदम्बकैः भृङ्गसङ्घैः । मदनानलेति मदनानलेन कामाग्निना दाहेन श्यामला: तैः । मूर्त्तैः मूर्त्तिमद्भिः । उत्क्षिप्यमाणा उत्तोल्यमाना ।

(१७०) स्मरेति । स्मरस्य शरैः शरप्रहारैरिति भावः । यः संज्वरः सन्ताप तद्वती । उदगात् उत्तस्थौ । उपांशु सुगुप्तं यथा तथा ।

(१७१) कपोलेति । कपोलतले अत्यच्छे गण्डदेशे इत्यर्थः प्रतिविम्बिता प्रतिफलिता ताम् । अतिपेशलः अतिकोमलः अतिप्रिय इति यावत् चक्षुष्यः नयनरञ्जन इत्यर्थः । काचित् कापि ।

(१७२) क्षोदीयसः अतिक्षुद्रस्य गरीयसः अतिगुरुणः कार्य्यस्य इत्यन्वयः । अनवस्करम् अवस्करः मलः तद्रहितम् अकपटमिति यावत् । आस्रवं वचने स्थितं वचने स्थित आस्रव इत्यमरः त्वद्वचो मया अकपटं कर्त्तव्यमिति भावः । प्रतिसरा अनुकूलवर्त्तिनी ते तव विधेया वश्या अस्मि इत्यन्वयः । व्याहर प्रकाशय ।

विषयाणां लोलुपताञ्च इन्द्रियग्रामस्य उन्मादिताञ्च नवयौवनस्य पारिप्लवताञ्च मनसः। प्रख्याता एव मन्मथस्य दुर्निवारता। अतो न माम् (१७४) उपालम्भेन उपस्थातुम् अर्हसि। न च बालिशता चपलता चारणता वा वाचालतायाः कारणम्। (१७५) न किञ्चित् न कारयति असाधारणा स्वामिभक्तिः। सा त्वं देवि! यदा एव दृष्टासि देवेन तत एवारभ्य च अस्य कामो गुरुः चन्द्रमा जीवितेशः (१७६) मलयमरुत् उच्छ्वासहेतुः आधयोऽन्तरङ्गस्थानेषु सन्तापः परमसुहृत् प्रजागर आप्तः मनो-

---

(१७३) हे वरवर्णिनि सुन्दरि!। विषयाणां स्रक्चन्दनवनितादीनाम् उपभोग्यानां माधुर्य्यं मनोहारित्वम्। लोलुपतां लालसताम्। इन्द्रियग्रामस्य चक्षुरादीन्द्रियसमूहस्य। उन्मादिताम् उन्मादकारित्वं पारिप्लवतां चापल्यम्। प्रख्याता प्रसिद्धा। दुर्निवारता अवाध्यता।

(१७४) उपालम्भेन तिरस्कारेण अकथनीयकथनजनितेन इति भावः उपस्थातुं ग्रहीतुम्। बालिशता अज्ञता चापलता धृष्टता चारणता धूर्त्तता वाचालता बहुभाषिता या एताः कारणं न च, तव समीपे यदहं किञ्चिद् विवच्मि तत्र मम बालिशतादयो नैव हेतुरिति निष्कर्षः।

(१७५) किन्तर्हि इत्याह नेति असाधारणा अनन्यसदृशी स्वामिभक्तिः प्रभौ अनुरागः किञ्चित् किमपि न कारयतीति न, अपि तु सर्वमेव कारयतीत्यर्थः। प्रभुभक्तिपरतन्त्रा अहं यत्किञ्चित् त्वां कथयामीति भावः। देवेन दधीचेन। अस्य कुमारस्य गुरुः आचार्य्यः कामः यथा आदिशति तत् एव असौ करोतीति भावः। चन्द्रमाः जीवितेशः प्राणेश्वरः चन्द्रमसी हस्तेऽस्य प्राणा इति भावः।

(१७६) मलयमरुत् मलयपवनः उच्छ्वासहेतुः उच्छ्वसितस्य कारणं यदि मलयमरुत् न वाति तदा असौ निश्वसितीति भावः। आधयः मानसव्यथाः अन्तरङ्गस्थानेषु स्वजनस्थानवर्त्तिन इति यावत् स्वजना यथा सर्वदा परिचरन्ति तथा आधय एनं सततम् आश्रयन्तीति भावः। सन्तापः परमसुहृत् परममित्रं सतत-

रथा: सर्वगता: नि:श्वासा विग्रहाग्रेसरा: मृत्यु: (१७७) पार्श्ववर्त्ती रणरणकसञ्चारक: सङ्कल्पा (१७८) बुद्धुपदेशवृद्धा:। किं वा विज्ञापयामि अनुरूपो देवो देव्या इति आत्मसम्भावना शीलवान् इति प्रक्रमविरुद्धं धीर इत्यवस्थाविपरीतं (१७९) सुभग इति त्वदायत्तं स्थिरप्रीति: इति निपुणोपक्षेप: जानाति (१८०) सेवितुम् इति अस्वामिभावोचितम् इच्छति दासभावम् आमरणात् कर्त्तुम् इति धूर्त्तालाप: भवनस्वामिनी भवसि इति उप-

---

सङ्गीति भाव:। प्रजागर: निद्राविरति: आप्त: आत्मीय: नैनं त्यजतीति भाव:। मनोरथा: अभिलाषा: सर्वङ्गगामिन: विप्रतिपत्तिमूढतया कर्त्तव्यनिर्णयाक्षमा इति भाव:। श्वासा दीर्घनिश्वासा विग्रहाग्रेसरा विग्रहस्य विशिष्टज्ञानस्य कर्त्तव्यज्ञानस्येति भाव: अग्रगामिन: देहं परित्यज्य गन्तुं प्रवृत्ता इति भाव:।

(१७७) पार्श्ववर्त्ती पार्श्वचर: रणरणकसञ्चारक: उत्कण्ठासञ्चारक: सञ्चारयतीति तथोक्त: प्रेरक: मृत्युमुखे इति शेष:। सङ्कल्पा: मन:कल्पनाविशेषा:।

(१७८) बुद्धीति। बुद्धे: उपदेशे इदं कुरु एवं क्रियतामिति एवं रूप: वचनम् वृद्धा: महान्त:। अनुरूप: सुयोग्य: देव: कुमारी दधीच इति उभाविति शेष: एवमुत्तरत्र। आत्मसम्भावना निजसम्मानना। एतदर्थं स्वस्य आगमने त्वया सम्मानना लभ्यते इति भाव:। शीलवान् सुशील: अयमिति शेष:। प्रक्रमविरुद्धं प्रसङ्गविपरीतम् ईदृग्व्यापारप्रवृत्तस्य कुत: शीलवत्त्वमिति भाव:। धीर: धैर्यवान् अयमिति शेष:। अवस्थाविपरीतम् अवस्था मदनजाता दशा: तस्या विपरीत विरुद्धं न हि धीरा एवं विचलन्तीति भाव:।

(१७९) सुभग: कामिनीरञ्जन:। त्वदायत्तं त्वदधीनं त्वयि अनुरक्ताया तस्य सम्भवति नान्यथा इति भाव:। स्थिरप्रीति: अचलप्रेमा। निपुणोपक्षेप: निपुणस्य सुचतुरस्य यथा कथञ्चित् कार्य्यसिद्धौ दक्षस्येति यावत् उपक्षेप: उपक्रम: आलाप इति भाव: स्थायित्वकीर्त्तनं विना न अस्य कार्य्यस्य सिद्धिरिति एवमुक्ति: युज्यते इति भाव:।

(१८०) सेवितुं परिचरितुं प्रणयेन अनुगन्तुमिति भाव:। अस्वामिभाव:

प्रलोभनं पुण्यभागिनी भजति भर्त्तारं तादृशम् इति (१८१) स्वामिपक्षपातः त्वं तस्य मृत्युः इत्यप्रियम् अगुणज्ञा असि इति अधिक्षेपः स्वप्नेऽस्य बहुशः कृतप्रसादासि इति असाक्षिकं प्राणरक्षार्थम् अर्थयते इति कातरता तव आगम्यताम् इति आज्ञा वारितोऽपि ( १८३ ) बलादागच्छतीति परिभवः तदेवम् अगोचरे गिराम् असि इति श्रुत्वा देवी प्रमाणम् इति अभिधाय तूष्णीम् अभूत्।

अथ सरस्वती प्रीतिविस्फारितेन चक्षुषा प्रत्यवादीत् अयि! न शक्नोमि बहु भाषितुम् एषा अस्मि ते (१८४)

---

स्वामित्वविरुद्धमित्यर्थः न हि स्वामिनः सेवकान् सेवन्ते प्रत्युत सेवका एव स्वामिनम् इति भावः। धूर्त्तालापः धूर्त्ता हि स्वकार्य्यसाधनार्थमेव ब्रुवन्तीति भावः। भवनस्वामिनी गृहकर्त्री। उपप्रलोभनं लोभप्रदर्शनम्। पुण्यभागिनी धन्या इत्यर्थः।

(१८१) स्वामिपक्षपातः स्वामिनि यदर्थम् आगतं तस्मिन् प्रभौ इत्यर्थः पक्षपातः प्रणयातिरेक इत्यर्थः। त्वं तस्य मृत्युः त्वां विना स मरिष्यतीति भावः। अप्रियं निष्ठुरं वच इत्यर्थः अगुणज्ञा गुणान् जानातीति गुणज्ञा तथा न भवतीति अगुणज्ञा। त्वं कुमारस्य गुणान् न वेत्सीति भावः। अधिक्षेपः तिरस्कारकरणम्। बहुशः पुनः पुनः। कृतप्रसादा कृतः प्रसादः अनुग्रहः यया तथाभूता। त्वां स्वप्ने दृष्ट्वा असौ महतीं प्रीतिमलभतेति भावः।

(१८२) असाक्षिकं साक्षिवर्जितम् इदं वच इति यावत् स्वप्नदर्शने साक्षिणाम् अभावादिति भावः। अर्थयते याचते त्वत्प्रसादमिति शेषः। कातरता दैन्यातिशय इत्यर्थः दीना एव ईदृशम् आलपन्तीति भावः। तत्र तत्समीपे इत्यर्थः। आज्ञा आदेशः प्रभुत्ववचनमिति यावत् प्रभव एव आज्ञापयन्तीति भावः। वारितः निषिद्धः मा त्वमागच्छ मत्सकाशमिति निवारित इति यावत्।

(१८३) बलात् बलमाश्रित्य। परिभवः अवमानना इति यावत् बलात्कारप्रयोगस्य इच्छाविरुद्धत्वादिति भावः। तत् तस्मात् गिरां वाचां अगोचरे अविषये असि भवसि त्वयि न किमपि वक्तुं शक्नोमीति भावः। प्रमाणं प्रमीयते निर्धार्य्यते

स्मितवादिनि ! वचसि स्थिता गृह्यन्तामभी प्राणा इति। मालती तु यत् आज्ञापयसि अतिप्रसादाय इति व्याहृत्य प्रहर्षपरवशा प्रणम्य प्रजविना तुरगेण ततार शोणम् अगाच्च दधीचमानेतुं च्यवनाश्रमपदम्। इतरा तु सखीस्नेहेन सावित्रीम् अपि विदितवृत्तान्ताम् अकरोत् उत्कण्ठाभारभृता च ताम्यता चेतसा कल्पायितं कथं कथमपि दिवसशेषम् अनैषीत्। अस्तम् उपगतवति भगवति (१८५) गभस्तिमति स्तिमिततरम् अवतरति च तमसि प्रहसिताम् इव सितां दिशं पौरन्दरीं दरीम् इव केसरिणि उदञ्चति चन्द्रमसि सरस्वती शुचिनि (१८६) चीनांशुकसुकुमारे तरङ्गिणि दुकूलकोमले

---

अनेनेति प्रमाणम् इति कर्त्तव्यविधाने हेतुरित्यर्थः यदत्र भवत्या अभिमतं तदादिशेति भावः।

(१८४) स्मितवादिनि स्मितेन वदतीति स्मितवादिनी तत्सम्बुद्धौ हे मधुरभाषिणि इत्यर्थः। अतिप्रसादाय अत्यनुग्रहाय इत्यर्थः। प्रजविना द्रुतगामिना। इतरा सरस्वती। उत्कण्ठाभारभृता उत्कण्ठानां भारः अतिशयः तं बिभर्त्तीति तेन। ताम्यता क्लिश्यता। कल्पायितं चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते इत्युक्तं ब्राह्मं दिनं कल्पः तद्वदाचरितः तम्। अतिदीर्घमिव मन्यमानमिति भावः। कथं कथमपि अतिकृच्छ्रेण इत्यर्थः।

(१८५) गभस्तिमति मयूखशालिनि इत्यर्थः। स्तिमिततरं मन्दं मन्दमित्यर्थः। अवतरति आविर्भवति। प्रहसितामिव प्रकर्षेण हसन्तीमिव। सितां धवलाम्। पौरन्दरीं पुरन्दरस्य इन्द्रस्य इयं यद्वा पुरन्दरः अधिष्ठाता यस्याः सा पौरन्दरी तां दिशं पूर्वां दिशमित्यर्थः। दरीमिव गुहामिव। केसरिणि सिंहे सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केसरी हरिरित्यमरः। उदञ्चति उद्गच्छति उदयमाने इत्यर्थः। उदञ्चति इत्यत्र मुञ्चति इति पाठान्तरम्। शुचिनि स्वच्छे।

(१८६) चीनेति। चीनांशुकं चीनदेशभवं सूक्ष्मवसनं तद्वत् सुकुमारतरे

शयने इव शोणसैकते समुपविष्टा (१८७) स्वप्नकृत-प्रार्थनापादपतनलग्नां दधीचचरणनखचन्द्रिकाम् इव ललाटिकां दधाना (१८८) गण्डस्थलादर्शप्रतिविम्बितेन चारुहासिनि! अयम् असौ आहृतो हृदयदयितो जन इति श्रवणसमीपवर्त्तिना निवेद्यमानमदनसन्देशा इव इन्दुना (१८९) विकीर्य्यमाणनखकिरणचक्रवालेन बाल-व्यजनीकृतचन्द्रकलाकलापेन इव करेण वीजयन्ती स्वेदिनं कपोलपट्टम् अत्र दधीचात् ऋते न केनचित् प्रवेष्टव्यम् इति तिरश्चीनं चित्तभुवा पातितां विलासवेत्रलताम् इव (१९०) बालमृणालिकाम् अधिस्तनं स्तनयन्तीं कथम्

---

अतिकोमल: तस्मिन्। तरङ्गिणि प्रतिदिनं चीयमानेन वारिणा कृतरेखे इत्यर्थ:।

शयने इव शय्यायामिव शोणसैकते शोणनदस्य पुलिने।

(१८७) स्वप्नेति स्वप्ने स्वप्नावस्थायां कृता या प्रार्थना मामनुगृहाणेति याच्ञा तस्यां यत् पादयो: दधीचस्येति भाव: पतनेन लग्ना संसक्ता ताम्। दधीचेति दधीचस्य चरणनखस्य चन्द्रिका ज्योत्स्नाकान्तिरित्यर्थ: तामिव। ललाटिकां ललाटभूषणं तिलकमित्यर्थ:।

(१८८) गण्डेति गण्डस्थलं कपोलतलमेवादर्श: दर्पणम् अतिस्वच्छत्वादिति भाव: तत्र प्रतिविम्बित: प्रतिफलित: तेन। आहृत: आनीत: मयेति शेष:। हृदयदयित: मनोरञ्जन इत्यर्थ:। श्रवणसमीपवर्त्तिना श्रुतिमूलागतेनेत्यर्थ:। निवेद्यमानेति निवेद्यमान: विज्ञाप्यमानो मदनस्य सन्देश: वाचिकं यस्यै तथोक्तेन। इन्दुना चन्द्रेण।

(१८९) विकीर्य्यमाणेति विकीर्य्यमाणम् इतस्तत: प्रसार्य्यमाणं नखकिरणानां चक्रवालं मण्डलं येन तथोक्तेन।

(१९०) बालेति। बालव्यजनीकृत: अभिनवचामरत्वेन धृत इति यावत् चन्द्रकलाकलाप: चन्द्रकलासमूह: येन तथाभूतेन। करेण हस्तेन। स्वेदिनं काम-जनितसत्त्वोदयात् उद्गतघर्मोकमित्यर्थ: कपोलपट्टं गण्डतटम्। अत्र हृदये

अपि हृदयेन वहन्ती प्रतिपालयामास। (१९१) आसीत् च अस्या मनसि अहमपि नाम सरस्वती यच्च अमुना मनोजन्मना जघन्या इव परवशीकृता तत्र का गणना इतरासु तपस्विनीषु अतितरलासु तरुणीषु इति।

(१९२) आजगाम च मधुमास इव सुरभिगन्धवहः हंस इव (१९३) कृतमृणालधृतिः शिखण्डीव (१९४) घनप्रीत्युन्मुखः मलयानिल इव आहितसरसचन्दनधवलित-तनुलतोत्कम्पः कृष्यमाण इव (१९५) कृतकरकचग्रहेण

---

इत्यर्थः। दधीचात् विना केनापि न प्रवेष्टव्यम्। तिरश्चीनं तिर्य्यक् यथा तथा चित्तभुवा मनसिजेन पातितां विलासवेत्रलतामिव विलासार्थां वेत्रयष्टिमिव बाल-मृणालिकाम् अभिनवमृणाललताम्। अधिस्तनं स्तने इति अधिस्तनं स्तनोपरी-त्यर्थः विभक्त्यर्थेऽव्ययीभावः।

(१९१) आसीदिति अस्याः सरस्वत्या मनसि आसीत् इति उत्तरेण अन्वयः अहमपि अतिधीरा देवतापीति भावः नाम प्राकाश्ये। मनोजन्मना मनसिजेन कामेन इति यावत्। जघन्या इव नीचेव। परवशीकृता अधीनीकृता। का गणना को विचार इत्यर्थः इतरासु अन्यासु तपस्विनीषु वराकासु अतितरलासु अतिचञ्चलासु।

(१९२) आजगामेति उत्तरस्थितेन दधीच इति पदेन अन्वयः। मधुमास इव वसन्त इवेत्यर्थः। सुरभीति सुरभिं सौरभशालिनं गन्धं वहतीति तथाभूतः अन्यत्र सुरभिः सौरभवान् गन्धवही वायुर्यंत्र तथाभूतः।

(१९३) कृतेति कृता मृणालेन कामसन्तापनिवारणार्थम् अङ्गस्थापितेनेति भावः धृतिः सन्तोषः धैर्य्यं वा येन तथोक्तः अन्यत्र कृता मृणालस्य धृतिः धारणं ग्रहणमित्यर्थः येन तथोक्तः। शिखण्डीव मयूर इव।

(१९४) घनेति घना सान्द्रा प्रीतिः कान्तासङ्गजेति भावः तस्याम् उन्मुखः तत्प्राप्तिलोलुप इत्यर्थः अन्यत्र घने मेघे तद्दर्शने इति यावत् या प्रीतिः सन्तोषः तस्यै उन्मुखः ऊर्द्धमुखः। आहितः जनितः सरसेन चन्दनेन धवलितयोः श्वेती-कृतायाः तनुलतायाः अङ्गयष्टेः उत्कम्पः कम्पनं यस्य तथोक्तः शैत्यातिशयादिति भावः। अन्यत्र आहितः जनितः सरसानां स्निग्धानां चन्दनानां धवा वृक्षभेदाः

ग्रहपतिना प्रेर्य्यमाण इव कन्दर्पोद्दीपनदक्षिणानिलेन उह्यमान इव उत्कलिकाबहलेन रतिरसेन (१९६) परिमलसम्पातिना मधुपपटलेन पटेनेव नीलेन (१९७) आच्छादिताङ्गयष्टिः अन्तःस्फुरता मत्तमदनकरिकर्णशङ्खायमानेन प्रतिमेन्दुना प्रथमसमागमविलासविलक्षस्मितेनेव धवलीक्रियमाणैककपोलोदरी मालतीद्वितीयो दधीचः । आगत्य च (१९८) हृदयगतदयितानूपुररवमिश्रयेव हंसगद्गदया गिरा कृतसम्भाषणो यथा मन्मथः समाज्ञापयति यथा यौवनम् उपदिशति यथा अनुरागः शिक्षयति यथा विदग्धता अध्यापयति तथा ताम् अभिरामां रामाम् अरमयत् । उपजातविस्रम्भा च आत्मानम् अकथयत् अस्य सरस्वती ।

---

तान् लान्ति आश्रयन्तीति तथाविधा याः तनुलताः सूक्ष्मवल्ल्यः तासाञ्च उत्कम्पः कम्पनं येन तथाविधः ।

(१९५) कृतेति कृतः करेण किरणेन हस्तेन च कचग्रहः केशग्रहणं येन तथोक्तेन । ग्रहपतिना चन्द्रेण उह्यमान इव नीयमान इव । उत्कलिकाबहुलेन रणरणकभूयिष्ठेन ।

(१९६) परिमलेति परिमलेन गात्रसौरभेण सम्पततीति तथोक्तेन मधुपपटलेन भ्रमरनिचयेन पटेनेव वसनेन इव ।

(१९७) आच्छादितेति आच्छादिता आवृता अङ्गयष्टिः तनुलता यस्य तथोक्तः । अन्तःस्फुरता अन्तर्विराजमानेन । मत्तेति मत्तः मदनः काम एव करी हस्ती तस्य कर्णे यः शङ्खः स इवाचरतीति तेन प्रतिमेन्दुना प्रतिबिम्बितचन्द्रेण प्रथमेति प्रथमः आद्यः समागमः सङ्गः तस्मिन् यो विलासः तेन विलक्षं सलज्जं यत् स्मितं मृदुहसितं तेन धवलीक्रियमाणम् एकस्य कपोलस्य उदरम् अभ्यन्तरं यस्य तथोक्तः ।

(१९८) हृदयेति हृदयं गता या दयिता कान्ता तस्याः नूपुररवः नूपुरनिस्वनः तेन मिश्रा संवलिता तयेव हंसगद्गदया हंसस्वनमधुरयेत्यर्थः गिरा वाचा कृत-

तया तु सार्धम् एकं दिवसम् इव अनयत् संवत्सरम् अधिकम्।

अथ दैवयोगात् सरस्वती बभार गर्भम् असूत च (१९९) अनेहसा सर्वलक्षणाभिरामं तनयम्। तस्मै च जातमात्रायैव सम्यक् सरहस्याः सर्वे वेदाः सर्वाणि च शास्त्राणि सकलाश्च कलाः मत्प्रसादात् स्वयम् आविर्भविष्यन्तीति वरमदात्। सद्भर्तृश्लाघया दर्शयितुम् इव हृदयेन आदाय दधीचं पितामहादेशात् सह सावित्र्या ब्रह्मलोकम् आरुरोह। गतायाञ्च तस्यां दधीचोऽपि हृदये (२००) ह्रादिन्या इव अभिहतो भार्गववंशसम्भूतस्य भ्रातुः ब्राह्मणस्य जायाम् अक्षमालाभिधानां मुनिकन्यकाम् आत्मसूनोः संवर्धनाय नियुज्य विरहातुरः तपसे वनम् अगात्। यस्मिन् एव अवसरे सरस्वती असूत तनयं तस्मिन् एव अक्षमालापि सुतं प्रसूतवती। तौ तु सा निर्विशेषं सामान्यस्तन्या शनैः शनैः शिशू समवर्धयत्।

---

सम्भाषणः कृतालापः देवि! कुशलं ते इत्येवमालपन् इत्यर्थः। विदग्धता चतुरता। अध्यापयति शिक्षयति। अभिरामां मनोहारिणीं रामां कान्ताम्। उपजातविस्रम्भा सञ्जातविश्वासा। अस्य दधीचस्य। आत्मानं स्वस्वरूपम् अभिव्यक्तां वाग्देवीमिति भावः।

(१९९) अनेहसा कालेन। तस्मै तनयाय। जातमात्राय उत्पन्नमात्रायेत्यर्थः। सरहस्याः रहस्यम् उपनिषद् तेन सह वर्त्तमानाः। कलाः चतुःषष्टिकामविद्याः। सद्भर्तृश्लाघया सन् भर्त्ता तस्मिन् या श्लाघा गौरवं तया।

(२००) ह्रादिन्या वज्रेण इत्यर्थः ह्रादिनी वज्रमस्त्रियामित्यर्थः। सा अक्षमाला। निर्विशेषम् अभिन्नभावेन इति यावत्। सामान्यस्तन्या सामान्यम् उभयोः साधारणमित्यर्थः स्तन्यं स्तनदुग्धं यस्याः तथाभूता। तयोः तनययोः एकः सरस्वती-

एकः तयोः सारस्वताख्य एव अभवत् द्वितीयोऽपि वत्सनामा अभवत् । आसीच्च तयोः सोदर्य्ययोः इव स्पृहणीया प्रीतिः ।

अथ सारस्वतो मातुः ( २०१ ) महिम्ना यौवनारम्भ एव आविर्भूताशेषविद्यासञ्चारः तस्मिन् सवयसि भ्रातरि प्रेयसि प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास चकार च कृतदारपरिग्रहस्य अस्य तस्मिन् एव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम् ( २०२ ) आत्मनापि आषाढ़ी कृष्णाजिनी वल्कली अक्षवलयी मेखली जटी च भूत्वा तपस्यतो जनयितुः एव जगाम अन्तिकम् ।

अथ तस्मात् ( २०३ ) प्रवर्धमानादिपुरुषात् ( २०४ ) जनितात्मचरणोन्नतिनिर्गतप्रघोषः ( २०५ ) परमेश्वर-

---

तनय इत्यर्थः सारस्वत्याख्यः सरस्वत्या अपत्यं पुमान् सारस्वत्यः आख्या यस्य तथा-
भूतः मातृनाम्ना सारस्वत्य इति ख्यात इत्यर्थः । सवयसि समानवयस्के । सञ्चारया-
( २०१ ) महिम्ना वरप्रभावेण इत्यर्थः । मास प्रवेशयामास सर्वा एव विद्या वत्सं शिक्षयामासेति निष्कर्षः ।
( २०२ ) आत्मना स्वयम् । आषाढ़ी पालाशो दण्ड आषाढ़ः तद्वान् । वल्कली वल्कलं द्रुत्वक् तद्वान् वल्कल-
कृष्णाजिनी कृष्णसारचर्म्मावरण इत्यर्थः । अक्षवलयी जपमालाधारी । मेखली मुञ्जतृणनिर्मितमेखला-
परिधान इत्यर्थः । विशेषणैरेतैः ब्रह्मचर्य्यमस्योक्तम् । तपस्यतः तपस्यां-
वान् । जटी जटिलः । कुर्वतः जनयितुः दधीचस्य ।
( २०३ ) प्रवर्द्धमानात् वृद्धिं गच्छतो वत्सात् आदिपुरुषात् मूलपुरुषात् अन्यत्र नारायणात् ।
( २०४ ) जनितेति । जनिता प्रवर्द्धिता आत्मचरणेन आत्मज्ञानेन या
उन्नतिः अभ्युदयः तया निर्गतः दिगन्तं प्रति इति यावत् प्रघोषः ध्वनिः आख्या
इति यावत् यस्य तथोक्तः अन्यत्र जनितस्य उत्पादितस्य आत्मचरणस्य नविच्छन्न-

शिरोधृतः (२०६) सकलकलागमगम्भीरः महामुनिमान्यो (२०७) विपक्षक्षोभक्षमः (२०८) क्षितितललब्धायतिः अस्खलितप्रवृत्तो भागीरथीप्रवाह इव पावनः प्रावर्त्तत विपुलो वंशः। यस्मात् अजायन्त (२०९) वात्स्यायना नाम गृहमुनयः आश्रितश्रौता अपि (२१०)

---

काशि तृतीयस्य चरणस्येत्यर्थः उन्नत्या ऊर्द्ध्वगत्या तत् स्पर्शेन ब्रह्मकटाहभेदादिति भावः निर्गतः प्रघोषः प्रकर्षेण कलकलध्वनिरित्यर्थः यस्य तथाभूतः ब्रह्मकटाहस्थिता गङ्गा भगवच्चरणस्पर्शात् तद्भङ्गेन महीतले पतिता इत्यस्या विष्णुपादोद्भवेति प्रसिद्धिः।

(२०५) परमेश्वरशिरोधृतः परमेश्वरः सम्राट् तेन शिरसा धृतः सम्मानित इति यावत् यद्वा परमेश्वरः परमात्मा शिरसा धृतो येन तथाभूतः ईश्वरभक्त इति यावत् अन्यत्र परमेश्वरेण हरेण शिरसा धृतः गृहीतः।

(२०६) सकलेति। सकलाः समग्राः कलाः विद्याः तासाम् आगमेन अधिगमेन गम्भीरः पूर्ण इत्यर्थः अन्यत्र कलकलेन सह य आगमः प्रवाहस्तेन गम्भीरः। महामुनिभिः मान्यः आदरणीयः यद्वा महामुनिवत् मान्यः माननीयः। अन्यत्र महामुनिः जह्नुः तेन मान्यः अतिपवित्रतया उदरेण गृहीत इति भावः।

(२०७) विपक्षक्षोभक्षमः विपक्षाणां शत्रूणां विरोधिनामित्यर्थः क्षोभे पराजये क्षमः शक्तः अन्यत्र विपक्षाः पक्षरहिताः पर्वताः तेषां क्षोभे तरङ्गाघातेन खण्डने इति यावत् क्षमः समर्थः।

(२०८) क्षितितलेति क्षितितलेषु पृथिवीषु लब्धा आयतिः प्रतिष्ठा अन्यत्र विस्तारः येन तथोक्तः। अस्खलित प्रवृत्तः नास्ति स्खलितं सदाचारभ्रंशः यस्मिन् तद्यथा तथा प्रवृत्तः प्रचलितः। अन्यत्र अस्खलितम् अनिरुद्धं यथा तथा प्रवृत्तः प्रवहन्नित्यर्थः। भागीरथीप्रवाह इव गङ्गाप्रवाह इव विपुलो महान्। यस्मात् वंशात्। गृहमुनयः गृहस्थिता मुनयः। मुनिवदाचारवन्तो गृहस्था इत्यर्थः।

(२०९) वात्स्यायनाः वत्सस्यापत्यानि पुमांसः वात्स्यायनाः। वत्सवंशप्रसूता इत्यर्थ नामधेया इत्यर्थः। नाम प्रकाश्ये। आश्रितश्रौताः आश्रितः श्रौतः श्रुतिविहितः आचारः यैः तथोक्ताः।

अनालम्बितालीकवक्रकाकवः ( २११ ) कृतकुक्कुटव्रता अपि अवैडालवृत्तयः ( २१२ ) विवर्जितजनवृत्तयः ( २१३ ) परिहृतकपटकौरकुचीकूर्चाकूताः अगृहीतगह्वराः ( २१४ ) न्यक्कृतनिकृतयः प्रसन्नप्रकृतयः विगत-विकृतयः परपरिवाद-पराचीनचेतसो ( २१५ ) वर्णत्रयव्यावृत्तिविशुद्धान्धसो

---

( २१० ) अनालम्बितेति आलम्बितः वक्रस्य काकुः भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते इत्युक्त शोकभीत्यादिजनितकण्ठस्वरविशेषः यैः तथाभूता न भवन्तीति तथोक्ताः अच्छद्मचारिण इति यावत् अकपटेन वेदविधिमनुसरन्त इति भावः।

( २११ ) कृतेति कृतं कुक्कुटव्रतं कुक्कुटाण्डप्रमाणग्रासभोजननियमः यैः तथोक्ताः कुक्कुटाण्डप्रमाणेन चान्द्रायणादिव्रतम् आचरन्त इत्यर्थः। अवैडालवृत्तयः नास्ति वैडाली विडालसम्बन्धिनी वृत्तिर्व्यवहारो येषां तथोक्ताः विडालो हि हिंसावृत्तिः कदाचित् स्वाभीष्टसिद्धये आत्मनः स्वभावं गोपायित्वा चरति तथाचारिणो न इति भावः।

( २१२ ) विवर्जितेति विवर्जिता जनानां दुर्जनानाम् इतरजनानां वा यत्र जनेषु तादृशेषु वृत्तिर्व्यवहारो यैः तथाभूताः। विवर्जितजनपक्तय इति पाठे विवर्जिता जनानां साधारणानां पक्तिः पाकः कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायात् पाकद्रव्यमन्नमिति यावत् यैः तथोक्ताः।

( २१३ ) परिहृतेति परिहृतं परित्यक्तं कपटकीरस्य दुष्टशुकपक्षिणः कुचीकूर्चाकूतं ( किचिरमिचिर् ) इति अव्यक्तशब्दः यैः तथोक्ताः। कीरा हि यथापाठितं वदन्तः लोकान् सन्तोषयन्ति नतु तेषां तथा मनोवृत्तिः एते तु ब्राह्मणा बाह्याभ्यन्तरसमव्यवहारिणः न कापटिका इति भावः। अगृहीतगह्वराः न गृहीतं गह्वरं पापं यैः तथोक्ताः। परिहृत कपट-चोर कल्पितकचकूर्चाकूता इति पाठान्तरे अर्थः स्पष्ट एव।

( २१४ ) न्यक्कृतेति न्यक्कृता तिरस्कृता निकृतिः शाठ्यं यैः तथोक्ताः। प्रसन्नेति प्रसन्ना प्रकृतिः स्वभावो येषां तथोक्ताः सौम्या इत्यर्थः। विगतेति विगता विकृतिर्विकारो येषां ते अविकृतचित्ता इत्यर्थः। परेति परेषां परिवादे निन्दायां पराचीनं पराङ्मुखं चेतः येषां तथोक्ताः।

( २१५ ) वर्णेति वर्णानां क्षत्रियवैश्यशूद्राणामित्यर्थः व्यावृत्त्या विवर्जनेन

धीरधिषणावधूताध्येषणासङ्कसुकस्वभावाः प्रणतप्रणयिनः (२१६) शमितसमस्तशाखान्तरसंशीतय (२१७) उद्घाटितसमग्रग्रन्थार्थग्रन्थयः कवयो वाग्मिनो विमत्सराः सरसभाषित-व्यसनिनो (२१८) विदग्धपरिहासवेदिनः परिचयपेशला नृत्यगीतवादित्रेषु अबाह्या ऐतिह्यस्य अवितृष्णाः सानुक्रोशाः सत्यशुचयः साधुसम्मताः (२१९) सर्वसत्त्वसौहार्दद्रवार्द्रहृदया तथा सर्वगुणोपेता राजसेनानभिभूताः (२२०) क्षमाभाज आश्रितनन्दना

---

प्रतिग्रहादि वैमुख्येनेति यावत् विशुद्धानि पवित्राणि अन्धांसि अन्नानि येषां तथोक्ताः । धीरेति धीरा या धिषणा मतिः (बुद्धिर्मनीषा धीषणेत्यमरः) तया अवधूता तिरस्कृता अध्येषणा याच्ञा यैः तथोक्ताः परित्यक्तयाच्ञावृत्तय इत्यर्थः । असङ्कसुकस्वभावाः असङ्कसुकः स्थिरो मृदुश्च स्वभावो येषां तथोक्ताः । प्रणतप्रणयिनः प्रणतेषु जनेषु प्रणयवन्तः ।

(२१६) शमितेति शमिता शान्तिं नीता सिद्धान्तेन निरस्तेत्यर्थः समस्ता समग्रा शाखान्तराणां वैदिकशाखाविशेषाणां संशीतिः संशयः यैः तथोक्ताः । कवयः कवयितारः काव्यप्रणेतार इत्यर्थः ।

(२१७) उद्घाटितेति उद्घाटिताः व्याख्याता इत्यर्थः समस्तानां ग्रन्थानां शास्त्राणाम् अर्थग्रन्थयः कूटार्था इत्यर्थः यैः तथाभूताः शास्त्रसंशयच्छेत्तार इत्यर्थः । वाग्मिनः सुवक्तारः । विमत्सराः मत्सरोऽन्यशुभद्वेषः तद्रहिताः । सरसेति सरसं रसयुक्तं भाषितं वचनं तत्र व्यसनिनः तद्भाषणपरा इत्यर्थः ।

(२१८) विदग्धेति विदग्धः चतुरः परिहासः तद्वेदिनः तदभिज्ञा इत्यर्थः । परिचयपेशलाः परिचयेषु सज्जनैरिति शेषः पेशलाः निपुणाः । अबाह्याः बहिर्भावरहिताः नृत्यगीतवादित्रज्ञानवन्त इत्यर्थः । ऐतिह्यस्य इतिहासस्य अवितृष्णाः सतृष्णा इत्यर्थः इतिवृत्तज्ञानलोलुपा इति भावः । सानुक्रोशाः सदयाः । सत्यशुचयः सत्येन शुचयः पवित्राः । साधुसम्मताः सज्जनसमान्याः ।

(२१९) सर्वेति सर्वेषु सत्त्वेषु प्राणिषु सौहार्दद्रवेण मैत्रीभावेन आर्द्रं हृदयं येषां ते । सर्वगुणोपेताः सर्वैः गुणैः शीलदाक्षिण्यादिभिः उपेताः समन्विताः ।

अनिस्त्रिंशा विद्याधरा अजड़ाः ( २२१ ) कलावन्तः अदोषाः तारकाः अपरोपतापिनः ( २२२ ) भास्वन्तः अनुष्माणः हुतभुजः ( २२३ ) अकुस्मृतयो भोगिनः ( २२४ ) अस्तम्भाः पुण्यालयाः ( २२५ ) अलुप्तक्रतुक्रिया दक्षाः अव्यालाः कामजितः ( २२६ ) असाधारणा द्विजातयः।

---

राजसेन रजोगुणेन दर्पाहङ्कारादिना अनभिभूताः अपराजिताः रजोगुणवर्जिता इति यावत्।

( २२० ) क्षमाभाजः शक्तौ सहिष्णुता क्षमा तद्भाजः तद्वन्त इत्यर्थः। आश्रित नन्दनाः आश्रितान् अनुगतान् जनान् नन्दयन्तीति तथाभूताः। अनिस्त्रिंशाः अक्रूराः। विद्याधराः विद्वांसः। अजड़ाः अमूर्खाः।

( २२१ ) कलावन्तः नृत्यगीतादिषु विद्यासु निपुणा इत्यर्थः अन्यत्र अजड़ाः अशीताः कलावन्तः चन्द्रा इति विरोधः। अदोषाः दोषरहिताः तारकाः तारयन्ति उद्धरन्ति लोकानिति तथोक्ताः। अन्यत्र अदोषा दोषा रात्रिस्तद्रहिताः तारका नक्षत्राणीति विरोधः अपरोपतापिनः परान् न उपतापयन्तीति तथोक्ताः परपीड़नरहिता इत्यर्थः।

( २२२ ) भास्वन्तः प्रभाशालिनः लोकसमाजेषु दीप्यमाना इत्यर्थः अन्यत्र अपरतापिनः भास्वन्तः सूर्या इति विरोधः। अनुष्माणः उष्मवर्जिताः अगर्वा इत्यर्थः हुतभुजः हुतं यज्ञेषु देवेभ्यो निवेदितमित्यर्थः भुञ्जते इति तथोक्ता यज्ञशिष्टाशिन इत्यर्थः अन्यत्र अनुष्माणः हुतभुजोऽग्नय इति विरोधः।

( २२३ ) अकुस्मृतयः अकुत्सिता स्मृतिः गतिः आचार इति यावत् येषां तथोक्ताः भोगिनः संसारसुखभोगवन्तः। अन्यत्र नास्ति कौ पृथिव्यां पृथ्वीविवरे स्मृतिः गतिः स्थितिः वा येषां तथोक्ताः भोगिनः सर्पा इति विरोधः।

( २२४ ) अस्तम्भाः स्तम्भः कामजनितसात्त्विकभावविशेषः तद्रहिताः पुण्यालयाः पुण्यवन्तः। अन्यत्र अस्तम्भाः स्तम्भशून्याः पुण्यालयाः पवित्रगृहाणीति विरोधः स्तम्भं विना गृहस्थितेरसम्भवादिति भावः।

( २२५ ) अलुप्तेति न लुप्ता क्रतुक्रिया यज्ञानुष्ठानं येषां तथाभूताः दक्षाः निपुणाः अन्यत्र दक्षाः प्रजापतय इति विरोधः तेषां यज्ञक्रियाया हरकोपेन नाश-

तेषु च एवम् उत्पद्यमानेषु (२२७) संसरति संसारे यात्सु युगेषु अवतीर्णे कलौ वहत्सु वत्सरेषु व्रजत्सु वासरेषु अतिक्रामति च काले प्रसवपरम्पराभिः अनवरतम् आपतति विकासिनि वात्स्यायनकुले क्रमेण कुवेरनामा (२२८) वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे। तस्य अभवन् अच्युत ईशानो हरः पाशुपतश्च इति चत्वारो युगारम्भा इव (२२९) ब्राह्मतेजोजन्यमान प्रजाविस्तारा नारायणबाहुदण्डा इव (२३०) सचक्र-

---

दिति भावः। अव्यालाः अहिंस्राः कामजितः कामजयिनः अन्यत्र नास्ति व्यालः सर्पः येषु तथाभूताः कामजितः रुद्रा इति विरोधः तेषाम् अङ्गेषु व्यालयोगप्रसिद्धेरिति भावः।

(२२६) असाधारणा असामान्याः द्विजातयः द्वे जाती येषां तथोक्ताः मातृजठरे एकं जन्म आचार्य्यसमीपे उपनयनात् वेदाधिगमः द्वितीयं जन्मेति द्विजातित्वामिति भावः मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने इति स्मृतेः। अन्यत्र द्विजातिः द्वाभ्यां जननम् इत्यर्थः येषां तथोक्ताः अथच असाधारणाः असामान्याः अनितरा इति कथं युज्यते इति विरोधः।

(२२७) संसरति चलति। यात्सु गच्छत्सु। वहत्सु अतिक्रामत्सु। व्रजत्सु गच्छत्सु। वासरेषु दिवसेषु। प्रसवपरम्पराभिः जन्मप्रवाहैः। आपतति उद्भवति विकासिनि विराजमाने।

(२२८) वैनतेय इव विनतायाः अपत्यं पुमान् वैनतेयः गरुड़ः स इव गुरुपक्षपाती गुरौ आचार्य्ये पितरि वा पक्षपातः भक्तिः विद्यते अस्येति तथोक्तः। अन्यत्र गुरुभ्यां महद्भ्यां पक्षाभ्यां गरुद्भ्यां पतति उड्डीयतीति तथोक्तः। द्विजः विप्रः पक्षी च दन्तविप्राण्डजा द्विजा इत्यमरः। तस्य कुवेरस्य। युगारम्भा इव युगानां सत्यादीनाम् आरम्भाः प्रथमप्रवृत्तयः ते इव।

(२२९) ब्राह्मेति। ब्राह्मं वैदिकं वेदविहिताचारनिमित्तमित्यर्थः तेजः तेन जन्यमानः उत्पाद्यमानः प्रजानां सन्ततीनां विस्तारः येषां तथाभूताः अन्यत्र

नन्दकाः तनयाः। तत्र पाशुपतस्य एक एव अभवत् भूभार इव (२२१) अचलकुलस्थितिः चतुरुदधिगम्भीरोऽर्थपतिः इति नाम्ना (२२२) समग्राग्रजन्मचक्रचूड़ामणिः महात्मा सूनुः। सोऽजनयत् भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं चित्रभानुं त्र्यक्षम् अहिदत्तं विश्वरूपञ्च इति एकादश रुद्रानिव (२२३) अलसोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान्। अलभत च चित्रभानुः तेषां मध्ये (२२४) राजदेव्य-

---

ब्रह्मणो विधातुः तेजसा मनःप्रभावेण इत्यर्थः जन्यमानः प्रजाविस्तारा येषु तथोक्ताः। युगारम्भे प्रथमं ब्रह्मणो मानससृष्टिः ततः स्त्रीपुरुषसङ्गजनिता सृष्टिः प्रावर्त्ततेति शास्त्रात्।

(२२०) सच्चक्रनन्दनकाः सतां साधूनां चक्रं समाजं नन्दयन्तीति तथोक्ताः अन्यत्र सत् तिष्ठत् चक्रं सुदर्शनाख्यमिति शेषः नन्दकः तदाख्यः खड्गश्च येषु तथोक्ताः। तनयाः पुत्राः। भूभार इव पृथिवीभार इव।

(२२१) अचलकुलस्थितिः अचला: स्थिरा कुलस्य वंशस्य स्थितिः यस्य तथोक्तः अन्यत्र अचलानां पर्वतानां कुलैः वृन्दैः सप्तभिः कुलपर्वतैरित्यर्थः उक्तञ्च। महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वता इति। चतुरुदधिगम्भीरः चत्वारः उदधयः समुद्राः तद्वत् गम्भीरः महाप्रभाव इत्यर्थः अन्यत्र चतुर्भिः उदधिभिः सागरैः गम्भीरः वेष्टितः।

(२२२) समग्रेति। समग्राणाम् अग्रजन्मनां ब्राह्मणानां चक्रस्य निचयस्य चूड़ामणिः शिरोरत्नभूतः। सूनुः पुत्रः। अभवत् इत्यनुषङ्गः। सः अर्थपतिः।

(२२३) सोमेति। सोमः तदाख्यलताभेदः तस्य अमृतमिव रसः यज्ञशिष्ट इति भावः तस्य शीकरैः विन्दुभिः छुरितं पूर्णं मुखं येषां यज्ञीयसोमलतारसपायिन इत्यर्थः अन्यच सोमस्य शिरस्थितचन्द्रस्य अमृतरसानां निःसृतमयूखद्रवाणाम् इत्यर्थः शीकरैः छुरितमुखान् आप्लुतवदनान्। पवित्रान् विशुद्धवृत्तीन् पुत्रान् अजनयत् इत्यनुषङ्गः।

भिधानायां ब्राह्मण्यां बाणम् आत्मजम् । स बाल एव विधेः बलवतो वशात् उपसम्पन्नया व्ययुज्यत जनन्या । जातस्नेहस्तु नितरां पितैव अस्य मातृताम् अकरोत् । अवर्धत ( २३५ ) चेतनाधिकतरमेधीयमानधृतिः धाम्नि निजे ।

कृतोपनयनादिक्रियाकलापस्य ( २३६ ) समावृत्तस्य चतुर्दशवर्षदेशीयस्य पिता अपि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेन (२३७) अदशमीस्थ एव अस्तम् अगात् । संस्थिते च पितरि महता शोकेन आभीलम् अनुप्राप्तो दिवानिशं दह्यमानहृदयः कथं कथम् अपि कतिपयान् दिवसान् आत्मगृहे एव अनैषीत् । गते च विरलतां शोके शनैः शनैः अविनयनिदानतया स्वातन्त्र्यस्य कुतूहलबहुलतया च बालभावस्य ( २३८ ) धैर्यप्रतिपक्ष-

---

( २३४ ) राजदेव्यभिधानायां राजदेवी समाख्यायाम् आत्मजम् अलभत इत्यनुषङ्गः । स बाणः । विधेर्बलवतः प्रबलस्य दैवस्य महादुर्भाग्यस्य इति यावत् वशात् प्रभावात् । उपसम्पन्नया मृतया । मातृतां मातृत्वं मातृवद् व्यवहारमित्यर्थः ।

( २३५ ) चेतनेति । चेतना प्रज्ञा तया अधिकतरा या मेधा स्मृतिशक्तिरित्यर्थः सैवाचरन्ती धृतिः धारणा शक्तिः यस्य तथाभूतः । धाम्नि गृहे ।

( २३६ ) समावृत्तस्य वेदाध्ययनात् परं समावर्त्तनाख्यसंस्कारसंस्कृतस्य इत्यर्थः । श्रुतिस्मृतिविहितं श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिरित्युक्तश्रुतिस्मृतिभ्यां विहितं कर्त्तव्यतया उक्तम् । पुण्यजातं सत्क्रियाकलापम् ।

( २३७ ) अदशमीस्थः दशमी चरमावस्था वार्द्धकम् इति यावत् तत्र तिष्ठति इति । दशमीस्थः स न भवतीति अदशमीस्थः अपूर्णवया एवेत्यर्थः । अस्तं निधनम् । संस्थिते मृते । आभीलं कष्टम् । विरलताम् अल्पताम् । अविनयनिदानतया अविनयः दुराचारः तस्य निदानं मूलकारणं तस्य भावः तत्ता तया । स्वातन्त्र्यस्य स्वाधीनतायाः ।

तया च यौवनारम्भस्य धैर्य्यविरोधितया अनेकानि चापलानि आचरन् इत्वरो बभूव। अभवंश्च अस्य वयसा समानाः सुहृदः सहायाः च तथा च भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ (२३९) भाषाकविः ईशानः परं मित्रम् प्रणयिनौ रुद्रनारायणौ विद्वांसौ वारबाणवासबाणौ वर्णकविः वेणीभारतः प्राकृतकृत् कुलपुत्रो वायुविकारः वन्दिनौ अनङ्गबाणसूचीबाणौ (२४०) कात्यायनिका चक्रवाकिका जाङ्गलिको मयूरकः ताम्बूलदायकः चण्डकः भिषक्पुत्रो मन्दारकः पुस्तकवाचकः सुदृष्टिः कलादश्चामीकरः (२४१) हैरिकः सिन्धुषेणः लेखको गोविन्दकः चित्रकृत् वीरवर्मा पुस्तकृत् कुमारदत्तः मार्दङ्गिको जीमूतः गायनौ सोमिलग्रहादित्यौ

---

(२३८) धैर्य्यप्रतिपक्षतया धैर्य्यविरोधितया इत्यर्थः। इत्वरः गमनशीलः अधीरः नैकत्र स्थितिशील इति यावत्। पारशवौ ब्राह्मणात् शूद्रकन्याया मूढ़ायां जातौ पारशवौ। तदाह मनुः। ब्राह्मणाद् वैश्यकन्यायामम्बष्ठो नाम जायते। निषादः शूद्रकन्यायां यः पारशव उच्यते।

(२३९) भाषाकविः भाषायां मातृभाषायामित्यर्थः कविः काव्यरचयिता। वारबाण-वासवाणौ तदाख्यौ विद्वांसौ पण्डितौ। प्राकृतकृत् प्राकृतभाषाप्रणेता। वायुविकारः तदाख्यः। वन्दिनौ भट्टौ।

(२४०) कात्यायनिका पञ्चाशद्वर्षदेशीयां वीरां संस्थितभर्तृकाम्। वदन्ति कात्यायनिकां धृतकाषायवाससम् इत्युक्तलक्षणा चक्रवाकिका नाम कापि स्त्री। जाङ्गलिकः विषवैद्यः। मयूरकः तदाख्यः। चण्डकः तदाख्यः। भिषक्पुत्रः वैद्यसुतः मन्दारकः तन्नामा। पुस्तकवाचकः पुस्तकलिखितवक्ता सुदृष्टिः तन्नामा। कलादः स्वर्णकारः चामीकरः तदाख्यः।

(२४१) हैरिकः हीरकव्यवसायी सिन्धुसेनः तदाख्यः। लेखकः पुस्तकस्य

(२४२) सैरन्ध्री कुरङ्गिका वांशिकौ मधुकरपारावतौ गान्धर्वोपाध्यायो दर्दुरकः (२४३) सांवाहिका केरलिका लासकयुवा ताण्डविकः आक्षिक आखण्डलः कितवो भीमकः शैलालियुवा (२४४) शिखण्डकः नर्त्तकीहरिणिका पाराशरी सुमतिः क्षपणको वीरदेवः कथको जयसेनः शैवो वक्रघोणः (२४५) मन्त्रसाधकः करालः असुरविवरव्यसनी लोहिताक्षः (२४६) धातुवादविद्

---

इति शेषः। गोविन्दकः तन्नामा। चित्रकृत् आलेख्यकर्त्ता वीरवर्म्मा तदाख्यः। पुस्तककृत् ग्रन्थकर्त्ता। मार्दङ्गिकः मृदङ्गवादकः जीमूतः तदाख्यः। गायनौ गायकौ। सोमिलग्रहादित्यौ तन्नामानौ।

(२४२) सैरिन्ध्री प्रसाधनोपचारज्ञा सैरिन्ध्री स्ववशा स्मृतेत्युक्तलक्षणा नारी कुरङ्गिका नाम। वांशिकौ वंशीवादकौ मधुकरपारावतौ तन्नामानौ। गान्धर्वोपाध्यायः गान्धर्वं सङ्गीतशास्त्रं तस्य उपाध्यायः आचार्य्यः दर्दुरकः तदाख्यः।

(२४३) सांवाहिका सेविका केरलिका नाम कापि स्त्री। लासको नर्त्तकः स च असौ युवा तरुणश्चेति लासकयुवा ताण्डविकः तदाख्यः। आक्षिकः अक्षैः स्वहैर्दीव्यतीति आक्षिकः द्यूतकारः आखण्डलः तदाख्यः। कितवः धूर्त्तः भीमकः तन्नामा। शैलालिः स्वयं नर्त्तकः स च असौ युवा चेति तथोक्तः।

(२४४) शिखण्डकस्तदाख्यः नर्त्तकी हरिणिका नर्त्तकीषु मध्ये या हरति मन इति भावः सा पाराशरी तदाख्या कापि नारी। सुमतिः सुबुद्धिः क्षपणकी बौद्धसन्न्यासिभेदः वीरदेवः तदाख्यः। कथकः पुराणव्याख्याता जयसेनः तदाख्यः। शैवः शिवभक्तः वक्रघोणः तदाख्यः।

(२४५) मन्त्रसाधकः साधितमन्त्र इत्यर्थः करालः तन्नामा। असुरविवरव्यसनी असुराणां विवरं पातालमित्यर्थः यद्वा असुराणां विवरं रन्ध्रं दोष इति यावत् तस्मिन् व्यसनी तज्ज्ञानानुशीलक इत्यर्थः। लोहिताक्षः तदाख्यः।

(२४६) धातुवादविद् धातवः स्वर्णरजतादयः तेषां उद्यते अनेनेति वादः

विहङ्गमः दार्दुरिको दामोदरः ऐन्द्रजालिकः चकोराक्षः मस्करी ताम्रचूड़ः। स एतैः च अन्यैः च अनुगम्यमानो बालतया निघ्नताम् उपगतो (२४७) देशान्तरालोकन-कौतुकाक्षिप्तहृदयः सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु सति च अविच्छिन्ने विद्याप्रसङ्गे गृहात् निरगात् अगात् च निरवग्रहो ग्रहवानिव नवयौवनेन स्वैरिणा मनसा महताम् उप-हासास्पदताम्।

अथ (२४८) शनैः शनैः अत्युदारव्यवहृतिमन्ति बृहन्ति राजकुलानि वीक्षमाणो निरवद्यविद्या-विद्योतितानि च गुरुकुलानि सेवमानो (२४९) महा

---

गुणः तं वेत्तीति तथोक्तः रसायनवित् इत्यर्थः। विहङ्गमः तदाख्यः। दार्दुरिकः दर्दुरा भेकाः तान् वेत्तीति दार्दुरिकः भेकगुणागुण वेत्ता इत्यर्थः दामोदरः तदाख्यः। ऐन्द्रजालिकः इन्द्रजालविद्यावित् चकोराक्षः तन्नामा। मस्करी परिव्राट् सन्न्यासी इत्यर्थः ताम्रचूड़ः तदाख्यः। स बाणः निघ्नतां वश्यताम् एतेषां पूर्वोक्तानामनु-चराणामिति भावः अधीनो निघ्न आयत्त इत्यमरः।

(२४७) देशान्तरेति। देशान्तराणां भिन्नदेशानाम् आलोकने दर्शने यत् कौतुकं औत्सुक्यं तेन आक्षिप्तम् आकृष्टं हृदयं यस्य तथोक्तः। सत्सु अपि विद्यमानेषु अपि। पितृपितामहोपात्तेषु पैतृकेषु इति यावत् विभवेषु सम्पत्सु। विद्याप्रसङ्गे विद्यानुशीलने। अगात् प्रापत्। निरवग्रहः स्वतन्त्रः स्वेच्छाचारी इत्यर्थः ग्रहवान् इव भूताविष्ट इवेत्यर्थः। स्वैरिणा स्वेच्छाचारवता। उपहासा-स्पदतां परिहासपात्रताम् अवज्ञेयतामिति यावत्।

(२४८) शनैः शनैः क्रमेण। अत्युदारेति अत्युदारा अतिमहती व्यवहृतिः व्यवहारः आचार इति यावत् तद्वन्ति बृहन्ति महान्ति। वीक्षमाणः परिपश्यन्। निरव-द्येति निरवद्याभिः निर्दोषाभिः विद्याभिः विद्योतितानि उज्ज्वलतां गतानि।

र्हालापगम्भीरगुणवद्गोष्ठी: च उपतिष्ठमान: ( २५० ) स्वभावगम्भीरधीधनानि विदग्धमण्डलानि च गाहमान: पुनरपि तामेव वैपश्चितीम् आत्मवंशोचितां प्रकृतिम् अभजत्। महतश्च कालात् तामेव भूयो वात्स्यायन-वंशाश्रयाम् आत्मनो जन्मभुवं ब्राह्मणाधिवासम् अगमत् तत्र च ( २५१ ) चिरदर्शनात् अभिनवीभूतस्नेहसद्भावै: ( २५२ ) ससम्भ्रमप्रकटितज्ञातेयै: आप्तै: उत्सवदिवस इव आनन्दिताभिगमनो बालमित्रमण्डलस्य मध्यगतो मोक्षसुखम् इव अन्वभवत्।

इति श्रीमद् बाणभट्टविरचिते हर्षचरिते वात्स्यायनवंश- वर्णनं नाम प्रथम: उच्छ्वास:।

---

( २४९ ) महार्हेति महार्हा महामूल्या: मधुरा इत्यर्थ आलापा: वचनानि तै: गम्भीरा: प्रदीप्ता: गुणवत्य: विद्यादिगुणशालिन्य: गोष्ठ्य: समाजा: ता:। उप-तिष्ठमान: सञ्चरन्।

( २५० ) स्वभावेति स्वभावेन गम्भीराणि धीधनानि प्रज्ञाधनानि येषां तानि विदग्धमण्डलानि विद्वज्जनान्। गाहमान: सङ्गच्छमान:। वैपश्चिती विपश्चित् विद्वान् विद्वान् विपश्चिद् दोषज्ञ इत्यमर: तस्य इयं वैपश्चिती तां प्रकृतिं स्वभावम्। वात्स्यायनवंशाश्रयां वत्स्यायनवंशसम्बन्धिनीं ब्राह्मणाधिवासं तदाख्यम्।

( २५१ ) चिरदर्शनात् बहुकालान्तरदर्शनात्। अभिनवीभूतेति अभिनवी-भूता नूतनतां प्राप्ता: स्नेहसद्भावा: येषां तथोक्तै:।

( २५२ ) ससम्भ्रमेति ससम्भ्रमं सगौरवं यथा तथा प्रकटितं ज्ञातेयं ज्ञातित्वं य: तादृशै:।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता हर्षचरितस्य प्रथमोच्छ्वास व्याख्या समाप्ता।

## अथ द्वितीय उच्छ्वासः।

अतिगम्भीरे भूपे कूप इव जनस्य निरवतारस्य।
दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ १ ॥
रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम्।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ २ ॥

(१) अथ तत्र अनवरताध्ययनध्वनिमुखराणि भस्मपुण्ड्रकपाण्डुललाटैः (२) कपिलशिखाजालजटिलैः

---

अतिगम्भीरेति। अतिगम्भीरे अतिशयेन गाम्भीर्य्यं क्रोधहर्षादिभिः धैर्य्यच्युत्य-
भावः अन्यत्र दुरवगाहत्वं तद्वति भूपे राजनि कूपे इव निरवतारस्य कदाचिदपि
अप्रविष्टस्य अनवतीर्णस्य च जनस्य गुणवन्तः विद्याविनयशालिनः रज्जुशालिनश्च
पार्थिवा राजान एव घटकाः योजकाः सहाया इति यावत् अन्यत्र पार्थिवाः
पृथिवीविकारा मृण्मया इति यावत् घटा एव घटकाः कलसाः समीहितसिद्धिम्
इष्टसिद्धिं दधति सम्पादयन्ति। अवलम्बनाभावात् अति गभीरादपि कूपात् रज्जु-
गृहीतेन कुम्भेन जलप्राप्तिरिव अतिगम्भीरादपि गुणशालिनो नृपतेः सकाशात्
जनस्य इष्टसिद्धिर्भवतीति निष्कर्षः ॥ १ ॥

रागिणीति। दिवसः रागिणि अनुरक्ते लोहिते च नलिने कमले दिनकर-
प्रभवां भास्करप्रभाजनितां लक्ष्मीं श्रियं शोभामिति यावत् निदधाति अर्पयति
तथाहि न अपेक्षितौ न दृष्टौ न विचारितावित्यर्थः गुणदोषौ यत्र तथाभूतः परोप-
कारः सतां साधूनां व्यसनं व्रतमिति यावत्। साधवो गुणदोषान् न विचारयन्ति
केवलं परेषाम् उपकारव्रतमेव कर्त्तव्यतया समाश्रयन्ति। एतेन श्लोकद्वयेन बाणस्य
गुणवत्तया राजसाहाय्यलाभः परेषां साधूनाञ्च स्वकृतावनुरागः सूचितः ॥ २ ॥

(१) अथेत्यादि। तत्र ब्राह्मणाधिवासे। अनवरतेति अनवरतानाम्
अविश्रान्तानाम् अध्ययनानां ध्वनिभिः मुखराणि शब्दितानि उत्तरस्थितेन वाक्य-
भवनानीत्यनुषङ्गः। भस्मेति भस्मपुण्ड्रकेण भस्मरचिततिलकेन पाण्डूनि धव-
लानि ललाटानि येषां तैः उत्तरस्थितेन वटुभिः इत्यनेनान्वयः।

क्रशानुभिः इव क्रतुलोभागतैः वटुभिः अध्यास्यमानानि (३) सेकसुकुमारसोमकेदारिकाहरितायमानप्रघनानि (४) कृष्णाजिनविकीर्णशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि (५) बालिकाविकीर्य्यमाणनीवारबलीनि (६) शुचिशिष्यशतानीयमानहरितकुशपूलीपलाशसमिन्धि (७) इन्धनगोमयपिण्डकूटसङ्कटानि (८) आमिक्षीयक्षीरक्षारिणीनाम् अग्निहोत्रधेनूनां खुरवलयैः (९) विलि-

---

(२) कपिलेति कपिलैः पिङ्गलैः शिखाजालैः चूडानिचयैः अर्चिःसङ्घैश्च जटिलाः जटावन्तः युक्ताश्च तैः। क्रशानुभिरिव अग्निभिरिव क्रतुलोभात् यज्ञलोभात् आगतैः उपस्थितैः। वटुभिः ब्रह्मचारिभिः। अध्यास्यमानानि अधिष्ठीयमानानि।

(३) सेकेति सेकेन जलसेचनेन सुकुमारा स्निग्धा या सोमकेदारिका यज्ञार्थं रोपितं सोमलताक्षेत्रं तया हरितायमानानि श्यामायमानानि प्रघनानि अङ्गनानि येषां तानि।

(४) कृष्णाजिनेति कृष्णाजिनेषु कृष्णमृगचर्मसु विकीर्णा निहिता शुष्यन्तः शोषं गच्छन्तः पुरोडाशीया हवनीया श्यामाकतण्डुलाः श्यामकाख्यतृणविशेषाः तदुत्पन्नाः तण्डुला इत्यर्थः येषु तानि।

(५) बालिकेति बालिकाभिः कन्याभिः विकीर्य्यमाणाः निधीयमानाः नीवारा अकृष्टपच्या व्रीहय एव बलयः पूजाद्रव्याणि येषु तानि।

(६) शुचीति शुचिभिः पवित्रैः शिष्याणां छात्राणां शतैः आनीयमाना आह्रियमाणा हरिता श्यामाः कुशपूल्यः दर्भनिचयाः पलाशाः पत्राणि समिधः काष्ठानि च येषु तानि।

(७) इन्धनेति इन्धनानां काष्ठानां गोमयपिण्डानाञ्च कूटैः राशिभिः सङ्कटानि आकीर्णानि।

(८) आमिक्षीमिति आमिक्षा सा शृतोष्णा या क्षीरेस्याद्दधियोगत इत्युक्तलक्षणा छानेति प्रसिद्धा तथा च स्मृतिः। तप्ते पयसि दध्यानयति सा वैश्वदेव्या-

खिताजिरवितर्दिकानि (१०) कामण्डलव्यमृत्पिण्ड-मर्दनव्यग्रयतिजनानि (११) वैतानवेदीशङ्कव्यानाम् औडुम्बरीणां शाखानां राशिभिः (१२) पवित्रितपर्य्यन्तानि वैश्वदेवपिण्डपङ्क्तिपाण्डुरितप्रदेशानि (१३) हविर्धूमधूसरिताङ्गनविटपिकिसलयानि वत्सीयबालक-लालितललत्तरलतर्णकानि (१४) क्रीड़त्कृष्णशारच्छाग-शावकप्रकटितपशुबन्धप्रबन्धनानि (१५) शुकशारिका-

---

भिचा भवतीति। तस्मै हितानि आमिचीयाणि यानि चीराणि तानि चरन्तीति तासाम्। अग्निहोत्रधेनूनां यज्ञार्थं पालितानां गवाम्। खुरवलयैः खुरसमूहैः।

(९) विलिखितेति विलिखिता कुट्टिता अजिरेषु अङ्गनभूमिषु वितर्दिका वेदिका येषां तानि।

(१०) कामण्डलव्येति कमण्डलुः मुनीनां जलपात्रभेदः तस्मै हितं कामण्ड-लव्यं यत् मृत्पिण्डं कमण्डलुशोधनार्थं मृत्तिकाचय इत्यर्थः तेन मर्दने कमण्डलो-रिति भावः व्यग्रः तत्परः यतिजनः सन्यासिवर्गः येषु तानि।

(११) वैतानेति वितानो यज्ञः तस्मै हिता वैतानी वेदिः वैतानवेदिः तत्र शङ्कव्यानां शङ्कवः कीलकाः तेभ्यो हितानां शङ्कुसम्पादिनीनामिति यावत् औडु-म्बरीणां यज्ञफलकत्वसम्बन्धिनीनां शाखानां विटपानाम्।

(१२) पवित्रितेति पवित्रितानि पवित्रीकृतानि पर्य्यन्तानि प्रान्तभागा येषां तानि। वैश्वदेवेति वैश्वदेवानि विश्वेभ्यो देवेभ्यो देयानि पिण्डानि अन्नानि तेषां पङ्क्तिभिः राजिभिः पाण्डुरिताः धवलिताः प्रदेशा येषु तानि।

(१३) हविरिति हविर्धूमैः यज्ञधूमैः इत्यर्थः धूसरिता धूसरवर्णीकृता अङ्गनविटपिनाम् अजिरतरूणां किसलयाः पल्लवाः येषु तानि। वत्सीयाः वत्सेभ्यो-हिताः वत्सपरिचर्य्याकुशला इत्यर्थः ये बालकाः मुनिशिशवः तैः लालिताः यत्नेन पोषिताः ललन्तः लम्फन्तः तरलाः चञ्चलाः तर्णकाः सद्योजाता वत्सा येषु तानि।

(१४) क्रीड़दिति क्रीड़तां चरतां कृष्णसाराणां [illegible] छागानाञ्च शावकैः शिशुभिः प्रकटितं प्रकाशितं पशवो बध्यन्ते यत्र तादृशो यज्ञः पशुबन्धः तस्य प्रबन्धनं प्रबन्धः सातत्यमित्यर्थः येषु तानि।

रब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि साक्षात् त्रयीतपोवनानि इव चिरदृष्टानां बान्धवानां प्रीयमाणो भ्रमन् भवनानि सुखम् अतिष्ठत्।

तत्रस्थस्य च (१६) अस्य कदाचित् कुसुमसमययुगम् उपसंहरन् अजृम्भत ग्रीष्माभिधानः (१७) संफुल्लमल्लिकाधवलाट्टहासो महाकालः। प्रत्यग्रनिर्जितस्य अस्तम् उपगतवतो वसन्तसामन्तस्य (१८) बालापत्येषु इव पयःपायिषु नवोद्यानेषु दर्शितस्नेहो मृदुः अभूत् (१९) अभिनवोदितस्य सर्वस्यां पृथिव्यां सकलकुसुमबन्धनमोक्षम् अकरोत् प्रतपन् उष्णसमयः। स्वयम् (२०) ऋतु-

(१५) शुकेति शुकशारिकाभिः आरब्धेन प्रक्रान्तेन अध्ययनेन वेदादीनां पाठेन दीयमानं सम्पाद्यमानम् उपाध्यायानाम् आचार्याणां विश्रान्तिसुखं येषु तानि। साक्षात् मूर्तिमन्तीत्यर्थः त्रयीतपोवनानीव त्रयी ऋग्यजुःसाम्नां त्रितयं तस्याः तपोवनानीव।

(१६) अस्य बाणस्य कुसुमसमययुगं वसन्तकालमित्यर्थः उपसंहरन् निरस्यन्। अजृम्भत प्रादुरभूत्।

(१७) सम्फुल्लेति सम्फुल्ला विकसिता मल्लिका एव धवलाः स्वच्छा अट्टहासाः हासविशेषा यस्य तथोक्तः। प्रत्यग्रनिर्जितस्य अभिनवविजितस्य। अस्तम् उपगतवतः क्षयं प्राप्तवतः। वसन्त एव सामन्तः अधीश्वरः तस्य वसन्तसामन्तस्य। सामन्तः स्यात् अधीश्वरः।

(१८) बालापत्येष्विव शिशुतनयेष्विव। पयःपायिषु जलपानयोग्येषु जलैः सेचनार्हेष्विति यावत् अन्यत्र दुग्धपायिषु स्तनन्धयेष्विति यावत्। ग्रीष्मे नवोद्यानानि जलैः सिच्यन्ते इति तेषु ग्रीष्मस्य मृदुत्वमिति भावः।

(१९) अभिनवोदितः नूतनप्रवृत्तः। सकलेति सकलानां कुसुमानां वासन्तिकानामिति भावः बन्धनमोक्षं वृन्तस्खलनम्। नवाभिषिक्तो हि राजा आनन्दातिशयात् कारासु पूर्वनिबद्धानां बन्धनमोक्षं करोति उक्तञ्च। यौवराज्याभिषेके वा परचक्रावरोपणे। पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते इति।

राजस्य अभिषेकार्द्राः चामरकलापा इव अराजन्त कामिनीनां चिकुरचयाः कुसुमायुधेन (२१) हिमदग्धसकलकमलिनीकोपेन इव हिमालयाभिमुखीं यात्राम् अधात् अंशुमाली ।

अथ (२२) ललाटन्तपे तपति तपने लिखितललाटिकापुण्ड्रकैः (२३) अलकचीरचीवरसंवीतैः (२४) स्वेदोदविन्दुमुक्ताक्षवलयवाहिभिः दिनकराराधननियमा इव अराजन्त ललनाललाटेन्दुभिः । (२५) चन्दनधूसराभिः असूर्य्य-

---

(२०) ऋतुराजस्य ग्रीष्मस्य । अभिषेकार्द्राः स्नानार्द्राः । अराजन्त छता इत्यर्थः । चिकुरकलापाः केशनिचयाः कुसुमायुधेन कामेन । ग्रीष्मे तथाविधाः कामिनीनां केशाः विशेषेण कामम् उद्दीपयन्तीति भावः उक्तञ्च कालिदासेन । स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु । कामी वसन्तात्ययमन्दवीर्य्यः केशेषु लेभे रतिमङ्गनानामिति ।

(२१) हिमालयाभिमुखीं हिमालय उत्तरदिशि स्थितः तदभिमुखी तां यात्रां गतिम् उत्तरायणम् अधात् अकरोत् इत्यर्थः । अधात् इत्यत्र अकरोत् इति पाठान्तरम् । अंशुमाली सूर्य्यः ।

(२२) ललाटन्तपे ललाटतापिनि तपने सूर्य्ये तपति तापं वितरति सति । लिखितेति हरिचन्दनलिखितललाटिकापुण्ड्रकैः हरिचन्दनेन लिखितं चित्रितं ललाटिकापुण्ड्रकं ललाटभूषणं तिलकमेदः येषु तथाविधैः ।

(२३) अलकेति अलकाः चूर्णकुन्तला एव चीवराणि वस्त्रखण्डानि तैः संवीताः आवृताः तैः ।

(२४) स्वेदेति स्वेदोदविन्दवः घर्म्मजलविन्दव एव मुक्ताक्षवलयाः मुक्तारचितजपमालिकाः तान् वहन्तीति तथोक्तैः ललनानां कामिनीनां ललाटा एव इन्दवः चन्द्राः तैः दिनकरस्य सूर्य्यस्य आराधनम् उपासनं तस्य नियमा इव अराजन्त । चीवरपरिधानम् अक्षवलयधारणञ्च सूर्य्योपासनव्रताङ्गमिति तथोत्प्रेक्षितम् ।

अस्पश्याभिः कुमुदिनीभिः इव दिवसम् असुप्यत सुन्दरीभिः । (२६) निद्रालसा रत्नालोकम् अपि न असहन्त दृशः किमुत जरठम् आतपम् (२७) अग्निगिरसमयेन चक्रवाकमिथुनाभिनन्दिताः सरित इव तनिमानम् अनीयन्त सोडुपाः शर्व्वर्य्यः । (२८) अभिनवपटुपाटलामोदसुरभिपरिमलं न केवलं जलं जनस्य पवनस्य पवनम् अपि पातुम् अभूत् अभिलाषो दिवसकरसन्तापात् ।

क्रमेण च खरखरमयूखे (२९) खण्डिततड़िच्छैशवे

---

(२५) चन्दनेति चन्दनेन धूसराः धवलाः चन्दनाक्तदेहा इत्यर्थः अन्यत्र चन्दनवत् धूसराः धवलकान्तयः ताभिः । सूर्य्यं न पश्यन्तीति तथोक्ताभिः सूर्य्योत्तापासहिष्णुतया अतिनिभृतस्थानस्थिताभिरिति भावः अन्यत्र मुकुलिताभिः । असुप्यत सुप्तं दिवसमिति अत्यन्तसंयोगे द्वितीया । सुन्दरीभिः कामिनीभिः ।

(२६) निद्रेति । निद्रालसाः निद्रया आलस्यपरतन्त्राः मुकुलीभावमापन्ना इत्यर्थः दृशः चक्षूंषि रत्नानाम् अनुग्राणामिति भावः आलोकम् उद्योतं प्रभामित्यर्थः न असहन्त जरठं प्रगाढम् अत्युग्रमित्यर्थः आतपं सौरसन्तापं किमुत इत्यन्वयः ।

(२७) अग्निगिरसमयेन ग्रीष्मकालेन । चक्रवाकमिथुनाभिनन्दिताः चक्रवाकमिथुनैः अभिनन्दिताः समादृताः सरित इव नद्य इव तनिमानं कृशताम् । सोडुपाः उडुपः तारापतिः चन्द्र इत्यर्थः तेन सह वर्त्तमानाः अन्यत्रः उडुपैः प्लवैः भेलैरित्यर्थः सह वर्त्तमाना इत्यर्थः शर्व्वर्य्यः रजन्यः । ग्रीष्मे रात्रेर्मानम् अल्पताम् एति तेन च रात्रिविरहितानां चक्रवाकाणाम् आनन्द इति भावः ।

(२८) अभिनवेति अभिनवेन नूतनेन पटुना प्रसरता पाटलामोदेन पाटलापुष्पगन्धेन सुरभिः सौरभवान् परिमलो यस्य तादृशं जलम् । पवनस्य वायोः पवनमपि गन्धवहमपि तादृशसौरभं वहन्तं पवनमपि इत्यर्थः पातुमभिलाषोऽभूत् इत्यनुषङ्गः ।

(२९) खरखरमयूखे खरस्तीक्ष्णः खरमयूखः उष्णरश्मिः सूर्य्य इत्यर्थः यस्मिन् तथोक्ते निदाघकाले इति उत्तरस्थितेनानुषङ्गः । खण्डितेति खण्डितं निर्जितं तड़ितां विद्युतां शैशवं बाल्यं शिशुतानिबन्धनं चापल्यमिति भावः येन

शुष्यत्सरसि (३०) सीदत्स्रोतसि मन्दनिर्झरे (३१) झिल्ली-
काझाङ्कारिणि (३२) कातरकपोतकूजितानुबन्धबधिरित-
विश्वे वि-श्वसत्पतत्त्रिणि (३३) करीषङ्कषमरुति विरलवी-
रुधि (३४) रुधिरकुतूहलिकेशरिकिशोरकलिह्यमानकठोर-
धातकीस्तवके (३५) ताम्यत्स्तम्बेरमयूथवमथुतिम्यन्महा-
महीधरनितम्बे (३६) दूयमानद्विरददीनदानाश्यानश्यामि-
कालीनमूकमधुलिहि (३७) लोहितायमानमन्दार-

---

तथाभूते विद्युदालोकादपि अतितीक्ष्णालोकशालिनीति भावः। शुष्यदिति
शुष्यन्ति शोषं गच्छन्ति सरांसि यस्मिन् तथोक्ते ।

(३०) सीददिति सीदन्ति अवसादं गच्छन्ति स्रोतांसि यस्मिन् तादृशे।
मन्दनिर्झरे मन्दाः स्वल्पाः निर्झराः प्रस्रवणानि यत्र तथोक्ते ।

(३१) झिल्लीकेति झिल्लीकाः क्षुद्राः कीटविशेषाः तासां झाङ्कारो विद्यते ऽत्रे ति तथोक्ते। ते तथाविधेऽत्युग्रे समये निभृतस्थिता झिल्लीरवरूपं झाङ्कारं कुर्वन्तीति प्रसिद्धिः ।

(३२) कातरेति कातराणां ग्रीष्मार्त्तानामिति यावत् कपोतानां कूजितानुबन्धेन कूजनसातत्येन बधिरितं बधिरीकृतं विश्वं जगत् येन तथोक्ते । वि श्वसत्पतत्त्रिणि विशेषेण श्वसन्तः क्लान्ततयेति भावः पतत्त्रिणः पक्षिणः कपोतेभ्योऽन्ये इति भावः यस्मिन् तथोक्ते ।

(३३) करीषङ्कषेति करीषाणि गोमयानि कषन्ति शोषयन्तीति तादृशाः मरुतः वायवः यस्मिन् तथोक्ते । विरलवीरुधि विरलाः अल्पा वीरुधो लता यत्र तादृशे ।

(३४) रुधिरेति रुधिरेषु रक्तेषु कुतूहलिनः लोलुपा इति यावत् ये केशरिकिशोरकाः सिंहशिशवः तैः लिह्यमानः आस्वाद्यमानः रक्तधियेति भावः कठोरः परिणतः धातकीस्तवकः धातकीलतायाः पुष्पगुच्छः यस्मिन् तथोक्ते ।

(३५) ताम्यदिति ताम्यताम् आतपतापेन क्लिश्यतामित्यर्थः स्तम्बेरमयूथानां हस्तिसङ्घानां वमथुभिः उद्गारैः करशीकरैरिति यावत् तिम्यन्तः आर्द्रीभवन्तः महतां महीधराणां नितम्बाः कटकदेशाः यस्मिन् तथाभूते ।

सिन्दूरितसीम्नि (३८) सलिलस्यन्दसन्दोहसन्देहमुह्यन्महामहिष-विषाणकोटिविलिख्यमानस्फुटत्-स्फटिकदृषदि (३९) घर्मममंरितघर्मुति तप्तपांशुकुकूलकातरविकिरे (४०) विवरशरणश्वाविधि (४१) तटार्जुनकुररकूट-ज्वरविवर्त्तमानोत्तानशफरशारपङ्कशेषपल्वलाम्भसि (४२) दावजनितजगन्नीराजने (४३) रजनीराजयक्ष्मणि कठोरी-

---

(३६) दूयमानेति दूयमानानां ताम्यतां द्विरदानां गजानां दीनस्य चीणतां गतस्य दानस्य मदस्य आश्याना ईषच्छुष्का या श्यामिका श्यामवर्णरेखा तस्यां लीना संसक्ताः मूकाः आर्त्ततया निःशब्दाः मधुलिहः भ्रमराः यस्मिन् तथोक्ते।

(३७) लोहितायमानेति लोहितायमानैः पुष्पविकासात् रक्तायमानैः मन्दारैः तरुविशेषैः सिन्दूरिताः सीमानः ग्रामाणामिति शेषः यस्मिन् तथोक्ते।

(३८) सलिलेति सलिलानां जलानां स्यन्दाः स्रवाः तेषां सन्दोहः समूहः तस्य सन्देहेन भ्रमेणेति यावत् मुह्यद्भिः चित्तविकृतिं गच्छद्भिः महद्भिः महिषैः विषाणानां शृङ्गाणां कोटिभिः अग्रभागैः विलिख्यमानाः संघृष्यमाणाः स्फुरन्त्यः सौरातपेन उद्भासन्त्य इत्यर्थः स्फटिकदृषदः स्फटिकशिलाः यस्मिन् तथोक्ते।

(३९) घर्मेति घर्मेण उष्मणा मर्मरिताः मर्मरध्वनियुक्ता घर्मुती लताविशेषा यस्मिन् तादृशे। तप्तेति तप्ताः पांशवः रजांसि एव कुकूलाः तुषानलाः तैः कातराः विकिराः कुक्कुटादिपक्षिभेदा यस्मिन् तादृशे।

(४०) विवरेति विवराण्येव गर्त्ता एव शरणा आश्रया येषां तादृशाः श्वाविधः जन्तुभेदा यस्मिन् तथोक्ते।

(४१) तटेति तटेषु तीरेषु ये अर्जुना धवलाख्यवृक्षभेदाः तेषु ये कुरराः उत्क्रोशाख्यपक्षिभेदाः स्थिता इति भावः तेषां कूटः ध्वनिविशेषः तेन ज्वरः तादृशसमये अतीव श्रुतिकटुरिति भावः सन्तापश्च ग्रीष्मोष्मा च ताभ्यां विवर्त्तमाना विलुठन्तः उत्ताना ऊर्द्धमुखा इति भावः। शफराः क्षुद्रमत्स्यभेदाः तैः शाराः शबलाः पङ्काः कर्दमाः शेषा येषां तादृशानि पल्वलानां क्षुद्रसरसां अम्भांसि जलानि यस्मिन् तथोक्ते।

(४२) दावेति। दावेन वनाग्निना दवदावौ वनानले इत्यमरः जनितं सम्पादितं जगतां नीराजनम् आरतिरिति प्रसिद्धं यस्मिन् तथोक्ते।

भवति निदाघकाले प्रतिदिशम् आढौकमाना इव ऊषरेषु (४४) प्रपावाटकुटीपटलप्रकटलुण्ठकाः (४५) प्रपक्व-कपिकच्छू-गुच्छच्छटाच्छोटन-चापलैः अकाण्ड-कण्डूला (४६) इव कर्षन्तः शर्करिलाः कर्करस्थलीः स्थूलदृषच्चूर्णमुचो (४७) मुचुकुन्दकन्दलदलनदन्तुराः समन्ततः (४८) पतन्मुखरचीरीगणमुखशीकरशीक्यमानतनवः (४९) तरुणतरतरणितापतरले तरन्त इव तरङ्गिणि मृगतृष्णा-

---

(४३) रजनीति। रजन्याः रात्रेः राजयक्ष्मा क्षयरोगविशेषः तस्मिन् रात्रेः क्रमेण कार्श्यातिशयसम्पादनात् इति भावः। काठीरीभवति प्रवृद्धतां गच्छति। प्रतिदिशं दिशिदिशि। उन्मत्ता उद्दामानः मातरिश्वानः वाताः प्रावर्त्तन्त इति उत्तरेण सम्बन्धः। तानेव विशिनष्टि आढौकमाना इत्यादिभिः। आढौकमाना भ्रमन्तः वेगेन वहन्त इति यावत् ऊषरेषु सिकताकीर्णमरुदेशेषु।

(४४) प्रपेति। प्रपा पानीयशाला वाटः पन्थाः कुटी क्षुद्रगृहभेदः पटलं छदिः एतेषां प्रकटं प्रकाशं यथा तथा लुण्ठकाः अपहारकाः ध्वंसकारिण इति यावत्।

(४५) प्रपक्वेति। प्रपक्वाः प्रकर्षेण पक्वतां गताः कपिकच्छवः कण्डुजनक-कोद्भिद्विशेषः तेषां गुच्छच्छटाः स्तवकराशयः तेषां छोटने हरणे इति यावत् यानि चापलानि चापलकर्माणि तैः अकाण्डकण्डूला इव आकस्मिककण्डूरोगग्रस्ता इव।

(४६) शर्करिला: शर्कराः पाषाणकणिका विद्यन्ते यासु ताः कर्करस्थलीः इत्यर्थः कर्षन्तः घट्टन्तः कण्डूतिमज्जाघर्षणार्थम् इति भावः। स्थूलदृषच्चूर्णमुचः स्थूलानि दृषदां शिलानां चूर्णानि कणिका इत्यर्थः मुञ्चन्ति वर्षन्तीति तथोक्ताः।

(४७) मुचुकुन्देति। मुचुकुन्दानां पुष्पविशेषाणां कन्दलानाञ्च पुष्पभेदानां दलनेन वृन्तेभ्यश्च्यावनेन दन्तुराः सञ्जातदन्ता इव दृश्यमाना इत्यर्थः। समन्ततः चतुर्दिक्षु।

(४८) पतदिति। पतन्तः मुखराः शब्दं कुर्वन्तः ये चीरीगणाः पक्षिभेदाः तेषां मुखशीकरैः वदनाम्बुबिन्दुभिः शीक्यमानाः सिच्यमानाः तनवः अङ्गानि येषां तथोक्ताः।

कातरङ्गिणीनाम् अलीकवारिणि (५०) शुष्यच्छमीमर्मरमारवमार्गलङ्घनलाघवजवजङ्घालाः (५१) रैणवावर्त्तमण्डलीरेचकलासकरसरभसारब्धनर्त्तनारम्भारभटीनटाः (५२) दावदग्धस्थलीमसीमिलनमलिनाः (५३) शिक्षितक्षपणकवृत्तय इव, मयूरपिच्छचयान् उच्चिन्वन्तः सम्प्रयाणगुञ्जा इव (५४) शिञ्जानजरत्कारञ्जमञ्जरीवीजजालकैः

---

(४९) तरुणेति। तरुणतरः अतिप्रौढ़ः यः तरणेः सूर्य्यस्य तापः तेन तरलं चञ्चलमिव राजमानं तस्मिन् अतएव तरङ्गिणि सञ्जाततरङ्गे इव भासमाने मृगतृष्णिका मरीचिका एव तरङ्गिण्यः नद्यः तासाम् अलीकवारिणि अलीकसलिले तरन्त इव प्लवमाना इव।

(५०) शुष्यदिति। शुष्यन्ती शोषं गच्छन्ती शमी वृक्षभेदः तद्वत् मर्म्मरः मर्म्मरध्वनियुक्त इत्यर्थः मरीरयं मारवः मरुदेशीयः यः मार्गः पन्थाः तस्य लङ्घने अतिक्रमणे लाघवं यस्य तथाभूतो यो जवः वेगः तेन जङ्घालाः जङ्घावन्तः निरन्तरसञ्चारिण इत्यर्थः।

(५१) रैणवेति। रेणूनां धूलीनाम् आवर्त्तमण्डली मण्डलाकारेण घूर्णनपरम्परा तस्या रेचकम् आविष्कारकं लासकरसरभसेन नर्त्तकरागवेगेन आरब्धं यत् नर्त्तनं तस्य आरम्भे प्रवृत्तौ आरभटीनटा इव आरभटी वीररसप्रबन्धरचनाविशेषः तत्प्रधानो नर्त्तनविशेषो वा तत्र नटा इत्यर्थः तदुक्तम्। 'प्लुष्टावपातप्लुतगर्जितानि छेद्यानि मायाकृतमिन्द्रजालम्। चित्राणि यूथानि च यत्र नित्यं तां तादृशीम् आरभटीं वदन्तीति।'

(५२) दावेति। दावेन वनाग्निना दग्धा भस्मीकृता या स्थली अकृत्रिमा भूमिः सैव मसी तस्या मिलनेन सङ्गेन मलिनाः।

(५३) शिक्षितेति शिक्षिता अभ्यस्ता क्षपणकानां जैनसन्न्यासिनां वृत्तिर्व्यवहारो यैः तथाभूता इव। जैनानां गात्रमलक्षालननिषेधात् मलिनकायत्वमिति भावः उच्चिन्वन्तः धारयन्तः अतएव सम्प्रयाणगुञ्जा इव प्रयाणे यात्रायां गुञ्जन्तीति गुञ्जाः ढक्काविशेषाः तैः सह वर्त्तमाना इव ढक्कावादिनशिरसि मयूरपिच्छैरलङ्क्रियन्ते इति भावः।

सप्ररोहा इव (५५) आतपातुरवनमहिषनासानिकुञ्ज-स्थूलनिश्वासैः सापत्या इव (५६) उड्डीयमानजवन-तरहरिणपरिपाटीपेटकैः सभ्रुकुटय इव (५७) दह्य-मानखलधानवुसकूटकुटिलधूमकोटिभिः सावीचिवीचय इव महोष्ममुक्तिभिः लोमशा इव (५८) शीर्य्यमाण-शाल्मलिफलतूलतन्तुभिः दद्रुला इव (५९) शुष्कपत्रप्रकरा-क्रष्टिभिः शिराला इव (६०) तृणवेणीविकिरणैः उच्छ्रया-

---

(५४) शिञ्जानेति शिञ्जानाः अस्फुटं शब्दायमानाः जरतां प्राचीनानां करञ्जाणां तरुविशेषाणां या मञ्जर्य्यः तासां बीजजालकैः बीजनिचयैः सप्ररोहा इव साङ्कुरा इव।

(५५) आतपेति आतपेन सन्तापेन आतुराः आर्त्ता ये वनमहिषाः तेषां नासा निकुञ्जा इव दीर्घरोमावृततया लतादिपिहितोदरा वनभूमय इव निकुञ्ज-कुञ्जौ वा क्लीवे लतादिपिहितोदरे इत्यमरः। तेभ्यो निर्गताः स्थूलनिःश्वासाः तैः। सापत्या इव सपुत्रा इव ससन्ताना इवेत्यर्थः।

(५६) उड्डीयमानेति उड्डीयमानानां आतपतापासहिष्णुतया उत्पततां जवनतराणां अतिवेगिनां हरिणानां परिपाटीः पर्य्यायाःतेषां पेटकाः यूथानि संघाः तैः सभ्रूकुटय इव भ्रूभङ्गसहिता इव।

(५७) दह्यमानेति दह्यमानानां खलधानानां धान्यमर्दनस्थानस्थितानां धान्यानां वुसकूटाः तुषराशयः कुटिलाः कुटिलगामिन्यः धूमकोटय इव धूमराजय इव तैः सावीचिवीचय इव अवीचिर्नरकविशेषः तस्य वीचयस्तरङ्गाः तैः सह वर्त्त-माना इव। महोष्ममुक्तिभिः महान्त उष्माणः तेषां मुक्तिभिः त्यागैः वृष्टिभि-रित्यर्थः लोमशा इव रोमपूर्णा इव।

(५८) शीर्य्यमाणेति शीर्य्यमाणानां विदीर्य्यमाणानां शाल्मलिफलानां तूल-तन्तुभिः तूलसूत्रैः दद्रुला इव दद्रुरोगग्रस्ता इव।

(५९) शुष्केति शुष्काणां पत्राणां प्रकराः सङ्घाः तेषाम् आक्रष्टयः आकर्ष-णानि ताभिः सिराला इव सिरासमूहशालिन इव।

अव इव (६१) धूयमानयवशूकशकलशङ्कुभिः दंष्ट्राला इव (६२) चलितशललसूचीशतैः जिह्वाला इव वैश्वानरशिखाभिः उत्सर्पत्सर्पकञ्चुकचूड़ालाः (६३) ब्रह्मस्तम्भरसाभ्यवहरणाय कवलग्रहमिवोष्णैः कमलमधुभिः अभ्यस्यन्तः (६४) सकलसलिलोच्छोषघर्मघोषणापटहैः इव शुष्कवेणुवनास्फोटनपटुरवैः त्रिभुवनविभीषिकाम् उद्भावयन्तः (६५) च्युतचलत्त्वाषपत्त्रश्रेणीशारितत्वतयः (६६)

---

(६०) तृणेति तृणानां वेणी राजिः तस्या विकिरणैः विक्षेपैः उच्छ्रया अविरता अश्रवः नयनजलानि येषां तथाभूता इव।

(६१) धूयमानेति धूयमानानां सन्तापवातात् कम्पमानानां यवानां शूकाः शिखासूचयः तेषां शकलाः खण्डाः शङ्कवः कीला इव तः दंष्ट्राला इव दीर्घदन्ता इवेत्यर्थः।

(६२) चलितेति चलितानां चलताम् उड्डीयमानानामिति यावत् शललानां शल्यकीलीनां सूचीशतैः सूक्ष्माग्रभागैः जिह्वाला इव रसनावन्त इव। वैश्वानरशिखाभिः अग्निशिखाभिः उत्सर्पदिति उत्सर्पद्भिः उष्णतापात् प्रस्खलद्भिः सर्पाणां कञ्चुकैः निर्मोकैः चूड़ालाः शिखावन्तः। उत्सर्पत्सर्पकञ्चुकैः चूड़ाला इवेति पाठो युज्यते।

(६३) ब्रह्मेति ब्रह्मस्तम्भो ब्रह्माण्डं तस्य रसाभ्यवहरणाय रसशोषणाय कवलग्रहं ग्रासग्रहणम् अभ्यस्यन्त इव पुनः पुनः कुर्वन्त इवेत्यर्थः मधुपानात् शरीरस्य रसशोषणं भवतीति प्रसिद्धम्।

(६४) सकलेति सकलानां सलिलानां जलानाम् उच्छोषः अतिशयेन शोषकः यो घर्मः उष्मा तस्य घोषणा प्रचारः तस्याः पटहा वादित्रभेदा तैः इव शुष्काणां वेणुवनानां वंशारण्यानाम् आस्फोटनस्य सन्तापातिशयात् विदरणस्य पटुरवाः महानिनादाः तैः त्रिभुवनविभीषिकां त्रिलोकीभीतिम् उद्भावयन्तः जनयन्तः।

(६५) च्युतेति। च्युताः गात्रेभ्यः स्खलिताः अतएव चलाः उत्पतन्त्यः याः

त्विषिमन्मयूखलतालातप्लोषकल्माषवपुष इव (६७) स्फुटितगुञ्जाफलस्फुलिङ्गाङ्गाराङ्किताङ्गाः (६८) गिरिगुहागम्भीरभाङ्कारभीषणभ्रान्तयो (६९) भुवनभस्मीकरणाभिचारचरुपचनचतुरा रुधिराहुतिभिः इव पारिभद्रद्रुमस्तवकवृष्टिभिः तर्पयन्तः तारवान् वनविभावसून् (७०) अशिशिरसिकतातारकितरंहसः (७१) तप्तशैलविलीयमानशिलाजतुरसलवलिप्तदिशः दावदहनपच्यमानचटकाण्डखण्ड-खचिततरुकोटरकीटपटलपुटपाकगन्धकटवः प्रावर्त्तन्त उन्मत्ता मातरिश्वानः।

---

चापाणां पक्षिभेदानां पक्षश्रेणयः ताभिः शारिताः हिंसिताः आकीर्णा इति यावत् सृतयः मार्गा येः तथाभूताः।

(६६) त्विषिमदिति। त्विषिमान् सूर्यः तस्य मयूखलता किरणराजिः अलात इव ज्वलदङ्गार इव तेन प्लोषः दहनं तेन कल्माषं चित्रं वपुः शरीरं येषां तथोक्ता इव।

(६७) स्फुटितेति। स्फुटितानि विकसितानि यानि गुञ्जाफलानि तदाख्यरक्तवर्णफलविशेषाः तद्वत् स्फुलिङ्गा अग्निकणास्तद्रूपा इति यावत् ये अङ्गाराः तैः अङ्कितं संवलितम् अङ्गं येषां तथोक्ताः विपु स्फुलिङ्गोऽग्निकणः इत्यमरः।

(६८) गिरीति। गिरिगुहासु पर्वतगह्वरेषु गभीरेण घनेन भाङ्कारेण भीषणा भयावहा भ्रान्तिः घूर्णनं येषां तथाभूताः।

(६९) भुवनेति। भुवनस्य जगतो भस्मीकरणं दहनमेव अभिचारः अथर्ववेदविहितं निष्ठुरं कर्म तत्र चरुपचने हवनीयद्रव्यविशेषपाके चतुराः पटवः। रुधिराहुतिभिरिव रक्ताहुतिभिरिव पारिभद्रो नाम द्रुमः वृक्षः लोके माद्दार इति प्रसिद्धः तस्य स्तवकाः रक्तकुसुमगुच्छाः तेषां वृष्टयः पाताः तैः तर्पयन्तः प्रीणयन्तः तारवान् तरुसम्बन्धिनः वनविभावसून् दावाग्नीन्।

(७०) अशिशिरेति। अशिशिराभिः उष्णाभिः सिकताभिः बालुकाभिः तारकितं सञ्जाततारकमिव लक्ष्यमाणम् इत्यर्थः रंहो वेगो येषां तथोक्ताः।

(७२) सर्वतः च भूरिभस्त्रासहस्रसन्धुक्षणक्षुभिता इव जरदजगरगम्भीरगलगुहावाहिवायवः (७३) क्वचित् स्वच्छन्दतृणचारिणो हरिणाः क्वचित् (७४) तरुतलविवरवर्त्तिनो बभ्रवः क्वचित् जटावलम्बिनः कपिलाः क्वचित् (७५) शकुनकुलकुलायपातिनः श्येनाः क्वचित् (७६) विलीन-

---

(७१) तप्तेति। तप्तेषु शैलेषु पर्वतेषु विलीयमानानां गलतां शिलाजतूनां शैलेयाख्यगन्धद्रव्यभेदानां रसलवैः रसबिन्दुभिः लिप्ताः दिग्धा यैः तथोक्ताः। दावेति दावदहनैः दावानलैः पच्यमानानां दह्यमानानां चटकानां चटकपक्षिभेदानाम् अण्डखण्डैः डिम्भसकलैः खचितेषु आकीर्णेषु तरुकोटरेषु वृक्षगर्त्तेषु यानि कीटपटलानि पिपीलिकावृन्दानि तत्तदण्डभक्षणार्थम् आगतानीति भावः तेषां पुटपाकस्य अभ्यन्तरपाकस्य गन्धेन कटवः उद्वेजका इत्यर्थः। प्रावर्त्तन्त प्रावहन्। उन्मत्ता उच्छृङ्खलाः मातरिश्वानः वायवः।

(७२) सर्वत इति। दारुणा दावाग्नयः प्रत्यदृश्यन्त इति उत्तरेण अन्वयः तानेव दावाग्नीन् विशिनष्टि भूरीत्यादिभिः। जरतां जीर्णानाम् अजगराणां गम्भीरा गला एव गुहा ताभ्यः वाहिनः निःसरन्तः वायवः येषु तथोक्ताः। अतएव भूरीति भूरिभिः बहुभिः भस्त्राणाम् अग्निसन्धुक्षणयन्त्रभेदानां जाँतेति प्रसिद्धानां सहस्रैः सन्धुक्षणेन समुद्दीपनेन क्षुभिता इव समुत्तेजिता इव।

(७३) स्वच्छन्देति। स्वच्छन्दं यथा तथा तृणेषु शुष्केषु इति भावः चरन्ति प्रसरन्तीति तथोक्ताः अन्यत्र तृणानि चरन्ति भक्षयन्ति इति तथाभूताः हरिणाः शुभ्रवर्णाः अन्यत्र मृगाः।

(७४) तरुतलेति। तरुतलेषु यानि विवराणि गर्त्तानि तेषु वर्त्तन्ते इति तथोक्ताः बभ्रवः पिङ्गलाः अन्यत्र नकुलाः। जटावलम्बिनः जटा अवलम्बन्ते आश्रयन्तीति जटावलम्बिनः अन्यत्र जटाधारिणः कपिलाः पिङ्गलाः अन्यत्र कपिलाख्यमुनिव्रतधारिणः तापसाः।

(७५) शकुनेति। शकुनकुलानां पक्षिविशेषाणां कुलायान् नीड़ानि कुलायो नीड़मस्त्रियाम् इत्यमरः पातयन्ति दहन्तीति यावत् तथोक्ताः श्येनाः शुक्लवर्णाः अन्यत्र पक्षिवृन्दकुलाया स्थितघातकाः पक्षिभेदाः।

लाक्षारसलोहितच्छवयोऽधराः क्वचित् (७७) आसादित-शकुनपक्षकृतपटुगतयो विशिखाः क्वचित् (७८) दग्ध-निःशेषजन्महेतवो निर्वाणाः क्वचित् (७९) कुसुमवासि-ताम्बरसुरभयो रागिणः क्वचित् सधूमोद्गारा मन्दरुचयः क्वचित् (८०) सकलजगद्ग्रासघस्मराः सभस्मभूरिकाः क्वचित्

---

(७६) विलीनेति। विलीनो द्रवीभूतः यो लाक्षारसः अलक्तकद्रवः तद्वत् अन्यत्र तेन लोहिता रक्ताः छवयः कान्तयः येषां तथाभूताः अधराः धर्मुमशक्याः अन्यत्र धराः पर्वताः। अहार्य्यधरपर्वता इत्यमरः।

(७७) आसादितेति आसादितेषु प्राप्तेषु शकुनानां पक्षिणां पक्षेषु गरुत्सु कृता लब्धा पटुगतिः सम्यक्प्रसरः यैः अन्यत्र आसादिता प्राप्ता शकुनपक्षेण पक्षि-गरुता कृता जनिता पटुगतिः सत्वरगमनं यैः तथोक्ताः विशिखा विविधाः शिखाः ज्वाला येषां तथोक्ताः अन्यत्र शराः।

(७८) दग्धेति दग्धा भस्मीकृता निःशेषा समस्ता जन्महेतवः स्वोत्पत्तिकार-णानि तृणकाष्ठादीनीति भावः यैः अन्यत्र दग्धाः क्षयिता ज्ञानाग्निनेति भावः निःशेषाः समस्ता जन्महेतवः संसारागमनकारणानि पुण्यपापानि यैः तथोक्ताः अतएव निर्वाणाः शान्ताः दाह्याभावादिति भावः अन्यत्र मुक्तिं गता इत्यर्थः।

(७९) कुसुमेति कुसुमैः धूमैः अन्यत्र पुष्पैः वासितं छादितम् अन्यत्र सुरभी-कृतं यत् अम्बरं नभः अन्यत्र वस्त्रं तेन सुरभयः शोभनदर्शनाः अन्यत्र सौरभ-शालिनः रागिणो रक्तवर्णाः अनुरागवन्तश्च। धूमोद्गारेऽपि धूमनिर्गमेऽपि अमन्दाः अतिप्रवृद्धा रुचिर्दीप्तिर्येषां तथोक्ताः अन्यत्र धूमेन अजीर्णरोगविशेषेण उद्गारो वमनं येषां तथाविधा अतएव मन्दा रुचिः शरीरप्रभा भोजनाभिलाषो वा येषां तथोक्ताः।

(८०) सकलेति सकलानां जगतां ग्रासः कवलनं तस्य घस्मराः भक्षणशीलाः दहनशीला इति यावत् सभस्मभूरिकाः भस्मनां भूरिभिः प्रभूतैः सह वर्त्तमानाः अन्यत्र भस्मभूरिको वह्निभोजनव्याधिविशेषः भस्मकीट इति प्रसिद्धः तेन सह वर्त्त-मानाः भस्मकीटाख्यरोगिण इत्यर्थः।

(८१) वेणुशिखरलग्नमूर्त्तयोऽत्यन्तवृद्धाः क्वचित् (८२) अचलोपयुक्तशिलाजतवः क्षयिणः क्वचित् (८३) सर्वान्नरसभुजः पीवानः क्वचित् (८४) दग्धगुग्गुलवो रौद्राः क्वचित् (८५) ज्वलितनेत्रदहनदग्धसकुसुमशरमदनाः (८६) कृतस्थाणुस्थितयः चटुलशिखा नर्त्तनारम्भारभटीनटाः (८७) शुष्ककासारस्रुतिभिः स्फुटत्नीरसनीवारवीजलाजवर्षिभिः ज्वालाञ्जलिभिः अर्च्चयन्त इव घर्मघृणिम् अघृणा इव (८८)

---

(८१) वेणिवति वेणूनां वंशानां शिखरेषु अग्रेषु लग्नाः संसक्ताः अन्यत्र वेणुदण्डाग्रेषु लग्नाः कृतभराः मूर्त्तयः अङ्गानि येषां तथोक्ताः अत्यन्तवृद्धाः अतिप्रवलाः अतिस्थविराश्च ।

(८२) अचलेति अचलेषु पर्वतेषु उपयुक्तानि भक्षितानि दग्धानीति यावत् शिलाजतूनि शैलेयानि यैः अन्यत्र अचलम् अविच्छिन्नं यथा तथा उपयुक्तं सेवितम् औषधरूपेणेति भावः शिलाजतु यैः तथोक्ताः क्षयिणः निर्वाणं गताः क्षयरोगिणश्च उक्तञ्च निदानाचार्य्यैः । शिलाधातुप्रयोगाद्वा प्रसादाद्वाथ शङ्करात् अजामूत्रप्रयोगाद्वा क्षयः क्षीयेत नान्यथा इति ।

(८३) सर्वेति सर्वाणि अन्नानि खाद्यवस्तूनि रसान् सलिलादींश्च भुञ्जते इति तथोक्ताः अतएव पीवानः स्थूलकलेवराः ।

(८४) दग्धेति दग्धाः गुग्गुलवः गन्धद्रव्यभेदाः यैः तथोक्ताः रौद्राः भीषणाः रुद्रसेवकाश्च तेहि रुद्रपूजायां गुग्गुलुदहनेन धूपं ददति ।

(८५) ज्वलितेति ज्वलितानां नेत्राणां मूलानां दहनेन दग्धाः सकुसुमाः सपुष्पाः शराः तृणभेदाः मदनाः तदाख्यवृक्षभेदा यैः तथोक्ताः अन्यत्र ज्वलितेन नेत्रदहनेन तृतीयनेत्राग्निना दग्धः भस्मीकृतः सकुसुमशरः पुष्पशरसहितः मदनः कामः यैः तथोक्ताः ।

(८६) कृतेति कृता; स्थाणुषु छिन्नशाखेषु वृक्षेषु स्थितिः यैः ते । अन्यत्र कृताः स्थाणोः हरस्य स्थितयः व्यवहाराः यैः ते । चटुलशिखाः चटुलाश्चञ्चलाः शिखा ज्वाला येषां तथोक्ताः अन्यत्र चञ्चलचूड़ा इत्यर्थः ।

(८७ शुष्केति शुष्का कासारेषु नड्वलेषु स्रुतिः प्रसरो यासां ताभिः

हठहूयमानकठोरस्थलकमठवसाविस्रगन्धगृध्नवः स्वमपि धूमम् (८९) अम्भोदसमुद्भूतिभियेव भक्षयन्तः सलिलाहुतय इव (९०) स्फुटद्बहलबालकीटपटलाः कक्षेषु श्वित्रिण इव (९१) प्लोषविचटद्वल्कलधवलशम्बूकशुक्तयः शुष्केषु सरःसु स्वेदिन इव (९२) विलीयमानमधुपटलगोलगलितमधूच्छिष्टवृष्टयः काननेषु खलतय इव (९३) पर्यन्तशीर्य्य-

---

स्फुटदिति स्फुटन्ति अग्न्युत्तापात् लाजतां प्राप्नानीति भावः नीरसानि यानि नीवारबीजानि धान्यविशेषाः तेषां लाजान् वर्षन्तीति तथोक्ताभिः। घर्मघृणिम् उष्णरश्मिं सूर्य्यमित्यर्थः। अघृणा इव घृणा जुगुप्सा तद्रहिता इव।

(८८) हठेति हठात् सहसा हूयमानानि दह्यमानानि कठोराणां स्थलवर्त्तिनां कच्छपानां वसामेदांसि तेषां यो विस्रगन्धः आमगन्धः विस्रं स्यादामगन्धि यदित्यमरः। तस्य गृध्नवः लोलुपाः।

(८९) अम्भोदेति अम्भोदानां मेघानां स्वविलासिनामिति भावः समुद्भूतिः समुत्पत्तिः तस्याः भीः तयेव धूमं भक्षयन्तः संहरन्तः सम्यग्ज्वलनेनेति भावः उक्तञ्च मेघदूताख्ये काव्ये महाकविना कालिदासेन। धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ इति। सलिलाहुतय इव जलाहुतय इव ता हि अग्निं निर्वापयन्तीति भावः।

(९०) स्फुटदिति स्फुटन्ति विशीर्य्यन्ति अन्यत्र निर्गच्छन्ति बहलानि भूरीणि बालानि क्षुद्राणि कीटपटलानि क्षुद्रप्राणिवृन्दानि अन्यत्र क्रिमिवृन्दानि यैः तथोक्ताः। कक्षेषु नूतनतृणेषु अन्यत्र अङ्गविशेषेषु। श्वित्रिण इव धवलाख्यरोगग्रस्ता इव।

(९१) प्लोषेति प्लोषेण दहनेन विचटन्ति चटत्चटदिति शब्दं कुर्वन्ति यानि वल्कलानि आवरणानि तैः धवलाः शम्बूकाः शङ्खाः शुक्तयः मुक्तास्फोटाख्या जलजन्तुभेदाः येषां तथोक्ताः। स्वेदिन इव घर्माक्ता इव।

(९२) विलीयमानेति विलीयमानेभ्यः विलयं गच्छद्भ्यः मधुपटलगोलेभ्यः मधुचक्रेभ्यः गलिता निःसृता मधूच्छिष्टानां सिक्थकानां वृष्टिः यैः तथोक्ताः। खलतय इव खल्वाटा इव।

माणशिखासंहतयो महोषरेषु ( ९४ ) गृहीतशिलाकवला इव ज्वलितसूर्य्यमणिशकलेषु शिलोच्चयेषु प्रत्यदृश्यन्त दारुणा दावाग्नयः ।

तथाभूते च तस्मिन् अत्युग्रे ग्रीष्मसमये कदाचित् अस्य स्वगृहावस्थितस्य भुक्तवतोऽपराह्णसमये भ्राता पारशवः चन्द्रसेननामा प्रविश्य अकथयत् एष खलु ( ९५ ) देवदेवस्य चतुःसमुद्राधिपतेः ( ९६ ) सकलराजचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः ( ९७ ) सर्वचक्रवर्त्तिनां धौरेयस्य ( ९८ ) महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्राता कृष्णनाम्ना भवताम् अन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारम् अध्यास्ते इति । सोऽब्रवीत् आयुष्मन् ! अविलम्बितं प्रवेशय एनम् इति ।

---

( ९३ ) पर्य्यन्तेति पर्य्यन्तेषु प्रान्तदेशेषु शिरसी निम्नभागेषु च शीर्य्यमाणाः प्रसरन्तः शिखानां ज्वालानाम् अन्यत्र चूड़ानां संहतिः समूहः येषां तथाभूताः । महोषरेषु महत्सु ऊषरेषु मरुषु एतेषु दाह्यवस्तूनाम् अभावात् प्रान्तदेशेषु अग्निशिखाप्रादुर्भाव इति भावः ।

( ९४ ) गृहीतेति गृहीतं शिला एव कवलं ग्रासो यैः तथाभूताः । ज्वलितसूर्य्यमणिशकलेषु दीप्तसूर्य्यकान्तोपलखण्डेषु ।

( ९५ ) देवदेवस्य देवानां राज्ञां देवः राजा सम्राड़ित्यर्थः तस्य ।

( ९६ ) सकलेति सकलानां राजचक्राणां नृपमण्डलानां चूड़ामणिश्रेणीषु शिरोरत्नराजिषु शाणेन घर्षणेन कोणस्य यत्कषणं तेन निर्मलीकृताः विशदीकृताः चरणयोर्नखा एव मणयो रत्नानि यस्य तथाभूतस्य राजचक्रवन्द्यस्येति भावः ।

( ९७ ) सर्वेति सर्वेषां चक्रवर्त्तिनां सार्वभौमानां धौरेयस्य अग्रगण्यस्य ।

( ९८ ) महेति महतां राजाधिराजानां परमेश्वरः सर्वनियन्तेत्यर्थः सचासौ श्रीहर्षदेवश्चेति तथोक्तस्य । अन्तिकं समीपम् । प्रज्ञाततमः अतिप्रतीतः ।

अथ तेन आनीयमानम् (९९) अतिदूरगमनगुरुजड़-जङ्घं (१००) कार्दमिकचेलचीरिकानियमितोच्चण्ड-चण्डातकं (१०१) पृष्ठप्रेङ्खत्पटच्चरकर्पटघटितगलित-ग्रन्थिम् (१०२) अतिनिविड़सूत्रबन्धनिम्नितान्तरालकृत-व्यवच्छेदया लेखमालिकया (१०३) परिकलितमूर्द्धानं प्रविशन्तं लेखहारकम् अद्राक्षीत् अप्राक्षीत् च दूरादेव (१०४) भद्र! भद्रम् अशेषभुवननिष्कारणबन्धोः तत्र-भवतः कृष्णस्य इति। स भद्रम् इत्युक्त्वा प्रणम्य अतिदूरे समुपाविशत् विश्रान्तः च अब्रवीत् एष खलु स्वामिनो माननीयस्य लेखः प्रहित इति विमुच्य च अर्पयत्। अथ

---

दीर्घाध्वगः दीर्घम् अध्वानं गच्छतीति तथोक्तः बहुदूरादागत इति भावः। प्रहितः प्रेषितः।

(९९) अतिदूरेति अतिदूरगमनेन गुरू भारवत्यौ अतएव जड़े गमनाक्षमे जङ्घे यस्य तथाभूतम्।

(१००) कार्दमिकेति कर्दमेन लिप्तं कार्दमिकं सकर्दमाध्वगमनादिति भावः यत् चेलं वस्त्रं तस्य चीरिकाखण्डं तया नियमितं संयमितम् उच्चण्डं बृहत् चण्डातकम् अर्द्धोरुपर्य्यन्तव्यापकं वसनं येन तथोक्तम्।

(१०१) पृष्ठेति पृष्ठे पृष्ठदेशे प्रेङ्खत् चलत् यत् पटच्चरकर्पटं जीर्णवस्त्रं तेन घटितः रचितः अथच गलितः शिथिलितः ग्रन्थिः सन्धिबन्धः यस्य तथोक्तम्।

(१०२) अतिनिविड़ेति अतिनिविड़ः अतिघनः यः सूत्रबन्धः तेन निम्नितः नमितः अन्तराले मध्ये कृतः व्यवच्छेदः विभागो यस्याः तथाभूतया लेखमालिकया लिपिसञ्चयेन।

(१०३) परिकलितेति परिकलितः वेष्टितः मूर्द्धा मस्तकं यस्य तथोक्तं शिरोधृतलिपिमित्यर्थः। लेखहारकं पत्रवाहकम्। अप्राक्षीत् अपृच्छत्।

(१०४) भद्रेति सम्बोधनं हे भद्र! साधो! भद्रं कुशलम्। अशेषेति अशेषाणां समस्तानां भुवनानां जगतां निष्कारणोऽहेतुको बन्धुः तस्य। तत्रभवतः

बाण: सादरं गृहीत्वा स्वयमेव अवाचयत् मेखलकात् सन्दिष्टम् अवधार्य्य (१०५) फलप्रतिबन्धी धीमद्भिः अपहरणीय: कालातिपात इति (१०६) एतावत् अत्रार्थजातम् इतरत् वार्त्तासंवादनमात्रकम्। अवधृतलेखार्थश्च समुत्सारितपरिजन: सन्देशं पृष्टवान्। मेखलक: तु अवादीत् एवम् आह मेधाविनं स्वामी जानाति एव मान्य: यथा (१०७) एकगोत्रता वा समानजातिता वा समं संवर्द्धनं वा एकदेशनिवासो वा दर्शनाभ्यासो वा परस्परानुरागश्रवणं वा (१०८) परोक्षोपकारकरणं वा समानशीलता वा स्नेहस्य हेतव: त्वयि तु विना कारणेन अदृष्टेऽपि प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किम् अपि स्निह्यति मे हृदयम् दूरस्थेऽपि इन्दोरिव कुमुदाकरे। (१०९) भवन्तम्

---

पूज्यस्य। स्वामिन: अस्मत्प्रभो: माननीयस्य सम्मानार्हस्य भवत: सकाशे इति शेष:। अर्पयत् दत्तवान् लेखमितिशेष: मेखलकात् तदाख्यात् प्रागुक्तात् पत्रवाहकात्। सन्दिष्टं वाचिकम्।

(१०५) फलेति फलं कार्य्यं प्रतिबध्नाति रुणद्धीति तथोक्त: कालातिपात: कालविलम्ब: अपहरणीय: त्यक्तव्य: अकरणीय इति यावत्।

(१०६) एतावत् एतत्पर्य्यन्तम्। अत्र लेखमालिकायाम्। अर्थजातं प्रतिपाद्यवस्तु। इतरत् अन्यत् वार्त्तासंवादनमात्रकं वृत्तान्तज्ञापनमात्रम्। अवधृतलेखार्थ: विदितलिपिवृत्तान्त:। मेधाविनं प्रकृष्टधीशक्तिसम्पन्नं स्वामी अस्मत्प्रभु:। मान्यो भवानिति शेष:।

(१०७) एकगोत्रता एककुलोत्पत्ति:। समानजातिता तुल्यजातित्वम्। समं सह संवर्द्धनम् एकदेशनिवास: एकस्थानस्थिति:। दर्शनाभ्यास: पुन: पुन: साक्षात्करणम्। परस्परानुरागश्रवणम् अन्योन्यसद्भावाकर्णनम्।

(१०८) परोक्षोपकारकरणं साक्षात्काराभावेऽपि उपकारकरणम्। समानशी-

अन्तरेण अन्यथा चक्रवर्त्ती दुर्जनैः ग्राहित आसीत् (११०) न च तत् तथा (१११) न सन्त्येव ते येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः। (११२) शिशु-चापलापराचीनचित्तवृत्तितया च भवतः केनचित् (११३) असहिष्णुना यत् किञ्चित् असदृशम् उदीरितम्। इतरो लोकः तथैव तत् गृह्णाति वक्ति च। (११४) सलिलानि इव गतानुगतिकानि लोलानि खलु भवन्ति अविवेकिनां

---

तता समस्तभावत्वम्। स्नेहस्य प्रणयबन्धनस्य। प्रत्यासन्ने-निकटवर्त्तिनि। बन्धाविव सुहृदीव। बद्धपक्षपातं बद्धस्नेहम्। कुमुदाकरे कैरवनिचये।

(१०९) भवन्तमिति भवन्तं त्वाम् अन्तरेण उपलक्ष्यीकृत्येत्यर्थः दुर्जनैः दुष्टैः लोकैः चक्रवर्त्ती सम्राट् अन्यथा अन्येन प्रकारेण ग्राहितः अवबोधितः आसी-दित्यन्वयः राजाधिराजसन्निधौ भवतो दोषोत्कीर्त्तनात् राज्ञः त्वयि मनोभङ्गः कारितः इति भावः।

(११०) न चेति। तत् राज्ञस्त्वयि मनसोऽन्यथात्वमिति भावः तथा तादृशं न च नैवेत्यर्थः। त्वयि राज्ञो मनोविकृतिः न जातेति भावः।

(१११) न सन्त्येव ते। ते मानवाः न सन्त्येव नैव विद्यन्ते इत्यर्थः। सतामपि सतामित्यादि। सतां साधूनां सदाचारवतामित्यर्थः सतां विद्यमानानामपि मित्रो-दासीनशत्रवः मित्राणि सुहृदः उदासीनः मध्यस्थाः शत्रवः विद्वेषिणः न विद्यन्ते न तिष्ठन्ति सर्वेषामेव मानवानां मित्रोदासीनशत्रवो विद्यन्ते इत्यर्थः।

(११२) शिशुचापलेति। शिशोश्चापलं शैशवचापल्यं बाल्यकालीनदुर्वृत्ततेति यावत् तत्र अपराचीना अपराङ्मुखी चित्तवृत्तिर्यस्य तत्ता तया तात्कालिकचित्त-वृत्तेः ईषदुन्मार्गप्रवृत्ततया इति भावः।

(११३) असहिष्णुना सोढुमशक्नुवता विद्वेषिणा वा असदृशम् अयुक्तं विरु-द्धम् उदीरितम् उक्तम्। इतरो लोकः साधारणो लोको नीचो वा तत् असदृशं वाक्यं त्वयि प्रयुक्तमिति भावः तथा एव सत्यमेव गृह्णाति अवबुध्यते वक्ति च कथयति च।

(११४) सलिलानि इवेति। अविवेकिनां विवेकशून्यानां जनानां मनांसि

मनांसि। (११५) बहुसुखश्रवणनिश्चलीकृतनिश्चयः किं करोतु पृथिवीपतिः। तत्त्वान्वेषिभिश्च अस्माभिः दूरस्थितोऽपि (११६) प्रत्यक्षीकृतोऽसि। विज्ञप्तः चक्रवर्त्ती त्वदर्थम् यथा प्रायेण प्रथमे वयसि सर्वस्य एव चापलैः शैशवम् अपराधि इति। तथेति च (११७) प्रतिपन्नं स्वामिना। अतो भवता राजकुलम् अकृतकालक्षेपम् आगन्तव्यम्। अवकेशीव अदृष्टपरमेश्वरो (११८) बन्धुमध्यम् अधिवसन् नासि मे बहुमतः न च (११९) सेवावैषम्यविषादिना वा परमेश्वरोपसर्पणभीरुणा भवता भवितव्यम्। यतो यद्यपि

---

सलिलानि इव जलानि इव गता अनुगतिः पश्चाद्गमनं येषां तानि गतानुगतिकानि अतएव लोलानि चपलानि इतरजनानाम् अयमेव स्वभावो यत् तेषां केनचित् यथा प्रवृत्तम् अन्योऽपि तथैव प्रवर्त्तते न अत्र कोऽपि विचारः क्रियते इति भावः।

(११५) बहुसुखेति। बहूनां सुखानां श्रवणेन निश्चलीकृतः निश्चयः अवधारणं यस्य तथाभूतः। दुर्जनाः सततं राजनि बहून् सन्तोषकरान् विषयान् कीर्त्तयन्ति तेन असौ समाकृष्टचेताः तान्येव तथ्यानि तेषां वचनानि अवधारयति न अत्र तत्त्वमनुसन्दधातीति भावः।

(११६) प्रत्यक्षीकृतः साक्षात्कृतः परिचित इति भावः। प्रथमे वयसि अवस्थायाम्। चापलैः चपलकर्म्मभिः शैशवं बाल्यम् अपराध्यतीति अपराधि दोषवद्भवति इति यावत्।

(११७) प्रतिपन्नं विदितं बुद्धमित्यर्थः स्वामिना प्रभुणा राज्ञेत्यर्थः अकृतकालक्षेपं कालविलम्बम् अकृत्वेत्यर्थः। अवकेशीव निष्फलतरुरिव अदृष्टपरमेश्वरः न दृष्टः परमेश्वरः राजाधिराजः रविश्च येन तथाभूतः।

(११८) बन्धुमध्यं बन्धूनां ज्ञातीनां मध्यम् अधिवसन् अधितिष्ठन् मे मम बहुमतः बह्वादृतः न असि न भवसि यथा रविकिरणालाभे तरुः निष्फलो भवति तथा राजानुग्रहं विना भवादृशस्य निष्फला स्थितिरिति भावः।

(११९) सेवेति। सेवायां परिचर्य्यायां राज्ञ इति भावः यत् वैषम्यं क्लेशातिशय इति भावः तेन विषीदति इति तेन। परमेश्वरोपसर्पणभीरुणा पर-

(१२०) स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं मनोभव इवेश्वरदुर्विदग्धः ॥

तथापि (१२१) अन्ये ते भूपतयः अन्य एव अयं न्यक्कृत-नृग-नल-निषध-नहुषा-म्बरीष-दशरथ-दिलीप-नाभाग-भरत-भगीरथ-ययातिः अमृतमयः स्वामी । न अस्य (१२२) अह-

---

मीश्वरस्य चक्रवर्त्तिनः उपसर्पणम् आनुगत्यं तस्माद् भीरुः तेन कदाचित् कथमपि अपराधे दण्डभयं कुर्वता इत्यर्थः ।

(१२०) स्वेच्छेति । ईश्वरदुर्विदग्धः ईश्वरः प्रभुः सर्वनियन्ता इत्यर्थः स च असौ दुर्विदग्धः दुर्विनीतश्च इति तथोक्तः विशेषणसमासः । दुर्विनीत प्रभुरित्यर्थः अन्यत्र ईश्वरेण हरेण दुरवस्थया दुष्टत्वेन वा विशेषेण दग्धः भस्मीकृत इत्यर्थः । मनोभव इव काम इव स्वेच्छया निजाभिलाषेण उपजाता उपस्थिता विषया भोग्यवस्तूनि अर्था इति यावत् यस्य तथाभूतः यथेच्छम् अर्थादानप्रदानसमर्थोऽपि इति भावः अन्यत्र स्वेच्छया स्वसङ्कल्पेन उपजातः उत्पन्नः विषयः व्यापारः यस्य तथाभूतः तथाचोक्तम् । काम ! जानामि ते मूलं [सङ्कल्पात् किल जायसे इति । देहीति प्रयच्छ इति वक्तुं न याति न ददातीत्यर्थः धातूनामनेकार्थत्वात् अत्र याधातुर्दानार्थः । याचके किञ्चित् देहीत्युक्ते विरज्यते इति भावः । अन्यत्र देहीति देहवान् इति वक्तुं वचनम् अत्र तुमर्थो भावमात्रपरः । न याति न गच्छति न प्राप्नोति इत्यर्थः न युज्यते अनङ्गत्वात् इति भावः । मार्गणशतैः याच्ञाशतैः पुनः पुनः याच्ञयाभिरित्यर्थः अन्यत्र शरशतैः दुःखं ददाति अनुजीविनामिति भावः अन्यत्र कामिनामिति भावः । अकाण्डे सहसा मोहात् अज्ञानात् यथायथं दोषा-दोषयोः अनवबोधात् अविचारादिति भावः जीवनमपि प्राणानपि अनुजीविनां प्रजानां चेति शेषः कष्टं यथा तथा समुत्क्षिपति समुत्कर्षति दण्डयति इत्यर्थः मोहात् स्वस्य अतिप्रसङ्गेन जनितात् वैचित्त्यात् कामिनामिति भावः जीवनमपि समुत्क्षिपति हरतीत्यर्थः ।

(१२१) अन्ये ते भूपतय इति ते तादृशा इत्यर्थः दुर्विदग्धा इति भावः

ङ्कारकालकूटविषदग्धदुष्टा दृष्टयः न (१२३) दर्पगदगुरुगर-गलग्रहगद्गदा गिरः न ( १२४ ) अतिस्मयोग्रापस्मार-विस्मृतस्थैर्य्याणि स्थानकानि न ( १२५ ) उद्दामदर्पदाह-ज्वरवेगविक्लवा विकाराः न (१२६) अभिमानमहासन्निपा-तनिर्मिताङ्गभङ्गानि गतानि न ( १२७ ) मदार्दित-वक्रीकृतौष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि तथाच

---

भूपतयः राजानः अन्ये अपरे। अयं चक्रवर्त्ती इत्यर्थः न्यकृतेति नृगनलादीन् अति-धार्म्मिकान् भूपतीन् निजधर्म्मशीलतया न्यक्करोति इत्यर्थः। अमृतमयः अमृतपूर्णः देवतुल्य इति यावत्। अस्य चक्रवर्त्तिनः।

(१२२) अहङ्कारेति। अहङ्कार एव कालकूटं विषं तेन दग्धा अतएव दुष्टाः। दृष्टयः दर्शनानि।

(१२३) गर्वेति। दर्प एव गदो रोगः स एव गुरुर्महान् गरो विषं तेन गलस्य कण्ठस्य ग्रहः ग्रहणम् अवरोधनमित्यर्थः तेन गद्गदाः अस्पष्टाक्षरा इत्यर्थः गिरः वाचः।

(१२४) अतिस्मयेति। अतिस्मयः अतिगर्व एव अपस्मारः वातव्याधिविशेषः तेन विस्मृतं स्थैर्य्यं निश्चयः येषां तथाभूतानि स्थानकानि स्थितयः।

(१२५) उद्दामेति। उद्दामेन उत्कटेन दर्पेण यो दाहज्वरः तस्य वेगेन रयेण विक्लवाः व्याहताः विकाराः चित्तविकृतयः मनसो भावान्तराणि इत्यर्थः।

(१२६) अभिमानेति। अभिमानः अहमेव महान् इत्याकारज्ञानमेव महान् सन्निपातः त्रिदोषजनितो व्याधिभेदः तेन निर्म्मितः जनितः अङ्गानां भङ्गः विकृतिविशेषः येषु तथाभूतानि। गतानि गमनानि।

(१२७) मदेति। मदः सौभाग्ययौवनाद्यवलेपजो विकारविशेषः तथा-चोक्तं दर्पणे। मदो विकारः सौभाग्ययौवनाद्यवलेपज इति। तेन अर्दितः पीड़ितः आक्रान्त इत्यर्थः अतएव वक्रीकृतः यो ओष्ठः तस्मात् निष्ठ्यूतानि निर्गलितानि निष्ठुराणि दारुणानि अक्षराणि वर्णाः कवर्गादयो येषु तानि जल्पितानि वच-नानि। तथाच तमेवार्थं जानीहि इत्यर्थः।

(१२८) अस्य विमलेषु साधुषु रत्नबुद्धिः न शिलाशकलेषु (१२९) मुक्ताधवलेषु गुणेषु प्रसाधनधीः न आभरणभारेषु (१३०) दानवत्सु कर्म्मसु साधनश्रद्धा न करिकटेषु सर्वाश्रेसरे (?) यशसि महाप्रीतिः न जीवितजरत्तृणे (१३१) गृहीत-करासु आशासु प्रसाधनाभियोगः न (१३२) निजकलत्र-चर्म्मपुत्त्रिकासु गुणवति धनुषि सहायबुद्धिः न पिण्डोपजी-विनि सेवकजने। अपि च अस्य (१३३) मित्रोपकरणम् आत्मा भृत्योपकरणं प्रभुत्वम् पण्डितोपकरणं वैदग्ध्यम् बान्ध-वोपकरणं लक्ष्मीः (१३४) कृपणोपकरणम् ऐश्वर्य्यं द्विजोप-

---

(१२८) अस्य चक्रवर्त्तिनः। विमलेषु अनघेषु साधुषु सज्जनेषु रत्नबुद्धिः
रत्नानि एते इति बुद्धिः ज्ञानमित्यर्थः शिलाशकलेषु प्रस्तरखण्डेषु हीरकादिषु न रत्न-
बुद्धिरिति शेषः अत्र परिसङ्ख्यालङ्कारः तदुक्तं दर्पणे। प्रश्नादप्रश्नतो वापि कथि-
ताद् वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् परिसंख्येति। एवमुत्तरत्र।

(१२९) मुक्ताधवलेषु मौक्तिकवत् विशदेषु गुणेषु विद्याविनयादिषु प्रसा-
धनश्रीः अलङ्कारशोभा। आभरणभारेषु भारभूतेषु आभरणेषु अलङ्कारेषु कटक-
कुण्डलादिषु न।

(१३०) दानवत्सु दानयुक्तेषु। साधनश्रद्धा निष्पादनानुरागः। करिकटेषु
हस्तिगण्डेषु दानवत्सु मदजलवर्षिषु इत्यर्थः साधनश्रद्धा सम्पादनानुरागः न। मद-
स्रुचां हस्तिनां संग्रहानुरागी न इत्यर्थः। जीवितजरत्तृणे जीवनरूपे जीर्णे चण-
भङ्गुर इति भावः तृणे महाप्रीतिः महाननुरागो न इत्यर्थः।

(१३१) गृहीतेति। गृहीतः करः स्वग्राह्यो भागः याभ्यः तथाविधासु
आशासु दिक्षु प्रसाधनाभियोगः वशीकरणप्रयासः रञ्जनानुरागो वा।

(१३२) निजेति। निजकलत्राणि स्वीयभार्य्याः नतु परकीया इति ध्वनिः
तान्येव चर्म्मपुत्त्रिका चर्म्माच्छादितपुत्तलिकाः तासु न। गुणवति मौर्वीसमन्विते
अन्यत्र विद्याविनयादिसम्पन्ने। पिण्डोपजीविनि अन्नदानेन भरणीये इति भावः।

(१३३) मित्रोपकरणं सुहृद्रूपम् उपकरणम् उपकारिवस्तु आत्मा स्वस्व-
रूपम्। भृत्योपकरणं भृत्यानाम् उपकारसाधनं प्रभुत्वं प्रभावः। पण्डितोप-

करणं सर्वस्वं (१३५) सुकृतसंस्मरणोपकरणं हृदयं (१३६) धर्मोपकरणम् आयुः साहसोपकरणं शरीरम् (१३७) असिलतोपकरणं पृथिवी विनोदोपकरणं राजकम् प्रतापोपकरणं प्रतिपक्षः। (१३८) न अस्य अल्पपुण्यैः अवाप्यते सर्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छायेति। श्रुत्वा च तमेव चन्द्रसेनं समादिशत् कृतकशिपुं विश्रान्तसुखिनम् एनं कारयेति।

अथ गते च तस्मिन् (१३९) पर्य्यस्ते च वासरे

---

करणं पण्डितानाम् उपकारसाधनं वैदग्ध्यं विद्यावत्त्वं वैचक्षण्यं वा। बान्धवोपकरणं बान्धवानाम् उपकारसाधनं लक्ष्मीः सम्पदित्यर्थः सम्पद्भिः बान्धवा उपक्रियन्ते इति भावः

(१३४) कृपणोपकरणं कृपणानां दीनानाम् उपकारसाधनं पोषणसाधनम् इत्यर्थः ऐश्वर्य्यं सम्पदित्यर्थः। द्विजोपकरणं द्विजानां ब्राह्मणानाम् उपकारसाधनं सर्वस्वं सर्वं धनम्।

(१३५) सुकृतेति। सुकृतस्य कृतोपकारस्य संस्मरणं तस्य उपकरणम् उपकारकं हृदयं चित्तं कृतज्ञोऽयमिति भावः।

(१३६) धर्म्मोपकरणं धर्म्मोपार्जनसाधनमित्यर्थः आयुर्जीवनकाल इत्यर्थः। साहसोपकरणं सहसा बलेन क्रियमाणं कर्म्म साहसं तस्य उपकरणम् उपकारसाधनम्।

(१३७) असीति असिलता खड्गयष्टिः तस्या उपकरणम् उपार्जनवस्त्वित्यर्थः। विनोदोपकरणम् विनोदस्य प्रीतेः उपकरणम् उपकारसाधनं राजकं राजचक्रं राज्यं वा। प्रतापोकरणं प्रतापस्य स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजमित्युक्तलक्षणस्य उपकरणं ख्यापनसाधनमिति भावः। प्रतिपक्षः शत्रुः।

(१३८) नास्येति अल्पपुण्यैः अल्पभाग्यैरिति भावः अस्य सम्राजः सर्वातिशायिनी सर्वेभ्य उत्कर्षवतीत्यर्थः सुखरसप्रसूतिः आनन्दास्वादजननी यद्वा आनन्दास्वादोत्पत्तिर्यस्याः तथाभूता। कृतकशिपुं रचितशयनीयम्। यद्वा सम्पादितभोजनाच्छादनव्यापारं तथाचोक्तम्। भोजनाच्छादने सन्निरुभे कशिपुरुच्यते इति। कृतकशिपुम् इत्यत्र कृतसेवम् इति पाठान्तरम्।

(१३९) पर्य्यस्ते अवसिते।

(१४०) संघट्टमानरक्तपङ्कजसम्पुटपीयमाने इव क्षयिणि क्षामतां व्रजति बालवायसारुणे पराङ्मुखातपे (१४१) अस्ताशिथिलितनिजवाजिजवे (१४२) जपापीड़पाटले अस्ताचलशिखरस्खलिते (१४३) खञ्जतीव कमलिनीकण्टकक्षतपादपल्लवे पतङ्गे पुरः परापतति (१४४) प्रेङ्खदन्धकारलेशलम्बालके (१४५) शशिविरहशोकश्याम इव श्यामामुखे कृतसन्ध्योपासनः शयनीयम् अगात् अचिन्तयच्च एकाकी किं करोमि अन्यथा (१४६) सम्भावितोऽस्मि राज्ञा

---

(१४०) सङ्घट्टमानेति। सङ्घट्टमानं सम्मीलत् यत् रक्तपङ्कजसम्पुटं रक्तपद्मरूपमावरणं पीयमाने इव ग्रस्यमाने इव क्षयिणि क्षयोन्मुखे। क्षामतां क्षीणतां व्रजति गच्छति वासरे दिवसे। बालवायसारुणे बालः सद्योजातः यो वायसः काकः तद्वत् अरुणः रक्तवर्णः तस्मिन् पराङ्मुखातपे पराङ्मुखाः विमुखतामापाद्यमानाः आतपाः मयूखाः यस्य तथोक्ते। अपराह्णातपे इति पाठान्तरम्।

(१४१) शिथिलितेति शिथिलितः खर्वीकृत इत्यर्थः निजानां वाजिनाम् अश्वानां समानामिति भावः जवः वेगः येन तथोक्ते।

(१४२) जपेति। जपा पुष्पभेदः तस्य आपीड़ः स्तवकः तद्वत् पाटले रक्ते। अस्ताचलशिखरस्खलिते अस्तगिरिचूड़ावलम्बिनि इत्यर्थः।

(१४३) खञ्जतीव खञ्ज इव आचरतीव। कमलिनीति कमलिन्याः कण्टकैः क्षतः विद्धः पादपल्लवः चरणकिसलयः किरणविस्तरश्च यस्य तथाभूते पतङ्गे सूर्य्ये। पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः। नायके उपनायिकाम् अभिगच्छति नायिकाभिः नायकस्य प्रहारविशेषेण चरणक्षतिसम्भवात् खञ्जत्वमुपपद्यते इति च अत्र ध्वन्यते। पुरः अग्रे पश्चिमायां दिशि परापतति गच्छति।

(१४४) प्रेङ्खदिति। प्रेङ्खन्तः आविर्भवन्तः अन्धकारलेशाः तिमिरबिन्दवः एव लम्बाः लम्बमानाः अलकाः चूर्णकुन्तलाः यस्मिन् यस्य वा तथाभूते।

(१४५) शशीति। शशिनः चन्द्रस्य पत्युरिति भावः विरहेण विच्छेदेन यः शोकः दुःखं तेन श्यामे इव मलिने इव। श्यामामुखे श्यामा रजनी। शीते

निर्निमित्तबन्धुना च सन्दिष्टमेवं क्षणेन। कष्टा च सेवा विषमञ्च भृत्यत्वम् अतिगम्भीरं महत् राजकुलम् न च तत्र मे (१४७) पूर्वजप्रवर्त्तिता प्रीतिः न कुलक्रमागता गतिः न उपकारस्मरणानुरोधः (१४८) न बालसेवास्नेहः न गोत्रगौरवम् न पूर्वदर्शनदाक्षिण्यम् (१४९) न प्रज्ञासंविभागोपप्रलोभनम् (१५०) न विद्यातिशयकुतूहलम् न आकारसौन्दर्य्यादरः न सेवाकाकुकौशलम् (१५१) न विद्वद्गो-

---

सुखोष्णसर्वाङ्गी शीते च सुखशीतला। तप्तकाञ्चनवर्णाभा सा श्यामा परिगीयते इत्युक्तलक्षणा स्त्री च तस्या मुखे प्रारम्भे वदने च। अन्यथा विरुद्धप्रकारेण इत्यर्थः।

(१४६) सम्भावितः तर्कितः। निर्निमित्तबन्धुना अकारणमित्रेण। सेवा परिचर्य्या राज्ञ इति शेषः कष्टा कष्टकरी इत्यर्थः। विषमम् असहजं भृत्यत्वं भृत्यभावः। अतिगम्भीरं दुर्ज्ञेयव्यापारमिति भावः।

(१४७) पूर्वजेति। पूर्वजैः पितृपितामहादिभिः प्रवर्त्तिता जनिता प्रीतिः प्रणयः। कुलक्रमागता वंशपरम्पराभ्यस्तेत्यर्थः गतिः गमनागमननियमः। उपकारस्मरणानुरोधः राजकुले कदाचित् मया उपकारः कृतः तस्य स्मरणं तदनुरोधः तद्बाध्यता न अस्तीति शेषः।

(१४८) बालसेवास्नेहः बाल्यसेवानिमित्तं ममत्वम्। गोत्रगौरवं गोत्रस्य कुलस्य मदीयस्य इति भावः गौरवं सम्माननं राजसेवया इति भावः प्रत्युत अगौरवमेव इति भावः। पूर्वदर्शनदाक्षिण्यं पूर्वं दर्शनं साक्षात्कारः परिचयो वा राज्ञ इति शेषः तेन दाक्षिण्यं सारल्यं सद्भाव इति यावत्।

(१४९) प्रज्ञेति। प्रज्ञाया बुद्धेः प्रकृष्टज्ञानस्य वा संविभागः समालोचनं तस्य उपप्रलोभनं लाभोपायसाधनमित्यर्थः।

(१५०) विद्यातिशयकुतूहलम् अतिशायिनी विद्या मे भविष्यति इति कुतूहलम् औत्सुक्यम्। आकारसौन्दर्य्यादरः आकारस्य अवयवस्य सौन्दर्ये आदरो यत्नः। सेवाकाकुकौशलं सेवायां यः काकुः शोकभीत्यादिजनितो ध्वनिविकारः तस्य कौशलं पाटवं न मे आवश्यकमिति भावः।

ष्ठीबन्धवैदग्ध्यम् (१५२) न वित्तव्ययवशीकरणम् (१५३) न राजवल्लभपरिचयः। अवश्यं गन्तव्यम् सर्वथा भगवान् पुरारिः भुवनगुरुः गतस्य मे सर्वं साम्प्रतमाचरिष्यति इति अवधार्य्य गमनाय मतिम् अकरोत्।

अथान्यस्मिन् अहनि उत्थाय प्रातरेव स्नात्वा (१५४) धृत-धवलदुकूलवासा गृहीताक्षमालः प्रास्थानिकानि सूक्तानि मन्त्रपदानि च बहुशः समावर्त्त्य देवदेवस्य विरूपाक्षस्य (१५५) क्षीरस्नपनपुरःसरां (१५६) सुरभिकुसुमधूप-गन्धध्वजवलिविलेपनप्रदीपकबहुलां विधाय पूजां परमया भक्त्या (१५७) प्रथमद्रुततरलतिलत्वग्विघटनचटुलमुखर-

---

(१५१) विद्वदिति। विदुषां गोष्ठी समाजः तस्या बन्धे बन्धने आयत्ती-करणे इति यावत् वैदग्ध्यं नैपुण्यं न आवश्यकमिति शेषः।

(१५२) वित्तेति। वित्तस्य धनस्य व्ययः तस्य वशीकरणं बाध्यता न अस्तीति शेषः राजसेवायां प्रचुरं वित्तं लभ्यते ममापि तस्य व्यय आवश्यक इत्यपि हेतुर्न इत्यर्थः।

(१५३) राजवल्लभपरिचयः राज्ञो वल्लभः प्रियः अहमिति भावः तस्य परि-चयः प्रकटनं न प्रयोजकमिति शेषः। गतस्य राजकुलं प्रस्थितस्य इत्यर्थः। साम्प्रतं समुचितम्।

(१५४) धृतधवलदुकूलवासाः परिहितशुभ्रपट्टवसनः गृहीताक्षमालः जप-मालाधारी। प्रास्थानिकानि प्रस्थानकालकर्त्तव्यानि सूक्तानि वैदिकानि मन्त्र-पदानि मन्त्रविशेषान् बहुशः पुनः पुनः समावर्त्त्य समुच्चार्य्य पठित्वा इत्यर्थः विरू-पाक्षस्य हरस्य।

(१५५) क्षीरेति। क्षीरेण दुग्धेन स्नपनम् अभिषेचनं पुरःसरं पूर्वं यस्याः ताम्।

(१५६) सुरभीति। सुरभीणि कुसुमानि पुष्पाणि धूपाः गन्धाः ध्वजाः

शिखाशेखरं ( १५८ ) प्राज्याहुतिप्रवर्द्धितदक्षिणार्चिषं भगवन्तम् आशुशुक्षणिं हुत्वा दत्त्वा द्युम्नं यथाविद्यमानं द्विजेभ्यः प्रदक्षिणीकृत्य प्राङ्मुखीं नैचिकीं शुक्लाङ्गरागः शुक्लमाल्यः शुक्लवासाः ( १५९ ) रोचनाञ्चितदूर्वाग्रपल्लवग्रथितगिरिकर्णिकाकुसुमकृतकर्णपूरः ( १६० ) शिखासक्तसिद्धार्थकः पितुः कनीयस्या स्वस्रा माता इव स्नेहार्द्रहृदयया श्वेतवाससा

---

पताकाः बलिविलेपनानि पूजार्थानि विलेपनद्रव्याणि प्रदीपकाश्च तैः बहुला भूयिष्ठा ताम् ।

( १५७ ) प्रथमेति । प्रथमं प्राक् हुतानां देवोद्देशेन प्रक्षिप्तानां तरलानां चपलानां तिलानां त्वचः आवरणानि तासां विघटनेन विसरणेन चटुलाः चञ्चला अतएव मुखराः पटत्पटदिति शब्दं कुर्वाणाः शिखाः ज्वालाः शेखराणि शिरोभूषणानि यस्य तथोक्तम् ।

( १५८ ) प्राज्येति प्रकृष्टाभिः आज्याहुतिभिः घृताहुतिभिः यद्वा प्राज्याभिः प्रभूताभिः आहुतिभिः प्रवर्द्धिताः प्रकर्षेण वृद्धिं नीताः दक्षिणा दक्षिणदिग्वर्त्तिन्यः अर्चिषः शिखा यस्य तथोक्तम् । आशुशुक्षणिम् अग्निम् । द्युम्नं धनम् प्राङ्मुखीं पूर्वमुखीं नैचिकीं नीचजातीयां स्त्रीं धेनुविशेषं वा । शुक्लाङ्गरागः श्वेतचन्दनदिग्धः ।

( १५९ ) रोचनेति । रोचनया गोरोचनाख्यमाङ्गल्यद्रव्यभेदेन अञ्चिता रञ्जिताः दूर्वाणाम् अग्रपल्लवाः तैः ग्रथितं गुम्फितं यत् गिरिकर्णिकाकुसुमम् अश्वखुरी नाम माङ्गलिकी ओषधिः गिरिकर्णिका तस्याः कुसुमं तेन कृतः रचितः कर्णपूरः कर्णभूषणं येन तथोक्तः ।

( १६० ) शिखेति । शिखासु चूडासु सक्तानि स्थितानि इत्यर्थः सिद्धार्थकानि श्वेतसर्षपाः यस्य तथाभूतः । स्वस्रा भगिन्या । मात्रा इव जनन्या इव । श्वेतवाससा शुभ्रवसनपरिधायिन्या इत्यर्थः महाश्वेतया तदाख्यदेवीविशेषेण । मालत्याख्यया मालतीनाम्ना ।

साक्षादिव भगवत्या महाश्वेतया मालत्याख्यया (१६१) कृतसकलगमनमङ्गलो दत्ताशीर्वादो बान्धववृद्धाभिः अभिनन्दितः परिजनजरतीभिः वन्दितचरणैः अभ्यनुज्ञातो गुरुभिः अभिवादितैः आघ्रातः शिरसि कुलवृद्धैः वर्द्धितगमनोत्साहः शकुनैः (१६२) मौहूर्त्तिकमतेन (१६३) कृतनक्षत्रदोहदः शोभने मुहूर्त्ते (१६४) हरितगोमयोपलिप्ताजिरस्थण्डिलस्थापितम् (१६५) असितेतरकुसुममालापरिक्षिप्तकण्ठं (१६६) पिष्टपञ्चाङ्गुलपाण्डुरं (१६७) मुखविनिहितनवचूतपल्लवं पूर्णकलसम् उदीक्षमाणः प्रणम्य कुलदेवताभ्यः कुसुमफलपाणिभिः (१६८) अप्रतिरथं

---

(१६१) कृतेति। कृतम् अनुष्ठितं सकलं गमनाय मङ्गलं यस्य तथोक्तः। परिजनजरतीभिः परिजनेषु मध्ये या जरत्यः स्थविराः ताभिः शकुनैः सुनिमित्तैः माङ्गलिकपक्षिभिर्वा।

(१६२) मौहूर्त्तिकेति। मुहूर्त्तं जानन्तीति मौहूर्त्तिकाः गणका इत्यर्थः तेषां मतेन अभिप्रायेण।

(१६३) कृतेति। कृतं नक्षत्रेषु अश्विन्यादिषु यात्रिकेषु इति भावः दोहदम् अनुरागविशेषः येन तथोक्तः शुभे नक्षत्रे कृतयात्र इति भावः। मुहूर्त्ते क्षणविशेषे।

(१६४) हरितेति। हरितेन अशुष्केण इति यावत् गोमयेन उपलिप्तं प्रलिप्तम् अजिरम् अङ्गनम् यस्य तादृशे स्थण्डिले भूमौ स्थापितः तम्।

(१६५) असितेतरेति। असितेतराभिः श्वेताभिः कुसुममालाभिः परिक्षिप्तः परिवेष्टितः कण्ठः काना इति प्रसिद्धः यस्य तथोक्तम्।

(१६६) पिष्टेति। पिष्टानां पिटलीतिप्रसिद्धानां माङ्गलिकद्रव्याणां पञ्चाङ्गुलं तेन पाण्डुरः शुभ्रः पञ्चाङ्गुलगृहीतपिष्टेन चित्रित इति भावः तम्।

(१६७) मुखेति। मुखे विनिहितः विशेषेण अर्पितः नवः चूतपल्लवः आम्रपल्लवः यस्य तथोक्तं पूर्णकलशं वारिपूर्णकुम्भम् उदीक्षमाणः पश्यन्।

जपद्भिः निजद्विजैः अनुगम्यमानः प्रथमचलितदक्षिणचरणः प्रीतिकूटात् निरगात्।

(१६९) प्रथमेऽहनि घर्मकालकष्टं निरुदकं (१७०) निष्पत्रपादपविषमं (१७१) पथिकजननमस्क्रियमाणं (१७२) प्रवेशपादपोत्कीर्णकात्यायनीप्रतियातनं शुष्कम् अपि पल्लवितमिव तृषितश्वापदकुललम्बितलोलजिह्वालता-सहस्रैः पुलकितमिव (१७३) अच्छभल्लगोलाङ्गूललिह्य-मानमधुगोलचलितसरघासङ्घातैः रोमाञ्चितमिव (१७४)

---

(१६८) अप्रतिरथं नास्ति प्रतिरथः प्रतिद्वन्द्वी यत्र तद् यथा तथा जपद्भिः मन्त्रमिति शेषः बाणस्य कोऽपि प्रतिस्पर्द्धी माभूदिति प्रतिपक्षशमनं यथा तथा मन्त्रं जपद्भिरिति निष्कर्षः। निजद्विजैः आत्मीयैः विप्रैः। प्रीतिकूटात् तदाख्यात् नगरात्।

(१६९) प्रथमेऽहनि चण्डिकाकाननमतिक्रम्य मल्लकूटनामानं ग्राममगात् इत्यन्वयः तदेव काननं विशिनष्टि घर्मकालेत्यादिभिः घर्मकालकष्टं निदाघे कष्टजनकम्। यतः निरुदकम् निर्जलम्।

(१७०) निष्पत्रेति। निष्पत्रैः पत्ररहितैः पादपैः वृक्षैः विषमः छायाराहित्यात् असुखदम्।

(१७१) पथिकेति। पथिकैः पान्थैः जनैः नमस्क्रियमाणं प्रणम्यमानम्।

(१७२) प्रवेशेति। प्रवेशे प्रवेशारम्भे यः पादपः तरुः तत्र उत्कीर्णा खोदिता कात्यायन्याः दक्षसुताया देव्याः प्रतियातना प्रतिकृतिः यस्य तथोक्तम्। तृषितैः पिपासुभिः श्वापदकुलैः हिंस्रप्राणिनिवहैः लम्बितानि बहिष्कृतानि इत्यर्थः लोलानां चञ्चलानां सतृष्णानां वा लोलश्चलसतृष्णयोरित्यमरः जिह्वालतानां रसनावल्लीनां सहस्राणि तैः पल्लवितमिव सञ्जातकिसलयमिव जिह्वानां किसलयसाम्यादिति भावः।

(१७३) अच्छेति। अच्छभल्लैः भल्लुकैः गोलाङ्गूलैः कपिविशेषैश्च लिह्यमानानि आस्वाद्यमानानि यानि मधुगोलानि मधुचक्राणि तेभ्यः चलितानाम् उड्डी-

दग्धस्थलीरूढस्थूलाभीरुकन्दलशतैः शनैः चण्डिकाकानन-मतिक्रम्य मल्लकूटनामानं ग्रामम् अगात्। तत्र च हृदय-निर्विशेषेण भ्रात्रा सुहृदा च जगत्पतिनाम्ना सम्पादित-सपर्य्यः सुखम् अवसत्। अथ अपरेद्युः उत्तीर्य्य भगवतीं भागी-रथीं (१७५) यष्टिगृहकनाम्नि वनग्रामके निशाम् अनयत्। अन्यस्मिन् दिवसे स्कन्धावारम् उपमणितारम् अन्वजिरवति कृतसन्निवेशम् आससाद। अतिष्ठच्च नातिदूरे राजभवनस्य।

( १७६ ) निर्वर्त्तितस्नानाशनव्यतिकरो विश्रान्तश्च मेखलेन सह याममात्रावशेषे दिवसे भुक्तवति भूभुजि प्रख्यातानां क्षितिभुजां बहून् शिबिरसन्निवेशान् वीक्ष-

---

यमानानां सरघानां मधुमक्षिकाणां सङ्घातैः समूहैः पुलकितमिव कण्टकितमिव।

( १७४ ) दग्धेति। दग्धासु दावाग्निना भस्मीकृतासु स्थलीसु अकृत्रिमासु भूमिषु रूढानां जातानाम् अभीरूणां शतावरीणाम् ओषधिविशेषाणां कन्दलशतैः नवनालशतैः रोमाञ्चितमिव सञ्जातरोमहर्षमिव। हृदयनिर्विशेषेण हृदयात् निर्विशेषः अभिन्न इत्यर्थः तेन यद्वा हृदयेन निर्विशेषः तेन अभिन्नहृदयेन इत्यर्थः। भ्रात्रा चन्द्रसेनेन इति यावत्। सम्पादितसपर्य्यः अनुष्ठितसत्कारः।

( १७५ ) यष्टिगृहकेति। यष्टिगृहकं नाम आख्यानमिति शेषः यस्य तथोक्ते। स्कन्धावारं सेनानिवेशार्थरचितपटमण्डपादिरूपम् उपमणितारं मणितारासख्यपत्तनसमीपे अन्वजिरवति अजिरवती नाम नदी तामनु अन्वजिरवति अव्ययीभावः अजिरवतीनदीतीरे इत्यर्थः। कृतसन्निवेशं कृतस्थितिम्। आससाद प्राप।

( १७६ ) निर्वर्त्तितेति। निर्वर्त्तितः सम्पादितः स्नानाशनयोः स्नानभोजनयोः व्यतिकरः विधिः येन तथोक्तः याममात्रावशेषे प्रहरमात्रावशिष्टे। भूभुजि राजनि। प्रख्यातानां प्रसिद्धानां क्षितिभुजां राज्ञाम् अधीनस्थानामिति भावः बहून् प्रभूतान् शिबिरसन्निवेशान् पटमण्डपानि। वारणेन्द्रैः गजेन्द्रैः श्यामायमानं

माणः शनैः शनैः पट्टबन्धार्थमुपस्थापितैः च (१७७) डिण्डिमाधिरोहणाय आहूतैः च अभिनवबद्धैः च विक्षेपोपार्जितैः च कौशलिकोपगतैः च नागवीथीपालप्रेषितैः च (१७८) प्रथमदर्शनकुतूहलोपनीतैः च (१७९) दूतसम्प्रेषणप्रेषितैः च पल्लीपरिवृढढौकितैश्च (१८०) स्वेच्छायुद्धक्रीड़ाकौतुकाकारितैश्च दीयमानैश्च आच्छिद्यमानैश्च मुच्यमानैश्च यामस्थापितैश्च (१८१) सर्वद्वीपजिगीषया गिरिभिरिव (१८२)

---

राजद्वारमित्युत्तरेण सम्बन्धः। वारणेन्द्रैरित्युत्तरस्थितं विशिनष्टि पट्टबन्धार्थमित्यादिभिः पट्टबन्धः सिंहासनरचनं तदर्थम् उपस्थापितैः आनीतैः सिंहासनस्य अत्युच्चतया गजेन्द्रैरेव तत्समाधानं क्रियते इति भावः।

(१७७) डिण्डिमाधिरोहणाय पटहस्थापनाय गजेन्द्रोपरीति। विक्षेपाः कराः राजग्राह्यभागा इत्यर्थः तद्रूपेण उपार्जिताः लब्धाः तैः। कौशलिकोपगतैः कौशलिकेन पाटवेन नैपुण्येनेत्यर्थः उपगताः शिक्षिताः तैः। नागवीथीपालप्रेषितैः नागवीथी हस्त्युत्पत्तिभूः तस्याः पालः अध्यक्ष इत्यर्थः तेन प्रेषिताः प्रहिताः तैः।

(१७८) प्रथमेति। प्रथमं दर्शनं तस्मिन् यत् कुतूहलं औत्सुक्य तेन उपनीताः उपस्थापिताः तैः।

(१७९) दूतेति। दूतानां राजवार्त्तावहानां सम्प्रेषणे प्रेरणे राजभिरिति भावः प्रेषिताः दूतैः सहेति भावः तैः। पल्लीपरिवृढढौकितैः जनपदाध्यक्षप्रेषितैः।

(१८०) स्वेच्छेति। स्वेच्छया राज्ञ इति भावः युद्धक्रीड़ायां यत् कौतुकं कुतूहलं तस्मै तेन वा आकारिताः आनीताः आहूता वा तैः। दीयमानैः राजभिः उपढौक्यमानैः इत्यर्थः। आच्छिद्यमानैः अपसार्य्यमाणैः मुच्यमानैः बन्धनादिति शेषः। यामस्थितैः प्रहरकालावस्थितैः।

(१८१) सर्वेति। सर्वेषां द्वीपानां जिगीषया विजेतुमिच्छया गिरिभिरिव पर्वतैरिव।

सागरसेतुबन्धार्थम् एकीकृतैः (१८३) ध्वजपटपटुपटह-शङ्खचामराङ्गरागरमणीयैः पुष्याभिषेकदिवसैः इव (१८४) कल्पितैः वारणेन्द्रैः श्यामायमानम् (१८५) अनवरत-चलितखुरपुटप्रहतमृदङ्गैः नर्त्तयद्भिरिव राजलक्ष्मीम् उप-हसद्भिरिव (१८६) सृक्कपुटप्रसृतफेनाट्टहासेन जवजड़जङ्घां हरिणजातिम् आकारयद्भिरिव सङ्घट्टहेतोः हर्षहेषितेन उच्चैःश्रवसम् उत्पतद्भिरिव (१८७) दिवसकररथतुरगरुषा

---

(१८२) सागरेति सागराणां सेतुबन्धार्थमेकीकृतैः समवेतीकृतैः।

(१८३) ध्वजेति। ध्वजपटाः पताकाः पटवः गभीरनादाः पटहाः वाद्य-भेदाः शङ्खाः चामराणि बालव्यजनानि अङ्गरागाः विलेपनद्रव्याणि तैः रमणीयाः सुदर्शना इत्यर्थः तैः। पुष्याभिषेकदिवसैरिव यत्र पुष्यानक्षत्रयुक्ते दिवसे राजा मङ्गलालङ्कृतः स्नाति असौ पुष्याभिषेकदिवसः तत्र ध्वजादिरम्यवस्तूनि सज्जी-क्रियन्ते इति स्थितिः तादृशैः दिवसैरिव।

(१८४) कल्पितैः सज्जितैः। वारणेन्द्रैः गजेन्द्रैः श्यामायमानं कृतान्धकारमिति भावः अथच श्यामा रात्रिः तद्वदाचरतीति तथोक्तम्। तुरङ्गैः तरङ्गायमाणं राज-द्वारम् इत्युत्तरेण सम्बन्धः तुरङ्गैरिति पदं विशिनष्टि।

(१८५) अनवरतेति। अनवरतम् अविरतं चलितेन खुरपुटेन प्रहतानि कुट्टितानि मृदः मृत्तिकाया भूमेरित्यर्थः अङ्गानि मृदङ्गा मुरजाख्यवाद्यभेदाश्च यैः तथोक्तैः। नर्त्तयद्भिरिव नृत्यं कारयद्भिरिव नर्त्तने च मृदङ्गवाद्यमुपयुज्यते इत्युत्-प्रेक्षावीजम्।

(१८६) सृक्केति सृक्कपुटेभ्यः ओष्ठप्रान्तेभ्यः प्रसृतः निःसृतः यः फेनः स अट्टहासः हास्यविशेष इव तेन। जवजड़ेति जवे वेगगतौ जड़ा मन्थरा अशक्तेत्यर्थः जङ्घा यस्याः तथाविधां हरिणजातिं मृगविशेषजातिम् आकारयद्भिरिव आह्वय-द्भिरिव सङ्घट्टहेतोः परस्परसम्मेलनहेतोः संग्रामहेतोर्वा।

(१८७) दिवसेति। दिवसकरस्य सूर्यस्य रथे ये तुरगाः अश्वाः तेभ्यः रुट् क्रोधः ईर्षेत्यर्थः तया। गगनतलम् अन्तरीक्षम् उत्पतद्भिरिव उद्गच्छद्भिरिव यस्य: पञ्चायमानेति पञ्चायमाणा पञ्चवदाचरन्ती मण्डनचामरमाला भूषणार्थधृतचामर-राजिः यैः तथाभूतैः।

पच्चायमानमण्डनचामरमालैः गगनतलं तुरङ्गैः (१८८) तरङ्गायमाणम् अन्यत्र प्रेषितैश्च प्रेष्यमाणैश्च प्रेषितप्रतीपनिवृत्तैश्च (१८९) बहुयोजनगमनगणनसङ्ख्याक्षरावलीभिः इव वराटिकावलीभिः घटितमुखमण्डनकैः तारकितैरिव सन्ध्यातपच्छेदैः (१९०) अरुणचामरिकारचितकर्णपूरैः सरक्तोत्पलैः इव रक्तशालिशालेयैः (१९१) अनवरतझणझणायमानचारुचामीकरघुरुघुरुकमालिकैः जरत्करञ्जवनैरिव रणितशुष्कवीजकोशीशतैः (१९२) श्रवणोपान्तप्रेङ्खत्पञ्चरागवर्णोर्णाचित्रसूत्रजूटजटाजालैः कपिकपो-

---

(१८८) तरङ्गायमाणम् तरङ्गवदाचरतीति तथोक्तम्। क्रमेलककुलैः कपिलायमानं राजद्वारमिति उत्तरेण सम्बन्धः। तान्येव क्रमेलककुलानि विशिनष्टि अन्यत्रेत्यादिभिः। अन्यत्र अन्यस्मिन् प्रदेशे प्रेषितैः प्रहितैः प्रेष्यमाणैः प्रेष्यमाणैः प्रेषितप्रतीपनिवृत्तैः आदौ प्रेषिताः पश्चात् प्रतीपं निवृत्ताः प्रतिनिवृत्ता इत्यर्थः तैः।

(१८९) बह्विति। बहूनि योजनानि यद्गमनं तस्य गणनायां सङ्ख्याक्षरावल्यः चिह्नभूतवर्णसमूहाः ताभिरिव। वराटिकावलीभिः कपर्दकनिवहैः घटितं रचितं मुखानां मण्डनकं भूषणं येषां तैः। तारकितैरिव समुदिततारामण्डलैरिव सन्ध्यातपच्छेदैः सन्ध्याकालिकातपखण्डैः।

(१९०) अरुणेति। अरुणाभिः रक्ताभिः चामरिकाभिः क्षुद्रचामरैः रचितः कृतः कर्णपूरः कर्णावतंसः येषां तथोक्तैः। सरक्तोत्पलैरिव रक्तोत्पलवद्भिरिव अतएव रक्तानि शालीनां धान्यानां शालेयानि क्षेत्राणि तैः।

(१९१) अनवरतेति। अनवरतम् अविरतं झणझणायमाना चारुभिः शोभनैः चामीकरैः काञ्चनैः सङ्घटितैः क्षुद्रगोलकैरिति भावः घुरघुरुका घुरुघुरु इत्यव्यक्तं स्वनन्ती मालिका येषां तैः। जरत्करञ्जवनैरिव शुष्ककमलवनैरिव। रणितेति रणितानि शब्दितानि शुष्काणि बीजकोशीशतानि बीजपूर्णकोषशतानि येषु तादृशैः।

लकपिलैः क्रमेलककुलैः कपिलायमानम् अन्यत्र शरज्जल-
धरैरिव (१९३) सद्यःस्नुतपयःपटलधवलतनुभिः कल्प-
पादपैरिव (१९४) मुक्ताफलजालकजायमानालोकलुप्तच्छा-
यामण्डलैः नारायणनाभिपुण्डरीकैः इव आश्लिष्टगरुड़पक्षैः
क्षीरोदोद्देशैरिव द्योतमानविकटविद्रुमदण्डैः (१९५) शेष-
फणाफलकैरिव (१९६) उपरिस्फुरत्स्फीतमाणिक्यखण्डैः

---

(१९२) श्रवणेति। श्रवणयोः कर्णयोः उपान्तेषु प्रान्तभागेषु प्रेङ्खन्ति चलन्ति पद्मरागवर्णिनीभिः चित्राणि मनोज्ञानि सूत्रजूटानीव सूत्रनिचया इव जटाजूटानि केशरनिवहा येषां तैः। कपीति कपीनां वानराणां कपोलाः गण्डाः तद्वत् कपिलाः पिङ्गलाः तैः क्रमेलककुलैः उष्ट्रवृन्दैः। कपिलायमानं पिङ्गलायमानम्। आतपत्रषण्डैः श्वेतद्वीपायमानं राजद्वारमित्युत्तरेण सम्बन्धः। तान्येवातपत्र-खण्डानि विशिनष्टि अन्यत्रेत्यादिभिः। अन्यत्र अन्यस्मिन् प्रदेशे।

(१९३) सद्य इति सद्यः स्नुतैः अचिरनिर्गलितैः पयसां जलानां पटलैः समूहैः धवला श्वेता तनुः अवयवः येषां तथाभूतैः। शरज्जलधरैरिव शारदीय-मेघैरिव।

(१९४) मुक्ताफलेति। मुक्ताफलानां मौक्तिकानां जालकैः मालाभिः यद्वा जालकानां मालानां जायमानो य आलोकः उद्योतः प्रभेति यावत् तेन लुप्तं नाशितं छायामण्डलम् अनातपसमूहः यैः तथाभूतैः। अतएव कल्पपादपैरिव कल्प-तरुभिरिव। नारायणनाभिपुण्डरीकैरिव नारायणस्य नाभिसमुत्पन्नैः तपद्मैः इव आश्लिष्टा गरुड़पक्षाः तदाख्यरत्नविशेषाः अन्यत्र गरुड़पक्षिणः पक्षा यैः तथा-भूतैः। क्षीरोदोद्देशैरिव क्षीरसागरविभागैरिव द्योतमाना दीप्यमाना विकटा बृहन्तः विद्रुमदण्डाः प्रवालघटितनालानि येषां तथोक्तैः।

(१९५) शेषेति। शेषस्य अनन्तनागस्य फणाफलकैरिव फणामण्डलैरिव तस्य श्वेतवर्णत्वात् इति उत्प्रेक्षा।

(१९६) उपरीति। उपरि शिखरदेशे स्फुरत् दीप्यमानं स्फीतं स्थूलं

श्वेतगङ्गापुलिनैरिव राजहंसोपसेवितैः अभिभवद्भिरिव निदाघसमयम् उपसंहरद्भिरिव विवस्वतः प्रतापम् (१९७) आपिबद्भिरिव आतपं चन्द्रलोकमयमिव जीवलोकं जनयद्भिः कुमुदमयम् इव कालं कुर्वद्भिः ज्योत्स्नामयमिव वासरं विरचयद्भिः फेनमयीमिव दिवं दर्शयद्भिः अकालकौमुदीसहस्राणीव सृजद्भिः उपहसद्भिरिव शातक्रतवीं श्रियं (१९८) श्वेतायमानैः आतपत्रषण्डैः श्वेतद्वीपायमानम् (१९९) क्षणदृष्टनष्टाष्टदिङ्मुखम् मुष्णद्भिरिव त्रिभुवनम् (२००) आक्षेपोत्क्षेपदोलायितं दिनं गतागतानीव कारयद्भिः उत्तारयद्भिरिव (२०१) कुन्दपकलङ्क-

---

माणिक्यखण्डं रत्नविशेषश्चकलं येषां तैः। श्वेतगङ्गापुलिनैरिव श्वेतानि गङ्गायाः पुलिनानि सैकतदेशाः तैरिव। राजहंसेति राजानो हंसा इव तैः उपसेवितानि व्यवहृतानि चरितानि च तैः। निदाघसमयं ग्रीष्मकालम् अभिभवद्भिरिव जयद्भिः इव। विवस्वतः सूर्यस्य प्रतापं प्रभावम् उपहसद्भिरिव।

(१९७) आपिबद्भिरिव सम्यग्ग्रसद्भिरिव दिवम् अन्तरीक्षम्। सृजद्भिः उत्पादयद्भिः। शातक्रतवीं शतक्रतुरिन्द्रः तस्येयं शातक्रतवी ताम् ऐन्द्रीमित्यर्थः श्रियं सम्पदम्।

(१९८) श्वेतायमानैः श्वेतगुणा इव आचरन्तीति तैः सितैरित्यर्थः आतपत्रषण्डैः छत्रनिवहैः। श्वेतद्वीपायमानं श्वेतद्वीपमिवाचरत्।

(१९९) चामराणां सहस्रै र्दोलायमानम् इति उत्तरेण सम्बन्धः। चामराणां सहस्राणि विशिनष्टि क्षणेत्यादिभिः। क्षणेन दृष्टं नष्टं छन्नं च अष्टानां दिशां मुखं मुष्णद्भिरिव हरद्भिरिव।

(२००) आक्षेपेति। आक्षेपः प्रसारणम् उत्क्षेपः ऊर्द्धं क्षेपणं ताभ्यां दोलायितं त्रिभुवनं दिनं व्याप्य इत्यर्थः गतागतानीव यातायातानि इव कारयद्भिः।

कालीं कालेयीं स्थितिम् (२०२) विकचविषदकाशवनपाण्डु-रदिशं शरत्समयमिव उत्पादयद्भिः (२०३) विसतन्तुमयमिव अन्तरिक्षमाविर्भावयद्भिः (२०४) शशिकरशुचीनां चलतां चामराणां सहस्रैः दोलायमानम् अपि च हंसयूथायमानम् (२०५) करिकर्णशङ्खैः कल्पलतावनायमानं कदलिकाभिः (२०६) मायूरातपत्रैः मन्दा-माणिक्यवृक्षकवनायमानं (२०६) मायूरातपत्रैः मन्दाकिनीप्रवाहायमाणम्. अंशुकैः (२०७) क्षीरोदायमानं क्षौमैः कदलीवनायमानं मरकतमयूखैः जन्यमानान्य-दिवसमिव पद्मरागबालातपैः उत्पद्यमानापराम्बरम् इव

(२०१) कुनृपेति। कुत्सिता नृपा एव कलङ्काः तैः काली कृष्णवर्णा मलिनेत्यर्थः तां कालेयीं कलिसम्बन्धिनीं स्थितिं मर्यादाम् आचारमिति यावत् उत्सारयद्भिरिव अपनयद्भिरिव।

(२०२) विकचेति। विकचैः प्रस्फुटैः अतएव विषदैः स्वच्छैः काशवनैः पाण्डुरा धवला दिशो यत्र तथाभूतं शरत्समयम् उत्पादयद्भिरिव जनयद्भिरिव।

(२०३) विषतन्तुमयं मृणालसूत्रमयम् अन्तरीक्षं गगनतलम् आविर्भावयद्भिरिव प्रकटयद्भिरिव।

(२०४) शशीति। शशिनः चन्द्रस्य कराः किरणाः इव शुचीनि स्वच्छानि उज्ज्वलानि वा तेषाम्। दोलायमानं दोलेव आचरतीति तथोक्तम्।

(२०५) करीति। करिणां हस्तिनां कर्णाः शङ्खा इव तैः हंसयूथायमानं हंसमिथुनमिवाचरत्। कदलिकाभिः पताकाभिः कल्पलतावनायमानं कल्पलता-वनमिव आचरत्।

(२०६) मायूरातपत्रैः मयूरपिच्छनिर्म्मितच्छत्रैः माणिक्यवृक्षकाणां माणिक्य-क्षुद्रतरूणां वनमिव आचरतीति तथोक्तम्। अंशुकैः वसनपम्पराभिः मन्दाकिन्याः स्वर्गङ्गाया प्रवाह इव आचरतीति तथोक्तम्।

(२०७) क्षीरोदायमानं क्षीरोदः क्षीरसागरः स इव आचरतीति तथोक्तं क्षौमैः श्वेतपट्टवसनैः। मरकतमयूखैः मरकतानां हरिन्मणीनां मयूखाः किरणाः तैः कदलीवनायमानं रम्भावनमिव आचरत्। पद्मरागबालातपैः पद्मरागाणां

( २०८ ) इन्द्रनीलप्रभापटलैः आरभ्यमाणापूर्वनिशमिव ( २०९ ) महानीलमयूखान्धकारैः स्यन्दमानानेककालिन्दीसहस्रमिव ( २१० ) गरुड़मणिप्रभाप्रतानैः अङ्गाराङ्कितमिव पुष्परागरश्मिभिः ( २११ ) कैश्चित् प्रवेशमलभमानैः अधोमुखैः चरणनखपतितवदनप्रतिबिम्बनिभेन लज्जया स्वाङ्गानीव विशद्भिः कैश्चित् ( २१२ ) अङ्गुलीलिखितायाः क्षितेः विकीर्य्यमाणकरनखकिरणकदम्बकव्याजेन सेवाचामराणीव अर्पयद्भिः कैश्चित् ( २१३ ) उरःस्थलदोलायमानेन्द्रनीलतरलप्रभापट्टैः स्वामिप्रकोपप्रशमनाय कण्ठ-

---

रत्नभेदानां बालातपाः अरुणालोका इत्यर्थः तैः जन्यमानः उत्पाद्यमानः अन्यो दिवसः तमिव ।

( २०८ ) इन्द्रनीलेति । इन्द्रनीलानां नीलकान्तमणीनां प्रभापटलैः आलोकनिवहैः उत्पाद्यमानं जन्यमानम् अपरम् अन्यत् अम्बरमिव गगनमिव ।

( २०९ ) महानीलेति । महानीलानां महतां नीलमणीनां मयूखा अन्धकारा इव तैः स्यन्दमानं वहमानं कालिन्द्याः प्रवाहसहस्रमिव ।

( २१० ) गरुड़ेति । गरुड़मणीनां प्रभाप्रतानैः प्रभाविस्तरैः अङ्गाराङ्कितम् इव ज्वलिताग्निशकलवेष्टितमिव पुष्परागाणां पद्मरागमणीनां रश्मिभिः किरणैः ।

( २११ ) शत्रुमहासामन्तैः समन्तादासेव्यमानमित्युत्तरेण सम्बन्धः । तानेव विशिनष्टि कैश्चिदित्यादिभिः । कैश्चित् कतिपयैः प्रवेशमलभमानैः अप्राप्नुवद्भिः चरणेषु ये नखाः तेषु पतितानां वदनप्रतिबिम्बानां निजमुखच्छायानां निभेन व्याजेन अधोमुखैः अवनतमुखैः । लज्जया पराजयजनितया इति भावः स्वाङ्गानीव स्वशरीराणीव विशद्भिः प्रविष्टैः भवद्भिः सङ्कुचितकलेवरैः इति यावत् ।

( २१२ ) अङ्गुलीति । अङ्गुलिभिः लिखितायाः क्षितेः पृथिव्याः अपादाने पञ्चमी । विकीर्य्यमाणानां उत्क्षिप्यमाणानां करनखकिरणानां हस्तनखमयूखानां कदम्बकं समूहः तस्य व्याजः छलं तेन । सेवाचामराणि इव परिचर्य्यार्थचामरव्यजनानि इव अर्पयद्भिः ददद्भिः ।

बद्धकृपाणपट्टैरिव केचित् (२१४) उच्छ्वाससौरभभ्राम्य-द्भ्रमरपटलान्धकारितमुखैः अपहृतलक्ष्मीशोकधृतलम्बश्मश्रुभिरिव अन्यैः (२१५) शेखरोड्डीयमानमधुपमण्डलैः प्रणामविडम्बनाभयपलायमानमौलिभिरिव (२१६) निर्जितैरपि सम्मानितैः इव अनन्यशरणैः अन्तरान्तरा निष्पततां प्रविशताञ्च अन्तरप्रतीहाराणाम् (२१७) अनुमार्गप्रधावितानेकार्थिजनसहस्राणाम् अग्रयायिनः पुरुषान्

---

(२१३) उरःस्थलेति। उरःस्थलेषु वक्षःस्थलेषु दोलायमानानाम् इन्द्रनीलानां नीलकान्तमणीनां तरलानि स्फुरन्ति प्रभापट्टानि प्रभाफलकानि येषां तैः अतएव स्वामिनः प्रभोः विजयिन इत्यर्थः प्रकोपः प्रकृष्टः क्रोधः तस्य प्रशमनाय शान्त्यर्थं कण्ठेति कण्ठेषु बद्धानि कृपाणपट्टानि असिफलकानि यैः तथाभूतैरिव।

(२१४) उच्छ्वासेति। उच्छ्वासस्य निःश्वासपवनस्य सौरभेण भ्राम्यद्भिः समन्तात् सञ्चरद्भिः भ्रमरपटलैः अलिवृन्दैः अन्धकारित 'समाच्छन्नमिति यावत् मुखं येषां तैः अतएव अपहृताया लक्ष्म्याः राजश्रियः शोकेन हेतुना धृताः लम्बाः लम्बमानाः श्मश्रवः यैः तथाभूतैरिव।

(२१५) शेखरेति। शेखरेभ्यः शिरोमालिकाभ्यः उड्डीयमानानि उत्पतन्ति मधुपमण्डलानि भ्रमरसङ्घाः येषां तथोक्तैः अतएव प्रणामेति प्रणामे प्रणत्यां या विडम्बना अवमानना तस्या भयेन पलायमानाः मौलयः धम्मिल्लाः येषां तथाभूतैः इव। मौली किरीटधम्मिल्लौ इत्यमरः।

(२१६) निर्जितैरपि पराजितैरपि सम्मानितैरिव विजयिनोऽनुग्रहातिशयात् इति भावः अनन्यशरणैः अन्याश्रयरहितैः। अन्तरान्तरा मध्ये मध्ये। निष्पततां निर्गच्छताम्। अन्तरप्रतीहाराणाम् अन्तरे मध्ये मध्ये प्रतीहारा रक्षिणो येषां तथोक्तानाम्।

(२१७) अनुमार्गेति। मार्गे मार्गे अनुमार्गं प्रतिपथमित्यर्थः वीप्सायां अव्ययीभावः। प्रधावितानि अनेकानि अर्थिजनसहस्राणि तेषां अग्रयायिनः अग्रगामिनः पुरुषान् राजकीयजनान्।

(२१८) अश्रान्तैः पुनः पुनः पृच्छद्भिः भद्र ! अद्य भविष्यति भुक्त्वा स्थाने दास्यति दर्शनं (२१९) परमेश्वरः निष्पतिष्यति वा बाह्यां कक्ष्यामिति दर्शनाशया दिवसं नयद्भिः भुजनिर्जितैश्च शत्रुमहासामन्तैः समन्तादासेव्यमानम् अन्यैश्च (२२०) प्रतापानुरागागतैः नानादेशजैः महीपालैः (२२१) प्रतिपालयद्भिः नरपतिदर्शनकालमध्यास्यमानम् एकान्तोपविष्टैः च जैनैः आर्हतैः पाशुपतैः पाराशरिभिः वर्णिभिः च (२२२) सर्वदेशजन्मभिः च जानपदैः सर्वाम्भोधिवेलावनवलयवासिभिः च म्लेच्छजातिभिः सर्वदेशान्तरागतैः च (२२३) दूतमण्डलैः उपास्यमानं सर्वप्रजानिर्माणभूमिमिव प्रजापतीनां (२२४)

---

(२१८) अश्रान्तैः अविरतैः अश्रान्तमिति पाठे क्रियाविशेषणम् । भविष्यति दर्शनमिति शेषः । भुक्त्वा आहारं कृत्वा । स्थाने समुचिते प्रदेशे ।

(२१९) परमेश्वरः महाराजाधिराजः । निष्पतिष्यति आगमिष्यति कक्ष्यां प्रकोष्ठम् । दिवसं नयद्भिः यापयद्भिः । शत्रुमहासामन्तैः शत्रवश्च ते महान्तः सामन्ताश्चेति तैः । आसेव्यमानम् आकीर्य्यमाणम् ।

(२२०) प्रतापानुरागागतैः प्रतापश्च अनुरागश्च ताभ्यां हेतुभूताभ्याम् आगताः तैः भयस्नेहसमन्वितैरिति भावः ।

(२२१) प्रतिपालयद्भिः प्रतीक्षमाणैः । अध्यास्यमानम् अधिष्ठीयमानम् । एकान्तोपविष्टैः एकदेशासीनैः जैनैः शाक्यसिंहमतवर्त्तिभिः आर्हतैः नग्नक्षपणकैः पाशुपतैः पशुपतिर्देवता येषां तैः शैवैरित्यर्थः पाराशरिभिः पराशरमुनिमतानुवर्त्तिभिः वर्णिभिः ब्रह्मचारिभिः ।

(२२२) सर्वदेशजन्मभिः सर्वदेशीयैः जानपदैः जनपदवासिभिः । सर्वेति सर्वेषाम् अम्भोधीनां समुद्राणां वेलावनानि तीरस्थवनभागाः तेषां वलयं मण्डलं तस्मिन् वसन्तीति तथोक्तैः ।

(२२३) दूतमण्डलैः वार्त्तावहैः उपास्यमानम् आश्रीयमाणम् । सर्वेति सर्वासां प्रजानां निर्म्माणभूमिः सृष्टिक्षेत्रं तामिव प्रजापतीनां स्रष्टॄणाम् ।

लोकत्रयसारोच्चयरचितं चतुर्थमिव लोकं महाभारतशतैरपि (२२५) अकथनीयसमृद्धिसम्भारं कृतयुगसहस्रैरिव (२२६) कल्पितसन्निवेशं स्वर्गार्बुदैरिव विहितरामणीयकं (२२७) राजलक्ष्मीकोटिभिरिव कृतपरिग्रहं राजद्वारम् अगात्।

(२२८) अभ्यजायत च (२२९) अस्य जातविस्मयस्य मनसि कथमिव इदमियत्प्रमाणं प्राणिजातं जनयतां प्रजासृजां न आसीत् (२३०) महाभूतानां वा परिक्षयः परमाणूनां वा (२३१) परिच्छेदः कालस्य वा अन्तः आयुषो वा व्युपरमः आकृतीनां वा परिसमाप्तिः इति। प्रत्यभिज्ञायमेखलकस्तु दूरादेव द्वारपाललोकेन (२३२) प्रत्यभिज्ञाय-

---

(२२४) लोकेति। लोकानां स्वर्गमर्त्त्यपातालानां त्रयं तस्य सारोच्चयः उत्कर्षातिशयः तेन रचितम्। लोकं जगत्।

(२२२५) अकथनीयेति। न कथनीयः अनिर्वचनीय इत्यर्थः समृद्धीनां सम्पदां सम्भारः सञ्चयः यस्य तथोक्तम्। कृतयुगसहस्रैरिव बहुतरसत्ययुगैरिव इत्यर्थः।

(२२६) कल्पितेति। कल्पितः अधिष्ठितः सन्निवेशः स्थानं यस्य तथाभूतम् अनघमिति भावः। स्वर्गार्बुदैरिव अर्बुदसङ्ख्यैः स्वर्गैरिव विहितम् अर्पितं रामणीयकं रम्यत्वं यस्य तथाभूतम्।

(२२७) राजेति। राज्ञां लक्ष्मीकोटयः तैरिव कृतपरिग्रहं कृताश्रयम्।

(२२८) अभ्यजायत उदपद्यत।

(२२९) अस्य बाणस्य। प्राणिजातं जीवसङ्घम्। प्रजासृजां प्रजापतीनाम्।

(२३०) महाभूतानां क्षित्यप्तेजोमरुद्वायूनां उपादानसमवायिकारणभूतानामिति भावः।

(२३१) परिच्छेदः परिसमाप्तिः। व्युपरमः शेषः।

मानः तिष्ठतु तावत् क्षणमात्रम् अत्रैव पुण्यभाक् इति तम् ( २२३ ) अभिधाय अप्रतिहतः पुरं प्राविशत् ।

अथ स मुहूर्त्तादिव ( २२४ ) प्रांशुना कर्णिकारगौरेण ( २२५ ) वीध्रकञ्चुकच्छन्नवपुषा समुन्मिषन्माणिक्यपदकबन्धबन्धुरशस्तबन्धक्षामावलग्नेन ( २२६ ) हिमशैलशिलाविशालवक्षसा ( २२७ ) हरवृषककुदकूटविकटांसतटेन उरसा ( २२८ ) चपलहृषीकहरिणकुलसंयमनपाशमिव हारं बिभ्रता कथय तं यदि सोमवंशसम्भवः सूर्य्यवंशसम्भवो वा भूपतिरभूदेवंविध इति पृष्टुमानीताभ्यां

---

( २२२ ) प्रत्यभिज्ञायमानः सोऽयमिति परिचीयमानः । पुण्यभाक् सौभाग्यवान् भवानिति शेषः ।

( २२३ ) तं बाणम् । अप्रतिहतः अनिवारितः । पुरं राजभवनम् ।

( २२४ ) प्रांशुनेत्यादीनि पुरुषेणेत्यस्य विशेषणानि । अनुगम्यमानः मेखलक इति शेषः अवोचदित्युत्तरेण सम्बन्धः । प्रांशुना उन्नतकायेन कर्णिकारं तदाख्यकुसुमं तद्वत् गौरः तेन ।

( २२५ ) वीध्रेति । वीध्रेण निर्म्मलेन विशदेन इत्यर्थः कञ्चुकेन वर्म्मणा छन्नम् आवृतं वपुः शरीरं यस्य तथाभूतेन । समुन्मिषदिति समुन्मिषत् सम्यग् दीप्यमानं यत् माणिक्यपदकं तस्य बन्धेन ग्रहणेन इति यावत् बन्धुरम् उन्नतानतं तथा शस्तं स्वर्णपट्टिका काञ्चननिर्म्मितकटिसूत्रमिति यावत् तस्य बन्धेन क्षामं क्षीणम् अवलग्नं मध्यं यस्य तेन ।

( २२६ ) हिमेति । हिमशैलो हिमाद्रिः तस्य शिलावत् विशालं वक्षः यस्य तेन ।

( २२७ ) हरेति । हरस्य वृषः तस्य ककुदं तस्य कूटं शिखरं तद्वत् । विकटः समुन्नतः अंसतटः स्कन्धदेशः यस्य तेन । उरसा वक्षःस्थलेन ।

( २२८ ) चपलेति । चपलानि चञ्चलानि हृषीकाणि इन्द्रियाणि हरिणकुलानि इव मृगयूथानि इव तेषां संयमनाय पाशः तमिव । हारं बिभ्रता दधा-

सोमसूर्य्याभ्यामिव श्रवणगताभ्यां मणिकुण्डलाभ्यां समुद्भासमानेन (२३९) वहद्वदनलावण्यविसरवेणिकाक्षिप्यमाणैः अधिकारगौरवाद्दीयमानमार्गैः इव दिनकृतः किरणैः प्रसादलब्धया विकचपुण्डरीकमुण्डमालिकयेव दीर्घया दृष्ट्या दूरादेव आनन्दयता (२४०) नैष्ठुर्य्याधिष्ठानेऽपि प्रतिष्ठितेन पदे प्रश्रयमिव दर्शयता (२४१) अवनम्रेण मौलिना पाण्डुरमुष्णीषमुद्वहता वामेन स्थूलमुक्ताफलच्छुरणदन्तुरत्सरुं करकिसलयेन कलयता कृपाणम् इतरेण (२४२) अपनीत-

---

नेन जितेन्द्रियेण इति गम्यते। तं भूपतिमिति शेषः कथय कीर्त्तय। एवंविधः एतत्सदृशः श्रीहर्षदेवसदृश इति भावः सोमसूर्य्याभ्यामिव चन्द्ररविभ्यामिव। श्रवणगताभ्यां कर्णधृताभ्याम्। समुद्भासमानेन राजता।

(२३९) वहद्दिति। वहतां प्रसरतां वदनलावण्यानां मुखप्रभाणां विसरः विस्तार एव वेणिका स्रोतः तया क्षिप्यमाणाः निराक्रियमाणाः ताड्यमाना इत्यर्थः तैः किन्तु अधिकारस्य दिनकरतया आधिपत्यविशेषस्य गौरवात् सम्मानात् दीयमानो मार्गो येभ्यः तथोक्तैः दिनकृतः सूर्य्यस्य किरणैः कर्त्तृभूतैः प्रसादः प्रसन्नता मार्गदानजनिता प्रीतिरित्यर्थः तेन लब्धा अधिगता तया विकचपुण्डरीकमुण्डमालयेव प्रस्फुटश्वेतपद्मस्रजेव पद्मानां दिनकृत्स्वामिकत्वात् इति भावः दीर्घया महत्या दृष्ट्या आनन्दतया सन्तोषयता।

(२४०) नैष्ठुर्य्याधिष्ठानेऽपि निष्ठुरस्य भावः नैष्ठुर्य्यं तस्य अधिष्ठानम् आस्पदं तस्मिन् पदे अधिकारे द्वारपालनकर्म्मणि इति यावत् प्रतिष्ठितेनापि प्रश्रयमिव विनयमिव दर्शयता प्रकटयता।

(२४१) अवनम्रेण विनतेन मौलिना शिरसा पाण्डुरं धवलम् उष्णीषं शिरोवेष्टनम् उद्वहता धारयता। वामेन करकिसलयेन हस्तपल्लवेन स्थूलानि यानि मुक्ताफलानि मौक्तिकानि तैः तन्मालाभिरिति भावः छुरणं बन्धनं तेन दन्तुरः सञ्जातदन्त इव दृश्यमानः त्सरुः खड्गमुष्टिदेशः यस्य तथाभूतं कृपाणं तलवार कलयता धारयता इव। इतरेण दक्षिणेन इत्यर्थः करेण इति शेषः।

तरलतां ताड़नीमिव लतां शातकौम्भीं वेत्रयष्टिमुन्मृष्टां धारयता पुरुषेण अनुगम्यमानो निर्गत्य अवोचत् एष खलु (२४३) महाप्रतीहाराणामनन्तरश्चक्षुष्यो देवस्य पारियात्रनामा दौवारिकः समनुगृह्णातु एनम् अनुरूपया प्रतिपत्त्या कल्याणाभिनिवेशीति। दौवारिकः समुपसृत्य कृतप्रणामो मधुरया गिरा सविनयम् अभाषत आगच्छत प्रविशत दर्शनाय कृतप्रसादो देव इति। बाणस्तु धन्योऽस्मि यद्देवम् अनुग्राह्यं मां देवो मन्यते इति उक्त्वा तेन उपदिश्यमानमार्गः प्राविशत् अभ्यन्तरम्।

(२४४) अथ वनायुजैः आरट्टजैः काम्बोजैः भारद्वाजैः सिन्धुदेशजैः पारसीकैश्च शोणैश्च श्यामैश्च श्वेतैश्च पिञ्जरैश्च हरिद्भिश्च तित्तिरिकल्माषैश्च (२४५) पञ्चभद्रैश्च मल्लिकाक्षैश्च

---

(२४२) अपनीतेति। अपनीता नाशिता तरलता चापल्यं प्रवेशोद्यतानां जनानामिति भावः यया तथोक्तां वेत्रयष्टिप्रहारभयात् कोऽपि प्रविशन् चापल्यं न करोतीति भावः। ताड़नीं ताड्यतेऽनयेति तां लतां वल्लीमिव शातकौम्भीं काञ्चनीम् उन्मृष्टाम् अतिशयेन विशोधितामित्यर्थः वेत्रयष्टिं वेत्रलताकारदण्डम् इत्यर्थः।

(२४३) महाप्रतीहाराणां प्रधानद्वाररक्षिणाम् अनन्तरः अग्रणीः चक्षुष्यः प्रियदर्शन इत्यर्थः। एनं पारियात्रं दौवारिकम्। अनुरूपया समुचितया प्रतिपत्त्या सम्मानेन कल्याणाभिनिवेशी मङ्गलकामी भवानिति शेषः।

(२४४) अतःपरं तुरगैः आचितां मन्दुरां विलोकयन् इति उत्तरेण सम्बन्धः। तान् तुरगान् विशिनष्टि अथेत्यादिभिः। वनायुजैः वनायुदेशीयैः काम्बोजैः तदाख्यदेशजैः आरट्टजैः आरट्टदेशीयैः भारद्वाजैः भरद्वाजदेशजैः सिन्धुदेशजैः सिन्धुदेशोद्भवैः पारसीकैः पारस्यदेशभवैः शोणैः रक्तवर्णैः श्यामैः कृष्णवर्णैः श्वेतैः शुक्लवर्णैः पिञ्जरैः पिङ्गलैः हरिद्भिः हरिद्वर्णैः घासवर्णैरित्यर्थः तित्तिरिकल्माषैः तित्तिरिः पक्षिविशेषः तद्वत् कल्माषाः विचित्रवर्णाः तैः।

च्छत्तिकापिञ्जरैः च ( २४६ ) आयतनिर्मांसमुखैः अनुत्कट-कर्णकोशैः सुवृत्तश्लक्ष्णसुघटितघण्टिकाबन्धैः ( २४७ ) यूपा-नुपूर्वीवक्रायतोदग्रग्रीवैः ( २४८ ) उपचयश्वयत्स्कन्ध-सन्धिभिः ( २४९ ) निर्भुग्नोरःस्थलैः ( २५० ) अस्थूलप्रगुण-

---

( २४५ ) पञ्चभद्रैः पञ्चसु अङ्गेषु सुखसहितेषु शफेषु चतुर्षु इति भावः भद्राः श्वेता इति पञ्चभद्राः तैः उक्तञ्च। सिताश्च यस्य वाजिनः शफाः समस्तकं मुखम्। स पञ्चभद्रनामको नृपस्य राज्यसौख्यद इति। मल्लिकाचैः पृथुः स्निग्धा समाचैव मल्लिकाकुसुमप्रभा। राजी यस्य तु पर्यन्ते परिस्निग्धे तु लोचने। स हयो मल्लि-काक्षस्तु दृष्टिपर्यन्ततारकं इत्युक्तलक्षणैः। च्छत्तिकापिञ्जरैः तारकाकदम्बककल्मा-नेकविन्दुकल्माषितत्वचः। च्छत्तिकापिञ्जरा इत्युक्तलक्षणैः।

( २४६ ) आयतेति। आयतानि निर्मांसानि प्रायेणास्थिमयानीति भावः सुखानि येषां तथोक्तैः उक्तञ्च तल्लक्षणम्। सुखं तन्वायतनतं चतुरस्रं समा-हितम्। ऋजुचैवोपदिष्टञ्च परिपूर्णञ्च गम्यते इति अनुत्कटकर्णकोशैः अनुत्कटः खर्व इत्यर्थः कर्णः कोशी मध्यञ्च यद्वा कर्णकोशः श्रवणपाशः येषां तैः। सुवृत्तेति सुवृत्तः सुवर्त्तुलः श्लक्ष्णः चिक्कणः सुघटितः सुनिर्मितः घण्टिका क्षुद्रघण्टा वध्यते-ऽनेनेति घण्टिकाबन्धः निगाल इत्यर्थः येषां तथोक्तैः। तादृशनिगालवत्त्वञ्चाश्वानां शुभसूचकम् उक्तं यथा। ग्रीवाशिरोऽन्तरश्लिष्टो दीर्घवृत्तः समाहितः। नीवर्त्ती नाङ्गिती नातिदुर्नाह्यो ऽतिविधानतः। सुदिग्धोऽनुपदिग्धश्च निगाली गदितः शुभ इति।

( २४७) यूपेति। यूपो यज्ञीयद्रव्यभेदः तस्येवानुपूर्वी आनुरूप्यमित्यर्थः तया वक्रा आयता दीर्घा उदग्रा उन्नता ग्रीवा येषां तैः।

( २४८ ) उपचयेति। उपचयेन श्वयन् स्फीततां गच्छन् स्कन्धसन्धिर्येषां तैः तदुक्तम्। स्कन्धः सुपरिपूर्णः स्यात् व्यक्तमांसः पृथुत्रिकः। बहुमांसाङ्गसंश्लिष्टः स्थिरमांसश्च पूरित इति।

( २४९ ) निर्भुग्नेति। निर्भुग्नं स्थूलतया बहिर्निर्गतम् उरःस्थलं वक्षःस्थलं येषां तैः उक्तञ्च। स्थूलास्थिमहदच्छिद्रं पृथुलं यस्य निर्वलि। उर ईदृक् प्रश-सन्ति स्थूलक्रोडं महत्तरमिति।

प्रसृतैः (२५१) लोहपीठकठिनखुरमण्डलैः (२५२) अतिजवत्रुटनभयात् अनिर्मितान्त्राणीव उदराणि वृत्तानि धारयद्भिः (२५३) उद्यद्द्रोणीविभज्यमानपृथुजघनैः (२५४) जगतीदोलायमानवालपल्लवैः कथमपि उभयतो (२५५) निखातदृढभूरिपाशसंयमननियन्त्रितैः (२५६) अनायतैः अपि पश्चात् पाशबन्धप्रसारितैकाङ्घ्रिभिः आयततरैरिव उपलक्ष्यमाणैः (२५७) बहुगुणसूत्रग्रथितग्रीवागण्डकैः आमीलल्लोचनैः (२५८) दूर्वारसश्यामलफेन-

---

(२५०) अस्थूलेति। अस्थूला स्वल्पमांसेत्यर्थः प्रगुणा ऋजु प्रसृता जङ्घा येषां तैः उक्तञ्च। जङ्घे वृत्ते दीर्घे निर्मांसे पूजिते इति।

(२५१) लोहेति। लोहपीठवत् कठिनं खुरमण्डलं मण्डलाकारखुरचतुष्टयं येषां तैः तदुक्तम्। खुरास्तुरगे वृत्ताश्च कृष्णाश्च सुदृढा घना इति।

(२५२) अतिजवेति। अतिजवेन अतिवेगेन यत् त्रुटनं छेदः तस्मात् भयं तस्मात् हेतोः अनिर्मितानि अन्त्राणि येषु तथोक्तानि इव वृत्तानि वर्त्तुलानि उदराणि धारयद्भिः।

(२५३) उद्यदिति। उद्यती उदयमाना द्रोणी शोभा तया विभज्यमानानि व्यक्तीक्रियमाणानि पृथूनि जघनानि कटिपुरीभागाः येषां तैः तदुक्तम्। पृष्ठोरः कटिपार्श्वस्थ मांसोत्कर्षणनिर्मिता द्रोणिकेति प्रशंसन्ति शोभा वाजिनि पञ्चमी इति।

(२५४) जगतीति। जगत्यां भूमौ दोलायमानाः वालाः पुच्छलोमानि पल्लवा इव येषां तैः।

(२५५) निखातेति। उभयतः उभयोः पार्श्वयोः निखातः प्रोतः अत्युत्कटवेगवत्त्वादिति भावः दृढः कठिनः भूरिः प्रभूतः पाशः रज्जुः तेन संयमनं बन्धनं तेन नियन्त्रिताः निरुद्धाः तैः।

(२५६) अनायतैरपि पाशबन्धनियन्त्रणात् अविस्तृतावयवैरपि इत्यर्थः पश्चात् पार्श्वबन्धेऽपि प्रसारिता विसारिता एके अङ्घ्रयः पादाः येषां तैः अतएव आयततरैरिव अतिदीर्घकायैरिव उपलक्ष्यमाणैः दृश्यमानैः।

लवशबलान् दशनगृहीतमुक्तान् फरफरितत्वचः कण्डूजुषः प्रतीकान् प्रचालयद्भिः (२५९) सालसवलितबालधिभिः (२६०) एकशफविश्रान्तिस्रस्तशिथिलितजघनार्द्धैः निद्रया प्रध्यायद्भिः (२६१) स्खलितहुङ्कारमन्दमन्दशब्दायमानैः च (२६२) ताड़ितखुरधरणिरणितमुखरशिखरखुरलिखितक्ष्मा-तलैः घासमभिलषद्भिश्च (२६३) प्रकीर्य्यमाणयवसग्रासरसम-त्सरोद्भूतक्षोभैः च (२६४) प्रकुपितचण्डचण्डालहुङ्कार-

---

(२५७) बद्धगुणेति। बद्धगुणैः सूत्रैः ग्रथितः गुम्फितः ग्रीवासु मस्तकः मृगमणिः येषां तैः। आमीलल्लोचनैः आमीलितनेत्रैः।

(२५८) दूर्वेति दूर्वारसवत् श्यामा ये फेनलवाः फेनबिन्दवः तैः शबलान् चित्रितान् दशनैर्दन्तैः गृहीताः आदौ धृताः पश्चात् मुक्ताः त्यक्ताः तान् फरफरिताः कम्पिताः त्वचः येषां तान् कण्डूजुषः कण्डूतिशालिनः प्रतीकान् अङ्गानि प्रचालयद्भिः कम्पयद्भिः।

(२५९) सालसेति। सालसं लघु यथा तथा वलितावलिताः कम्पिता इत्यर्थः बालधयः पुच्छलोमानि येषां तैः।

(२६०) एकशफेति। एकेन शफेन खुरेण या विश्रान्तिः स्थितिरिति यावत् तया स्रस्तं पर्य्यस्तं शिथिलितं जघनार्द्धं येषां तैः। प्रध्यायद्भिः प्रकर्षेण चिन्तयद्भिः।

(२६१) स्खलितेति। स्खलितेन अर्द्धोच्चरितेनेति यावत् हुङ्कारेण मन्दमन्दं यथा तथा शब्दायमानैः नदद्भिः।

(२६२) ताड़ितेति। ताड़िता प्रहृता या खुरधरणिः खुराधःकाष्ठपट्टा-श्रिता भूः तस्या रणितेन नादेन मुखरं रणनादित्यर्थः शिखरम् अग्रं येषां तादृशाः ये खुराः तैः लिखितं कुट्टितं क्ष्मातलं भूतलं यैः तथाविधैः।

(२६३) प्रकीर्य्यमाणेति प्रकीर्य्यमाणः प्रक्षिप्यमाणो यवसग्रासः घासकवलः तस्य रसे स्वादे यो मत्सरः अश्वतुरगान् प्रति विद्वेषः अन्यः कोऽपि तदग्रासं नाश्नातु इत्यनिष्टि चिन्तेति भावः तेन उद्भूतः जनितः क्षोभः अधैर्य्यमित्यर्थः येषां तैः।

कातरतरतरलतारकैश्च (२६५) कुङ्कुमप्रमृष्टिपिञ्जराङ्गतया (२६६) सततसन्निहितनीराजनानलरक्ष्यमाणैः इव उपरि (२६७) विततवितानैः (२६८) पुरःपूजिताभिमतदेवतैः भूपालवल्लभैः तुरङ्गैः आचितां मन्दुरां विलोकयन् (२६९) कुतूहलाक्षिप्तहृदयः किञ्चित् अन्तरम् अतिक्रान्तो हस्तवामेन (२७०) अत्युच्चतया निरवकाशमिव आकाशं कुर्वाणं महता कदलीवनेन परिवृतपर्य्यन्तं सर्वतो मधुकरमयीभिः मदस्रुतिभिः नदीभिरिव आपतन्तीभिः आपूर्य्यमाणम् (२७१) आशामुखविस-

(२६४) प्रकुपितेति। प्रकुपितः क्रुद्धः अतएव चण्डः उग्रः यः चण्डालः अश्वपाल इति यावत् तस्य हुङ्कारेण कातरतरा अतिदीना तरलाः चञ्चलाः तारकाः कनीनिका येषां तैः।

(२६५) कुङ्कुमेति। कुङ्कुमैः प्रमृष्टिः प्रमार्जनं तेन पिञ्जराणि पिङ्गलानि अङ्गानि येषां तद्भावः तत्ता तया हेतुना।

(२६६) सततेति। सततं निरन्तरं सन्निहितेन संसक्तेन इत्यर्थः नीराजनानलेन याचायां वाजिनां नीराजना क्रियते इति शास्त्रात् नीराजनाग्निना रक्ष्यमाणाः तैरिव।

(२६७) विततेति। विततः विस्तृतः वितानः उल्लोचः येषां तैः।

(२६८) पुर इति। पुरः अग्रतः पूजिता अभिमता अभीष्टा देवता येषां तैः। भूपालवल्लभैः राजप्रियैः। आचितां व्याप्तां मन्दुराम् अश्वशालां वाजिशाला तु मन्दुरेत्यमरः। विलोकयन् पश्यन्।

(२६९) कुतूहलेति। कुतूहलेन औत्सुक्येन आक्षिप्तम् आकृष्टं हृदयं यस्य तथाभूतः अतिक्रान्तः गतः। हस्तवामेन हस्तस्य वामभागेन इत्यर्थः।

(२७०) अत्युच्चतया अत्युन्नततया निरवकाशमिव अवकाशशून्यमिव अवरुद्धमिति भावः परिवृतपर्य्यन्तं वेष्टितप्रान्तं मधुकरमयीभिः भृङ्गव्याप्ताभिः मदस्रुतिभिः हस्तिनां दानवारिनिस्रवैरित्यर्थः आपतन्तीभिः आवहन्तीभिः।

(२७१ आशामुखविसर्पिणा दिक्षु खविसारिणा विकसता प्रस्फुटताम्।

पिणा वकुलवनानामिव विकसताम् आमोदेन लिम्पन्तं घ्राणेन्द्रियं दूरात् अव्यक्तम् इभधिष्ण्यागारम् अपश्यत् अपृच्छच्च अत्र देवः किं करोतीति। असौ अकथयत् एष खलु देवस्य उपवाह्यो बाह्यं हृदयं जात्यन्तरित आत्मा वहिश्चराः प्राणाः (२७२) विक्रमक्रीड़ासुहृत् दर्पशात इति यथार्थनामा (२७३) वारणपतिः तस्य अवस्थानमण्डपोऽयं महान् दृश्यत इति। स तम् अवादीत् भद्र! श्रूयते दर्पशातः यदि एवम् अदोषो वा पश्यामि तावत् वारणेन्द्रमेव अतोऽर्हसि माम् अत्र प्रापयितुम् (२७४) अतिपरवान् अस्मि कुतूहलेन इति। सोऽभाषत भवतु एवम् आगच्छतु भवान् को दोषः पश्यतु तावत् वारणेन्द्रमिति।

गत्वा च तं प्रदेशं दूरात् एव (२७५) गम्भीरगल-

---

आमोदेन सौरभेण लिम्पन्तं पूरयन्तम्। धिष्ण्यागारं वासमन्दिरम्। असौ दौवारिकः। उपवाह्यः क्रीड़ाहस्ती बाह्यं वहिश्चरम्। जात्यन्तरितः अन्यां जातिं गतः। वहिश्चराः वाह्याः।

(२७२) विक्रमेति। विक्रम एव क्रीड़ा तस्याः सुहृत् सहायः। दर्पशातः दर्पम् अहङ्कारं शत्रूणामिति शेषः शातयति नाशयति तथोक्तः। यथार्थनामा अन्वर्थनामा शत्रूणां दर्पशातनादिति भावः।

(२७३) वारणपतिः गजेन्द्रः। तस्य वारणपतेः अवस्थानमण्डपः वासस्थानम्। स वाणः। तं दौवारिकम्। यदि एवं दर्पशात इत्यन्वर्थनामेति भावः अदोषो वा दर्शने दोषो न भवेद वा तर्हि। अत्र वारणपतेः स्थाने प्रापयितुं नेतुम्।

(२७४) अतिपरवान् अतिशयेन पराधीनः कुतूहलेन वारणपतेर्दर्शनौत्सुक्येन। स दौवारिकः। दर्पशातमपश्यत् इत्युत्तरेणान्वयः तमेव विशिनष्टि गम्भीरेत्यादिभिः।

गर्जिताजिंतैः वियति चातककदम्बकैः २७६ ) भुवि च भवननीलकण्ठकुलैः कलकेकाकलकलमुखरमुखैः क्रियमाणकलकोलाहलं २७७ ) विकचकदम्बसंवादिमदसुरासौरभभरितभुवनं ( २७८ ) कायवन्तमिव अकालमेघकालम् ( २७९ ) अविरलमधुविन्दुपिङ्गलपद्मजालकितां सरसीमिव अभ्यवगाढ़ां दशां चतुर्थीम् उत्सृजन्तम् ( २८० ) अनवरतम् अवतंसशङ्खैः आमन्द्रकर्णतालदुन्दुभिध्वनिभिः पञ्चमीप्रवेशमङ्गलारम्भमिव गायन्तम् ( २८१ )

---

( २७५ ) गम्भीरेण गलगर्जितेन कण्ठनिनादेन अर्जितानि उपस्थापितानि मेघगर्जनविधेति भावः तैः । वियति आकाशे चातकानां कदम्बकानि सङ्घाः तैः ।

( २७६ ) भुवि भूतले भवननीलकण्ठकुलैः गृहमयूरवृन्दैः कला मधुररवाः केका मयूरवाचः तासां कलकलेन कोलाहलेन मुखराणि मुखानि येषां तैः क्रियमाणः कलः मधुरास्फुटः कोलाहलः यत्र तथोक्तम् ।

( २७७ ) विकचेति विकचानां प्रस्फुटानां कदम्बानां संवादी अनुकारी यो मदः दानवारि स एव सुरा मद्यं तस्याः सौरभेण भरितं पूरितं भुवनं येन तथोक्तम् ।

( २७८ ) कायवन्तमिव मूर्त्तिमन्तमिव अकालमेघकालम् असमयमेघसमयम् ।

( २७९ ) अविरलेति । अविरला घनाः ये मधुविन्दवः मदवारिकणाः तैः पिङ्गलं पिञ्जरं पद्मानां पद्माकाराणां जालकं समूहः जातमस्यामिति तथोक्ताम् इतीऽस्यजाते इतीतच्प्रत्ययः अतएव सरसीमिव अभ्यवगाढ़ां परिणतां चतुर्थीं दशां मदावस्थाम् उत्सृजन्तं त्यजन्तं मदस्राविणां हस्तिनां प्रथमं शरीरार्धैर्य्यसम्पादको मदस्रावारम्भः प्रथमावस्था ततोऽनवरतस्रावो द्वितीयावस्था तदनु मदवारिणाम् अङ्गेषु क्रमशो गाढ़ता जायते सा तृतीयावस्था तदनन्तरम् अङ्गेषु पद्माकाराणि मदविन्दुजालानि बध्यन्ते सा चतुर्थी अवस्थेति बोध्यम् ।

( २८० ) अनवरतम् अविरतम् आमन्द्रः ईषद्गम्भीरः कर्णतालस्य दुन्दुभेरिव ध्वनिर्येषां तथाभूतैः अवतंसशङ्खैः कर्णभूषणीकृतशङ्खैः पञ्चमी दशेति भावः

अविरतचलनचित्रत्रिपदीललितलास्यलयैः ( २८२ ) दोला-यमानदीर्घदेहाभोगतया ( २८३ ) मेदिनीविदलनभयेन भारमिव लघयन्तं ( २८४ ) दिग्भित्तितटेषु कायमिव कण्डूयमानम् आहवाय उदस्तहस्ततया दिग्वारणानिव आह्वयमानं ( २८५ ) ब्रह्मस्तम्भमिव स्थूलनिशितदन्तेन करपत्रेण पाटयन्तम् अमान्तं ( २८६ ) भुवनाभ्यन्तरे वहिः इव निर्गन्तुम् ईहमानं सर्वतः सरसकिसलयलता-लासिभिः लेशिकैः चिरपरिचयोपचितैः वनैरिव ( २८७ )

---

स्वास्थ्यदर्शीति यावत् तस्यां प्रवेशः तस्मिन् मङ्गलारम्भः मङ्गलसूचनारम्भसङ्गीत-मित्यर्थः तमिव गायन्तं सङ्कीर्त्तयन्तम्।

( २८१ ) अविरतेति। अविरतेन अविश्रान्तेन चलनेन चापल्येनेत्यर्थः चित्रा सुदृश्या या त्रिपदी पादबन्धनी तस्यां ललितं सुन्दरं मनोज्ञमित्यर्थः यत् लास्यं नृत्यं तस्य लयः क्रीड़नविशेषः तेन।

( २८२ ) दोलायमानेति। दोलायमानः प्रेङ्खन् दीर्घः महान् देहस्य आभोगः विस्तारः यस्य तद्भावः तत्ता तया हेतुना।

( २८३ ) मेदिनीति। मेदिन्याः पृथिव्याः विदलनं विदारणमित्यर्थः तस्मात् भयं तेन भारमिव लघयन्तम् लघूकुर्वन्तमित्यर्थः।

( २८४ ) दिगिति। दिगेव भित्तिः कुड्यं तस्य तटाः आभोगाः तेषु। कायमिव अङ्गमिव कण्डूयमानं कषन्तमित्यर्थः आहवाय संग्रामाय। उदस्तः उत्-क्षिप्तः हस्तः शुण्डः येन तस्य भावः तत्ता तया हेतुना दिग्वारणान् दिग्गजान् आह्वयमानमिव आकारयन्तमिव।

( २८५ ) ब्रह्मस्तम्भं ब्रह्माण्डं स्थूलः निशितः तीक्ष्णः दन्तः तेन करपत्रेण ककचेन पाटयन्तमिति दारयन्तमिव।

( २८६ ) भुवनाभ्यन्तरे अमान्तं पर्य्याप्तुमलभमानं अतएव वहिः भुवना-भ्यन्तराद् बाह्यदेशे निर्गन्तुम् ईहमानमिव चेष्टमानमिव सरसाः रसयुक्ताः किस-लयाः पल्लवा यासां तथाविधाः या लताः व्रतत्यः ताभिः लसन्ति राजन्तीति

विच्छिप्तसशैवलविसविसरशवलसलिलैः सरोभिरिव च (२८८) आधोरणैः आधीयमाननिदाघसमयसमुचितोपचारानन्दम् अपिच (२८९) प्रतिगजदानपवनादानदूरोत्च्छिप्तेन (२९०) अनेकसमरविजयगणनालेखाभिरिव बलिवलयराजिभिः तनीयसीभिः तरङ्गितोदरेण अतिस्थवीयसा हस्तार्गलदण्डेन अर्गलयन्तमिव सकलं सकुलशैलसमुद्रद्वीपकाननं ककुभां चक्रवालम् एकं (२९२) करान्तरार्पितेन उत्पलाग्रेन कदलीदण्डेन अन्तर्गतशीकरसिच्यमानमूलं (२९३) मुक्तपल्लवम् इव अपरं लीलावलम्बिना

---

तथोक्तैः लेभिकैः घासिकैः चिरपरिचयेन चिरानुगत्या उपचितैः समाहृतै र्घनैरिव मेघैरिव।

(२८७) विच्छिप्तेति। विच्छिप्तानि अर्पितानि सशैवलानां विसानां मृणालानां विसरेण विस्तरेण शवलानि मिश्राणि सलिलानि यैः तथाभूतैः।

(२८८) आधोरणैः हस्तिपालैः आधीयमानः उत्पाद्यमानः निदाघसमयस्य ग्रीष्मकालस्य समुचितेन उपचारेण परिचर्य्यया आनन्दः सन्तोषः यस्य तम्।

(२८९) प्रतिगजेति। प्रतिगजानां प्रतिद्वन्द्विहस्तिनां दानपवनस्य मदसौरभवाहिनो मरुत इत्यर्थः आदानेन ग्रहणेन सेवनेनेत्यर्थः दूरं यथा तथा उत्च्छिप्तः उद्धृतः तेन तेषां जिगीषयेति भावः।

(२९०) अनेकेति। अनेकेषां बहूनां समराणां संग्रामाणां विजयाः तेषां गणना संख्यानं तस्य लेखाभिरिव लिपिभिरिव वलिवलयराजिभिः वलयाकारवलिश्रेणीभिः तनीयसीभिः अतिक्षुद्राभिरित्यर्थः।

(२९१) तरङ्गितं भङ्गिमत् उदरम् अभ्यन्तरभागः यस्य तथोक्तेन अतिस्थवीयसा अतिस्थूलेन हस्तार्गलदण्डेन शुण्डरूपार्गलदण्डेन अर्गलयन्तमिव निरुन्धन्तमिव ककुभां चक्रवालं दिङ्मण्डलम्। एकं दन्तकाण्डमित्यन्वयः।

(२९२) करान्तरार्पितेन करस्य शुण्डस्य अन्तरे मध्ये अर्पितः दत्तः आधीरणेनेति भावः तेन उत्पलाग्रेण उद्गतपत्रेण कदलीदण्डेन रम्भास्तम्भेन हेतुना अन्तर्गतैः शीकरैः अम्बुकणैः सिच्यमानं मूलं यस्य तथोक्तम्।

मृणालजालकेन (२९४) समररसोच्चरोमाञ्चकण्टकित-
मिव दन्तकाण्डं वहन्तम् विसर्पन्त्या च दन्तकाण्डयुगल-
कस्य कान्त्या (२९५) सरःक्रीडास्वादितानीव कुमुद-
वनानि बहुधा वमन्तं निजयशोराशिमिव दिशाम् अर्प-
यन्तं (२९६) कुकरिकीटपाटनदुर्ललितान् सिंहानिव
उपहसन्तं (२९७) कल्पद्रुमदुकूलमुखपटमिव च आत्मनः
कलयन्तं (२९८) हस्तकाण्डदण्डोद्धरणलीलासु च लक्ष्य-
माणेन रक्तांशुकसुकुमारतलेन तालुना कवलितानि रक्त-
पद्मवनानि इव वर्षन्तम् (२९९) अभिनवकिसलयराशी-
निव उद्गिरन्तं कमलकवलपोतं मधुरसमिव स्वभावपिङ्गलेन

---

(२९३) मुक्तापल्लवमिव मुक्ताफलकिसलयमिव अपरं दन्तकाण्डमित्यनु-
षङ्गः। लीलया अवलम्बते इति तथोक्तेन मृणालजालकेन मृणालनिचयेन।

(२९४) समरेति। समरे युद्धे यो रसः रागः तेन उच्चाः उद्गताः रोमाञ्चा
एव कण्टकाः जाता अस्येति तथोक्तं दन्तकाण्डं दशनस्तम्बं वहन्तं दधानम्।
विसर्पन्त्या विसरन्त्या दन्तकाण्डयुगलस्य कान्त्या प्रभया।

(२९५) सरःक्रीडेति। सरसि या क्रीडा विहारः तत्र आस्वादितानि
भक्तानि तानीव कुमुदवनानि कैरवखण्डान् बहुधा अनेकधा वमन्तम् उद्गिरन्तम्।
निजयशोराशिमिव स्वीयं कीर्त्तिसमूहमिव दिशाम् अर्पयन्तं दिक्षु विक्षिपन्तम्।

(२९६) कुकरीति। कुत्सिता दुर्बला इति यावत् करिणः हस्तिनः ते एव
कीटाः क्षुद्रप्राणिभेदाः तेषां पाटनेन संहननेन दुर्ललिताः दृप्ताः तान्।

(२९७) कल्पद्रुमेति। कल्पद्रुमस्य दुकूलं श्वेतपट्टवसनं तदेव मुखपटः
मुखाच्छादनवस्त्रं तमिव आत्मनः स्वस्य कल्पयन्तं धारयन्तमित्यर्थः।

(२९८) हस्तेति। हस्तः शुण्ड एव काण्डदण्डः स्तम्भयष्टिः तस्य उद्धर-
णानि उत्तोलनान्येव लीलाः तासु लक्ष्यमाणेन दृश्यमानेन रक्तांशुकसुकुमारतलेन
रक्तवस्त्रसुकोमलतलेन तालुना तालुदेशेन हेतुना कवलितानि भक्षितानि वर्षन्तं
वमन्तम्।

वमन्तं चक्षुषा चूतचम्पकलवलीलवङ्गकक्कोलवन्ति एलालतामिश्रितानि ससहकाराणि कर्पूरपूरपूरितानि पारिजातकवनानीव उपभुञ्जानि ( २०० ) पुरः करटाभ्यां बहलमदामोदव्याजेन विसृजन्तम् अहर्निशं ( २०१ ) विभ्रमकृतहस्तस्थितिभिः अर्द्धखण्डितपुण्ड्रेक्षुकाण्डकण्डूयनलिखितैः अलिकुलवाचालितैः दानपट्टकैः विलभमानमिव सर्वकाननानि करिपतीनाम् ( २०२ ) अविरलोदविन्दुस्यन्दिना हिमशिलाशकलमयेन विभ्रमनक्षत्रमालागुणेन शिशिरीक्रियमाणं ( २०३ ) सकलवारणेन्द्राधिपत्यपट्ट-

---

( २९९ ) अभिनवकिसलयराशीनिव नवपल्लवनिवहानिव । स्वभावपिङ्गलेन सहजपिञ्जरेण चक्षुषा कमलानां कवलेन ग्रासेन पीतं मधुरसमिव मकरन्दमिव वमन्तं वर्षन्तम् ।

( ३०० ) पुरः अग्रतः करटाभ्यां गण्डाभ्यां बहलमदामोदव्याजेन प्रभूतदानवारिसौरभच्छलेन चूतचम्पकलवलीलवङ्गकक्कोलवन्ति एलालतामिश्रितानि ससहकाराणि अतिसौरभाम्राणि आम्रः चूतो रसालोऽसौ सहकारोऽतिसौरभ इत्यमरः । कर्पूरपूरपूरितानि पारिजातकवनानि विसृजन्तमिव वमन्तमिव ।

( ३०१ ) विभ्रमेति । विभ्रमेण कृता हस्ते शुण्डे स्थितिः यैः तादृशैः । अर्द्धेति अर्द्धं खण्डितः पुण्ड्रेक्षुकाण्डः इक्षुविशेषकाण्डः तेन यत् कण्डूयनं तेन लिखितानि कृतलेखानि तैः अलिकुलैः भ्रमरवृन्दैः वाचालितानि मुखरितानि तैः दानपट्टकैः दानस्यन्दपत्रैः करिपतीनां गजेन्द्राणां सर्वकाननानि विलभमानमिव स्ववशीक्रियमाणमिव ।

( ३०२ ) अविरलेति । अविरलम् अजस्रम् उदविन्दुस्यन्दिना जलकणस्राविणा हिमशिलाशकलमयेन चन्द्रकान्तमयेन विभ्रमनक्षत्रमालागुणेन विभ्रमाय शोभार्थमित्यर्थः या नक्षत्राणां मालेव इति नक्षत्रमाला सप्तविंशतिमणिनिर्मितो हारविशेषः सा एव गुणः पाशः तेन शिशिरीक्रियमाणं शीतलीक्रियमाणम् ।

( ३०३ ) सकलेति । सकलानां वारणेन्द्राणां हस्तीन्द्राणाम् आधिपत्य

बन्धबन्धुरम् इव उच्चैस्तरां शिरो दधानं मुहुर्मुहुः (२०४) स्थगितापावृतदिङ्मुखाभ्यां कर्णतालवृन्ताभ्यां वीजयन्त-मिव भर्त्तृभक्त्या दन्तपर्य्यङ्किकास्थितां राजलक्ष्मीम् (२०५) आयतवंशक्रमागतेन गजाधिपत्यचिह्नेन चामरेणेव चलता वालधिना विराजमानं (२०६) स्वच्छशिशिर-शीकरच्छलेन दिग्विजयपीताः सरित इव पुनः पुनः मुखेन मुञ्चन्तं क्षणम् (२०७) अवधानदाननिस्पन्दीकृतसकला-वयवानाम् अन्यद्विरदडिण्डिमाकर्णनवलनानाम् अन्ते

---

प्रभुत्वं तस्य पट्टबन्धः तत्सूचकलेख्यपत्रग्रहणमिति यावत् तेन बन्धुरमिव शोभमान-मिव उच्चैस्तराम् अतिशयेन उच्चं शिरः मस्तकं दधानं धारयन्तं तच्च करिणः प्राशस्त्यमुक्तं यथा। समं महच्च पूर्णञ्च नातिलम्बोच्चमस्तकम्। नावाग्रं नाति पृथुलं वितानावग्रहं त्वहिति।

(२०४) स्थगितेति। स्थगितम् आच्छादितम् अपावृतं प्रकटितञ्च दिङ्मुखं याभ्यां तथाविधाभ्यां कर्णतालवृन्ताभ्यां कर्णाविव तालवृन्ते ताभ्यां दन्तेति दन्त एव पर्य्यङ्किका क्षुद्रपर्य्यङ्कः तत्र स्थिता तां राजलक्ष्मीं राजश्रियं वीजयन्तमिव इत्यन्वयः।

(२०५) आयतेति। आयतो दीर्घः वंशः पृष्ठदण्ड इति यावत् तस्य क्रमेण आनुपूर्व्या आगतः उत्थितः तेन। आयतवंशो वक्रवंशः शरवंशो बालवंशश्चेति चतुर्षु आयतवंशस्यैव प्राशस्त्यमुक्तं यथा। यावत् पूरितपार्श्वश्च वंशश्चापलताकृतिः। शुभो ज्ञेयो गजेन्द्राणाम् आयतः कुरुते सुखमिति गजाधिपत्यं तस्य चिह्नं लक्षणं तेन बालधिना पुच्छेन विराजमानं शोभमानम्।

(२०६) स्वच्छेति। स्वच्छानां विशदानां शिशिराणां शीतलानां शीक-राणाम् अम्बुकणानां छलं तेन दिशां विजये विजयकाले पीताः याः सरित नदीः। मुञ्चन्तं त्यजन्तम्।

(२०७) अवधानेति। अवधानस्य मनोनिवेशस्य दानेन मनोनिवेशेन अन्य-द्विरदडिण्डिमश्रवणेन इति भावः निस्पन्दीकृता निश्चलीकृताः सकला अवयवाः तेषाम् अन्येषाम् द्विरदानां गजानां डिण्डिमाकर्णने या वलना चालना तदस-

दीर्घशीत्कारैः परिभवदुःखमिव आवेदयन्तम् (३०८) अलब्धयुद्धमिव आत्मानम् अनुशोचन्तम् ( ३०९ ) आरोहाधिरूढ़िपरिभवेण लज्जमानमिव अङ्गुलीलिखितमहीतलं मदं मुञ्चन्तम् ( ३१० ) अवज्ञागृहीतमुक्तकवलकुपितारोहारटनानुरोधेन ( ३११ ) मदतन्द्रीनिमीलितनेत्रत्रिभागं कथं कथमपि मन्दमन्दम् अनादरात् आददानं कवलान् ( ३१२ ) अवजग्धतमालपल्लवस्रुतश्यामलरसेन प्रभूततया मदप्रवाहमिव मुखेनापि उत्सृजन्तं ( ३१३ ) दलन्तमिव दर्पेण श्वसन्तमिव शौर्य्येण मूर्च्छन्तमिव मदेन तुष्यन्तमिव तारुण्येन द्रवन्तमिव दानेन वलान्तमिव बलेन

---

हिष्णुतया इति भावः तासाम् अन्ते अवसाने दीर्घशीत्कारैः दीर्घफूत्कारैः इति पाठान्तरम् परिभवदुःखमिव पराजयव्यलीकमिव आवेदन्तं प्रकटयन्तम् ।

( ३०८ ) अलब्धेति । न लब्धं युद्धं येन तथोक्तमिव ।

( ३०९ ) आरोहेति । आरोहस्य आरोहिण इत्यर्थः अधिरूढ़िः अधिरोहणं सैव परिभवः तेन लज्जमानमिव अङ्गुलीभिर्लिखितं महीतलं भूतलं येन तथोक्तम् । लज्जितानां भूलेखनं विनोद इति भावः ।

( ३१० ) अवज्ञेति । अवज्ञया अवहेलया आदौ गृहीताः पश्चात् मुक्ताः त्यक्ताः कवलाः तैः कुपितो आरोहः हस्तिपकः तस्य आरटनानुरोधेन निर्बन्धातिशयेन इत्यर्थः ।

( ३११ ) मदेन या तन्द्री आलस्यं तया निमीलितः नेत्रयोः त्रिभागः क्वचित् सङ्ख्यावाचिनामपि पूरणार्थत्वमिति न्यायात् तृतीयो भाग इत्यर्थः यस्मिन् तद् यथा तथा कवलान् ग्रासान् आददानं गृह्णन्तम् ।

( ३१२ ) अवजग्धेति । अवजग्धानां खादितानां तमालपल्लवानां स्रुताः निर्गलिताः श्यामलाः रसा यस्मात् तथोक्तेन मुखेन प्रभूततया प्राचुर्य्येण मदप्रवाहमिव दानवारिस्रोत इव उत्सृजन्तं मुञ्चन्तम् ।

( ३१३ ) दलन्तमिव स्वयं भिद्यमानमिव । श्वसन्तमिव जीवन्तमिव । तुष्यन्त-

माद्यन्तमिव मानेन ( २१४ ) उद्यन्तमिव उत्साहेन ताम्यन्तमिव तेजसा लिम्पन्तमिव लावण्येन सिञ्चन्तमिव सौभाग्येन स्निग्धं नखेषु परुषं रोमविषये गुरुं मुखे सश्लिष्टं विनये मृदुं शिरसि दृढ़ं परिचयेषु ह्रस्वं स्कन्धबन्धे दीर्घम् आयुषि दरिद्रम् उदरे सततप्रवृत्तं ( २१५ ) दाने बलभद्रं मदलीलासु कुलकलत्रम् आयत्ततासु जिनं क्षमासु वह्निवर्षं क्रोधमोक्षेषु गरुड़ं नागोद्धृतिषु ( २१६ ) नारदं कलहकुतूहलेषु शुष्काशनिपातम् अवस्कन्देषु मकरं वाहिनीक्षोभेषु ( २१७ ) आशीविषं दशनकर्मसु वरुणं हस्तपाशाकृष्टिषु यमवागुराम् अरातिसंवेष्टनेषु ( २१८ ) कालं परि-

---

मिव स्खलन्तमिव। द्रवन्तमिव गलन्तमिव दानेन मदेन। वल्गन्तं विचेष्टमान-
मव। माद्यन्तमिव मत्ततां प्रकटयन्तमिव।

( २१४ ) उद्यन्तमिव उदयमानमिव। ताम्यन्तमिव क्लिश्यन्तमिव। गुरुं महान्तम्। सश्लिष्टं सुशीलं श्लिष्टम्। मृदुं कोमलम्। परिचयेषु अवयवेषु। दरिद्रं खर्वमित्यर्थः।

( २१५ ) दाने मदवारिस्रावे इत्यर्थः अथच दाने त्यागे। बलभद्रं बलरामम्। कुलकलत्रं कुलाङ्गनाम्। आयत्ततासु वाध्यतासु। जिनं बौद्धसन्यासिनम्। वह्निवर्षम् अग्निवृष्टिम् क्रोधमोक्षेषु कोपप्रसरेषु नागोद्धृतिषु नागानां प्रतिपक्षहस्तिनां सर्पाणाञ्च उद्धृतिषु निपातनेषु।

( २१६ ) नारदं देवर्षिं नारं जलं ददातीति तथोक्तञ्च कलहकुतूहलेषु विवादकौतुकेषु युद्धव्यापारेषु च। शुष्काशनिपातं वृष्टिं विना वज्रपतनम् अवस्कन्देषु शत्रूणाम् आक्रमणेषु। मकरं जलजन्तुभेदं वाहिनीक्षोभेषु शत्रुसेनादलनेषु नद्युद्वेलकरणेषु।

( २१७ ) आशीविषं सर्पं दशनकर्मसु दन्तव्यापारेषु। वरुणं जलाधिपतिं हस्त एव पाशः हस्तपाशः हस्ते पाशश्च तेन आकृष्टयः आकर्षणानि तासु। यमवागुरां यमस्य वागुरा प्राणिबन्धनजालं ताम् अरातिसंवेष्टनेषु शत्रुसमाक्रमणेषु।

गतिषु राहुं तीक्ष्णकरग्रहणेषु लोहिताङ्गं वक्रचारेषु (३१९) अलातचक्रं मण्डलभ्रान्तिविज्ञानेषु मनोरथसम्पादकं चिन्तामणिपर्वतं विक्रमस्य (३२०) दन्तमुक्ताशैलस्तम्भं निवासप्रासादम् अभिमानस्य (३२१) घण्टाचामरमण्डनमनोहरम् (३२२) इच्छासञ्चरणविमानं मनस्वितायाः (३२३) मदधारादुर्दिनान्धकारं गन्धोदकधारागृहं क्रोधस्य (३२४) सकाञ्चनप्रतिमं मद्यानिकेतनम् अहङ्कारस्य (३२५) सगण्डशैलप्रस्रवणं क्रीड़ापर्वतम् अव-

---

(३१८) कालं यमं कृष्णवर्णञ्च परिणतिषु अन्तकर्म्मसु। तीक्ष्णकरग्रहणेषु तीक्ष्णेन तीव्रेण करेण शुल्केन ग्रहाः आक्रमणानि अन्यत्र तीक्ष्णकरः सूर्य्यः तस्य ग्रहाः ग्रासाः तेषु। लोहिताङ्गं मङ्गलग्रहं वक्रचारेषु कुटिलगतिषु।

(३१९) अलातचक्रं तदाख्यकाव्यबन्धविशेषम् उल्मुकमण्डलञ्च मण्डलभ्रान्तिविज्ञानेषु मण्डलाकारेण भ्रान्तिर्भ्रमणं तस्यां विज्ञानानि विशिष्टानि ज्ञानानि परिचयाः तेषु। मनोरथसम्पादकम् अभीष्टनिर्वाहकम्। चिन्तामणिपर्वतक चिन्तामणिः अमूल्यरत्नविशेषः तस्य पर्वतकः क्षुद्रपर्वतः तम्।

(३२०) दन्तेति। दन्तावेव मुक्ताशैलस्तम्भौ मौक्तिकपाषाणस्तम्भौ यस्य तथोक्तम्। निवासप्रासादं निवासभवनम्।

(३२१) घण्टेति। घण्टाश्च चामराणि च तैः मण्डनेन अलङ्करणेन मनोहरः रम्यः तम्।

(३२२) इच्छेति। इच्छया अप्रतिहत्येति भावः सञ्चरणं परिभ्रमणं तत्र विमानं देवयानं तत्। मनस्वितायाः वीरतायाः।

(३२३) मदेति। मदधाराभिः दुर्दिनं समाच्छन्नमित्यर्थः अतएव अन्धं करोति इति अन्धकारं तत् गन्धोदकधारागृहं सुवासितजलधारागृहं क्रोधस्य कोपस्य।

(३२४) सकाञ्चनेति। काञ्चनप्रतिमा स्वर्णवदुज्ज्वला इत्यर्थः प्रतिमा

लेपस्य (३२६) सदन्ततोरणं वज्रमन्दिरं दर्पस्य (३२७) उच्चकुम्भकूटाट्टालकविकटं सञ्चारिगिरिदुर्गं राज्यस्य (३२८) शतानेकबाणविवरसहस्रं लोहप्राकारं पृथिव्याः (३२९) शिलीमुखशतझाङ्कारितं (३३०) पारिजातपादपं भूनन्दनस्य तथाच सङ्गीतगृहं कर्णतालताण्डवानाम् (३३१) आपानमण्डपं मधुपमण्डलानाम् अन्तःपुरं शृङ्गाराभरणानां मदनोत्सवं मदलीलालास्यानाम् (३३२) अस्पृष्ट-

---

दन्तकोशः देवताकृतिश्च तत्सहितं तद्युक्तमित्यर्थः महानिकेतनं महामन्दिरम् अहङ्कारस्य दर्पस्य।

(३२५) सगण्डेति। गण्डः कपोल एव शैलः अन्यत्र गण्डशैलः पर्वतात् निःसृतं स्थूलोपलं तस्य प्रस्रवणं दानवारिस्रावः निर्झरश्च तेन सह वर्त्तमानम् अवलेपस्य गर्वविशेषस्य।

(३२६) सदन्तेति। दन्तावेव तोरणौ बहिर्द्वारं अन्यच्च दन्तनिर्मिततोरणः तेन सह वर्त्तमानम्। वज्रमन्दिरं वज्रनिर्मितगृहम्।

(३२७) उच्चेति उच्चौ उन्नतौ कुम्भावेव कूटौ शिखरे यस्य तादृशं यत् अट्टालकं हर्म्यं तद्वत् विकटं भयावहं सञ्चारि जङ्गमं गिरिदुर्गं पर्वतरूपं शत्रुदुष्प्रवेशं स्थानमित्यर्थः।

(३२८) शतेति। शतानि अनेकानि बाणविवरसहस्राणि बाणनिक्षेपार्थं छिद्रसमूहाः यद्वा बाणैः शत्रुनिक्षिप्तैरिति भावः विवरसहस्राणि यत्र तादृशं लोहप्राकारं लौहनिर्मितप्राचीरम्।

(३२९) शिलीमुखेति। शिलीमुखानां भ्रमराणां शतैः झाङ्कारितः झङ्कारशब्दवत् कृतः यद्वा शिलीमुखशतैः बाणसमूहैः शत्रुप्रहितैरिति भावः झाङ्कारितः झङ्कारशब्देन विद्धः तम्।

(३३०) पारिजातपादपं देवतरुविशेषं भूनन्दनस्य भूः पृथिवी एव नन्दनं देवकाननं तस्य। कर्णतालताण्डवानां कर्णतालनर्त्तनानाम्।

(३३१) आपानमण्डपं पानगृहं मधुपमण्डलानां भृङ्गसमूहानाम् अन्यत्र नटानाम्। शृङ्गाराभरणानां शृङ्गाराः सिन्दूरादि एव आभरणानि अन्यत्र

प्रदोषं नक्षत्रमालामण्डलानाम् अकालप्रावृट्कालं ( ३३३ ) मदमहानदीपूरप्लवानाम् अलीकशरत्समयं सप्तच्छदवनपरिमलानाम् ( ३३४ ) अपूर्वहिमागमं शीकरनीहाराणाम् मिथ्याजलधरं गर्जिताडम्बराणां दर्पशातम् अपश्यत्।

आसीच्च ( ३३५ ) अस्य चेतसि नूनमस्य निर्माणे गिरयो ग्राहिताः परमाणुतां कुतोऽन्यथा ( ३३६ ) गौरवम् इदम् आश्चर्य्यम् एतत् विन्ध्यस्य दन्तौ आदिवराहस्य कर इति विस्मयमानम् एतं दौवारिकोऽब्रवीत् पश्य।

---

शृङ्गारो रसविशेषः तस्य आभरणानि विलासद्रव्याणीत्यर्थः तेषाम्। मदनोत्सवं मदनः मदकरः उत्सवो यस्य तथोक्तम् अन्यत्र कामोत्सवम्।

( ३३२ ) अक्षुण्णेति। अक्षुण्णः पूर्णः मेघावरणादिशून्य इति भावः प्रदोषः रजनीमुखं पक्षे अक्षुण्णः पूर्णः प्रदोषः प्रकृष्टहस्तः यस्य तथोक्तम् नक्षत्रमालामण्डलानां तारकाराजय एव मण्डलानि तेषां पक्षे नक्षत्रमाला सप्तविंशतिमौक्तिकहारा एव मण्डलानि तेषाम्। अकालप्रावृट्कालम् असमयवर्षासमयम्।

( ३३३ ) मदेति। मदा एव महानदीनां पूराः प्रवाहाः तेषां प्लवाः गतिविशेषाः तेषाम्। अलीकशरत्समयं मिथ्याशरत्कालं सप्तच्छदवनपरिमलानां सप्तच्छदवनस्येव परिमलाः सौरभाणि मदवारीणामिति भावः।

( ३३४ ) अपूर्वहिमागमं नूतनहेमन्तं शीकरनीहाराणां जलकणरूपशिशिराणाम्। मिथ्याजलधरम् अन्यं मेघमित्यर्थः गर्जिताडम्बराणां गर्जितान्येव आडम्बराः चेष्टाविशेषाः तेषाम्।

( ३३५ ) नूनं मन्ये इत्युत्प्रेक्षा वाचकम्। अस्य वारणपतेः निर्माणे सृष्टौ परमाणुतां ग्राहिताः नीताः देहस्य भौतिकपरमाणुसमष्टिमयादिति भावः।

( ३३६ ) गौरवं गुरुत्वम्। आश्चर्य्यं चमत्कृतिः। यत् विन्ध्यस्य पर्वतस्य दन्तौ एतत् आश्चर्य्यमित्यर्थः विन्ध्यपर्वततुल्योऽयं गजेन्द्र इति भावः आदिवराहस्य वराहरूपेणावतीर्णस्य भगवतो विष्णोरित्यर्थः। करः शुण्ड इति च आश्चर्य्यम्। आदिवराहसदृशोऽयमिति भावः। विस्मयमानं चमत्कुर्वाणम् एतं बाणम्।

(२३७) मिथ्यैवालिखतां मनोरथशतैर्निःशेषनष्टां श्रियं
चिन्तासाधनकल्पनाकुलधियां भूयो वने विद्विषाम्।
आयातः कथमप्ययं स्मृतिपथं शून्यीभवच्चेतसां
नागेन्द्रः सहते न मानसगतानाशागजेन्द्रानपि॥

तत् एहि पुनरपि एनं द्रक्ष्यसि पश्य तावत् देवम् इत्यभिधीयमानश्च (२३८) तेन (२३९) मदजलकज्जलकालकपोलपट्टपतितां मत्तामिव मदपरिमलेन मुकुलितां कथमपि तस्मात् दृष्टिम् आकृष्य तेनैव दौवारिकेण उपदिश्यमानवर्त्मा समतिक्रम्य भूपालसहस्रसङ्कुलानि त्रीणि कक्ष्यान्तराणि चतुर्थे (२४०) सत्यास्थानमण्डपस्य पुरस्तात्

---

(२३७) मिथ्यैवेति। निःशेषेण नष्टा तां सम्यग्नाशङ्गतामित्यर्थः श्रियं राजलक्ष्मीं निजामिति शेषः पराजितत्वादितिभावः। मनोरथशतैः शतैः शतैः मनोरथैः एवमेवमस्माभिः सलीकैः कृतमित्येवमभिलाषैरित्यर्थः मिथ्यैव मृषैव आलिखताम् अनुशोचतामिति यावत् भूयः पुनः चिन्तया साधनानां पुनरुद्धारोपायानां कल्पनया आकुला धीर्येषां तथाभूतानां वने विद्विषां वनवासिनां शत्रूणां शून्यीभवता चेतसा कथमपि अतिकृच्छ्रेण स्मृतिपथम् आयातः तेनैव वारणेन्द्रेण वयं नितरां निर्जिता इति स्मरणपद्धतिं गतः अयं नागेन्द्रः वारणपतिः मानसं चित्तं सरोविशेषञ्च गताः तान् आशा एव गजेन्द्राः दिग्गजाश्च तान् न सहते न क्षमते। एतस्य स्मरणे शत्रूणां पुनरुद्धारस्य आशापि नश्यतीति भावः। शार्दूलविक्रीडितं वृत्तं सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणात्। श्लेषालङ्कारः।

(२३८) तेन दौवारिकेण।

(२३९) मदेति। मदजलमेव कज्जलम् अञ्जनं तेन कालः कृष्णवर्णः यः कपोलपट्टः गण्डतटः हस्तिन इति भावः तस्मिन् पतिता निहिता ताम्। तस्मात् वारणेन्द्रात्। समतिक्रम्य अतीत्य कक्ष्यान्तराणि प्रकोष्ठविशेषान्। चतुर्थे कक्ष्ये हर्षम् अद्राक्षीदित्युत्तरेण सम्बन्धः। तं विशिनष्टि सत्येत्यादिभिः।

(२४०) सत्यास्थानेति। सत्यस्य सत्यनिरूपणस्य यत् आस्थानमण्डपं सभा·

(३४१) अजिरे स्थितं दूरादूर्द्ध्वस्थितेन प्रांशुना कर्णिकारगौरेण (३४२) व्यायामव्यायतवपुषा शस्त्रिणा मौलेन शरीरपरिचारकलोकेन पङ्क्तिस्थितेन कार्त्तस्वरस्तम्भमण्डलेनेव परिवृतम् (३४३) आसन्नोपविष्टविशिष्टेष्टलोकं (३४४) हरिचन्दनरसप्रक्षालिते (३४५) तुषारशीकरशीतलतले दन्तपाण्डुरपादे शशिमये इव मुक्ताशैलशिलापट्टशयने समुपविष्टं (३४६) शयनीयपर्य्यन्तविन्यस्ते समर्पित-

---

गृहं तस्य विचारालयस्य इत्यर्थः भुक्तास्थानमण्डपस्य इति पाठे भुक्तं भोजनं तस्मिन् सति यत् आस्थानं लोकवृत्तदर्शनं तस्य मण्डपं गृहं तस्येत्यर्थः। पुरस्तात् अग्रत अग्रवर्त्तिनीत्यर्थः।

(३४१) अजिरे अङ्गने स्थितं तिष्ठन्तम्। दूरात् ईषद्दूरात् इत्यर्थः ऊर्द्ध्वस्थितेन दण्डायमानेन इत्यर्थः प्रांशुना उन्नतकायेन कर्णिकारगौरेण कर्णिकारपुष्पगौरकान्तिना।

(३४२) व्यायामेति। व्यायामेन परिश्रमविशेषेण व्यायतं विभक्तावयवं वपुः शरीरं यस्य तेन शस्त्रिणा शस्त्रपाणिना मौलेन मूलायातेन वंशक्रमानुगतेन इत्यर्थः शरीरपरिचारकलोकेन शरीरसेवकजनेन पङ्क्तिस्थितेन श्रेणीबद्धेन इत्यर्थः कार्त्तस्वरस्तम्भमण्डलेन इव काञ्चनस्तम्भनिवहेन इव।

(३४३) आसन्नेति। आसन्नं सन्निहितं यथा तथा उपविष्टा विशिष्टाः सम्भ्रान्ता इष्टाः अभिलषिताः मनोऽभिमता इति यावत् लोका यस्य तम्।

(३४४) हरिचन्दनेति। हरिचन्दनस्य चन्दनविशेषस्य रसेन द्रवेण प्रक्षालितम् अभिषिक्तं तस्मिन्।

(३४५) तुषारेति। तुषारशीकरवत् शीतलं तलं यस्य तथोक्ते। दन्तेति दन्तवत् पाण्डुराः श्वेताः पादाः यस्य तथाविधे शशिमये इव चन्द्रमये इव मुक्ताशैलस्य मौक्तिकपर्वतस्य शिलापट्ट एव शयनं शय्या तस्मिन्।

(३४६) शयनीयेति। शयनीयस्य शय्यातलस्य पर्य्यन्ते प्रान्तभागे विन्यस्तः निहितः तस्मिन्। भुजे हस्ते। समर्पितेति समर्पितः निहितः सकलस्य विग्रहस्य भारो येन तथोक्तम्।

सकलविग्रहभारं भुजे (२४७) दिङ्मुखविसर्पिणि देहप्रभावितानै विततमणिमयूखे घर्म्मसमयसुभगे सरसीव (२४८) मृदुमृणालजालजटिलजले सराजकं रममाणं तैजसः परमाणुभिरिव केवलैः निर्मितम् अनिच्छन्तं बलात् आरोपयितुमिव सिंहासनं (२४९) सर्वावयवेषु सर्वलक्षणैः गृहीतं गृहीतब्रह्मचर्य्यम् आलिङ्गितं राजलक्ष्म्या (२५०) प्रतिपन्नासिधाराधारणव्रतम् अविसंवादिनं

---

(२४७) दिङ्मुखेति दिशां मुखानि विसर्पति व्याप्नोतीति तथाभूते देहप्रभावितानै अङ्गकान्तिविस्तारे। विततेति वितता विस्तृता मणीनां रत्नानां मयूखा यत्र तादृशे। घर्म्मसमयसुभगे ग्रीष्मकालरमणीये।

(२४८) मृद्विति। मृदुभिः कोमलैः मृणालजालैः विससञ्चयैः जटिलानि जलानि यस्य तथोक्ते। सराजकं राजगणसहितं यथा तथा रममाणं विहरन्तम्। केवलैः निरवच्छिन्नैः तेजसः प्रतापस्य परमाणुभिरिव निर्म्मितम् सृष्टम्। तेजोराशिमिव स्थितमिति यावत्।

(२४९) सर्वावयवेषु। सर्वाङ्गेषु हस्तपदादिषु सर्वलक्षणैः समस्तशुभचिह्नैः गृहीतं युक्तम्। गृहीतब्रह्मचर्य्यं गृहीतम् अवलम्बितं ब्रह्मचर्य्यं दारग्रहणादिवर्जनेन केवलं गुरुकुले वेदाध्ययनादिव्रतचर्य्या येन तथोक्तम् अथच राजलक्ष्म्या आलिङ्गितमिति विरोधः। स्वदारसन्तुष्टः ऋतुकालगामी गृहस्थोचितव्यापारवान् ब्रह्मचारी एव भवतीति श्रुतेः तथाविधं गृहस्थमिति तत्परिहारः। किञ्च यावन्मया सकला मही न जिता तावद् ब्रह्मचर्य्यं चरामीति प्रतिज्ञाय श्रीहर्षः द्वादशभिः वर्षैः जित्वा तां महीं सर्वां महिषीमब्रवीत् प्रतिज्ञा मया निर्व्यूढेत्यनुश्रुतिरच अनुशीलनीया।

(२५०) प्रतिपन्नेति। प्रतिपन्नम् अवलम्बितम् असिधाराधारणव्रतं खड्गधाराव्रतविशेषः यत्र स्त्रीपुंसौ अकपटौ ब्रह्मचर्य्येण तिष्ठतः इति भावः येन तथोक्तम् अविसंवादिनं विसंवादी विरुद्धभावः अस्यास्तीति विसंवादी स न भवतीति तथोक्तः तं पक्षे प्रतिपन्नेषु विश्वसितेषु असिधाराधारणमेव व्रतं यस्येति तथोक्तम् अथच अविसंवादिनमिति विरोधः। राजर्षिं राजा ऋषिरिव राजर्षिः तम्।

राजर्षिं ( ३५१ ) विषमराजमार्गविनिहितपदस्खलनभियेव सुलग्नं धर्मे ( ३५२ ) सकलभूपालपरित्यक्तेन भीतेनेव लब्धवाचा सर्वात्मना सत्येन सेव्यमानम् ( ३५३ ) आसन्नवारविलासिनीप्रतियातनाभिः चरणनखपातिनीभिः दिग्भिरिव दशभिः प्रणम्यमानं ( ३५४ ) दीर्घैः दिगन्तपातिभिः दृष्टिपातैः लोकपालानां कृताकृतमिव प्रत्यवेक्षमाणं ( ३५५ ) मणिपादपीठपृष्ठप्रतिष्ठितकरेण ( ३५६ ) उपरिगमनाभ्यनुज्ञां मृग्यमाणमिव दिवसकरेण ( ३५७ ) भूषणप्रभासमुत्सारणबद्धपर्य्यन्तमण्डलेन प्रदक्षिणीक्रिय-

---

( ३५१ ) विषमेति। विषमे दारुणे राजमार्गे राजनीतौ विनिहितस्य अर्पितस्य पदस्य स्खलनभियेव च्युतिभयेनेव धर्मे सुलग्नं कृतावलम्बनं धृतधर्मयष्टिमिति भावः।

( ३५२ ) सकलेति। सकलैः भूपालैः परित्यक्तः तेन अतएव भीतेनेव अयमपि यदि मां न गृह्णाति तदाहमशरण इति चलेन इव इत्यर्थः लब्धवाचा लब्धा गृहीता वाक् यस्य तेन सर्वात्मना सर्वस्वरूपेण सत्येन सेव्यमानं परिचर्य्यमाणम्।

( ३५३ ) आसन्नेति। आसन्नानां सन्निहितानां परिचर्य्यार्थमिति भावः वारविलासिनीनां वेश्यानां प्रतियातनाभिः छायाभिः चरणनखपातिनीभिः पदनखपतिताभिः दशभिर्दिग्भिरिव पदनखानां दशसङ्ख्यकमिति भावः प्रणम्यमानम् अभिवन्द्यमानम्।

( ३५४ ) दीर्घैः आयतैः दिगन्तपातिभिः दिगन्तगामिभिः लोकपालानाम् इन्द्रादीनां कृताकृतमिव कार्य्याकार्य्यमिव प्रत्यवेक्षमाणं परिपश्यन्तम्।

( ३५५ ) मणीति। मणिपादपीठस्य रत्नमयचरणासनस्य पृष्ठे उपरि प्रतिष्ठिताः कराः किरणा हस्ताश्च यस्य तेन दिवसकरेण सूर्य्येण।

( ३५६ ) उपरीति। उपरिगमने ऊर्द्धगमने या अभ्यनुज्ञा अनुमतिः तां मृग्यमाणमिव प्रार्थ्यमानमिव।

( ३५७ ) भूषणेति भूषणानां प्रभाभिः समुत्सारणेन सन्ताडनेन बद्धं लब्ध-

भ्राणमिव दिवसेन (२५८) अप्रणमद्भिः गिरिभिरपि दूयमानं शौर्य्योष्मणा फेनायमानमिव चन्दनधवलं लावण्य-जलधिम् उद्वहन्तम् (२५९) ऐकराज्योर्जितेन निज-प्रतिबिम्बान्यपि (२६०) नृपतिचक्रचूड़ामणिष्ठतानि असह-मानमिव दर्पदुःखासिकया चामरानिलनिभेन बहुधेव श्वसन्तीं राजलक्ष्मीं दधानं सकलमिव (२६१) चतुः-समुद्रलावण्यम् आदाय उत्थितया श्रिया समुपश्लिष्टम् (२६२) आभरणप्रभाजालजायमानानि इन्द्रधनुःसहस्राणि इन्द्रप्राभृतप्रहितानि विलक्षमानमिव राज्ञां (२६३) सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तं काव्यकथासु अपीत-

मिति यावत् पर्य्यन्तेषु मण्डलं मण्डलाकारेण अवस्थानं येन तथोक्तेन प्रदक्षिणी-क्रियमाणं वेष्ट्यमानमित्यर्थः।

(२५८) अप्रणमद्भिः प्रणतिमकुर्वद्भिः स्वभावोन्नतत्वादिति भावः गिरिभिः पर्वतैरपि दूयमानमिव सन्तप्यमानमिव।

(२५९) ऐकराज्योर्जितेन ऐकराज्यम् एकाधिपत्यं तेन ऊर्जितः प्रवृद्धिं गतः तेन शौर्य्योष्मणा वीर्य्यप्रतापेण फेनायमानमिव फेनमुद्वमन्तमिव चन्दनधवलं लावण्यजलधिं मुक्ताफलेषु छायासरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्य-मिह मतमित्युक्तलक्षणानां लावण्यानां जलधिः समुद्रः तम् उद्वहन्तम्।

(२६०) नृपतिचक्रैः राजमण्डलैः चूड़ामणिभिः शिरोरत्नैः ष्ठतानि निज-प्रतिबिम्बानि अपि असहमानमिव कथं सामान्येन मत्स्पर्श इति धियेति भावः।

(२६१) चतुरिति। चतुर्णां समुद्राणां समाहारः चतुःसमुद्रं तस्य लावण्यं तत्। समुपश्लिष्टं समालिङ्गितम्।

(२६२) आभरणेति। आभरणानां प्रभाजालेन दीप्तिसमूहेन जायमा-नानि उत्पद्यमानानि इन्द्रप्राभृतप्रतिहतानि इन्द्रेण प्राभृतानि उपढौकनानि प्रहि-तानि उपढौकनत्वेन प्रेषितानीत्यर्थः इन्द्रधनुषां शक्रचापानां सहस्राणि विलक्ष-मानमिव विशेषेण आददानमिव। राज्ञां निर्जितानामिति भावः।

(२६३) सम्भाषणेषु समालपनेषु परित्यक्तमपि मधु मधुररसमित्यर्थः काव्य

मपि अस्तम् उद्गमन्तं (२६४) विस्रम्भभाषितेषु अनाक्रष्टमपि हृदयं दर्शयन्तं प्रसादेषु (२६५) निश्चलामपि श्रियं स्थाने स्थाने स्थापयन्तं वीरगोष्ठीषु पुलकितेन कपोलस्थलेन अनुरागसन्देशमिव उपांशु रणश्रियः शृण्वन्तम् (२६६) अतिक्रान्तसुभटकलहालापेषु स्नेहदृष्टिमिव दृष्टिम् इष्टे कृपाणे पातयन्तं परिहासस्मितेषु गुरुप्रतापभीतस्य राजकस्य स्वच्छम् आशयमिव दशनांशुभिः कथयन्तं (२६७) सकललोकहृदयस्थितमपि न्याये तिष्ठन्तम्

---

कथासु काव्यालोचनासु वर्षन्तं वमन्तम्। अवज्ञया राजभिः मधुरालापो न क्रियते किन्तु कविभिः काव्यानुशीलने क्रियते इति भावः।

(२६४) विस्रम्भभाषितेषु विश्वस्तालापेषु। अनाक्रष्टमपि प्रसादकैः अनुजीविभिः अगृहीतमपि इत्यर्थः हृदयं चित्तं मनोऽभिप्रेतं वस्त्वित्यर्थः दर्शयन्तं प्रकटयन्तं प्रसादेषु प्रसन्नतासु सत्सु इत्यर्थः।

(२६५) निश्चलामपि स्थिरामपि श्रियं लक्ष्मीं सम्पदमिति यावत् स्थाने योग्ये पात्रे इत्यर्थः स्थापयन्तम् अर्पयन्तं वीरगोष्ठीषु वीरसमाजेषु पुलकितेन रोमाञ्चेन उत्साहातिशयादिति भावः कपोलस्थलेन गण्डदेशेन उपांशु रहसि रणश्रियः संग्रामलक्ष्म्याः अनुरागसन्देशमिव प्रेमव्यञ्जकवाचिकमिव शृण्वन्तम् आकर्णयन्तम्।

(२६६) अतिक्रान्तेति। अतिक्रान्ताः अतीताः सुभटानां सुयोद्धॄणां ये कलहाः संग्रामाः तेषाम् आलापाः कथाः तेषु। इष्टे अभिलषिते प्रिये इत्यर्थः कृपाणे तलवारे। परिहासस्मितेषु नर्महासेषु गुरुणा महता प्रतापेन भीतस्य राजकस्य राजचक्रस्य समीपे इति शेषः। दशनांशुभिः दशनकिरणैः तद्व्याजेन इति भावः स्वच्छं निर्मलम् आशयं भावं कथयन्तं प्रकाशयन्तम्।

(२६७) सकलेति। सकलानां जनानामित्यर्थः। हृदयेषु स्थितमपि गुणानां विद्याविनयादीनाम् अगोचरे अविषये सौभाग्यानाम् अभूमौ अस्थाने वरप्रदानानाम् अविषये अगोचरे आशिषामशक्ये असाध्ये मनोरथानाम् अमार्गे दैवस्य अतिदूरे आदिश्यमानानाम् आज्ञाप्यमानानां गुरुजनैरिति भावः।

अगोचरे गुणानाम् अभूमौ सौभाग्यानाम् (२६८) अविषये वरप्रदानानाम् अशक्ये आशिषाम् अमार्गे मनोरथानाम् अतिदूरे दैवस्य अदिशि उपमानानाम् असाध्ये धर्म्मस्य अदृष्टपूर्वे लक्ष्म्या महत्त्वे स्थितम् (२६९) अरुणपादपल्लवेन (२७०) सुगतमन्थरोरुणा (२७१) वज्रायुधनिष्ठुरप्रकोष्ठपृष्ठेन (२७२) वृषस्कन्धेन भास्वद्बिम्बाधरेण (२७३) प्रसन्नावलोकितेन मुखचन्द्रेण कृष्णकेशेन वपुषा (२७४) सर्व्वदेवतावतारमिव एकत्र दर्शय-

---

(२६८) अविषयाणाम् असाध्ये साधयितुमशक्ये धर्म्मस्य इति कर्त्तरि षष्ठी अदृष्टपूर्वे पूर्वमदृष्टे न्याये नीतिमार्गे तिष्ठन्तं विरोधालङ्कारः यत्र गुणसौभाग्यादयो न गण्यन्ते तं नीतिमार्गमनुसरन्तमित्यर्थः एतेन अस्य विरोधस्य परिहारः। लक्ष्म्या महत्त्वे स्थितं महालक्ष्मीनिवासमित्यर्थः।

(२६९) अरुणेति। अरुणः लोहितः पादपल्लवः चरणकिसलयः यस्य तेन अन्यच अरुणस्य अनूरोः पादपल्लवः तेन।

(२७०) सुगतेति। सुष्ठु गतं गमनं ययोः तथाभूतौ मन्थरौ मृदुगामिनौ ऊरू यस्य तेन अन्यत्र सुगतो बुद्धदेवः तस्य मन्थरः मन्दगामी ऊरुः तेन।

(२७१) वज्रेति। वज्रं कुलिशमिव आयुधम् अस्त्रविशेषः तद्वत् निष्ठुरं कठिनं प्रकोष्ठौ पार्श्वदेशौ पृष्ठञ्च यस्य तेन अन्यच वज्रायुधः इन्द्रः तस्य निष्ठुरं प्रकोष्ठपृष्ठं तेन।

(२७२) वृषस्येव स्कन्धो यस्य तेन अन्यत्र वृषस्य धर्म्मस्य स्कन्धः तेन। भास्वदिति भास्वान् दीप्यमानः बिम्बामिवाधरो यस्य तेन अन्यच भास्वतः सूर्य्यस्य बिम्बमिवाधरः तेन।

(२७३) प्रसन्नेति। प्रसन्नं अवलोकितं दर्शनं यस्य तेन अन्यत्र प्रसन्नः कश्चिद्देवविशेषः तस्य अवलोकितं दर्शनं तेन। मुखं चन्द्र इव यस्य तेन। अन्यच मुखे चन्द्रः तेन। कृष्णः केशो यस्य तेन अन्यच कृष्णस्य केशः तेन। वपुषा अङ्गेन एकप्रकारेण अवयवेनेत्यर्थः।

(२७४) सर्व्वेति। सर्व्वेषां देवतानामवतारः तमिव। मांसलेति मांसलाभिः

न्तम् अपि च मांसलमयूखमालामलिनितमहीतले महति महार्हे माणिक्यमालामण्डितमेखले महानीलमये पादपीठे कलिकालशिरसि इव सलीलं ( ३७५ ) विन्यस्तवामचरणम् ( ३७६ ) आक्रान्तकालियफणाचक्रवालं बालम् इव पुण्डरीकाक्षं क्षौमपाण्डुरेण चरणनखदीधितिप्रतानेन प्रसरता महीं ( ३७७ ) महादेवीपट्टबन्धेन एव महिमानम् आरोपयन्तम् ( ३७८ ) अप्रणतलोकपालकोपेनेव अतिलोहितौ सकलनृपतिमौलिमालासु अतिपीतं पद्मरागरत्नातपमिव वमन्तौ ( ३७९ ) सर्वतेजस्विमण्डलास्तमय-

---

महतीभिः मयूखानां किरणानां मालाभिः मलिनितम् आकीर्णमित्यर्थः महीतलं येन तथोक्ते महार्हे महामूल्ये माणिक्यमालया मण्डिता अलङ्कृता मेखला नितम्बभागः मध्यभाग इत्यर्थः यस्य तादृशे कलिकालशिरसि इव कलिमूर्द्धनि इव सलीलं सविलासं सहेलं वा।

( ३७५ ) विन्यस्तेति। विन्यस्तः निहितः वामचरणः येन तथोक्तम्।

( ३७६ ) आक्रान्तेति। आक्रान्तम् अध्यासितं कालियस्य नागविशेषस्य फणाचक्रवालं फणमण्डलं येन तथोक्तं बालं शिशुं पुण्डरीकाक्षमिव कृष्णमिव पद्मे पुण्डरीके श्वेतपद्मे इव अक्षिणी यस्य तथोक्तम्। क्षौमपाण्डुरेण क्षौमं श्वेतपट्टवसनं तद्वत् पाण्डुरः धवलः तेन चरणनखानां दीधितिप्रतानेन मयूखविस्तारेण महीं प्रसरता व्याप्नुवता।

( ३७७ ) महादेवीति। महादेवी महती देवी राजमहिषी पृथिवीति भावः तस्याः पट्टबन्धः क्षौमाच्छादनविशेषः तेनैव महिमानं महत्त्वं पृथिव्या एकेश्वरत्वमित्यर्थः आरोपयन्तम् आत्मानमिति शेषः।

(३७८) अप्रणतेति। न प्रणताः अप्रणताः ते च ते लोकपालाश्चेति अप्रणतलोकपालाः तेषु कोपः क्रोधः तेनैव अतिलोहितौ अतिरक्तौ अतएव सकलेति सकलानां नृपतीनां मौलिमालासु मुकुटराजिषु अतिपीतम् अतिशयेन गृहीतं पद्मरागरत्नानाम् आतपमिव आलोकमिव वमन्तौ उद्गिरन्तौ।

( ३७९ ) सर्वेति। सर्वेषां तेजस्विमण्डलानां सूर्य्यादीनामिति भावः अस्त-

सन्ध्यामिव धारयन्तौ अशेषराजककुसुमशेखरमधुरस-
स्रोतांसीव स्रवन्तौ (२८०) समस्तसामन्तसीमन्तोत्तंस-
स्रक्सौरभभ्रान्तैः (२८१) भ्रमरमण्डलैः अमिचौत्तमाङ्गैः
इव मुहूर्त्तमपि अविरहितौ संवाहनतत्परायाः श्रियौ (२८२)
विकचरक्तपङ्कजवनवासभवनानीव कल्पयन्तौ (२८३)
जलजशङ्खमीनमकरसनाथतलतया कथितचतुरम्भोधिभोग-
चिह्नौ इव चरणौ दधानम् (२८४) दिङ्नागदन्तमुसला-
भ्यामिव (२८५) विकटमकरमुखप्रतिबन्धबन्धुराभ्याम्

---

मयसन्ध्यामिव अस्तगमनसन्ध्याकालमिव धारयन्तौ दधानौ अशेषेति अशेषाणां सम-
स्तानां राज्ञां कुसुमानि पुष्परचितानीति यावत् यानि शेखराणि शिरोभूषणानि
तेषां मधुरसा मकरन्दरसाः तेषां स्रोतांसीव प्रवाहानिव स्रवन्तौ वर्षन्तौ।
(२८०) समस्तेति। समस्तानां सामन्तानाम् अधीश्वराणां सामन्तः स्याद-
धीश्वर इत्यमरः। सीमन्ताः संयताः केशाः सीमन्ताः संयताः कचा इत्यमरः
तेषाम् उत्तंसा मण्डनानि याः स्रजः माल्यानि तासां सौरभेण भ्रान्तानि घूर्ण-
मानानि तैः।
(२८१) भ्रमरमण्डलैः भृङ्गसङ्घैः अमिचौत्तमाङ्गैरिव शत्रूणां शिरोभिरिव
अविरहितौ असुक्तौ संवाहनेति संवाहनं सेवा तस्मिन् तत्परा रता तस्याः श्रियः
राजलक्ष्म्याः।
(२८२) विकचेति। विकचानि प्रस्फुटानि रक्तपङ्कजवनानि रक्तकमल-
काननानि एव वासभवनानि वासगृहाणि तानि इव कल्पयन्तौ रचयन्तौ।
(२८३) जलजेति। जलजं पद्मं शङ्खः कम्बुः मीनः मत्स्यः मकरः जल-
जन्तुभेदः तैः सनाथं युक्तं तलं ययोः तद्वोभावः तत्ता तया हेतुना। कथितेति
कथितं प्रकटितं चतुर्णाम् अम्भोधीनां सागराणां भोगचिह्नं भोगलक्षणं याभ्यां
तथाभूताविव चरणौ दधानं धारयन्तम्।
(२८४) दिङ्नागेति। दिङ्नागस्य ऐरावतस्य दन्ताविव मुसलौ ताभ्यामिव।
(२८५) विकटेति। विकट उत्कटो यो मकरस्य जलजन्तुभेदस्य मुख-

(३८६) उद्वेललावण्यपयोनिधिप्रवाहाभ्यामिव (३८७) फेनाहितशोभाभ्यां कल्पचन्दनद्रुमाभ्यामिव (३८८) भोगिमण्डलशिरोरत्नरश्मिरज्यमानमूलाभ्यां हृदयारोपितभूभारधारणमाणिक्यस्तम्भाभ्याम् ऊरुदण्डाभ्यां विराजमानम् (३८९) अमृतफेनपिण्डपाण्डुना (३९०) मेखलामणिमयूखखचितेन नितम्बबिम्बव्यासङ्गिना (३९१) विमलपयोधौतेन (३९२) नेत्रसूत्रनिवेशशोभिना अधरवाससा

---

मिव प्रतिबन्धः जानुसन्धिरित्यर्थः तेन बन्धुरौ उन्नतानतौ ताभ्यां बन्धुरन्तून्नतानतमित्यमरः।

(३८६) उद्वेलेति। उद्वेलः वेलामतिक्रान्तः यः लावण्यपयोधिः लावण्यसागरः तस्य प्रवाहाविव स्रोतसी इव ताभ्याम्।

(३८७) फेनेति। फेनैः आहिता जनिता शोभा ययोः ताभ्यां कल्पचन्दनद्रुमाभ्यामिव वाञ्छितफलप्रदचन्दनतरुभ्यामिव।

(३८८) भोगीति। भोगिनां सुखभोगरतानां सांसारिकाणामित्यर्थः अन्यत्र भोगिनां सर्पाणां मण्डलस्य सङ्घस्य शिरोरत्नानि तेषां रश्मिभिर्मयूखैः रज्यमाने अलङ्क्रियमाणे मूले ययोः ताभ्याम्। हृदयेति हृदयं चित्तम्। आरोपितः यो भूभारः तस्य धारणे माणिक्यस्तम्भौ ताभ्याम्।

(३८९) अमृतेति। अमृतस्य फेनपिण्डः फेनराशिः तद्वत् पाण्डुः धवलः तेन।

(३९०) मेखलेति। मेखला काञ्ची काञ्चननिर्मितं कटिबन्धनसूत्रमिति यावत् तत्र ये मणयः रत्नानि अन्यत्र मेखलासु नितम्बेषु मन्दरस्य इति भावः ये मणयः तेषां मयूखैः किरणैः खचितं रञ्जितं तेन नितम्बबिम्बव्यासङ्गिना नितम्बमण्डलसंसक्तेन अन्यत्र कटकतटव्यापिना।

(३९१) विमलेति। विमलैः स्वच्छैः पयोभिः जलैरन्यत्र दुग्धैः क्षीरोदस्य मन्थनकाले इति भावः धौतेन क्षालितेन।

(३९२) नेत्रेति। नेत्रस्य पट्टविशेषस्य सूत्राणां निवेशेन रचनया, अन्यत्र नेत्रं मन्थनरज्जुः तस्य सूत्राणां तन्तूनां निवेशेन आधानेन शोभते इति तथोक्तेन।

वासुकिनिर्मोकेणेव ( २९२ ) मन्दरं धौतमानम् अघनेन सतारागणेन उपरिक्षतेन ( २९४ ) द्वितीयाम्बरेण भुवनाभोगमिव भासमानम् ( २९५ ) इभपतिदशनमुसलसहस्रोल्लेखकठिनमसृणेन ( २९६ ) अपर्य्याप्ताम्बरप्रथिम्ना (२९७) विविधवाहिनीसङ्क्षोभकलकलसम्मर्दसहिष्णुना कैलासम् इव महता स्फटिकतटेन उरुणा उरःकपाटेन राजमानम् ( २९८ ) श्रीसरस्वत्योः उरोवदनोपभोगविभागसूत्रेणेव पातितेन ग्रैवेयेणेव ( २९९ ) तद्भुजस्तम्भविन्यस्तसमस्तभूभार-

---

अधरवाससा परिधानवस्त्रेण वासुकिनिर्मोकेणेव वासुकेर्नागराजस्य निर्मोकेणेव कञ्चुकेनेव।

( २९३ ) मन्दरं तदाख्यं पर्वतम्। धौतमान राजमानम् अघनेन सूक्ष्मेण घनीभवस्तद्रहितेन। सतारागणेन ताराः मुक्ताविन्दवः नक्षत्राणि च तेषां गणः समूहः तद्रहितेन उपरिक्षतेन उपरिधृतेन उत्तरीयेणेत्यर्थः अन्यत्र ऊर्द्ध्ववर्त्तिना।

( २९४ ) द्वितीयाम्बरेण द्वितीयेन वसनेन उत्तरीयेणेत्यर्थः भुवनाभोगमिव भुवनायाममिव भासमान विराजमानम्।

( २९५ ) इभपतीति। इभपतेर्दिग्गजस्य दशना एव मुसलानि तेषां सहस्राणाम् उल्लेखेन निखननेन कठिनं दृढं मसृणं कोमलञ्च अन्यत्र चिक्कणं तेन।

( २९६ ) अपर्य्याप्तेति। अपर्य्याप्तम् असीमित्यर्थः यत् अम्बरम् आकाशं तस्येव प्रथिमा तेन अन्यत्र अपर्य्याप्ते अम्बरे प्रथिमा विस्तारो यस्य तेन।

( २९७ ) विविधेति। विविधानां बहुविधानां वाहिनीनां चमूनां संक्षोभे समवाये यः कलकलः कोलाहलः तस्य सम्मर्दः संक्लेशः अन्यत्र वाहिनीनां नदीनां संक्षोभे यः कलकलः तेन सम्मर्दः तं सहितुं शीलमस्येति तथोक्तेन उरुणा महता उरः कपाटेन वक्षःस्थलरूपेण कपाटेन।

( २९८ ) श्रीसरस्वत्योरिति। श्रीसरस्वत्योर्लक्ष्मीवाग्देव्योः सपत्न्योरिति भावः उरोवदनयोः यथाक्रमेण लक्ष्म्या उरसः वाग्देव्या वदनस्येति यावत् उपभोगः सम्भोगः लक्ष्म्या उरसि स्थितिः सरस्वत्या मुखे स्थितिरिति भावः तस्य विभागसूत्रं सीमाबन्धनसूत्रमित्यर्थः तेनैव पातितेन पराजयेनेति भावः।

( २९९ ) तद्भुजेति। तस्य हर्षस्य भुज एव स्तम्भः तस्मिन् विन्यस्तः यः

लब्धविश्रान्तिसुखप्रसुप्तेन हारदण्डेन परिवेष्टितकन्धरं (४००) जीवितावधिगृहीतसर्वस्वमहादानदीक्षाचीरेणेव हारमुक्ताफलानां किरणनिकरेण (४०१) प्रावृतवक्षःस्थलम् अजजिगीषया बालैः भुजैरिव अपरैः प्ररोहद्भिः (४०२) बाहूपधानशायिन्याः श्रियः (४०३) कर्णोत्पलमधुरसधारासन्तानैरिव गलद्भिः भुजजन्मनः प्रतापस्य निर्गमनमार्गैरिव आविर्भवद्भिः अरुणैः केयूररत्नकिरणदण्डैः उभयतः (४०४) प्रसारितमणिमयपक्षवितान-

---

समस्तः भूभारः पृथिवीभारः तेन लब्धा या विश्रान्तिः विश्रामः तया सुखं यथा तथा प्रसुप्तः निद्रितः तेन शेषेण अनन्तनागेनेव हारदण्डेन हारयष्टिना कण्ठनिहितेनेति भावः परिवेष्टिता आलिङ्गिता कन्धरा ग्रीवा यस्य तम्।

(४००) जीवितेति। जीवितं जीवनम् अवधिः शेषो येषां तानि गृहीतानि उपार्जितानि यानि सर्वाणि स्वानि धनानि तेषां महादानं याचितो जीवनमपि ददाति किमु बाह्यानि धनानीति भावः तस्मिन् या दीक्षा व्रतविशेषः तस्याः चीरं कौपीनरूपं वसनखण्डं वल्कलं वा तेनेव दीक्षाग्रहणे चीरवसनैः भूयते इति भावः।

(४०१) प्रावृतेति। प्रावृतम् आच्छादितं वक्षःस्थलं येन यस्य वा तथोक्तम्। अजजिगीषया अजो विष्णुः तस्य जिगीषा जयेच्छा तया अजो विष्णुहरच्छागा इत्यमरः बालैः नवैः प्ररोहद्भिः जायमानैः।

(४०२) बाहूपधानेति। बाहुरेव उपधानं बालिश इति भाषा तस्मिन् शेते इति तथोक्तायाः श्रियः राजलक्ष्म्याः।

(४०३) कर्णोत्पलेति। कर्णोत्पलस्य कर्णभूषणीभूतोत्पलस्य मधुरसधाराणां मकरन्दप्रवाहसमूहैरिव गलद्भिः निःसरद्भिः। भुजजन्मनः बाहुजनितस्य आविर्भवद्भिः प्रकटीभवद्भिः अरुणैः रक्तैः केयूररत्नकिरणदण्डैः केयूररत्नानाम् अङ्गदमणीनां किरणा एव दण्डाः तैः।

(४०४) प्रसारितेति। प्रसारितौ मणिमयौ पक्षवितानौ विस्तृतपक्षौ इत्यर्थः यस्य तथोक्तमिव। माणिक्यमहीधरं माणिक्यरत्ननिर्मितपर्वतम्।

मिव माणिक्यमहीधरं (४०५) सकललोकालोकमार्गार्गलेन (४०६) चतुरुदधिपरिक्षेपखातशिलाप्राकारेण (४०७) सर्वराजहंसबन्धवज्रपञ्जरेण (४०८) भुवनलक्ष्मीप्रवेशमङ्गलमहामणितोरणेन (४०९) अतिदीर्घदोर्दण्डयुगलेन दिशां दिक्पालानाञ्च युगपदायतिमपहरन्तम् (४१०) सोदर्य्यलक्ष्मीचुम्बनलोभेन कौस्तुभमणेरिव मुखावयवतां गतस्य अधरस्य गलता रागेण पारिजातपल्लवरसेनेव सिञ्चन्तं दिङ्मुखानि (४११) अन्तरान्तरा

---

(४०५) सकलेति। सकलानां लोकानाम् आलोकः उद्योतः प्रमेत्यर्थः तस्य मार्गः पन्थाः तस्य अर्गलः कवाटरोधककाष्ठादिदण्डविशेषः तेन अस्य बाहुदण्डप्रभावात् सर्वेषामेव भुजग्रालिनात् प्रभावजनितालोको विनाशं गत इति भावः।

(४०६) चतुरिति। चतुर्णाम् उदधीनां समुद्राणां परिक्षेपः परिवेष्टनमेव चतुर्दिग्वर्त्तिसमुद्रा एवेत्यर्थः खातानि परिखाः पृथिव्या इति भावः तेषां शिलाप्राकारः पाषाणनिर्मितं प्राचीरमित्यर्थः तेन।

(४०७) सर्वेति। सर्वेषां राज्ञां हंसानामिव बन्धे बन्धने निरोधने इत्यर्थः वज्रपञ्जरं वज्रनिर्मितं पञ्जरमित्यर्थः तेन।

(४०८) भुवनेति। भुवनानां लक्ष्म्याः प्रवेशस्य मङ्गलं माङ्गलिकमित्यर्थः। महामणितोरणं महारत्ननिर्म्मितं बहिर्द्वारं तेन।

(४०९) अतिदीर्घेति। अतिदीर्घम् अत्यायतं दोर्दण्डयुगलं भुजदण्डद्वयं तेन। युगपत् समकालम् आयतिम् आयामम् अपहरन्तं नाशयन्तं सङ्कोचयन्तम् इत्यर्थः।

(४१०) सोदर्य्येति। सोदर्य्या सहोदरा समगर्भजेत्यर्थः भगिनीति भावः या लक्ष्मीः श्रीः सुखसम्बन्धिनीति भावः तस्याः चुम्बनाय लोभः तेन हेतुना कौस्तुभमणेरिव क्षीरसागरोत्पन्नतया सहोदरस्येव इत्यर्थः मुखावयवतां वदनाङ्गतां गतस्य प्राप्तस्य तादूप्येण अवतीर्णस्येति भावः अधरस्य गलता स्रवता रागेण लोहि-

सुहृत्परिहासस्मितैः प्रकीर्य्यमाणविमलदशनकिरणशिखाप्रतानैः (४१२) प्रकृतिमूढ़ाया राजश्रियाः प्रज्ञालोकमिव दर्शयन्तं मुखजनितेन्दुसन्देहागतानि कुमुदिनीवनानीव प्रेषयन्तं स्फुटधवलदशनपङ्क्तिकृतकुमुदवनशङ्काप्रविष्टां शरज्ज्योत्स्नामिव विसर्जयन्तं (४१३) मदिरामृतपारिजातगन्धगर्भेण भरितसकलककुभा मुखामोदेन अमृतमथनदिवसमिव सृजन्तं (४१४) विकचमुखकमलकर्णिकाकोशेन अनवरतमापीयमानश्वाससौरभमिवाधोमुखेन नासावंशेन चक्षुषः (४१५) क्षीरस्निग्धस्य धवलिम्ना

---

त्वेन पारिजातपल्लवरसेनेव पारिजातकिसलयद्रवेणेव दिङ्मुखानि सिञ्चन्तं चालयन्तम्।

(४११) अन्तरान्तरेति। अन्तरान्तरा मध्ये मध्ये सुहृदिति सुहृद्भिः सह ये परिहासाः तेषु स्मितानि मन्दहासाः तैः प्रकीर्य्यमाणेति प्रकीर्य्यमाणाः विक्षिप्यमाणा विमला दशनकिरणानां दन्तमयूखानां शिखाप्रताना अर्च्चिर्निचया येषु तथोक्तैः।

(४१२) प्रकृतिमूढ़ायाः स्वभावमुग्धायाः गुणदोषविचारानभिज्ञाया इति भावः प्रज्ञालोकमिव प्रकृष्टज्ञानरूपमालोकं दर्शयन्तं मुखे जनितः य इन्दुसन्देहः इन्दुरयमिति सन्देहः तेन आगतानि कुमुदिनीवनानीव प्रेषयन्तम् इन्दुरयं नेति ज्ञात्वा विसर्जयन्तं स्फुटधवला या दशनपङ्क्तिः तया कृता जनिता या कुमुदशङ्का तया हेतुना प्रविष्टां मुखाभ्यन्तरमिति भावः शरज्ज्योत्स्नां शरत्कालीनकौमुदीमिव विसर्जयन्तं नैतानि कुमुदवनानीति ज्ञात्वा त्यजन्तम्।

(४१३) मदिरेति। मदिरामृतवत् यः पारिजातगन्धः स गर्भे यस्य तेन भरितसकलककुभा सर्वदिक्प्रसारिणेति यावत् मुखामोदेन वदनसौरभेण अमृतमथनदिवसमिव सृजन्तं जनयन्तम्।

(४१४) विकचेति। विकचं प्रस्फुटं मुखं कमलमिव तस्य कर्णिकाकोशः बीजकोशः तेन अधोमुखेन नतमुखावयवेन नासावंशेन नासिकारूपवेणुना आपीयमानम् आघ्रायमाणं श्वासस्य सौरभं येन तथोक्तम्।

दिङ्मुखानि अपूर्ववदनचन्द्रोदयोद्वेलक्षीरोदप्लावितानीव कुर्वाणं (४१६) विमलकपोलफलकप्रतिबिम्बितां चामरग्राहिणीं विग्रहिणीमिव मुखनिवासिनीं सरस्वतीं दधानम् अरुणेन चूडामणिशोचिषा (४१७) सरस्वतीर्ष्याकुपितलक्ष्मीप्रसादनलग्नेन चरणालक्तकेनेव लोहितायितललाटतटम् (४१८) आपाटलांशुतन्त्रीसन्तानवलयिनीं (४१९) कुण्डलमणिकुटिलकोटिबालवीणाम् (४२०) अनवरतचलितचरणानां वादयताम् उपवीणयतामिव (४२१) स्वरव्याकरणविवेकविशारदं (४२२) श्रवणावतंसमधुकर-

---

(४१५) क्षीरस्निग्धस्य क्षीरवत् स्निग्धं तस्य चक्षुषः धवलिमा श्वैत्येन दिङ्मुखानि अपूर्वः वदनमिव चन्द्रः तस्य उदयेन उद्वेलः वेलायामुच्छलितः यः क्षीरोदः तेन प्लावितानीव आप्लावितानीव।

(४१६) विमलेति। विमले कपोलफलके गण्डतटे प्रतिबिम्बिता प्रतिफलिता तां विग्रहिणीमिव मूर्त्तिमतीमिव सरस्वतीं वाग्देवीम्। अरुणेन रक्तेन चूडामणिशोचिषा चूडामणेः शिरोरत्नस्य शोचिषा अर्चिषा।

(४१७) सरस्वतीति। सरस्वत्याम् ईर्ष्या द्वेषः तया कुपिता या लक्ष्मीः तस्याः प्रसादनं चरणप्रणिपातेन सान्त्वनं तेन। लग्नं संसक्तं तेन चरणालक्तकेन चरणलाक्षारसद्रवेणेवेत्यर्थः। लोहितेति। लोहितायितः अरुणितः ललाटतटः यस्य तथोक्तम्। लोहितायतललाटतटमिति पाठे लोहितः आयतः विशालः ललाटतटः यस्य तमित्यर्थः।

(४१८) आपाटलेति। आपाटला ईषद्रक्ता अंशवः मयूखा एव तन्त्रीसन्तानाः तन्त्रीसङ्घाः तेषां वलयं मण्डलं विद्यतेऽस्या इति तथोक्ता ताम्।

(४१९) कुण्डलेति। कुण्डलयोः कर्णभूषणयोः ये मणयः तेषां कुटिला भङ्गिमती कोटिशिखा एव बालवीणा सप्ततन्त्री विपञ्ची ताम्।

(४२०) अनवरतेति। अनवरतं चलिताः चरणा येषां तथोक्तानाम्। उपवीणयतां वीणया स्तुतिं कुर्वतामित्यर्थः।

कुलानां कलक्वणितमाकर्णयन्तम् ( ४२३ ) उत्फुल्ल-मालतीमयेन राजलक्ष्म्याः कचग्रहलीलालग्नेन नखज्योत्स्नावलयेनेव मुखशशिपरिवेशमण्डलेन मुण्डमालागुणेन परिकलितकेशान्तं (४२४) शिखण्डाभरणभुवा मुक्ताफलालोकेन मरकतमणिकिरणकलापेन च अन्योन्यसंवलनवृजिनेन प्रयागप्रवाहवेणिकावारिणेव आगत्य स्वयम् अभिषिच्यमानं ( ४२५ ) श्रमजलविलीनबहलकृष्णागुरुपङ्कतिलक-

---

( ४२१ ) स्वरेति। स्वराः निषादादयः व्याक्रियन्ते प्रकाश्यन्ते अनेनेति स्वरव्याकरणः स चासौ विवेकश्चेति स्वरव्याकरणविवेकः तेन विशारदं चतुरं यथा तथा क्रियाविशेषणम्।

( ४२२ ) श्रवणेति। श्रवणयोः कर्णयोः यौ अवतंसौ अलङ्कारविशेषौ तयोः मधुकरकुलानि भृङ्गसमूहाः स्थितानीति भावः तेषां कलक्वणितं मधुरास्फुटं रणितम् आकर्णयन्तं शृण्वन्तम्।

( ४२३ ) उत्फुल्लेति। उत्फुल्लमालतीमयेन विकसितमालतीगुम्फितेन राजलक्ष्म्याः कर्तृभूतायाः कचग्रहः केशाकर्षणं तेन आलग्नं संसक्तं तेन। नखानां राजलक्ष्म्या इति भावः ज्योत्स्नाः प्रभा इति यावत् तासां वलयं मण्डलं तेनेव। मुखं शशीव चन्द्र इव तस्य परिवेशमण्डलं परिधिमण्डलं तेन। मुण्डमालागुणेन शिरोमालयेत्यर्थः परिकलितः परिणद्धः केशान्तः केशनिचयः यस्य तथोक्तं यद्वा परिकलिता ये केशाः तैरन्तः रम्यता यस्य तम्।

( ४२४ ) शिखण्डेति। शिखण्डाभरणं चूडालङ्कारः तस्माद्भवतीति तथोक्तेन। मुक्ताफलानाम् आलोकेन प्रभया। मरकतमणीनां किरणकलापेन प्रभाजालेन अन्योन्यस्य संवलनं मिश्रणं तेन वृजिनम् आविलं तेन। प्रयागेति प्रयागे गङ्गायमुनासङ्गमक्षेत्रे या प्रवाहवेणिका उभयोः स्रोतोरूपा वेणी तस्या वारि तेनेव। अभिषिच्यमानं क्रियमाणाभिषेकमित्यर्थः।

( ४२५ ) श्रमेति। श्रमजलेन चामरादिसञ्चारणजनितपरिश्रमजनितेन

कलङ्ककल्पितेन कालिम्ना (४२६) प्रार्थनाचाटुचतुरचरणपतनशतश्यामिकाकिणेनेव (४२७) नीलायमानललाटलेखाभिः (४२८) क्षुभितमानसोद्गतैः उत्कलिकाकलापैरिव हारैः उल्लसद्भिः अवष्टभ्यमानाभिः (४२९) विलासवल्गनचटुलैः भ्रूलताकल्पैः ईर्ष्यया श्रियमिव तर्जयन्तीभिः (४३०) आयामिभिः श्वसितैः अविरलपरिमलैः मलयमारुतमयैः पाशैः इवाकर्षन्तीभिः (४३१) विकटबकुलावलीवराटकवेष्टितमुखैः वहद्भिः स्तनकलसैः (४३२)

---

जलेन घर्मेणेत्यर्थः विलीनं द्रवतां गतं बहलं प्रशस्तं कृष्णागुरुपङ्कतिलकं कालागुरुद्रवरचितं तिलकं तस्य कलङ्कः चिह्नं कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणमित्यमरः तेन कल्पितः कृतः तेन। कालिम्ना श्यामलत्वेन।

(४२६) प्रार्थनेति। प्रार्थनायां मामनुगृहाणेति याञ्चायां यच्चाटुदैन्यं तेन चतुरं सविलासं यानि चरणपतनानि तेषां शतेन बाहुल्येनेति यावत् या श्यामिका कालिमा तस्याः किणः चिह्नविशेषः तेनेव।

(४२७) नीलेति। नीलायमाना नीलिवाचरन्ती ललाटलेखा भालरेखा यासां ताभिः।

(४२८) क्षुभितेति। क्षुभितानि इष्टलाभविरहात् क्षोभं गतानि यानि मानसानि तेभ्यः उद्गताः उत्थिताः तैः। उत्कलिकाकलापैरिव रणरणिकासमूहैरिव उल्लसद्भिः राजमानैः हारैः अवष्टभ्यमानाभिः स्तब्धीक्रियमाणाभिः।

(४२९) विलासेति। विलासेन विभ्रमेण यद् वल्गनं चलनं तत्र चटुलाः पटवः तैः भ्रूलताकल्पैः श्रियमिव राजलक्ष्मीमिव सपत्नीधियेति भावः।

(४३०) आयामिभिः आयतैः श्वसितैः निश्वासैः इष्टलाभविरहदुःखादिति भावः अविरलः घनः परिमलः सौरभं येषां तैः। पाशैरिव रज्जुभिरिव आकर्षन्तीभिः प्रियं हर्षमिति भावः।

(४३१) विकटेति। विकटा स्थूला या बकुलावली बकुलमाला सैव

स्वदारसन्तोषरसमिवाशेषमुद्धरन्तीभिः (४३२) कुचोत्कम्पिकाविकारप्रेङ्खितानां हारतरलमणीनां रश्मिभिः आकृष्य हृदयमिव हठात्प्रवेशयन्तीभिः प्रभामुचाम् आभरणमणीनां मयूखैः प्रसारितैः बहुभिरिव बाहुभिः आलिङ्गन्तीभिः (४३४) जृम्भानुबन्धबन्धुरवदनारविन्दावरणीकृतैः उत्तानैः करकिसलयैः सरभसप्रधावितानि मानसानीव निरुन्धतीभिः (४३५) मदान्धमधुकरकुलकीर्य्यमाणकर्णकुसुमरजःकणकूणितकोणानि कुसुमशरशरनिकरप्रहारमूर्च्छामुकुलितानीव लोचनानि चतुरं सञ्चारयन्तीभिः

---

वराटकः रज्जुः तेन वेष्टितं मुखं येषां तैः बृहद्भिः उत्तुङ्गैः स्तनाः कलसा इव तैः।

(४३२) स्वदारेति। स्वस्य दाराः पत्नी तेषु सन्तोष एव रसः रागः हर्षश्चेति भावः जलञ्च तमिव अशेषं समग्रम् उद्धरन्तीभिः उत्तोलयन्तीभिः रिक्तीकुर्वतीभिरिति यावत् तादृशस्तनप्रदर्शनेन स्वदारसन्तोषोऽपक्रियते स्वसन्तोषश्च जन्यते इति भावः।

(४३३) कुचेति। कुचानां स्तनानाम् उत्कम्पिका कम्पविशेष एव विकारः तेन प्रेङ्खिताः चालिताः तेषां हारतरलमणीनां हारेषु तरलाः चञ्चला ये मणयः रत्नानि तेषां रश्मिभिः मयूखैः आकृष्य हर्षमिति शेषः। प्रभामुचां प्रभावर्षिणाम् आभरणमणीनाम् अलङ्काररत्नानां मयूखैः किरणैः। आलिङ्गन्तीभिः आश्लिष्यन्तीभिः।

(४३४) जृम्भेति। जृम्भाणां कामजनितानुभावविशेषाणाम् अनुबन्धेन साकल्येन बन्धुराणि भङ्गिमन्ति वदनानि अरविन्दानीव पद्मानीव तेषाम् आवरणीकृताः आवरणत्वेन उद्धृताः तैः। उत्तानैः चिचितैः करकिसलयैः सरभसप्रधावितानि सवेगप्रचलितानि हर्षं प्रतीति भावः निरुन्धतीभिः निरुद्धं कुर्वतीभिः।

(४३५) मदेनेति। मदेन अन्धानि मत्तानीति यावत् यानि मधुकरकुलानि तैः कीर्य्यमाणानि क्षिप्यमाणानि यानि कर्णकुसुमानां रजांसि परागाः तेषां कणैः लेशैः कूणिताः सङ्कोचिताः कोणाः येषां तानि अतएव कुसुमशरस्य कामस्य शर-

अन्योन्यमत्सरात् (४३६) आविर्भवद्भङ्गुरभ्रुकुटिविभ्रम-क्षिप्तैः कटाक्षैः कर्णेन्दीवराणीव ताड़यन्तीभिः (४३७) अनिमेषदर्शनसुखरसराशिं (४३८) मन्थरितपक्ष्मणा चक्षुषा पीतमिव (४३९) कोमलकपोलपालीप्रतिविम्बितं वहन्तीभिः (४४०) अभिलाषलीलानिर्निमित्तस्मितैः चन्द्रोदयान् इव मदनसाहायकाय सम्पादयन्तीभिः (४४१) अङ्गभङ्गवलनान्योन्यघटितोत्तानकरवेणिकाभिः (४४२) स्फुटनमुखराङ्गुलीकाण्डकुण्डलीक्रियमाणनखदीधितिनिवह-

---

निकरैः शरसमूहैः प्रहारेण या मूर्च्छा मोहः तया मुकुलितानीव निमीलितानीव लोचनानि नयनानि चतुरं सविलासं यथा तथा सञ्चारयन्तीभिः प्रसारयन्तीभिः। अन्योन्यमत्सरात् परस्परेर्ष्यावशात्।

(४३६) आविर्भवदिति। आविर्भवन्तः उत्पद्यमानाः भङ्गुराः कुटिला ये भ्रुकुटिविभ्रमाः तैः क्षिप्ताः तैः। कर्णेन्दीवराणीव कर्णोत्पलानीव ताड़यन्तीभिः स्वसापत्न्येर्ष्ययेति भावः।

(४३७) अनिमेषेति। अनिमेषं निर्निमेषं दर्शनम् अवलोकनं तेन सुख-रसानां राशिर्यस्य तं हर्षमिति शेषः।

(४३८) मन्थरितेति। मन्थरितानि निश्चलानि पक्ष्माणि लोमानि यस्य तेन चक्षुषा नेत्रेण पीतमिव।

(४३९) कोमलेति। कोमलायां कपोलपाल्यां कपोलतले प्रतिविम्बितं प्रतिफलितं वहन्तीभिः धारयन्तीभिः।

(४४०) अभिलाषेति। अभिलाषस्य कामतृष्णायाः लीलया विलासेन निर्निमित्तानि अहेतुकानि स्मितानि मृदुहसितानि तैः। मदनसाहायकाय काम-साहाय्याय सम्पादयन्तीभिः प्रकाशयन्तीभिः।

(४४१) अङ्गेति। अङ्गानां भङ्गवलनया जृम्भादिजनितभङ्गिविशेषेण अन्योऽन्येन परस्परेण घटिता कृता उत्ताना याः करवेणिका परस्परानुबन्धेन स्थितयोः करयोः अङ्गुलिविन्यासविशेषाः ताभिः।

निभेन अकिञ्चित्करकामकार्मुकाणीव रुषा भञ्जतीभिः वारविलासिनीभिः ( ४४३ ) विलुप्यमानसौभाग्यमिव सर्वतः ( ४४४ ) स्पर्शस्विन्नवेपमानकरकिसलयगलितचरणारविन्दां चरणग्राहिणीं विहस्य कोणेन लीलालसं शिरसि ताड़यन्तम् (४४५) अनवरतकरकलितकोणतया च आत्मनः प्रियां वीणामिव श्रियमपि शिक्षयन्तं निःस्नेह इति धनैः ( ४४६ ) अनाश्रयणीय इति दोषैः निग्रहरुचिः इति इन्द्रियैः दुरुपसर्प इति कलिना नीरस इति ( ४४७ )

---

( ४४२ ) स्फुटनेन मोटनेनेत्यर्थः मुखराः सशब्दा ये अङ्गुलय एव काण्डाः शाखाविशेषाः तैः कुण्डलीक्रियमाणानां नखानां दीधितिनिवहाः मयूखनिचयाः तेषां निभच्छलं तेन। अकिञ्चित्कराणि अक्षमाणि इति भावः हर्षचित्ताकर्षणाशक्तानीति भावः कामस्य कार्मुकाणि धनूंषि तानीव रुषा कोपेन भञ्जतीभिः खण्डयन्तीभिः ।

( ४४३ ) विलुप्यमानेति विलुप्यमानं क्रियमाणं सौभाग्यं वाल्लभ्यं यस्य तथोक्तमिव ।

( ४४४ ) स्पर्शेति । स्पर्शेन स्विन्नः घर्माक्तः वेपमानः कम्पमानश्च सात्त्विभावातिशयादिति भावः यः करकिसलयः तस्मात् गलितं च्युतं चरणारविन्दं पादपद्मं हर्षस्येति भावः यस्याः तथोक्तां चरणग्राहिणीं चरणसेविनीमित्यर्थः कोणेन वीणावादनदण्डेन कोणो वीणादिवादनमित्यर्थः। लीलालसं विलासमन्थरं ताड़यन्तं प्रहरन्तम् ।

( ४४५ ) अनवरतेति। अनवरतम् अविरतं करकलितः करधृतः कोणो येन तथोक्तः तस्य भावः तत्ता तया हेतुना प्रियां प्रीतिजननीम्। शिक्षयन्तम् अभ्यस्यन्तं पर्य्यालोचयन्तम्। निःस्नेहः स्नेहरहितः सततव्ययशीलत्वादिति भावः धनैः दृश्यमाणमित्युत्तरेण सम्बन्धः एवं सर्वत्र ।

( ४४६ ) अनाश्रयणीयः असेवनीयः निग्रहरुचिः निग्रहे वशीकरणे रुचिरभिलाषो यस्य तथाभूतः। दुरुपसर्पः दुर्धर्षः। कलिना चतुर्थयुगेन। नीरसः निरनुरागः ।

व्यसने भीरुः इति अयशसा (४४८) दुर्ग्रहचित्तवृत्तिरिति चित्तभुवा स्त्रीपर इति सरस्वत्या शठः इति परकलत्रैः काष्ठामुनिरिति यतिभिः धूर्त्त इति वेश्याभिः नेय इति सुहृद्भिः कर्म्मकर इति विप्रैः सुसहाय इति (४४९) शत्रु-योधैः एकमपि अनेकधा गृह्यमाणं शन्तनोः (४५०) वाहिनीपतिं भीष्मात् जितकाशिनं (४५१) द्रोणात् चाप-

---

(४४७) व्यसने मृगयादिभिरष्टादशभिः तदुक्तं मनुना दशकामसमुत्थानि तथाष्टौ क्रोधजानि च। व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्॥ कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु॥ मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥ पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इति॥ भीरुः भयशीलः। अयशसा अकीर्त्तिकरेण दुर्येष्टितेनेति भावः।

(४४८) दुर्ग्रहेति। दुर्ग्रहा दुराकर्षा चित्तवृत्तिर्यस्य तथोक्तः। चित्तभुवा कामेन। स्त्रीपरः स्त्रैणः। शठः धूर्त्तः वञ्चक इत्यर्थः। षण्ढ इति पाठान्तरे षण्ढः क्लीव इत्यर्थः काष्ठामुनिः उत्कर्षवान् तापसः काष्ठोत्कर्षे स्थितौ दिशीत्यमरः। नेयः वशंवदः। कर्मकरः भृत्यः। सुसहायः सुष्ठु सहायसम्पन्नः कथमन्यथा एकेन वयं पराजिता इति भावः।

(४४९) शत्रुयोधैः शत्रुवीरैः अनेकधा बहुधा गृह्यमाणं ज्ञायमानम् अत्रोल्लेखालङ्कारः तथा च दर्पणः। क्वचिद्भेदाद्ग्रहीतृणां विषयाणां तथा क्वचित्। एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते इति। शन्तनोः तदाख्यात् कुरुवंशीयात् राज्ञः ल्यब्लोपे पञ्चमी। शन्तनुमपेक्ष्येत्यर्थः एवमुत्तरत्र।

(४५०) महेति। महत्यः वाहिन्यः चमूः तासां पतिः तम्। शन्तनुस्तु महती एकैव वाहिनी गङ्गा तस्याः पतिरिति व्यतिरेकः। भीष्मात् भीष्ममपेक्ष्य जितकाशी जितेन जयेन काशते राजते इति तथोक्तः जितेन्द्रियो वा तम्। भीष्मस्तु पितगुरोधेन जितेन्द्रियः अयन्तु स्वभावत इति व्यतिरेकः।

लालसं ( ४५२ ) गुरुपुत्रात् अमोघमार्गणं ( ४५३ ) कर्णात् मित्रप्रियं ( ४५४ ) युधिष्ठिरात् बहुक्षमं ( ४५५ ) भीमात् ( ४५६ ) अनेकनागायुतबलं ( ४५७ ) धनञ्जयात् महाभारतरणयोग्यं ( ४५८ ) कारणमिव कृतयुगस्य बीजमिव विबुधसर्गस्य उत्पत्तिद्वीपमिव दर्पस्य एकागारमिव करुणायाः प्रातिवेश्मिकमिव पुरुषोत्तमस्य ( ४५९ ) खनि

---

( ४५१ ) द्रोणात्। धनुर्वेदाचार्य्यात् चापे धनुषि लालसा यस्य अथच च: समुच्चये अपगता लालसा यस्य तथोक्त: तं द्रोणस्तु अर्थलालसापूर्णतया द्रुपदेन सह विरोधं कृतवान् अयं तु न तथेति व्यतिरेक:।

( ४५२ ) गुरुपुत्रात् गुरु: द्रोणाचार्य्य: तस्य पुत्र: अश्वत्थामा: तस्मात्। अमोघा: अव्यर्था: मार्गणा: शरा यस्य तथोक्त: तम् अविफलशरवर्षिणमित्यर्थ:। अथच गुरुपुत्रात् या मार्गणा याच्ञा सा अमोघा यत्र तथोक्त: गुरुपुत्रप्रार्थितपूरक इति यावत् अतएव व्यतिरेक:।

( ४५३ ) कर्णात् राधेयात् मित्रप्रियं सूर्य्यनन्दनतया सूर्य्यप्रियोहि कर्ण: अयं तु सूर्य्योपासकतया तत्प्रिय: कर्णस्तु मित्रस्य एकस्य दुर्योधनस्य प्रिय: अयं तु मित्राणां बहूनां प्रिय इति व्यतिरेक:।

( ४५४ ) युधिष्ठिरात् धर्म्मराजात् बहुक्षमं क्षमागुणबहुलं अथच बह्वी क्षमा पृथिवी राज्यमित्यर्थ: यस्य तथोक्तम्।

( ४५५ ) भीमात् मध्यमपाण्डवात्।

( ४५६ ) अनेकेति। अनेकानि बहूनि नागानां हस्तिनां अयुतानि बलानि सैन्यानि अन्यत्र अनेकनागायुतवत् बलं सामर्थ्यं यस्य तथोक्त: तम्।

( ४५७ ) धनञ्जयात् अर्जुनात् महान् भार: पृथिव्या इत्यर्थ: तस्य तरणं वहनं अन्यत्र महाभारते यो रण: संग्राम: कुरुक्षेत्रादियुद्धं तस्य तस्मिन् वा तरणं प्लवनं तस्य योग्य: तम्।

( ४५८ ) कारणमिव हेतुभूतमिव कृतयुगस्य सत्ययुगस्य। बीजमिव अङ्कुरोत्पादक क्षुद्रवस्तुविशेष इव विबुधसर्गस्य देवसृष्टे:। उत्पत्तिद्वीपमिव उत्पत्ति

पर्वतमिव पराक्रमस्य सर्वविद्यासङ्गीतगृहमिव सरस्वत्याः द्वितीयामृतमथनदिवसमिव लक्ष्मीसमुत्थानस्य बलदर्शनमिव वैदग्ध्यस्य एकस्थानमिव स्थितीनां सर्वस्वकथनमिव कान्तेः अपवर्गमिव रूपपरमाणुसर्गस्य सकलदुश्चरितप्रायश्चित्तमिव राज्यस्य ( ४६० ) सर्वबलसन्दोहावस्कन्दमिव कन्दर्पस्य उपायमिव पुरन्दरदर्शनस्य आवर्त्तनमिव धर्मस्य कन्यान्तःपुरमिव ( ४६१ ) कलानां परमप्राणमिव सौभाग्यस्य ( ४६२ ) राजसर्गसमाप्त्यवभृथस्नानदिवसमिव सर्वप्रजापतीनां गम्भीरञ्च प्रसन्नञ्च त्रासजननञ्च रमणीयञ्च कौतुकजननञ्च पुण्यञ्च चक्रवर्त्तिनं हर्षम् अद्राक्षीत् ।

( ४६३ ) दृष्ट्वा च अनुगृहीत इव निगृहीत इव

---

क्षेत्रविशेषमिव एकागारमिव अद्वितीयं गृहमिव प्रातिवेशिकं प्रतिविम्बमिव प्रतिवेशिनमिव वा ।

( ४५९ ) खनिपर्वतमिव आकरगिरिमिव । बलदर्शनमिव सामर्थ्यरूपमिव । एकस्थानमिव अद्वितीयं निकेतनमिव स्थितीनां मर्यादानां शिष्टाचाराणामित्यर्थः । अपवर्गमिव परमोत्कर्षमिवेत्यर्थः ।

( ४६० ) सर्वेति । सर्वेषां बलानां सैन्यानां सामर्थ्यानां वा सन्दोहः सङ्घः तस्य अवस्कन्दः समावेशः तमिव । पुरन्दरदर्शनस्य इन्द्रसाक्षात्कारस्य । आवर्त्तनमिव आवर्त्तमिवेत्यर्थः ।

( ४६१ ) कलानां चतुःषष्टिविधानां कामविद्यानां नृत्यगीतादीनां परमप्राणमिव परमं बलमिव ।

( ४६२ ) राजसर्गेति । राज्ञां सर्गः सृष्टिः तस्य समाप्तिः अवसानं तमेव अवभृथस्नानं दीक्षान्तस्नानं तस्य दिवसः तमिव सर्वप्रजापतीनां सर्वेषां स्रष्टॄणाम् । चक्रवर्त्तिनं सार्वभौमम् ।

साभिलाष इव तृप्त इव रोमाञ्चमुचा मुखेन (४६४) मुञ्चन् आनन्दवाष्पवारिविन्दून् दूरादेव विस्मयस्मेरः समचिन्तयत् सोऽयं सुजन्मा सुगृहीतनामा तेजसां राशिः (४६५) चतुरुदधिकेदारकुटुम्बी भोक्ता ब्रह्मस्तम्भफलस्य (४६६) सकलादिराजचरितजयज्येष्ठमल्लो देवः परमेश्वरो हर्षः। एतेन च खलु राजन्वती पृथ्वी। न अस्य हरेरिव (२६७) वृषविरोधीनि बालचरितानि च पशुपतेरिव (४६८) दक्षोद्वेगकारीणि ऐश्वर्य्यचरितानि न

(४६३) अनुगृहीत इव अनुकम्पित इव प्रसन्नया दृश्येति भावः निगृहीत इव अभिभूत इव तेजसेति भावः साभिलाष इव समुत्सुक इव पुनः पुनः दर्शनाशयेति भावः तृप्त इव चरितार्थ इव द्रष्टव्यवस्तुदर्शनेन इति भावः रोमाञ्चमुचा पुलकितेनेत्यर्थः।

(४६४) मुञ्चन् त्यजन्। विस्मयस्मेरः विस्मयेन चमत्कारेण अलौकिकज्ञानजनितेन इति भावः स्मेरः विकसितचित्त इत्यर्थः।

(४६५) चतुरुदधीति। चतुर्णां च उदधीनां सागराणां यत् केदारं क्षेत्रम् अन्तःपातीति भावः चतुरर्णववलता महीत्यर्थः तदेव कुटुम्बं पोष्यवर्गः अस्येति तथोक्तः भोक्ता अधिकारी ब्रह्मस्तम्भफलस्य ब्रह्माण्डवर्त्तिसर्वरत्नजातस्येत्यर्थः।

(४६६) सकलेति सकलाः समस्ता आदिराजाः मन्वादयः तेषां चरितानि आचाराः तेषां जये पराभवविषये अतिक्रमणे इत्यर्थः ज्येष्ठमल्लः प्रधानवीरः परमेश्वरः सम्राट्। एतेन हर्षेण राजन्वती प्रशस्तराजशालिनी इत्यर्थः अस्य हर्षस्य। हरेरिव कृष्णस्येव।

(४६७) वृषेति। वृषो धर्मः अन्यत्र वृषरूपोऽरिष्टासुरः तस्य विरोधीनि विध्वंसकानीत्यर्थः बालचरितानि शैशवक्रीड़ितानि। कृष्णो बाल्यलीलायां वृषं हतवान् अयं तु तत्पालक इति व्यतिरेकः। पशुपतेरिव हरस्येव।

(४६८) दक्षेति। दक्षाणां कुशलानां जनानामिति भावः अन्यत्र दक्षस्य प्रजापतेः श्वशुरस्येति भावः उद्वेगकारीणि भीषणानि ऐश्वर्य्यविलसितानि आधि-

(४६८) शतक्रतोरिव गोत्रविनाशपिशुनाः प्रवादाः न यमस्येव अतिवल्लभानि दण्डग्रहणानि न वरुणस्येव (४७०) निस्त्रिंशग्राहसहस्ररक्षिता रत्नालयाः न (४७१) धनदस्येव निष्फलाः (४७२) सन्निधिलाभाः न जिनस्येव (४७३) अर्थवादशून्यानि दर्शनानि न चन्द्रमस इव (६७४) बहुलदोषोपहताः श्रियः। चित्रमिदम् अत्य-

---

पत्यचेष्टितानि अन्यत्र ऐश्वर्य्याणि ईश्वरधर्म्मा अणिमादय इत्यर्थः तेषां विलसितानि विजृम्भितानि वीरभद्रादिसृष्टिव्यापारा इत्यर्थः।

(४६९) शतक्रतोरिव इन्द्रस्येव। गोत्रविनाशपिशुनाः गोत्राणां वंशानाम् अन्यत्र पर्वतानां विनाशपिशुनाः विध्वंससूचकाः प्रवादाः कीर्त्तयः। यमस्येव अन्तकस्येव। दण्डग्रहणानि दण्डो दमनं तदर्थमर्थानां ग्रहणानि अन्यत्र दण्डस्य शासनयष्टेः ग्रहणानि।

(४७०) निस्त्रिंशेति। निस्त्रिंशग्राहाणां खड्गधारिणां सहस्रैः अन्यत्र निस्त्रिंशा निष्ठुराः ग्राहा जलजन्तुभेदाः तेषां सहस्रैः रक्षिताः पालिताः रत्नालयाः रत्नभाण्डागाराणि अन्यत्र रत्नाकराः समुद्रा इत्यर्थः।

(४७१) धनदस्येव कुवेरस्येव न निष्फलाः सफलाः ज्ञानोपदेशलाभादिति भावः अन्यत्र व्ययाभावात् निष्प्रयोजना इत्यर्थः।

(४७२) सन्निधिलाभाः सन्तः साधव एव निधयः अमूल्यानि रत्नानि अन्यत्र सन्तः उत्कृष्टा निधयः पद्मशङ्खादयः तेषां लाभाः प्राप्तयः। जिनस्येव बुद्धदेवस्येव।

(४७३) अर्थवादेति। अर्थानां धनानां वादः वचनं तेन शून्यानि रहितानि दर्शनानि अवलोकनानि अस्य राज्ञः साक्षात्कारे प्रभूता अर्था लभ्यन्ते इति भावः अन्यत्र अर्थवादः स्तुतिवादः तेन शून्यानि सारवन्तीत्यर्थः दर्शनानि महायानादीनि तदीयशास्त्राणीति भावः।

(४७४) बहुलेति। बहुलाः अनेके दोषाः तैरुपहताः मलिनीकृता इति यावत् अन्यत्र बहुलस्य कृष्णपक्षस्य दोषाभिः रजनीभिः उपहताः नाशिताः। अजस्रम् अविनश्वरम्। त्यागस्य दानस्य पर्य्याप्ती विषयः प्रचुरं स्थानमित्यर्थः अर्थिनः याचका न इति अन्वयः त्यागाकाङ्क्षा न तृप्तिमायातीति भावः।

मरं राजत्वम्। अपिच अस्य त्यागस्य अर्थिनः (४७५) प्रज्ञायाः शास्त्राणि कवित्वस्य वाचः (४७६) सत्त्वस्य साहसस्थानानि उत्साहस्य व्यापाराः (४७७) कीर्त्तेः दिङ्मुखानि अनुरागस्य लोकहृदयानि गुणगणस्य (४७८) सङ्ख्या कौशलस्य (४७९) कला न पर्य्याप्तो विषयः। अस्मिंश्च राजनि (४८०) यतीनां योगपट्टकाः (४८१) पुस्तकर्म्मणां पार्थिवविग्रहाः षट्पदानां दानग्रहणकलहाः

---

(४७५) प्रज्ञायाः प्रकृष्टाया बुद्धेः पर्य्याप्तो विषयः शास्त्राणि न इति अन्वयः सर्वाणि शास्त्राणि अतीत्य बुद्धिः प्रवर्त्तते इति भावः। कवित्वस्य काव्यरचयितृत्वस्य पर्य्याप्तो विषयः वाचः न इति अन्वयः वाग्देवीमतिशायिनी कवित्वशक्तिरिति भावः।

(४७६) सत्वस्य बलस्य पर्य्याप्तो विषयः साहसस्थानानि न इति अन्वयः एतावदधिकं बलं यत् तत्प्रकाशस्थानानि न लभ्यन्ते इति भावः। उत्साहस्य बलप्रकटनस्येत्यर्थः पर्य्याप्तो विषयः व्यापारा न इति अन्वयः उत्साहोपयुक्तव्यापारस्थानं नास्तीति भावः।

(४७७) कीर्त्तेः यशसः। दिङ्मुखानि पर्य्याप्तो विषयो न इति अन्वयः एतावदधिकाः कीर्त्तयः यत् दिगन्तेषु न मान्तीति भावः। अनुरागस्य प्रीतेः लोकहृदयानि जनमानसानि पर्य्याप्तो विषयो न इति अन्वयः एतावाननुरागो यल्लोकहृदयेषु न मातीति भावः।

(४७८) सङ्ख्या एकादिपरार्द्धपर्य्यन्ता इति यावत् गुणगणस्य विद्यादिगुणराशेः पर्य्याप्तो विषयः न इति अन्वयः एतावन्तो गुणा यत् न सङ्ख्यातुं शक्यन्ते इति भावः।

(४७९) कलाः चतुःषष्टिविधाः कामविद्याः कौशलस्य वैदग्ध्यस्य पर्य्याप्तो विषयो न इति अन्वयः एतावद् वैदग्ध्यं यत् कलाविज्ञानमतिशेते इति भावः।

(४८०) यतीनां परमहंसानां योगपट्टकाः पर्य्यङ्कबन्धनार्थम् उपवीतभेदाः योगेन उपधिना पट्टकाः कूटलेख्यानीत्यर्थः। नेति अन्यव्यवच्छेद आर्थ इति परिसंख्यालङ्कारः एवमुत्तरत्र।

(४८१) पुस्तकर्म्मणां लेप्यकर्म्मणां पार्थिवविग्रहाः मृण्मयशरीराणि न तु

(४८२) वृत्तानां पादच्छेदाः अष्टापदानां चतुरङ्गकल्पना (४८३) पन्नगानां द्विजगुरुद्वेषाः (४८४) वाक्यविदाम् अधिकरणविचारः। इति (४८५) समुपसृत्य चोपवीती स्वस्तिशब्दम् अकरोत्।

अथोत्तरेण नातिदूरे राजधिष्ण्यस्य गजपरिचारको मधुरम् अपरवक्त्रम् उच्चैः अगायत्।

(४८६) करिकलभ! विमुञ्च लोलतां चर विनयव्रतमानताननः।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरि क्षमते न तेऽङ्कुशः॥

---

राजमणविरोधा इति व्यवच्छेदस्यार्थत्वात् परिसङ्ख्या। एवमुत्तरत्र। षट्पदानां भ्रमराणां दानं मदवारि तस्य ग्रहणे आदाने कलहा विरोधाः कलरवा इति भावः दानस्य दत्तधनस्य ग्रहणे कलहा अहमहमिकया विरोधास्तु नेति भावः।

(४८२) वृत्तानां छन्दसां पादच्छेदाः चरणविरामाः पापविशेषे पदच्छेदनानि नेति भावः। अष्टापदानां चतुरङ्गफलकानां चतुरङ्गकल्पनाः चत्वारि अङ्गानि हस्त्यश्व-रथपादातरूपा अवयवा इत्यर्थः तेषां कल्पना रचनाः। अपराधविशेषे चतुरङ्गाणां करयोः पदयोश्चेति भावः कल्पनाः कर्त्तनानि नेति भावः।

(४८३) पन्नगानां सर्पाणां द्विजगुरुद्वेषाः द्विजानां पक्षिणां गुरुर्द्विजगुरुः गरुड़ः तस्मिन् द्वेषाः, द्विजेषु ब्राह्मणेषु गुरुषु च यद्वा द्विजगुरुषु ब्राह्मणश्रेष्ठेषु द्वेषा नेति भावः।

(४८४) वाक्यविदां वाक्यज्ञानां मीमांसकानामित्यर्थः अधिकरणविचारः अधिकरणम्। विषयः संशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥ इत्युक्तपञ्चलक्षणानां विचाराः समालोचनानि धर्म्माधिकरण-स्थानानि च। अधिकरणं प्रजानां परस्परविरोध इत्यर्थः तस्य विचारो न। प्रजाः सततं न कलहायन्ते स्मेति भावः।

(४८५) समुपसृत्य उपगम्य उपवीती उद्धृतदक्षिणकर इत्यर्थः उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विज इति वचनात्। उत्तरेण उत्तरस्यां दिशि। राजधिष्ण्यस्य राजमण्डपस्य। गजपरिचारकः हस्तिपाल इत्यर्थः अपरवक्त्रं तदाख्य जातिविशेषम्।

(४८६) करिकलभेति। हे करिकलभ! हस्तिशावक! लोलतां चापल्यं

राजा तु तत् श्रुत्वा दृष्ट्वा च तं (४८७) गिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्निव नभोभागम् अपृच्छत् एष स बाण इति। यथा आज्ञापयति देवः सोऽयम् इति विज्ञापितो दौवारिकेण न तावदेनम् अकृतप्रसादः पश्यामि इति तिर्य्यक् (४८८) नीलधवलांशुकशारां तिरस्करिणीम् इव भ्रमयन् (४८९) अपाङ्गनीयमानतरलतारकस्य आयामिनीं चक्षुषः प्रभाम् परिवृत्य (४९०) प्रेष्ठस्य पृष्ठतो निषण्णस्य मालवराजसूनोः अकथयत महानयं भुजङ्ग इति। (४९१) तूष्णीम्भावेन तु अगमितनरेन्द्र-

---

विमुञ्च त्यज। आनतम् आननं यस्य तथाभूतः सन् विनयव्रतं शिष्टाचारमित्यर्थः चर कुरु। मृगपतेः सिंहस्य नखकोटिः नखराग्रं तद्वत् भङ्गुरः कुटिलः गुरुः महान् अङ्कुशः हस्तिशासनदण्डविशेष इत्यर्थः ते तव उपरि न चमते तव दोषं न सहते इत्यर्थः। अनेन अशिष्टानां दण्डयिता राजा, अस्य सन्निधौ बाणेन तथा उपचरितव्यमिति द्योत्यते।

(४८७) गिरीति। गिरिगुहां गतः सिंहः तस्य बृंहितं गर्जितं तद्वत् गम्भीरः तेन। नभोभागं गगनम्। अकृतप्रसादः न कृतः प्रसादः प्रसन्नता येन सः प्रसन्न इत्यर्थः भाववोधार्थमिति भावः। तिर्य्यक् तिरश्चीनं कुटिलं यथा तथेत्यर्थः।

(४८८) नीलेति। नीलाः धवला अंशव एव अंशुकाः स्वार्थे कण्प्रत्ययः अन्यत्र तथाविधानि अंशुकानि वस्त्राणि तैः शारा शवला तां तिरस्करिणीमिव जवनिकामिव।

(४८९) अपाङ्गेति। अपाङ्गं प्रान्तं नीयमाना चाल्यमाना तरला तारका कनीनिका यस्य तथाभूतस्य चक्षुषः आयामिनीं प्रसारिणीं प्रभां कान्तिं भ्रमयन् सञ्चारयन् परिवृत्य पराङ्मुखीभूयेत्यर्थः।

(४९०) प्रेष्ठस्य अतिप्रियस्य पृष्ठतः पश्चाद्भागे निषण्णस्य उपविष्टस्य मालवराजसूनोः मालवराजपुत्रस्य। भुजङ्गः विटः धूर्त्तः लम्पटो वा भुजङ्गो विटसर्पयोरित्यमरः।

(४९१) तूष्णीम्भावेन मौनभावेन, अगमितनरेन्द्रवचसि अगमितम् अबुद्ध

वचसि तस्मिन् मूके च राजलोके मुहूर्त्तमिव तूष्णीं स्थित्वा बाणो व्यज्ञापयत् देव ! ( ४९२ ) अविज्ञाततत्त्व इव अश्रद्दधान इव नेय इव अविदितलोकवृत्तान्त इव च कस्मात् एवम् आज्ञापयसि । ( ४९३ ) स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च । महद्भिस्तु यथार्थदर्शिभिः भवितव्यम् । न अर्हसि माम् अन्यथा सम्भावयितुम् अविशिष्टमिव । ब्राह्मणोऽस्मि जातः सोमपायिनां वंशे वात्स्यायनानाम् । यथकालम् (४९४) उपनयनादयः कृताः संस्काराः । सम्यक् पठितः साङ्गो वेदः । श्रुतानि यथाशक्ति शास्त्राणि । दारपरिग्रहात् अभ्यागारिकोऽस्मि । का मे भुजङ्गता । ( ४९५ ) लोकद्वयाविरोधिभिस्तु चापलैः शैशवम् अशून्यम् आसीत् । अत्र अनपलापोऽस्मि । अनेन एव च

---

नरेन्द्रस्य हर्षस्य वचः येन तथाभूते नरेन्द्रवचसी भावमविजानतीत्यर्थः तस्मिन् मालवराजसूनौ, मूके अवाचि राजलोके अन्यस्मिन्निति शेषः ।

( ४९२ ) अविज्ञाततत्त्व इव अविदितयाथार्थ्ये इव अश्रद्दधान इव अ नं-म्रसन्निव नेय इव परवश इव परो यथा बोधयति तथैव धारणावान् इवेति भावः ।

( ४९३ ) स्वैरिणः स्वेच्छानुवर्त्तिनः अविशिष्टमिव अभद्रमिव । सोमपायिनां सोमयागं कृत्वा तच्छेषसोमरसपानरतानां वात्स्यायनानां वत्समुनिसन्तानानाम् ।

( ४९४ ) उपनयनादयः उपनयनम् आदि मुख्यं येषां ते संस्कारा गर्भाधानादयः । साङ्गः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषञ्चेति विज्ञेयं षडङ्गं कविसत्तमैः ॥ इत्युक्तैः षड्भिरङ्गैः सह वर्त्तमानः । अभ्यागारिकः गृहस्थः । भुजङ्गता धूर्त्तता लम्पटता वा ।

( ४९५ ) लोकेति । लोकयोः स्वर्गमर्त्त्ययोः द्वयं तस्य अविरोधीनि अविरोधकराणि तैः चापलैः चपलकर्मभिः यानि लोकगर्हितानि नरकजननानि च

(४९६) गृहीतविप्रतीसारमिव मे हृदयम्। इदानीं तु सुगत इव शान्तमनसि मनाविव कर्त्तरि वर्णाश्रमव्यवस्थानां समवर्त्तिनीव च साक्षात् दण्डभृति देवे शासति (४९७) सप्ताम्बुराशिरशनाम् अशेषद्वीपमालिनीं महीं क इव अविशङ्कः सर्वव्यसनबन्धोः अविनयस्य मनसापि अभिनयं कल्पयिष्यति। (४९८) आसतां तावत् मानुष्यकोपेताः त्वत्प्रभावात् अलयोऽपि भीता इव मधु पिबन्ति रथाङ्गनामानोऽपि लज्जन्त इव अभ्यनुवृत्तिव्यसनैः प्रियाणां (४९९)कपयोऽपि चकिता इव चपलायन्ते शरारवोऽपि सानुक्रोशा इव श्वापदगणाः पिशितानि भुञ्जते। सर्वथा कालेन

---

एतादृशैः कर्म्मभिरित्यर्थः शैशवं बाल्यम् अशून्यम् अविरहितम्। अनपलापः निरपह्नवः अकृतनिजदोषगोपन इति यावत्। अनेनैव बाल्यचापल्यं नैवेत्यर्थः।

(४९६) गृहीतेति। गृहीतः विप्रतीसारः अनुतापो येन तथाभूतमिव। इदानीम् अस्मिन् काले सुगत इव बुद्धदेव इव मनाविव वैवस्वते आदिराजे इव वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः आश्रमा ब्रह्मचारिगृहिवाणप्रस्थभिक्षवः तेषां व्यवस्थाः स्थितयः तासां कर्त्तरि नियन्तरि। समं वर्त्तते इति समवर्त्ती यमः तस्मिन्निव दण्डं बिभर्त्तीति दण्डभृत् तस्मिन् दण्डधरे इत्यर्थः।

(४९७) सप्ताम्बुराशिरशनां सप्त अम्बुराशयः सागराः रशनाः मेखला यस्याः ताम्। अशेषद्वीपमालिनीं बहुद्वीपशालिनीं महीं पृथ्वीं शासति पालयति सति अविशङ्कः निर्भीकः। सर्वेति सर्वेषां व्यसनानां दुश्चरितानां बन्धुः मित्रं हेतुरिति यावत् तस्य। अविनयस्य चापल्यस्य अभिनयं चेष्टाविशेषं कल्पयिष्यति करिष्यतीत्यर्थः।

(४९८) आसतां तिष्ठन्तु मानुष्यकोपेताः मनुष्यस्य भावः मानुष्यकं तेन उपेताः युक्ताः मनुष्यधर्मिण इत्यर्थः। अलयः भ्रमराः। रथाङ्गनामानः चक्रवाकाः अभ्यनुवृत्तिव्यसनैः अतिशयासक्तिभिः इत्यर्थः प्रियाणां चक्रवाकीणामिति भावः।

(४९९) कपयः वानराः चकिता इव शङ्किता इव चपलायन्ते चपला इवा-

मां ज्ञास्यति स्वामी स्वयमेव। अनपाचीनचित्तवृत्ति-ग्राहिण्यो हि भवन्ति प्रज्ञावतां प्रकृतयः। इत्यभिधाय तूष्णीम् अभूत्।

भूपतिरपि एवम् अस्माभिः श्रुतम् इत्यभिधाय तूष्णीमेव अभवत् (५०१) सम्भाषणासनदानादिना तु प्रसादेन न एनम् अन्वग्रहीत् केवलम् अमृतवृष्टिभिः (५०२) स्नपयन्निव स्नेहगर्भेण दृष्टिपातमात्रेण अन्तर्गतां प्रीतिम् अकथयत् अस्ताभिलाषिणि च लम्बमाने सवितरि विसर्जितराजलोकोऽभ्यन्तरं प्राविशत्। बाणोऽपि निर्गत्य (५०३) धौतारकूटकोमलातपत्विषि निर्वाति वासरे (५०४)

---

चरन्ति। शरारवः श्वापदगणाः सानुक्रोशाः दुर्वृत्ततजनितानुतापशालिन इत्यर्थः पिशितानि मांसानि भुञ्जते। कालेन समयेन।

(५००) अनपाचीनेति। अनपाचीनां प्रकृष्टामित्यर्थः चित्तवृत्तिं गृह्णन्तीति तथाभूताः।

(५०१) सम्भाषणेति। सम्भाषणं संलापः आसनदानञ्च आदि यस्य तथोक्तेन प्रसादेन प्रीतिविसुखेन एनं बाणं न अन्वग्रहीत् न अनुचकम्पे।

(५०२) स्नपयन्निव अभिषिञ्चन्निव। अस्ताभिलाषिणि अस्ताचलगमनोद्यते। लम्बमाने पश्चिमां दिशमवतरतीत्यर्थः विसर्जितराजलोकः स्वस्थानगमनाय राजन्यान् अनुमन्यमान इत्यर्थः।

(५०३) धौतेति। धौतं प्रमृष्टमिति यावत् यत् आरकूटं पित्तलमित्यर्थः रीतिः स्त्रियामारकूटमिति पित्तलपर्य्यायेष्वमरः। तद्वत् कोमला आतपस्य त्विषः प्रभाः यस्य तादृशे निर्वाति निर्वाणं गच्छति अवसानं गच्छतीत्यर्थः।

(५०४) अस्ताचलेति। अस्ताचलस्य अस्तगिरेः कूटं शृङ्गं कूटोऽस्त्री शिखरं शृङ्गमित्यमरः तस्य किरीटं मुकुटं तस्मिन्। निचुलेति निचुलस्य स्थलवेतसस्य मञ्जरी तस्या भास इव भासो दीप्तयः येषां तथाभूतानि तेजांसि किरणान् मुञ्चति विकिरति, वियन्मुचि गगनपरित्यागिनि मरीचिमति सूर्य्ये।

अस्ताचलकूटकिरीटे निचुलमञ्जरीभांसि तेजांसि मुञ्चति वियन्मुचि मरीचिमति (५०५) रोमन्थमन्थरकुरङ्गकुटुम्बाध्यास्यमानम्रदिष्ठगोष्ठीनपृष्ठासु अरण्यस्थलीषु (५०६) शोका-कुलकोक-कामिनी-कूजितकरुणासु तरङ्गिणीतटीषु (५०७) वासविटपोपविष्टवाचाटचटकचक्रवालेषु (५०८) आलवालावर्जितसेकजलकुटेषु निष्कुटेषु (५०९) दिवसविहृतिप्रत्यागतं प्रस्नुतस्तनं स्तनन्धये धयति धेनुवर्गम् (५१०) उद्गतक्षीरक्षुभिततर्णकव्राते क्रमेण च (५११) अस्तधराधरधातुधुनीपूरप्लावित इव लोहितायमानमहसि मज्जति

---

(५०५) रोमन्थेति। रोमन्थेन उद्गीर्य्य चर्वणेन मन्थरा अलसा: कुरङ्गाणां कुटुम्बा: वर्गा: तै: अध्यास्यमानम् अधिष्ठीयमानं म्रदिष्ठम् अतिमृदु कोमलमित्यर्थ: गोष्ठीनं भूतपूर्वगोष्ठं गोष्ठं गोस्थानकं तत्तु गोष्ठीनं भूतपूर्वकमित्यमर:। पृष्ठम् उपरिभागो यासां तासु अरण्यस्थलीषु वनभूमिषु।

(५०६) शोकेति। शोकाकुलानां कान्तविरहादिति भाव: कोककामिनीनां चक्रवाकीणां कूजितै: विलपितैरित्यर्थ: करुणा: कारुण्यजनन्य: तासु। तरङ्गिणीतटीषु नदीतीरेषु।

(५०७) वासेति। वासविटपेषु आश्रयवृक्षशाखासु उपविष्टं वाचाटानां रुवतामित्यर्थ: चटकानां क्षुद्रपक्षिविशेषाणां चक्रवालं मण्डलं येषु तथाविधेषु।

(५०८) आलेति। आलवालेषु तरुतलेषु मण्डलाकारेण रचिता जलाधारविशेषा: तेषु आवर्जितानि रचितानि सेकजलकूटानि सेचनजलसमूहा: येषु तथाभूतेषु निष्कुटेषु गृहारामेषु गृहारामास्तु निष्कुटा इत्यमर:।

(५०९) दिवसेति। दिवसे विहृति: विहार: विचरणमित्यर्थ: तस्मा: प्रत्यागतं प्रतिनिवृत्तं प्रस्नुता: प्रचरिता स्तना यस्य तथोक्तं धेनुवर्गं स्तनन्धये स्तनपायिनि।

(५१०) उद्गतेति। उद्गतेन उच्छलितेन क्षीरेण दुग्धेन क्षुभितं व्यस्तं तर्णकानां वत्सानां व्रातं समूह: तस्मिन् धयति पिबति।

(५११) अस्तेति। अस्तधराधर: अस्ताचल: तस्य धातुषु या धुन्य: निर्झरिण्य:

(५१२) सन्ध्यासिन्धुपानपात्रे पातङ्गे मण्डले (५१३) कमण्डलुजलशुचिशयचरणेषु (५१४) चैत्यप्रणतिपरेषु पाराशरिषु (५१५) यज्ञपात्रपवित्रपाणौ प्रकीर्णबर्हिषि उत्तेजसि जातवेदसि हवींषि वषट्कुर्वति यायजूकजने (५१६) निद्राविद्राणद्रोणकुलकलिलकुलायेषु (५१७) कापेयविकलकपिकुलेषु आरामतरुषु निर्जिगमिषति (५१८) जरत्-

---

तासां पूरैः प्रवाहैः प्लाविते इव अवतारिते इव लोहितायमानानि रक्तायमानानि महांसि तेजांसि यस्य तथोक्ते मज्जति तिरोभवतीत्यर्थः।

(५१२) सन्ध्येति। सन्ध्या एव सिन्धुः नदी तस्याः पानपात्रं जलपात्रं तस्मिन् पातङ्गे पतङ्गः सूर्यः तस्य इदं पातङ्गं तस्मिन्।

(५१३) कमण्डल्विति। कमण्डलुर्यतीनां जलपात्रभेदः तस्य जलेन शुचयः पवित्राः शयाः कराः चरणाश्च येषां तेषु कमण्डलुजलक्षालितपाणिपादेषु इत्यर्थः।

(५१४) चैत्येति। चैत्यमायतनवृक्षभेदः तस्य प्रणतिः अभिवन्दनं देवताधिष्ठिततयेति भावः तत्र पराः प्रवणाः तेषु पाराशरिषु यतिषु पराशरमतानुवर्त्तिषु द्विजेषु वा।

(५१५) यज्ञेति। यज्ञपात्रैः स्रुक्स्रुवादिभिः पवित्रौ पाणी यस्य तथोक्ते प्रकीर्णबर्हिषि प्रकीर्णाः विकीर्णाः बर्हिषः कुशाः येन तस्मिन्। उत्तेजसि ज्वलतीत्यर्थः जातवेदसि अग्नौ हवींषि हवनीयद्रव्याणि वषट्कुर्वति वषडिति मन्त्रेण प्रक्षिपति यायजूकजने याज्ञिकलोके।

(५१६) निद्रेति। निद्रया विद्राणानि आकुलानि द्रोणकुलानि काकवृन्दानि तैः कलिलाः व्याप्ताः कुलायाः नीड़ाः येषां तेषु।

(५१७) कापेयेति। कपीनामिदं कापेयं कपिशिशुचापल्यमिति भावः तेन विकलानि कपिकुलानि येषु तादृशेषु आरामतरुषु उपवनवृक्षेषु। निर्जिगमिषति निर्गन्तुमिच्छति रात्रिचरत्वादिति भावः।

(५१८) जरदिति। जरन्तः जीर्णा इत्यर्थः ये तरवः वृक्षाः तेषां कोटराणि एव गह्वराणि एव कुञ्जः क्षुद्रगृहाणि तत्र कुटुम्बी परिवारवान् तस्मिन् कौशिककुले पेचकवर्गे।

वृक्षकोटरकुटीकुटुम्बिनि कौशिककुले (५१९) मुनिकरसहस्रप्रकीर्णसन्ध्यावन्दनोदबिन्दुनिकर इव दन्तुरयति तारापथस्थलीं स्थवीयसि तारकानिकुरम्बे (५२०) अम्बराश्रयिणि शर्वरीशबरीशिखण्डे खण्डपरशुकण्ठकाले कवलयति वाले ज्योतिःशेषं साम्ध्यम् अन्धकारावतारे (५२१) तिमिरतर्जननिर्गतासु (५२२) दहनप्रविष्टदिनकरकरशाखास्विव स्फुरन्तीषु दीपलेखासु (५२३) अररसम्पुटसंक्रीडनकथितावृत्तिष्विव गोपुरेषु (५२४) शयनोपजोषजुषि (५२५) जरतीकथितकथे शिशयिषमाणे शिशुजने

---

(५१९) मुनीति। मुनीनां करसहस्रैः बहुभिः हस्तैरित्यर्थः प्रकीर्णाः प्रक्षिप्ताः सन्ध्यावन्दनस्य ये उदबिन्दवः जलबिन्दवः तेषां निकर इव दन्तुरयति दन्तुरां कुर्वति तारापथस्थलीं तारापथम् अम्बरीचमेव स्थली तां स्थवीयसि स्थूलतरे तारकानिकुरम्बे तारागणे।

(५२०) अम्बराश्रयिणि आकाशसञ्चारिणि शर्वरी रात्रिरेव शबरी शबरनारी तस्याः शिखण्डः जूटकः तस्मिन् खण्डपरशुः शिवः तस्य कण्ठ इव। कालः श्यामः तस्मिन्। कवलयति ग्रसति वाले अभिनवे ज्योतिषां शेषः तम् अवशिष्टालोकमित्यर्थः साम्ध्यं सन्ध्याकालीनम्। अन्धकारावतारे तिमिरोद्गमे।

(५२१) तिमिरेति। तिमिराणां तमसां तर्जनाय निर्गताः प्रसृताः तासु।

(५२२) दहनेति। दहनमग्निं प्रविष्टा दिनकरस्य सूर्य्यस्य करशाखाः कराङ्गुलयः तास्विव स्फुरन्तीषु ज्वलन्तीषु दीपलेखासु दीपराजिषु।

(५२३) अररेति। अरराः कवाटाः तेषां सम्पुटस्य युगलस्य संक्रीडनेन शब्देन अवरोधननादेनेत्यर्थः कथिता सूचिता आवृत्तिः अवरोधनं येषां तथाभूतेषु गोपुरेषु पुरद्वारेषु।

(५२४) शयनेति। शयने य उपजोषः मौनभावः तज्जुषि तच्छालिनि।

(५२५) जरतीति। जरतीभिः वृद्धाभिः कथिता कथा उपकथेति यावत् यस्य तादृशे शिशयिषमाणे शयितुमिच्छतीत्यर्थः।

(५२६) जरन्महिषमषीमलीमसतमसि (५२७) जनित-पुण्यजनप्रजागरे विजृम्भमाणे भीषणतमे तमोमुखे (४२८) मुखरितविततज्यधनुषि वर्षति शरनिकरम् अनवरतम् अशेषसंसारशेमुषीमुषि मकरध्वजे (५२९) रताकल्पारम्भ-शोभिनि शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने (५३०) सैरिन्ध्रीबध्यमानरशनाजालजल्पाकजघनासु जनीषु (५३१) वणिकविशिखाविहारिणीषु (५३२) अनन्यजानुप्लवासु प्रचलितासु अभिसारिकासु विरलीभवति

---

(५२६) जरदिति। जरन्तः महिषा एव मष्यः लेखनसाधनानि द्रव-द्रव्याणि तद्वत् मलीमसानि मलिनानि तमांसि यस्मिन् तथोक्ते।

(५२७) जनितेति। जनिताः पुण्यजनानां यक्षाणां निशाचरविशेषाणा-मित्यर्थः प्रजागरः प्रकृष्ट जागरणं यस्मिन् तथाभूते। विजृम्भमाणे आविर्भवति तमो-मुखे रजनीमुखे।

(५२८) मुखरितेति। मुखरिता शब्दिता टङ्कारध्वनियुता वितता विस्तृता ज्या यस्य तादृशं धनुः यस्य तथाभूते वर्षति मुञ्चति शरनिकरं शरसङ्घातम्। अशेषेति अशेषाणां समस्तानां संसाराणां सृष्टीनां शेमुषी बुद्धिः तां मुष्णाति अपहरति तस्मिन् मकरध्वजे कामे।

(५२९) रतेति। रतस्य निधुवनस्य आकल्पाः अलङ्काराः तेषाम् आरम्भेण समुद्योगेन शोभते इति तथोक्ते। शम्भलीति शम्भल्याः कुट्टिन्याः कुट्टिनी शम्भली समे इत्यमरः। भाषितं वचनं भजते शृणोतीति तथाभूते। भूषाम् अलङ्कारं शोभां वा भजति गच्छति भुजिष्याजने दासीजने वेश्याजने वा।

(५३०) सैरिन्ध्रीति। सैरिन्ध्रीभिः प्रसाधनीपचाराभिः नारीभिः बध्य-मानानां परिधीयमानानां रशनानां काञ्चीनां जालैः सङ्घैः जल्पाकं मुखरं जघनं कटिपुरोभागो यासां तथाविधासु जनीषु नायिकासु।

(५३१) वणिकेति। वणिका जनयूथा या विशिखा रथ्या तासु विहरन्तीति तथोक्तासु।

(५३२) अनन्यजेति। अनन्यजः मनसिजः अनुप्लवः अनुचरः सहाय इत्यर्थः

(५३३) वरटानां वेशन्तशायिनीनां मञ्जुनि (५३४) मञ्जीरशिञ्जितजड़े जल्पिते (५३५) निद्राविद्राणद्राघीयसि द्रावयतीव च विरहिहृदयानि (५३६) सारसरसिते (५३७) भाविवासरवीजाङ्कुरनिकर इव च विकीर्य्यमाणे जगति प्रदीपप्रकरे निवासस्थानम् अगात् । अक-अकरोत् च चेतसि अतिदक्षिणः खलु देवो हर्षः यदेवम् (५३८) अनेकबालचरितचापलोचितकौलीनकोपितोऽपि मनसा स्निह्यत्येव मयि । यदि अहम् अक्षिगतः स्यां न मे दर्शनेन प्रसादं कुर्य्यात् । इच्छति तु मां गुणवन्तम् ।

---

यासां तथाविधासु । प्रचलितासु प्रस्थितासु सङ्केतस्थानमिति शेषः अभिसारिकासु कान्तार्थिनी तु या याति सङ्केतं साभिसारिकेत्युक्तलक्षणासु नारीषु । विरलीभवति अल्पीभवतीत्यर्थः ।

(५३३) वराटानां हंसीनां हंसस्य योषिद्‌ वरटेत्यमरः वेशन्तशायिनीनां पल्वलशायिनीनां मञ्जुनि मनोज्ञे ।

(५३४) मञ्जीरेति । मञ्जीरस्य नूपुरस्य शिञ्जितं रणितं वद्वत् जड़ं मन्थरं मन्थरं वा तस्मिन् जल्पिते रवे ।

(५३५) निद्रेति । निद्रया विद्राणम् अलसं जड़मित्यर्थः द्राघीयः अति-दीर्घञ्च तस्मिन् । द्रावयति द्रवीकुर्वति अभिभवति क्लेशयतीत्यर्थौ वा कामा-वेशादिति भावः ।

(५३६) सारसरसिते सारसानां पक्षिविशेषाणां रसितं रुतं तस्मिन् ।

(५३७) भावीति । भाविनी भविष्यती वासरस्य दिवसस्य वीजाङ्कुराणां निकर इव सञ्चय इव विकीर्य्यमाणे समन्ततः प्रसार्य्यमाणे । अतिदक्षिणः अत्युदारः ।

(५३८) अनेकेति । अनेकेषां बहूनां बालचरितानां चापलं तस्य उचितं यत् कौलीनकम् अपवादः तेन कोपितोऽपि । अक्षिगतः द्वेष्यः । उपदिशन्ति शिक्षयन्ति विनयं शिष्टाचारम् ।

उपदिशन्ति हि विनयम् (५३८) अनुरूपप्रतिपत्त्युपपादनेन वाचं विनापि भर्त्तव्यानां स्वामिनः। अपि च धिक् मां (५४०) स्वदोषान्धमानसम् अनादरपीड़ितम् एवम् अतिगुणवति राजनि अन्यथा च अन्यथा च चिन्तयन्तम्। सर्वथा करोमि तथा यथा यथावस्थितं जानाति माम् अयं कालेन। इति एवम् अवधार्य्य च अपरेद्युः (५४१) निष्क्रम्य कटकात् सुहृदां बान्धवानाञ्च भवनेषु तावत् अतिष्ठत् यावत् अस्य स्वयमेव (५४२) गृहीतस्वभावः पृथिवीपतिः प्रसादवान् अभूत्। अविशच्च पुनरपि नरपतिभवनम्। स्वल्पैरेव च अहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विस्रम्भस्य द्रविणस्य नर्म्मणः प्रभावस्य च परां कोटिम् आनीयत नरेन्द्रेणेति।

इति श्रीवाणभट्टकृते हर्षचरिते राजदर्शनं नाम
द्वितीय उच्छ्वासः॥ २॥

---

(५३९) अनुरूपेति। अनुरूपा योग्या प्रतिपत्तिः सम्भावना तस्या उपपादनं योजनं तेन। वाचं विनापि वाक्यमकथयित्वेति भावः भर्त्तव्यानां प्रतिपाल्यानाम्। स्वामिनः प्रभवः।

(५४०) स्वदोषेति। स्वदोषेण अन्धं मानसं यस्य तथोक्तम् अनादरपीड़ितम् अनादरेण अवज्ञया पीड़ितम् अभिभूतम्। राजनि विषये।

(५४१) निष्क्रम्य निर्गत्य कटकात् शिविरात्।

(५४२) गृहीतस्वभावः विदितचरितः। पृथिवीपतिः हर्षः। अहोभिः दिवसैः। प्रसादजन्मनः प्रसादजस्य। विस्रम्भस्य विश्वासस्य। द्रविणस्य धनस्य नर्म्मणः परिहासस्य। परां कोटिं परमोत्कर्षम्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
हर्षचरितस्य द्वितीयोच्छ्वासव्याख्या समाप्ता॥२॥

---

# अथ तृतीय उच्छ्वासः।

(१) निजवर्षाहितस्नेहा बहुभक्तजनान्विताः।
सुकाला इव जायन्ते प्रजापुण्येन भूभुजः॥

(२) साधूनामुपकर्त्तुं लक्ष्मीं धर्त्तुं विहायसा गन्तुम्।
न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम्॥

(३)अथ कदाचित् विरलितबलाहके (४) चातकातङ्ककारिणि (५) क्वणत्कादम्बे (६) दर्दुरद्विषि मयूरमद-

---

(१) निजेति। निजम् आत्मीयं वर्षं जम्बुद्वीपं वृष्टिश्च तस्मिन् तेन च आहितः निहितः जनितश्च स्नेहः प्रीतिः आर्द्रता च यैः तथाविधाः बहुभिः भक्तजनैः अनुजीविगणैः अन्विताः युक्ताः अन्यत्र बहूनां भक्तानाम् अन्नानां जनेन जननेन अन्विताः युक्ताः बहुधान्यादिजननयोग्या इत्यर्थः भूभुजः पृथिवीपालाः सुकाला इव सुसमया इव प्रजानां पुण्येन जायन्ते उत्पद्यन्ते सौराज्यस्य सुसमयस्य च प्रजापुण्यं हेतुरिति निष्कर्षः। उपमालङ्कारः। अनेन महाप्रभावस्य पुष्पभूतेः वर्णना सूचिता।

(२) साधूनामिति। कस्य जनस्य मनः साधूनां सज्जनानाम् उपकर्त्तुं सम्बन्धविवक्षया षष्ठी लक्ष्मीं श्रियं धर्त्तुं ग्रहीतुं लब्धुमिति यावत् द्रष्टुमिति पाठे द्रष्टुं साक्षात्कर्तुं प्राप्तुमित्यर्थः विहायसा आकाशमार्गेण गन्तुं खेचरतां लब्धुमिति यावत् महात्मनां चरितं श्रोतुञ्च न कुतूहलि न उत्सुकम्? भवतीति शेषः अपि तु भवति एवेत्यर्थः। साधूनामिति श्लोकेन भैरवाचार्य्यस्य उपकारकरणात् पुष्पभूतेः स्वयं लक्ष्मीदर्शनं विहायसा गमनञ्च सूचितम्।

(३) अथेत्यादि। विरलितेति। विरलिता विरलीभूताः स्वल्पीभूताः बलाहकाः मेघाः यस्मिन् तथोक्ते।

(४) चातकेति। चातकानाम् आतङ्कः क्लेशः तं करोति जनयति इति तथाभूते।

(५) क्वणदिति। क्वणन्तः रुवन्तः कादम्बाः कलहंसा यस्मिन् तथोक्ते।

भुवि (७) हंसपथिकसार्थसर्वातिथौ (८) धौतासिनिभनभसि (९) भास्वरभास्वति शुचिशशिनि तरुणतारागणे (१०) गलत्सुनासीरशरासने (११) सीदत्सौदामिनीदाम्नि (१२) दामोदरनिद्राद्रुहि (१३) द्रुतवैदूर्य्यवर्णार्णसि (१४) घूर्णमानमिहिकालघुमेघमोघमघवति (१५) निमीलन्नीपे (१६) निष्कुसुमकुटजे (१७) निर्मुकुलकन्दले

---

(६) दर्दुरेति। दर्दुरान् भेकान् द्वेष्टीति तथोक्ते। मयूरेति मयूराणां मदं हर्षं गर्वञ्च मुष्णाति हरतीति तथाभूते।

(७) हंसेति। हंसा एव पथिकसार्थाः पान्थसमूहाः सर्वे अतिथयः यस्य तथाभूते निर्म्मलजलदानेन तेषां तृप्तिजननादिति भावः।

(८( धौतेति। धौतः क्षालितः शाणदानात् निर्म्मल इति भावः यः असिः खड्गः तन्निभं नभोऽन्तरीक्षं यस्मिन् तथोक्ते।

(९) भास्वरेति। भास्वरः अत्युज्ज्वल इत्यर्थः भास्वान् सूर्य्यः यस्मिन् तथोक्ते। शुचिशशिनि निर्मलचन्द्रमसि तरुणतारागणे समुज्ज्वलनक्षत्रनिवहे।

(१०) गलदिति। गलत् निर्गच्छत् नश्यदिति यावत् शुनासीरस्य इन्द्रस्य शरासनं धनुः यस्मात् तथोक्ते।

(११) सीददिति। सीदत् अवसादं गच्छत् विनश्यदित्यर्थः सौदामिनी तडिदेव दाम माला यस्मिन् तथोक्ते।

(१२) दामोदरेति। दामोदरस्य भगवतो विष्णोर्निद्रां द्रुह्यति अपनयतीति तथोक्ते वर्षाशयितस्य विष्णोः शरदि प्रबोधादिति भावः।

(१३) द्रुतेति। द्रुतं गलितं यत् वैदूर्य्यं रत्नविशेषः तस्य वर्ण इव वर्णो यस्य तादृशं निर्मलमिति भावः अर्णो जलं यस्मिन् तथोक्ते।

(१४) घूर्णमानेति। घूर्णमाना इतस्ततः सञ्चरन्ती या मिहिका नीहारः तद्वत् लघवः निर्जलत्वादिति भावः ये मेघाः तैः मोघः विफलः रहित इति भावः मघवा इन्द्रः यस्मिन् तथोक्ते।

(१५) निमीलदिति। निमीलन्तः विकासावसानादिति भावः नीपाः कदम्बा यस्मिन् तथोक्ते।

कोमलकमले (१८) मधुस्यन्दीन्दीवरे कह्लाराह्लादिनि (१९) शेफालिकाशीतलीकृतनिशि यूथिकामोदिनि (२०) मोदमानकुमुदावदातदशदिशि (२१) सप्तच्छदधूलिधूसरितसमीरे स्तवकितबन्धुरबन्धूकबध्यमानाकाण्डसन्ध्ये (२२) नीराजितवाजिनि (२३) उद्दामदन्तिनि (२४) दर्पक्षीबौक्षके (२५) क्षीयमाणपङ्कचक्रवाले बालपुलिन-

---

(१६) निष्कुसुमेति। निष्कुसुमाः पुष्पवर्जिताः कुटजा वृक्षभेदाः यस्मिन् तथाविधे।

(१७) निर्मुकुलेति। निर्मुकुलाः कुसुमविरहिताः कन्दलाः वृक्षविशेषा यस्मिन् तथोक्ते। कोमलकमले मृदुलपद्मे पद्मविकासिनि इत्यर्थः।

(१८) मध्विति। मधुस्यन्दीनि मकरन्दवर्षीणि इन्दीवराणि नीलोत्पलानि यस्मिन् तथोक्ते कह्लाराह्लादिनि रक्तसैन्धवविकासिनि कह्लारं रक्तसैन्धवमित्यमरः।

(१९) शेफालिकेति। शेफालिकाभिः शीतलीकृता निशा रात्रिर्यस्मिन् तथोक्ते। यूथिकामोदिनि यूथिकापुष्पोद्रेकेण आनन्दकारिणि इत्यर्थः।

(२०) मोदमानेति। मोदमानैः विकसद्भिः कुमुदैः अवदाताः सिताः दश दिशो यस्मिन् तथोक्ते।

(२१) सप्तच्छदेति। सप्तच्छदानां विषमच्छदाख्यतरुविशेषाणां धूलिभिः परागैः धूसरिताः समीराः वायवः यस्मिन् तथोक्ते। स्तवकिताः सञ्जातस्तवकाः अत एव बन्धुरा मनोज्ञाः ये बन्धूकाः बन्धुजीवाख्यपुष्पतरुविशेषाः तैः बध्यमाना क्रियमाणा अकाण्डे असमये सन्ध्या यस्मिन् तथाविधे।

(२२) नीराजितेति। नीराजिताः युद्धयात्रायां कृतनीराजनाख्यशान्तिकर्माणः वाजिनोऽश्वा यस्मिन् तथोक्ते।

(२३) उद्दामेति। उद्दामाः मदोद्धता इत्यर्थः दन्तिनो हस्तिनो यस्मिन् तथोक्ते।

(२४) दर्पेति। दर्पेण क्षीबाणि मत्तानि औक्षकाणि उक्ष्णां वृषाणां समूहाः यस्मिन् तथोक्ते।

पल्लवितसिन्धुरोधसि ( २६ ) परिणामश्यानश्यामाके (२७) जनितप्रियङ्गुमञ्जरीरजसि ( २८ ) कठोरत्वपुषत्वचि ( २९ ) कुसुमस्मेरशरे शरत्समयारम्भे राज्ञः समीपात् बाणो बन्धून् द्रष्टुं पुनरपि तं ब्राह्मणाधिवासम् अगात्।

( ३० ) समुपलब्धभूपालसम्मानातिशयपरितुष्टाः तस्य ज्ञातयः श्लाघमाना निर्ययुः। क्रमेण च कांश्चित् अभिवादयमानः कैश्चित् अभिवाद्यमानः कैश्चित् शिरसि चुम्ब्यमानः कांश्चित् मूर्ध्नि समाजिघ्रन् कैश्चित् आलिङ्ग्यमानः कांश्चित् आलिङ्गन् अन्यैः आशिषा अनुगृह्यमाणः परान् अनुगृह्णन् बहुबन्धुमध्यवर्त्ती परं मुमुदे। ( ३१ ) सम्भ्रान्त-परिजनोपनीतञ्च आसनमासीनेषु गुरुषु भेजे। भज-

---

( २५ ) चीयमाणेति। चीयमानं नश्यत् पङ्कानां कर्द्दमानां चक्रवालं समूहः यस्मिन् तथोक्ते। बालेति। बालम् अभिनवं सद्यः स्रुतजलमिति भावः यत् पुलिनं सैकतं तस्मिन्। प्लावितानि रेखाङ्कितानीति यावत् सिन्धूनां नदीनां रोधांसि तटानि यस्मिन् तथोक्ते।

( २६ ) परिणामेति। परिणामेन परिपाकेण श्यानाः ईषच्छुष्काः श्यामाका नीवारा यस्मिन् तथाभूते।

( २७ ) जनितेति। जनितानि प्रियङ्गुमञ्जरीणां रजांसि परागा यस्मिन् तथोक्ते।

( २८ ) कठोरेति। कठोराः कठिनाः त्रपुषाणां लाङ्कुतरूणां त्वचः वल्कलानि यस्मिन् तथोक्ते।

( २९ ) कुसुमेति। कुसुमैः पुष्पैः स्मेरा विकस्वराः शराः तदाख्यतृणभेदा यस्मिन् तथाविधे।

( ३० ) समुपेति। सम्यक् उपलब्धः प्राप्तः भूपालात् राज्ञः हर्षादिति भावः सम्मानातिशयः तेन परितुष्टाः प्रीताः श्लाघमानाः प्रशंसन्तः। अभिवादयमानः वन्दमानः अभिवाद्यमानः वन्द्यमानः। परान् अन्यान्। परम् अत्यन्तं मुमुदे मिमिदे।

मानञ्च अर्घादिसत्कारं नितरां ननन्द । प्रीयमाणेन च मनसा सर्वांस्तान् पर्य्यपृच्छत् कच्चित् एतावतो दिवसान् सुखिनो यूयम् ? । अप्रत्यूहा वा ( २२ ) सम्यक्करणपरितोषित-द्विजचक्रा क्रातवी क्रियते क्रिया ? । ( २३ ) यथावद-विकलमन्त्रभाञ्जि भुञ्जते हवींषि हुतभुजः ? । यथाकालम् अधीयते वा वटवः ? । प्रतिदिनम् अविच्छिन्नो वा वेदा-भ्यासः ? । कच्चित् स एव चिरन्तनो यज्ञविद्याकर्म्मणि अभि-योगः ? । तानि एव व्याकरणे ( २४ ) परस्परस्पर्द्धानु-बन्धावन्ध्यदिवसदर्शितानि व्याख्यानमण्डलानि ? । सैव वा पुरातनी परित्यक्तान्यकर्त्तव्या प्रमाणगोष्ठी ? स एव वा ( २५ ) मन्दीकृतेतरशास्त्ररसो मीमांसायाम्

---

( २१ ) सम्भ्रान्तेति । सम्भ्रान्तेन सत्वरेण परिजनेन उपनीतम् आहृतम् । आसीनेषु उपविष्टेषु । भेजे सिषेवे अध्यतिष्ठदित्यर्थः । भजमानः लभमानः । अप्रत्यूहा निर्विघ्नाः ।

( २२ ) सम्यगिति । सम्यक् करणेन शोभनानुष्ठानेन परितोषितानि प्रीणितानि द्विजचक्राणि विप्रवृन्दानि यस्यां यस्या वा । क्रतुर्यज्ञः तस्य इयं क्रातवी यज्ञसम्बन्धिनी इत्यर्थः ।

( २३ ) यथावत् यथाविधि अविकलेति अविकलान् विशुद्धानिति यावत् मन्त्रान् भजन्ते इति तथोक्तानि हवींषि हवनीयानि । हुतभुजः अग्नयः । वटवः बालकाः ब्रह्मचारिणो वा । अविच्छिन्नः विच्छेदरहितः चिरन्तनः धारावाही अभियोगः यत्नविशेषः ।

( २४ ) परस्परेति । परस्परस्य स्पर्द्धा जिगीषा तस्या अनुबन्धेन सातत्येन अवन्ध्याः फलवन्तो दिवसाः तेषु दर्शितानि प्रकटितानि दर्शितादराणीति पाठे दर्शितः प्रकटितः आदरो येषु तानि । पुरातनी चिरन्तनी चिरप्रसिद्धेति भावः परित्यक्तानि अन्यानि कर्त्तव्यानि यस्यां तथाभूता प्रमाणगोष्ठी तर्कशास्त्रसमालोचना ।

अतिरसः ? । कच्चित् ते एव वा अभिनवसुभाषितसुधावर्षिणः काव्यालापाः ? इति ।

अथ ते तम् ऊचुः तात ! सन्तोषजुषां (३६) सततसन्निहितविद्याविनोदानां (३७) वैतानवह्निमात्रसहायानां कियन्मात्रं नः कृत्यं सुखितया सकलभुवनभुजि (३८) भुजङ्गराजदेहदीर्घे रक्षति क्षितिं क्षितिभुजो भुजे सर्वथा सुखिन एव वयं विशेषेण तु त्वयि (३९) विमुक्तकौसीद्ये परमेश्वरपार्श्ववर्त्तिनि वेत्रासनम् अधितिष्ठति । सर्वे च यथाशक्ति यथाविभवं यथाकालञ्च सम्पाद्यन्ते विप्रजनोचिताः क्रियाकलापाः । इति एवम् आदिभिः आलापैः स्कन्धावारवार्त्ताभिश्च शैशवातिक्रान्तक्रीड़ानुस्मरणैः (४०)

---

(३५) मन्दीकृतेति । मन्दीकृतः प्रायेण निवर्त्तित इति यावत् इतरेषु अन्येषु शास्त्रेषु रसो रागो येन तथाविधः मीमांसायां ब्रह्मविद्यायाम् अतिरसः अत्यासक्तिः ।

(३६) सततेति । सततसन्निहितः निरन्तरोपस्थितः विद्यया विद्यानुशीलनेनेत्यर्थः विनोदः प्रीतिः येषां तथाभूतानाम् अतएव सन्तोषजुषां सन्तोषशालिनाम् ।

(३७) वैतानेति । वितानो यज्ञः तस्य अयं वैतानः स चासौ वह्निश्चेति तथोक्तः तन्मात्रः न त्वन्य इति भावः सहायो येषां तथाविधानां नः अस्माकं सुखितया सुखभोगेन कृत्यं प्रयोजनं कियन्मात्रं स्वल्पमात्रमित्यर्थः । सकलभुवनभुजि सर्वां क्षितिं पालयतीत्यर्थः ।

(३८) भुजङ्गेति । भुजङ्गराजो वासुकिः तस्य देहवत् दीर्घः आयतः तस्मिन् क्षितिभुजो राज्ञः भुजे बाहौ क्षितिं पृथ्वीं रक्षति सति ।

(३९) विमुक्तेति । विमुक्तं त्यक्तं कौसीद्यम् आलस्यं येन तथाभूते अनलसे इत्यर्थः परमेश्वरपार्श्ववर्त्तिनि सार्वभौमस्य श्रीहर्षस्य पार्श्वचरसभासदीत्यर्थः वेत्रासनं वेत्रनिर्मितमासनं राजदत्तमिति शेषः ।

पूर्वजकथाभिश्च विनोदितमना: तै: सह सुचिरम् अतिष्ठत् उत्थाय च मध्यन्दिने यथाक्रियमाणा: स्थिती: अकरोत्। भुक्तवन्तञ्च तं सर्वे ज्ञातय: पर्य्यवारयन्।

( ४१ ) अत्रान्तरे दुकूलपट्टप्रभवे शिखण्ड्यपाङ्ग-पाण्डुनी पौण्ड्रे वाससी वसान: स्नानावसानसमये वन्दितया तीर्थमृदा गोरोचनया च रचिततिलक: तैलामलकमस्रणितमौलि: ( ४२ ) अनुच्चचूड़ाचुम्बिना निविड़ेन कुसुमापीड़केन समुद्भासमान: ( ४३ ) असकृदुपयुक्त-ताम्बूलविमलाधरकान्ति: ( ४४ ) एकशलाकाञ्जनजनि-तलोचनरुचि: ( ४५ ) अचिरमुक्तो विनीतम् आर्य्यञ्च वेषं दधान: ( ४६ ) पुस्तकवाचक: सुदृष्टि: आजगाम नाति-

---

( ४० ) पूर्वजकथाभि: पूर्वकालीनकथाभि:। यथाक्रियमाणा: यादृश्य: सर्वै: क्रियन्ते तादृशीरित्यर्थ: स्थिती: आचारान्।

( ४१ ) अत्रान्तरे सुदृष्टि: आजगामेति अन्वय:। तामेव विशिनष्टि। दुकूलेति दुकूलपट्टप्रभावे क्षौमतन्तुजाते शिखण्डिनो मयूरस्य अपाङ्गवत् पाण्डुनी धवले पौण्ड्रे पुण्ड्रदेशभवे। वाससी वसने वसान: परिदधान: स्नानावसानसमये स्नानान्तरं वन्दितया मन्त्रपूतीकृतयेत्यर्थ: तीर्थमृदा पुण्यचेत्रमृत्तिकया रचिततिलक: कृततिलक: तैलेन आमलकेन तच्चूर्णेनेत्यर्थ:। मस्रणित: चिक्कणीकृत: मौलि: केशचय: येन यस्य वा तथोक्त:।

( ४२ ) अनुच्चेति। अनुच्चा अवनतेत्यर्थ: पृष्ठदेशे इति भाव: या चूड़ा शिखा तां चुम्बति स्पृशतीति तथोक्तेन निविड़ेन घनेन कुसुमापीड़केन पुष्पमाल्येन समुद्भासमान: शोभमान:।

( ४३ ) असकृदिति। असकृत् पुन: पुन: उपयुक्तेन चर्वितेन ताम्बूलेन विमला विशदा अधरस्य कान्तिर्यस्य तथोक्त:।

( ४४ ) एकेति। एकेन शलाकाञ्जनेन शलाकाहृतकज्जलविन्दुना इत्यर्थ: जनिता लोचनयो: नयनयो: कान्ति: शोभा यस्य तथोक्त:।

दूरवर्त्तिन्याञ्च आसन्द्यां निषसाद। स्थित्वा च मुहूर्त्त-मिव (४७) तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैः मृदुमृणालसूत्रैरिव आवेष्टितं पुस्तकं पुरोनिहितशरशलाका-यन्त्रके निधाय पृष्ठतः सनीडसन्निविष्टाभ्यां मधुकरपारा-वताभ्यां दत्ते स्थानके (४८) प्राभातिकप्रपाठकच्छेद-चिह्नीकृतम् अन्तरपत्रम् उत्क्षिप्य गृहीत्वा च कतिपय-पत्रलघ्वीं कपाटिकां चालयन्निव (४९) मषीमलिनानि अक्षराणि दन्तकान्तिभिः अर्च्चयन्निव (५०) सितकुसुम-

---

(४५) अचिरभुक्तः अचिरं भुक्तं भोजनं यस्य तथाभूतः अचिरकृतभोजन इत्यर्थः विनतं शान्तम् आर्य्यं सौम्यं वेषं परिच्छदं वंशमिति पाठे वंशं कुलमित्यर्थः।

(४६) पुस्तकवाचकः पुस्तकपाठकः पुस्तकव्याख्याता वा। आसन्द्यां वेत्रासने।

(४७) तत्कालेति। तस्मिन् काले पाठकाले इत्यर्थः अपनीतं विरहितं सूत्रेण वेष्टनं यस्य तथोक्तमपि सूत्रवेष्टनरहितमपीत्यर्थः मृदूनि कोमलानि मृणाल-सूत्राणि बिसतन्तवः तैरेव नखकिरणैः नखमयूखैः आवेष्टितं जड़ितम्। पुर इति पुरोऽग्रतः निहिते स्थापिते शरशलाकायन्त्रके शरतृणनिवहनिर्मिते यन्त्रविशेषे निधाय रचित्वा सनीड़सन्निविष्टाभ्यां समीपस्थिताभ्यां मधुकरपारावताभ्यां भ्रमर-कपोताभ्यां स्थानके अवकाशे दत्ते सति मधुकरा पारावताश्च निजनिस्वनेन श्रोतॄन् सुखयन्ति अस्मिंस्तु पाठके पठति तैरपि तच्छ्रवणात् तूष्णीं स्थीयते इति भावः।

(४८) प्राभातिकेति। प्रभातस्य अयं प्राभातिकः प्रभातकालिक इत्यर्थः यः प्रपाठकः तस्य छेदः विरामः तस्य अचिह्नं चिह्नं कृतं चिह्नीकृतं पुस्तकं तत् कश्चित् पाठकः प्रभाते कियत् पठित्वा परपाठकाले पूर्वपठितस्मरणार्थं केनापि पत्रेण चिह्नीकरोति ततश्च मध्याह्नात् परमयं पाठकः तस्यैव पुस्तकस्य तदनन्तर-पठनाय तत् अन्तरपत्रमपनीय पठतीति भावः। अन्तरपत्रं मध्यस्थितविच्छेदचिह्न-पत्रम् उत्क्षिप्य अपनीय। कतिपयेति कतिपयैः पत्रैः लघ्वी तां कपाटिकां पुस्तकावरणपट्टकम्।

(४९) मषीमलिनानि लेखनसाधनरसविशेषो मषी तया मलिनानि कृष्णानि।

मुक्ताभिः ग्रन्थं (५१) मुखसन्निहितसरस्वतीनूपुररवैरिव गमकैः मधुरैः आक्षिपन् मनांसि श्रोतॄणां गीत्या पवनप्रोक्तं पुराणं पपाठ।

तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति सुहृष्टौ नातिदूरवर्त्ती (५२) वन्दी सूचीवाणः तारमधुरेण गीतिध्वनिम् अनुवर्त्तमानः स्वरेण इदम् आर्य्यायुगलम् अपठत्।

(५३) तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम्॥
(५४) वंशानुगमविवादि स्फुटकरणं भरतमार्गभजनगुरु।

---

(५०) सितेति। सितानां शुक्लानां कुसुमानां मुक्तयः वृष्टयः ताभिः। ग्रन्थं पुस्तकलिखितसन्दर्भम्।

(५१) मुखेति। मुखे सन्निहिता समासीना या सरस्वती तस्या नूपुररवाः मञ्जीरनिनादाः तैरिव गमयन्ति बोधयन्ति अर्थानिति गमकाः स्वरविशेषा इत्यर्थः तैः। पवनप्रोक्तं वायुप्रोक्तम्।

(५२) वन्दी स्तुतिपाठकः सूचीवाणः तदाख्यः गीतिध्वनिं सुहृष्टिना गीतश्लोकनिनादमनुवर्त्तमानः अनुसरन्। आर्य्यायुगलम् आर्य्यया जात्या निबद्धं श्लोकद्वयम्।

(५३) तदपीति। तत् मुनिना द्वैपायनेन गीतं कीर्त्तितमपि तत् अतिपृथु अतिविस्तृतमपि पृथुरादिराजो वैनपुत्रः तमतिक्रान्तं तदतिक्रामतीत्यर्थश्च तत् जगद्व्यापि जगत्प्रसिद्धं पावनं पुण्यवर्द्धनमपि इदं पुराणं वायव्यमिति शेषः हि निश्चितं हर्षचरितात् अभिन्नं प्रभेदरहितं मे मम प्रतिभाति प्रतीतिविषयीभवतीत्यर्थः।

(५४) वंशेति। इदं गीतं वंशं वेणुवाद्यं कुलञ्च अनुगच्छतीति तथोक्तम् अविवादि नस्तः विवादिनौ स्वरौ गान्धारनिषादाविति भावः यस्मिन् अन्यत्र न सन्ति विवादिनो विरोधिनो यत्र तत् स्फुटकरणं स्फुटानि स्पष्टानि करणानि ताललयादीनि यस्मिन् अन्यत्र स्फुटानि प्रसिद्धानि करणानि धर्म्मविचारस्थानानि

श्रीकण्ठविनिर्यातं गीतमिदं हर्षराज्यमिव ।

(५५) तत् श्रुत्वा वाणस्य चत्वारः पितामहमुखपद्मा इव (५६) वेदाभ्यासपवित्रितमूर्त्तयः उपाया इव (५७) सामप्रयोगललितमुखाः गणपतिः अधिपतिः तारापतिः श्यामलः इति पितृव्यपुत्रा भ्रातरः (५८) प्रसन्नवृत्तयो (५९) गृहीतवाक्याः (६०) कृतगुरुपदन्यासा (६१)

---

यस्मिन् तत्। भरतेति भरतो नाम सङ्गीतशास्त्रसूत्रकारी मुनिविशेषः आदिराजविशेषश्च तस्य मार्गः पन्थाः नीतिरिति यावत् तस्य भजनेन अनुसरणेन गुरु महदित्यर्थः। श्रीकण्ठेति श्रीयुक्तः वैस्वर्यादिदोषविरहादिति भावः कण्ठः श्रीकण्ठः अथवा श्रीकण्ठो हरः सर्वविद्याधारत्वादिति भावः अन्यत्र देशभेदः तस्मात् विनिर्यातं विशेषेण निःसृतम्। हर्षस्य राज्ञः प्रभोदस्य च राज्यमिव।

(५५) तदित्यादि। पितामहमुखपद्मा इव पितामहो ब्रह्मा तस्य मुखानि चत्वारीति भावः पद्मा इव पितामहमुखपद्माः ते इव। वा पुंसि पद्ममित्यभिधानात् पुंलिङ्गता।

(५६) वेदेति। वेदानाम् अभ्यासेन पुनः पुनः अनुशीलनेन पवित्रिता मूर्त्तिः येषां तथोक्ताः। उपाया इव सामादय इव सामदानभेददण्डमित्युपायचतुष्टयमित्यमरः।

(५७) सामेति। साम्नां सामवेदानां सान्त्ववादानाञ्च प्रयोगेण ललितानि सुन्दराणि सर्वरञ्जनानीति भावः मुखानि येषां ते। ललित सुन्दरमित्यमरः।

(५८) प्रसन्नेति। प्रसन्ना विशुद्धा सुबोधा च वृत्तिः जीविका सूत्रविवरणञ्च येषां ते।

(५९) गृहीतेति। गृहीतम् आहृतं विदितार्थञ्च वाक्यं वचनं न्यायश्चेति भावः वार्त्तिकञ्च यैः तथोक्ताः।

(६०) कृतेति। कृतः गुरूणां पित्रादीनां पदे चरणे न्यासः आत्मार्पणं यैः अन्यत्र कृता गुरवः बहव इत्यर्थः पदानां सुप्तिङन्तानां न्यासाः प्रयोगाः यैः यद्वा, कृतो गुरुणि पदे न्यासः स्थितिः यैः तथोक्ताः महतीं प्रतिष्ठां गता इति यावत्।

न्यायवादिनः सुकृतसंग्रहाभ्यासगुरवो (६२) लब्धसाधुशब्दाः लोक इव व्याकरणेऽपि (६३) सकलपुराणराजर्षिचरिताभिज्ञाः (६४) महाभारतभावितात्मानः विदितसकलेतिहासा महाविद्वांसो महाकवयः (६५) महापुरुषवृत्तान्तकुतूहलिनः सुभाषितश्रवणरसरसायना विदग्धा वयसि यशसि तपसि सदसि महसि वपुषि यजुषि च प्रथमाः पूर्वमेव कृतसङ्गरा विवक्षवः स्मितसुधाधवलितकपोलोदराः परस्परस्य मुखानि व्यलोकयन्।

---

(६१) न्यायेति। न्यायम् उपपत्तियुक्तं वचनं वदन्तीति तथाविधाः। सुकृतेति। सुकृतानां पुण्यकर्म्मणां संग्रहस्य सञ्चयस्य अभ्यासेन पुनः पुनरावृत्त्या सुकृतसंग्रहस्य व्याडिकृतस्य व्याकरणसन्दर्भस्य अभ्यासेन च गुरवः महान्तः।

(६२) लब्धेति। लब्धः अधिगतः साधुशब्दः साधुरयमिति शब्दः व्युत्पन्नशब्दश्च यैः तथोक्ताः।

(६३) पुराणेति। पुराणानां पूर्वकालीनानां राजर्षीणां मन्वादीनां चरितेषु अभिज्ञाः विशिष्टज्ञानशालिनः।

(६४) महेति। महाभारते तदाख्यपुराणे भावितः अनुशीलितः आत्मा यैः तथोक्ताः महाभारतसारविद इति भावः।

(६५) महेति। महान् पुरुषो नारायणः हर्षराजश्च तस्य वृत्तान्ते विवरणे चरिते कुतूहलिनः कौतुकशालिनः। सुभाषितेति। सुभाषितानां शोभनानां काव्यानाम् आलापानाञ्च श्रवणे आकर्णने यो रसः रागः तस्य रसायना औषधविशेषाः सुभाषितश्रावणेन लोकानां श्रुतिसुखदायका इति भावः विदग्धा विगतविषयानुरागा इत्यर्थः।

(६६) वयसि यौवने वचसि वाक्यविन्यासे सदसि सभायां महसि तेजसि वपुषि शरीरे यजुषि यजुर्वेदे प्रथमाः अग्रगण्याः। कृतसङ्गराः कृतोद्यमाः।

(६७) स्मितेति। स्मितं मृदुहसितमेव सुधा अमृतं तया धवलितं विशदीकृतं कपोलस्य गण्डस्य उदरम् अभ्यन्तरभागः येषां तथाविधाः। व्यलोकयन् अपश्यन्।

(६८) अथ तेषां कनीयान् कमलदलदीर्घलोचनः श्यामलो नाम बाणस्य प्रेयान् प्राणानामपि वशयिता दत्तसंज्ञः तैः सप्रणयं (६९) दशनज्योत्स्नास्नपितककुभा मुखेन्दुना बभाषे तात! बाण! द्विजानां राजा (७०) गुरुदारग्रहणम् अकार्षीत्। पुरूरवा (७१) ब्राह्मणधनतृष्णया दयितेन आयुषा व्ययुज्यत। (७२) नहुषः परकलत्राभिलाषी महाभुजङ्ग आसीत्। ययातिः (७३) आहित-

---

(६८) अथेत्यादि। तेषां भ्रातृणां कनीयान् कनिष्ठः प्रेयान् अतिशयेन प्रियः वशयिता लोकवशीकरणक्षम इति यावत् दत्तसंज्ञः कृतसङ्केत इत्यर्थः तैः भ्रातृभिः।

(६९) दशनेति। दशनानां दन्तानां ज्योत्स्नया प्रभया स्नपिताः अभिषिक्ताः ककुभः दिशो येन तादृशेन। तात! वत्स!। प्रथमं तावत् पूर्वेषां राजर्षीणां दोषाणाम् उद्भावनं हर्षचरितस्य नितरां निर्दोषताख्यापनार्थं करोति द्विजानामिति। द्विजानां राजा चन्द्रः द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इत्यमरः।

(७०) गुर्विति। गुरोः बृहस्पतेः बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुरित्यमरः पित्रादेश्च दाराणां पत्न्याः ताराया इत्यर्थः ग्रहणं धर्षणमित्यर्थः। पुरा तारानाम गुरुभार्य्या चन्द्रमसं परमसुन्दरं द्विजराजं कामयमाना गर्भवती आसीत् तदुपलक्षेण बहुयुगं गुरुचन्द्रयोः विरोध आसीत् तत्र गुरुपक्षीया देवाः चन्द्रपक्षीया असुरा अन्योन्यं महासमराय आजुहुवुः तद् दृष्ट्वा भगवान् नारदः तारां गुरवे तद्गर्भजं पुत्रं बुधनामानं चन्द्राय समर्प्य उभयोर्विरोधं बभञ्जेति वार्त्ता अत्र अनुसन्धेया।

(७१) ब्राह्मणेति। ब्राह्मणस्य धनानि तेषु तृष्णा लोभः तया। दयितेन प्रियेण आयुषा जीवितेन आयुर्नाम्ना पुत्रेण च व्ययुज्यत वियुक्तः। पुरा राजर्षिः पुरूरवाः दिशो जिगीषुरेकदा पथिकेनापि प्रभूतधनशालिना विप्रेण यज्ञे निमन्त्रितः लोभात् तद्धनं जिहीर्षुस्तच्छापात् विनाशं गत इति पौराणिकी कथा अत्र अनुसन्धेया।

(७२) नहुषः आयुस्तनयः परस्य कलत्रं भार्य्यां तदभिलाषी महाभुजङ्गः अजगर इत्यर्थः। पुरा दुर्वाससः शापात् इन्द्रे अदर्शनं गते त्रिलोकीं नष्टश्रियं

ब्राह्मणीपाणिग्रहणः पपात। (७४) सुद्युम्नः स्त्रीमय एव अभवत्। (७५) सोमकस्य प्रख्याता जन्तुवधनिर्घृणता। मान्धाता (७६) मार्गणव्यसनेन सपुत्रपौत्रो रसातलम् अगात्। पुरुकुत्सः कुत्सितं कर्म्म तपस्यन्नपि (७७) मेक-

---

दृष्ट्वा देवा नहुषं शतक्रतुं ऐन्द्रे पदे अभ्यषिञ्चन् ततश्चासौ ऐश्वर्य्यमत्तः शचीं साध्वीं गुरुगृहेषु प्रच्छन्नवर्त्तिनीं कामयमानः तया भीतया अपूर्व्वयानेन आगच्छन् मां नय इत्यभिहितो यदा ऋषियानेन तत्सकाशमगच्छत् तदा सुष्ठु चलितुमक्षमम् अगस्त्य वाहकं सर्प सर्प इत्युक्त्वा पदा प्राहरत्। ततश्च अजगरो भव इति सहसा तच्छापात् अजगरतां प्राप इति वार्त्ता अत्र अनुध्येया।

(७३) आहितेति। आहितः कृतः ब्राह्मणकन्यायाः पाणिग्रहणं परिणयः येन तथोक्तः। पुरा मृगयाविहारी राजर्षिर्ययातिः एकस्मिन् कूपे वृषपर्व्वणोऽसुरपतेर्दुहित्रा बहुशतदासीसमेतया क्रीड़नकुपितया पितृगुरोः शुक्रस्य कन्यां देवयानीं निपातिताम् उच्चैः रुदतीं दृष्ट्वा निजकरेण तत्करं गृह्णन् उद्दधार। ततश्च शुक्रेण अनुमतः तां पत्नीत्वेन जग्राह। तद्ग्रहणाच्चान्ते नरकगामी अभवदिति वार्त्ता अत्र अनुसन्धातव्या। सुष्ठु द्युम्नं बलं धनञ्च यस्य सः तदाख्यो नरपतिः स्त्रीमयः स्त्रीरूपः सततकान्तानुरतश्च। पुरा कस्मिंश्चित् सरसि पार्व्वत्या विहरन् हरः राजर्षिणा अनेन सुद्युम्नेन मृगयाविहारिणा अवलोकितः ततश्च लज्जितया गौर्य्या अभ्यर्थितो हरः योऽत्रागच्छति स स्त्रीत्वमवाप्नोतीति सामान्येन शशाप। स च राजा सद्य एव स्त्रीरूपोऽभवत् इति पुराणाख्यानम्।

(७५) सोमकस्य राजर्षिविशेषस्य जन्त्विति जन्तुर्नाम तस्य पुत्रः प्राणिनश्च तस्य तेषाञ्च वधेन हत्यया निर्घृणता निष्ठुरता। पुरा जन्तुर्नाम सोमकस्य राज्ञ एक एव पुत्र आसीत् राजा तु एकपुत्रोऽपुत्र एव इति मन्वानः बहुपुत्रतामिच्छन् पुरोधसा अभ्यधायि यदि बहून् पुत्रान् कामयसे तदा अस्य सुतस्य जन्तोर्वपया होमः क्रियतां तद्धोमधूमान् यावत्यो महिष्यः ते समाजिघ्रेयुः ताः सर्व्वा एव पुत्रान् प्रसविष्यन्ते इति श्रुत्वा राज्ञा सोमकेन तथैव आचरितमिति वार्त्ता अत्रानुध्येया।

(७६) मार्गणेति। मार्गणेषु शरेषु व्यसनं समासक्तिः युद्धासक्तिरिति यावत् याच्ञासातत्यञ्च तेन रसातलं पातालम् अधस्तात् अयात् गतवान् विनष्ट

लकन्यकायाम् अकरोत्। कुवलयाश्वो भुजङ्गलोकपरिग्रहात् अश्वतरकन्यकाम् अपि न परिजहार। पृथुः (७८) प्रथमपुरुषकः परिभूतवान् पृथिवीम्। नृगस्य कृकलासभावे (७९) वर्णसङ्करः समदृश्यत। सौदासेन (८०) न रचिता पर्य्याकुलीकृता चितिः। नलम् (८१)

---

इति भावः पुरा मान्धाता पृथिवीं निर्जित्य स्वर्गजयार्थं गतः शतक्रतुना अभ्यधायि राजन्! पातालं तावदग्रे जय पश्चात् स्वर्गजयिनः तव दास्यं ग्रहीष्यामीति स च तद्वचनात् पातालं गतः तत्रत्येन शङ्करप्रसादलब्धत्रिशूलेन लवणनाम्ना दानवेन सपुत्रपौत्रो निधनं गत इति किंवदन्ती।

(७७) मेकलकन्यकायां नर्मदायाम्। पुरा पुरुकुत्सः तपस्यन् मेकलकन्यकायां विहरन्तीं कामपि कामिनीं दृष्ट्वा कामार्त्तः तां धर्षयामासेति वार्त्ता। भुजङ्गलोकपरिग्रहात् पातालगमनात्। अश्वतरकन्याम् अश्वतरो नाम कश्चित् नागः भुजङ्गो विटश्च तस्य कन्या तां वडवाश्च न परिजहार न तत्याज ऊढवानित्यर्थः। पुरा पुरुकुत्सः मृगयाप्रसङ्गेन श्रममार्त्तो मज्जनेच्छया सरसीमवगाढ एव रसातलं गतः तत्र अश्वतरकन्यां गतवानिति वार्त्ता।

(७८) प्रथमेति। प्रथम आद्यः मुख्यश्च पुरुष एव पुरुषकः पृथुः आदिराजः वेनतनयः। पुरा पृथुः भूधराक्रान्तां पृथ्वीं विलोक्य चापकोट्या भुवः पर्य्यन्तेषु तान् प्रचिक्षेप ततश्च स्वधारणभूतभूभृतां परिभवात् स्वस्यापि परिभवो जातः तेन च रुष्टा भूः देहि मे प्रजाभरणोपायान् इति अनुरुद्धा त्रिभुवनानि वशाम ततः कमपि शरणम् अलभमाना अस्य सर्वाः शस्यसम्पदो जनयामासेति वार्त्ता अनुसन्धेया। कृकलासभावे कृकलासः क्षुद्रप्राणिभेदः तद्भावे तद्रूपदशायाम्।

(७९) वर्णेति। वर्णानां शुक्लकृष्णादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणाञ्च संकरः सम्मिश्रणम्। नृगो राजर्षिः कदाचित् कस्यापि विप्रस्य सम्बन्धिनीं गाम् अविदित्वा अन्यस्मै द्विजाय दत्तवान् ततश्च गोस्वामी तां गां स्वीयां विदित्वा तं विप्रं ययाचे। स च तां नास्मै ददौ। ततस्तौ विवदमानौ राजद्वारं गत्वा राजानं द्विजातीयस्त्रीषु आसक्तम् अलभमानौ क्रोधात् कृकलासो भव इति राजानं शप्त्वा स्वर्गं प्रविजग्मतुरिति वार्त्ता।

अवशाक्षहृदयं कलिः अभिभूतवान्। संवरणो (८२) मित्र-दुहितरि विक्लवताम् अगात्। (८३) दशरथ इष्टरामोन्मादेन मृत्युम् अवाप। कार्त्तवीर्य्यो (८४) गोब्राह्मणातिपीड़नेन निधनमयासीत्। मरुत्त (८५) इष्टबहुसुवर्णकोऽपि (८६) देवद्विजबहुमतो न बभूव। शन्तनुरपि (८७)

---

(८०) न रक्षिता न पालिता नरान् क्षिणोतीति नरक्षिता नरक्षय-शालिनीत्यर्थश्च अतएव पर्य्याकुलिता समन्तात् आकुलतां प्राप्ता। सौदासो नाम राजा मृगयार्त्तः पथि कदाचित् स्थितं कमपि मुनिम् अपसर्प इति अवदत् सतु तद्वचनम् अनाकर्णयन् मार्गात् न चलितः। ततश्च राज्ञा क्रोधाभिभूतेन कशयाभिहतो स मुनिः मनुष्यभक्षको राक्षसो भव इति तं शशाप। ततश्च अस्मिन् राक्षसे जाते भुवः पर्य्याकुलता जातेति वार्त्ता।

(८१) अवशाक्षहृदयं न वशम् अनायत्तमित्यर्थः अक्षहृदयम् अक्षज्ञानम् अक्षाणि इन्द्रियाणि चक्षुरादीनि हृदयं मनश्च यस्य तथाभूतम्। पुरा नलो राजा द्यूतव्यसनासक्तः कलिना परिभूत इति प्रसिद्धिः।

(८२) मित्रेति। मित्रः सूर्य्यः मित्रं सुहृच्च तस्य दुहिता कन्या तस्यां विक्लवतां समासक्तिमित्यर्थः। पुरा तपतीनाम्नी रविकन्या संवरणेन धर्षिता इति वार्त्ता।

(८३) इष्टेति। इष्टा प्रिया रामा कान्ता कैकेयीति भावः तस्याम् उन्मादः अत्यासक्तिरिति यावत् यद्वा इष्टः प्रियः रामः स्वसुतः तस्य उन्मादः निर्वासनमिति यावत् तेन। राजा दशरथः स्त्रीवाक्येन प्रियं पुत्रं रामं वनं प्रेषयन् तच्छोकेन ममारेति रामायणी वार्त्ता।

(८४) गोब्राह्मणेति। गवे गोनिमित्तमित्यर्थः ब्राह्मणस्य जमदग्नेरिति भावः गवां ब्राह्मणानाञ्च अतिपीड़नेन वधेन। पुरा कार्त्तवीर्य्यः कदाचित् जमदग्नेः धेनुम् अहरत् तञ्च व्यापादितवान् ततश्च क्रोधाभिभूतेन तत्पुत्रेण परशुरामेण निहत इति वार्त्ता।

(८५) इष्टेति। बहूनि सुवर्णानि सौवर्णद्रव्याणि यस्मिन् तथाभूतः यज्ञः बहुसुवर्णकः इष्टः अनुष्ठितः बहुसुवर्णकः येन तथाभूतः।

व्यसनात् एकाकी वियुक्तो वाहिन्या विपिने विललाप। पाण्डुः (८८) वनमध्यगतो मत्स्य इव मदनरसाविष्टः प्राणान् मुमोच। युधिष्ठिरो (८९) गुरुभयविषण्णहृदयः

---

(८६) देवेति। देवद्विजी बृहस्पतिः देवा द्विजा विप्राश्च तेषां बल्लाद्दृतः। पुरा यियक्षुः मरुत्तः बृहस्पतिं याज्यकर्मणि अनुरुरोध। मनुष्यस्य तव यज्ञं न करिष्यामीति तेनावमतश्च नारदवचनात् तद्भ्रातरं वाराणसीषु संवर्त्तं गत्वा कथमपि पौरोहित्ये न्ययोजयत्। ततश्च बृहस्पतिस्तद्यज्ञे भ्रातुः समृद्धिं दृष्ट्वा विद्वेषमकरोदिति वार्त्तानुसन्धेया।

(८७) व्यसनात् अत्यासङ्गात् वाहिन्या नद्या गङ्गादेव्या इत्यर्थः सेनया च। पुरा महाभिषो ब्रह्मसभायां गङ्गां चामरग्राहिणीं कदाचित् अङ्गविशेषात् चलितवाससं दृष्ट्वा भृशं कामार्त्तस्तां प्रेमवचसा अधिक्षिपन् ब्रह्मणा पतित्वा चत्रियगृहे शन्तनुर्नाम भवेति शप्तः सद्यः एव गां गतः शन्तनुः नाम राजा अभूत्। गङ्गापि तत्कृते तथैव शप्ता सखेदं भुवम् अवतरतिस्म। तदानीञ्च धेनुहरणकुपितेन वशिष्ठेन भुवं गच्छतेति शप्तैः वसुभिः विदितैतद्वृत्तान्तैः गङ्गा अभ्यधायि यदि त्वं नृपेऽस्मिन् समासक्तिः जाता तदा वयमपि तव गर्भे उत्पत्स्यामहे जातमात्राश्च त्वया स्वसलिले नीतव्या इति सा तु तथा अङ्गीकृत्य मृगयायां विहरन्तं शन्तनुं प्रार्थयानम् अवोचत् राजन्! यदहं करोमि तत्र त्वया न निरोद्धव्यं न च मदीयं जन्म प्रष्टव्यम् इति राजापि नितरां तदासक्तः तथैवाङ्गीकृत्य बहून्यब्दानि तया अरमत। कालक्रमेण यः कश्चित् सुत उत्पद्यतेस्म स तया जले क्षिप्तः एवं सप्तसु सुतेषु जलेषु क्षिप्तेषु राजा नितरां पुत्रशोकार्त्तः तां नातः परं त्वया मत्पुत्रो न क्षेप्तव्य इति सतिरस्कारम् अभिहिता अष्टमं पुत्रं राज्ञे दत्त्वा पुनः ब्रह्मलोकम् अगात्। राजा च तद्वियोगार्त्तोऽभवदिति वार्त्ता अत्र अनुसन्धेया।

(८८) विजने एकान्ते। एकदा पाण्डुः मृगयाविहारी कर्दमाख्यं कञ्चिन्मुनितनयं मृगरूपेण मृग्या सह रममाणम् अकृतार्थञ्च बाणेनैकेन जघान स च शरार्त्तः प्राणान् मुञ्चन् त्वमपि अहमिव स्त्रिया विहरन् अकृतार्थ एव प्राणांस्त्यक्ष्यसीति शप्तः कदाचित् कामार्त्तः माद्र्या सह विजने विहरन् दिष्टान्तं गत इति भारती वार्त्ता।



समरशिरसि सत्यम् उत्सृष्टवान्। इत्थं नास्ति राजत्वम् (९०) अपकलङ्कम् ऋते देवदेवात् अमुतः सर्वद्वीपभुजो हर्षात्। अस्य हि बहूनि आश्चर्य्याणि श्रूयन्ते तथाहि (९१) अत्र बलजिता निश्चलीकृताः (९२) चलन्तः कृतपक्षाः क्षितिभृतः। अत्र प्रजापतिना (९३) शेषभोगमण्डलस्य उपरि क्षमा कृता। अत्र (९४) पुरुषोत्तमेन सिन्धुराजं प्रमथ्य लक्ष्मीः आत्मीकृता। अत्र बलिना (९५) मोचितभूभृद्वेष्टनो मुक्तो महानागः। अत्र देवेन अभि-

---

(८९) गुर्विति। गुरोर्द्रोणात् भयं महद् भयञ्च तेन विषमं हृदयं यस्य तथोक्तः। कुरुपाण्डवसमरे स्वबलानि दहन्तं साक्षाद् धनुर्वेदं द्रोणम् अश्वत्थामा हत इति अलीकवचसा शोकाकुलं कृत्वा कृतशस्त्रत्यागं घातितवान् इति भारती वार्त्ता।

(९०) अपकलङ्कं निर्दोषम्। देवदेवात् राजाधिराजात्। आश्चर्य्याणि चरितानीति शेषः।

(९१) अत्रेत्यादि। अत्र जगति। बलं शत्रुसैन्यं बलाख्यम् असुरञ्च जितवान् इति बलजित् तेन हर्षेणेति शेषः।

(९२) चलन्तः विरोधितया व्यवहरन्त इति यावत् पक्षशालितया उड्डीयमानाश्च कृताः अवलम्बिताः पक्षाः सहायाः अन्यत्र छताः पक्षाः पतत्राणि यैः तथोक्ताः क्षितिभृतः राजानः पर्वताश्च निश्चलीकृताः निर्जितत्वात् वशीकृता इत्यर्थः पक्षच्छेदनात् स्थावरतां नीताश्च। प्रजापतिना नरपतिना ब्रह्मणा च।

(९३) शेषेति। शेषस्य निहतावशिष्टस्य भोगिनां सुखभोगरतानां राज्ञामिति भावः। मण्डलस्य चक्रस्य अनन्तस्य भोगिनः नागस्य मण्डलस्य फणस्य च उपरि क्षमा क्षान्तिः पृथिवी च कृता विहिता निहिता च।

(९४) पुरुषेति। पुरुषेषु उत्तमः श्रेष्ठः तेन नरनाथेन नारायणेन च सिन्धुराजं सिन्धुदेशाधिपतिं क्षीरनिधिञ्च प्रमथ्य निर्जित्य विलोड्य च लक्ष्मीः राजश्रीः कमला च आत्मीकृता स्वीकृता। बलिना बलवता असुरराजेन महानागः महान् रणहस्ती स्वीय इति भावः वासुकिश्च।

षिक्तः कुमारः। अत्र स्वामिना (९६) एकप्रहारपातितारातिना प्रख्यापिता शक्तिः। अत्र नरसिंहेन (९७) स्वहस्तविशसितारातिना प्रकटीकृतो विक्रमः। अत्र (९८) परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः। अत्र (९९) लोकनाथेन दिशां मुखेषु परिकल्पिता लोकपालाः (१००) सकलभुवनकोशश्चाग्रजन्मनां विभक्तः। इत्येवमादयः (१०१) प्रथमकृतयुगस्येव दृश्यन्ते महासमारम्भाः। अतोऽस्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेण आदितः प्रभृति चरितमिच्छामः श्रोतुम् (१०२) सुमहान्

---

(९५) मोचितेति। मोचितम् अपनीतं भूभृद्भिः शत्रुराजभिः इत्यर्थः वेष्टनम् अवरोधनं भूभृता मन्दरेण वेष्टनञ्च यस्य तथाभूतः मुक्तः परित्रातः सागरमन्थनात् परं परित्यक्तश्च। देवेन राज्ञा देवराजेन च कुमारो निजतनयः गुहश्च अभिषिक्तः यौवराज्ये सैनापत्ये च। स्वामिना प्रभुणा सेनापतिना गुहेन च।

(९६) एकेति। एकेन केवलेन प्रथमसहायकेन च प्रहारेण शराघातेन प्रकर्षेण पातिताः अरातयः शत्रुभूता राजानः तारकादयोऽसुराश्च येन तथाभूतेन शक्तिः सामर्थ्यं तदाख्यमस्त्रञ्च। नरसिंहेन नरः सिंह इव तेन नरश्चासौ सिंहश्चेति तथोक्तश्च नृहरिणेत्यर्थः।

(९७) स्वहस्तेति। स्वहस्तेन विनाशिता निहता विदारिताश्च अरातयः शत्रवः विरोधिनो नृपाः हिरण्यकशिपुप्रभृतयश्च येन तथोक्तेन।

(९८) परमेश्वरेण परमश्चासौ ईश्वरश्चेति परमेश्वरः सार्वभौमः हरश्च तेन तुषारशैलभुवः हिमालयप्रदेशस्य हिमगिरिजातायाश्च दुर्गायाः दुर्गमायाः गौर्याश्च करः बलिः पाणिश्च।

(९९) लोकनाथेन नरपतिना विधात्रा च परिकल्पिताः नियोजिताः लोकपालाः प्रजापालाः इन्द्रादयश्च।

(१००) सकलभुवनकोशः सर्वजगतां धनं सकलभुवनमेव कोशः धनभाण्डारम् अग्रजन्मनां ब्राह्मणानां विभक्तः विभज्य दत्तः।

कालो नः शुश्रूषमाणानाम्। अयस्कान्तमणय इव लोहानि नीरसनिष्ठुराणि (१०२) क्षुल्लकानामपि आकर्षन्ति मनांसि महतां गुणाः किमुत स्वभावसरसमृदूनि (१०४) इतरेषाम्। कस्य न द्वितीयमहाभारते भवेत् अस्य चरिते कुतूहलम्। आचष्टां भवान्। भवतु भार्गवोऽयं वंशः शुचिना अनेन राजर्षिचरितश्रवणेन सुतरां शुचितरः इत्येवम् अभिधाय तूष्णीम् अभूत्।

बाणस्तु विहस्य अब्रवीत् (१०५) आर्य! न युक्त्यनुरूपम् अभिहितम्। (१०६) अघटमानमनोरथमिव भवतां कुतूहलम् अवकल्पयामि। (१०७) शक्याशक्यपरिसङ्ख्यानशून्याः प्रायेण स्वार्थलिप्सवः। परगुणानुरागिणो (१०८)

---

(१०१) प्रथमकृतयुगस्येव प्रथमं सृष्टस्य सत्ययुगस्येव महारम्भाः महान्ति कार्याणि।

(१०२) सुमहान् कालः गत इति शेषः शुश्रूषमाणां श्रोतुमिच्छतां नीरस-निष्ठुराणि नीरसानि आर्द्रभावरहितानि निष्ठुराणि कठिनानि।

(१०३) क्षुल्लकानां खलानां क्षुद्राणां वा महतां गुणाः मनांसि आकर्षन्ति इति अन्वयः।

(१०४) इतरेषां साधूनां महतां वा। द्वितीयमहाभारते द्वितीयमहा-भारतसदृशे अस्य हर्षस्य चरिते कुतूहलम् औत्सुक्यम्। आचष्टां कथयतु। सुतरामतिशयेन शुचितरः पूततरः।

(१०५) आर्य! पूज्य! युक्त्यनुरूपं युक्तियुक्तम्।

(१०६) अघटमानेति। अघटमानः असम्पन्नतां गच्छन् मनोरथः यस्य तथाभूतम् अलमिकर्मिति भावः अवकल्पयामि विवेचयामि।

(१०७) शक्येति। शक्यं साध्यम् अशक्यम् असाध्यं तयोः परिसंख्यानं परिगणनं तेन शून्याः रहिताः। स्वार्थलिप्सवः स्वकार्यलिप्सवः।

प्रियजनकथाश्रवणरसरभसमोहिता च मन्ये महतामपि मतिः अपहरति प्रविवेकम्। पश्यतु आर्य्यः क्व परमाणुपरिमाणं वटुहृदयं? (१०९) क्व समस्तब्रह्मस्तम्भव्यापि देवस्य चरितम्?। (११०) क्व परिमितवर्णवृत्तयः कतिपये शब्दाः? (१११) क्व सङ्ख्यातिगाः तद्गुणाः?। सर्वज्ञस्यापि (११२) अयम् अविषयः वाचस्पतेरपि अगोचरः सरस्वत्या अप्यतिभारः किमुत अस्मद्विधस्य?। कः खलु पुरुषायुषशतेनापि शक्नुयात् अविकलम् अस्य चरितं वर्णयितुम्? एकदेशे तु यदि कुतूहलं वः सज्जा वयम्। इयम् (११३) अधिगतकतिपयाक्षरलवलघीयसी जिह्वा क्व (११४) उपयोगं गमिष्यति?। भवन्तः श्रोतारः वर्ण्यते हर्षचरितं किम् अन्यत्। अद्य तु परिणतप्रायो दिवसः।

---

(१०८) प्रियेति। प्रियजनस्य कथाश्रवणे यो रसः रागः तस्य रभसेन अतिशयेन रभसो वेगहर्षयोरित्यमरः। मोहिता अन्धा इत्यर्थः प्रविवेकं प्रकृष्टं विवेकम्। परमाणुपरिमाणम् अतिक्षुद्रमिति भावः। वटुहृदयं द्विजशिशुमानसम्।

(१०९) समस्तेति। समस्तं सकलं ब्रह्मस्तम्भः ब्रह्माण्डं तद्व्यापि। देवस्य हर्षस्य।

(११०) परिमितेति। परिमितानां परिगणितानां वर्णानाम् अक्षराणाम् अकारादिहकारान्तानां वृत्तयः रचनानि, कतिपये अल्पाः इति भावः।

(१११) संख्यातिगाः संख्या एकादिपरार्द्धपर्य्यन्ता: ता अतिगच्छन्ति अतिशेरते इति तथोक्ताः तद्गुणाः तस्य देवस्य हर्षस्य गुणाः।

(११२) अयं हर्षचरितरूपः अविषयः अगोचरः। वाचस्पतेः बृहस्पतेः। पुरुषायुषशतेन पुरुषस्य आयुः जीवितकालाः शतं वर्षाणीत्यर्थः शतायुर्वै पुरुष इति श्रुतेः। तेषां शतं तेन। अविकलं सम्यक्। एकदेशे कियदंशे इत्यर्थः। सज्जाः प्रस्तुताः।

(११३) अधिगतेति। अधिगतः ज्ञातः कतिपयानाम् अक्षराणाम् लवः लेशः यया तथाभूता अतएव लघीयसी यत्किञ्चिद्व वर्णयितुं क्षमा इति भावः।

( ११५ ) पश्चात् लम्बमानकपिलकिरणजटाभारभास्वरो भगवान् भार्गवो राम इव ( ११६ ) समन्तपञ्चकरुधिरमहाह्रदे निमज्जति सन्ध्यारागपटले पूषा। श्वो निवेदयितास्मीति। सर्वे च तं तथेति प्रत्यपद्यन्त। नातिचिरात् उत्थाय सन्ध्याम् उपासितुं शोणम् अयासीत्।

( ११७ ) अथ मधुमदपल्लवितमालवीकपोलकोमलातपे मुकुलितेऽह्नि कमलिनीमलनादिव ( ११८ ) लोहिततमे तमोलिहि रवौ लम्बमाने रविरथतुरगमार्गानुसारिणि यममहिष इव धावति नभसि तमसि क्रमेण च ( ११९ )

---

( ११४ ) उपयोगम् उपकारितां यास्यति प्राप्स्यति? न कुत्रापि इत्यर्थः। परिणतप्रायः प्रायेण परिणतः अवसित इत्यर्थः।

( ११५ ) पश्चादिति। पश्चात् पश्चिमायां दिशि पृष्ठदेशे च लम्बमानः पतन् कपिलः पिङ्गलः किरणो जटाभार इव जटासमूह इव तेन भास्वरः दीप्यमानः राम इव परशुराम इव।

( ११६ ) समन्तेति। समन्तपञ्चकरुधिरमेव महान् ह्रदः तस्मिन्। सन्ध्येति सन्ध्याया रागाः लौहित्यानि तेषां पटलं समूहः तस्मिन् पूषा सूर्यः। पुरा भार्गवो रामः पितृनिधनेन कुपितः एकविंशतिकृत्वः क्षत्रान् निहत्य तदीयेन रुधिरेण कुरुक्षेत्रस्य समन्तात् पञ्च ह्रदान् कल्पयित्वा तेषु पितॄन् तर्पयामास ततश्च तत्स्थानम् अद्यापि समन्तपञ्चकमिति प्रसिद्धम्।

( ११७ ) अथेत्यादि। मध्विति। मधुमदेन मद्यपानजनितेन उल्लासेन पल्लवितः प्रफुल्ल इत्यर्थः यो मालव्याः मालवदेशीयमहिलायाः कपोलः तद्वत् कोमलः आतपः प्रभा यस्य तथाभूते मुकुलिते मुकुलभावं गते निमीलितप्राये इत्यर्थः कमलिनीमलनादिव पद्मिनीमालिन्यदर्शनादिव इत्यर्थः।

( ११८ ) लोहिततमे अतिलोहिते आगामिनः तिमिरस्य रिपोः कमलिनीं स्वां प्रियां प्रति भाविधर्षणजनितक्रोधादिति भावः तमोलिहि तिमिरध्वंसिनि रवौ सूर्ये लम्बमाने पश्चिमायां पततीत्यर्थः। नभसि आकाशे तमसि अन्धकारे।

गृहतापसकुटीरकपटलावलम्बिषु रक्तातपच्छेदैः सह संहृतेषु वल्कलेषु कलिकल्मषमुषि पुष्णाति गगनम् (१२०) अग्निहोत्रधाममधूमे सनियमे यजमानजने मौनव्रतिनि विहारवेलाविलोले पर्य्यटति पल्लीजने (१२१) विकीर्य्यमाणहरितश्यामाकशालिपूलिकासु दुग्धासु होमकपिलासु हूयमाने वैताननूनपाति (१२२) पूतविष्टरोपविष्टे कृष्णाजिनजटिले जटिनि जपति वटुजने (१२३) ब्रह्मासनाध्यासिनि ध्यायति योगिगणे (१२४) तालध्वनिधावमानानन्तान्तेवासिनि अलसहृद्यश्रोत्रियानुमतेन (१२५)

---

(११९) गृहेति। गृहतापसानां गृहस्थतपस्विनां कुटीरकानां क्षुद्रगृहभेदानां पटलानि छदीन् अवलम्बन्ते इति तथोक्तेषु रक्तातपच्छेदैः रक्तवर्णसूर्य्यमयूखखण्डैः सह संहृतेषु आकृष्य नीतेषु वल्कलेषु तरुत्वक्षु। कलिकल्मषमुषि कलिकालजनितपापहारिणि पुष्णाति व्याप्नुवति।

(१२०) अग्निहोत्रधामधूमे होमगृहधूमे। सनियमे सुसंयते यजमानजने याज्ञिकवर्गे। मौनव्रतिनि मौनव्रतधारिणि। विहारो गोष्ठाद् गवानयनेन तद्दोहनं तस्य वेला समयः तेन विलोले चञ्चले व्यस्ते इति भावः पर्य्यटति परितो भ्रमति।

(१२१) विकीर्य्यमाणेति। विकीर्य्यमाणा प्रक्षिप्यमाणा प्रदीयमाना इत्यर्थः हरिता श्यामला श्यामाकशालीनां श्यामाकाख्यव्रीहिभेदानां पूलिका गुच्छः याभ्यः तथाभूतासु दोहनकाले तादृशग्रासदानाद् अनायासेन दोहनं दुग्धवृद्धिश्च भवतीति भावः होमकपिलासु होमधेनुषु। हूयमाने हविषा सन्तर्प्यमाणे वैताननूनपाति यज्ञीयाग्नौ।

(१२२) पूतेति। पूते पवित्रे विष्टरे आसने उपविष्टः तस्मिन् कृष्णाजिनजटिले कृष्णमृगचर्म्मणा जटिनि जटाधारिणि जपति इष्टमन्त्रमिति शेषः वटुजने द्विजजने।

(१२३) ब्रह्मेति। ब्रह्मासनम् आसनविशेषः तत् अध्यास्ते इति तथोक्ते। ध्यायति चिन्तयति स्वेष्टदेवमिति शेषः।

गलद्ग्रन्थदण्डकोद्गारिणि सन्ध्यां समवधारयति (१२६) वठरविटवटुसमाजे समुन्मज्जति च ज्योतिषि तारकाख्ये खे प्राप्ते प्रदोषारम्भे भवनम् आगत्य उपविष्टः स्निग्धैः बन्धुभिश्च सार्द्धं तथैव (१२७)गोष्ठ्या तस्थौ। नीतप्रथमयामश्च गणपतिः भवने परिकल्पितं शयनीयम् असेवत। इतरेषान्तु सर्वेषां निमीलितदृशामपि अनुपजातनिद्राणां कमलवनानामिव सूर्य्योदयं प्रतिपालयतां कुतूहलेन कथमपि सा क्षपा क्षयम् अगच्छत्।

अथ यामिन्याः (१२८) तुर्य्ये यामे प्रतिबुद्धः स एव वन्दी श्लोकद्वयम् अगायत्।

(१२९)पश्चादङ्घ्रिं प्रसार्य्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैः

---

(१२४) तालेति। तालध्वनिः सङ्केतार्थमङ्गुलिशब्दविशेषः तेन धावमानाः सत्वरमापतन्तः अनन्ताः अशेषा बहव इत्यर्थः अन्तेवासिनः छात्रा यस्य तथाभूते। अलसेति। अलसः मन्थरः वृद्धः स्थविरः श्रोत्रियः छान्दसः वेदोपाध्याय इत्यर्थः। तस्य अनुमतेन अनुज्ञया।

(१२५) गलदिति। गलतः स्खलतः ग्रन्थदण्डकान् छन्दोविशेषान् उद्गिरति उच्चारयतीति तथोक्ते। सन्ध्यां सन्ध्याकालिकोपासनाविशेषं समवधारयति समालोचयति।

(१२६) वठरेति। वठरा अबोधा विटा दुर्वृत्ता ये वटवः द्विजशिशवः तेषां समाजः सङ्घः तस्मिन्। समुन्मज्जति समुन्मीलति तारकाख्ये नक्षत्रनाम्नि ज्योतिषि तेजःपदार्थे खे आकाशे। प्राप्ते उपस्थिते प्रदोषारम्भे रजनीमुखे इत्यर्थः।

(१२७) गोष्ठ्या समाजेन तस्थौ बहुभिः बन्धुभिः परिवृतः स्थित इत्यर्थः। नीतप्रथमयामः अतिक्रान्ते प्रथमप्रहरे इत्यर्थः गणपतिः प्रागुक्तपितृव्यपुत्रस्य। परिकल्पितं रचितम्। कुतूहलेन प्रभाते बाणवर्ण्यमानहर्षचरितश्रवणौत्सुक्येन इत्यर्थः क्षपा रात्रिः।

(१२८) तुर्य्ये चतुर्थे यामे प्रहरे। वन्दी स्तुतिपाठकः।

आसज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥
(१३०) कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कन्धरामातिरश्चीं
लोलेनाहन्यमानं तुहिनकणमुचा चञ्चता केसरेण।
निद्राकण्डूकषायं कषति निविड़ितश्रोत्रशुक्तिस्तुरङ्गः
त्वङ्गत्पक्ष्माग्रलग्नप्रतनुवुसकणं कोणमक्ष्णः खुरेण॥

वाणस्तु तत् श्रुत्वा समुत्सृज्य निद्राम् उत्थाय प्रक्षाल्य वदनम् उपास्य भगवतीं सन्ध्याम् उदिते भगवति सवितरि गृहीतताम्बूलः तत्रैव अतिष्ठत्। अत्रान्तरे सर्वे अस्य ज्ञातयः समाजग्मुः परिवार्य च आसाञ्चक्रुः। असौ अपि

---

(१२९) पश्चादिति। शयनादुत्थितः तुरङ्गः अश्वः पश्चादङ्घ्रिं पश्चाद्भाग-स्थितपदद्वयमित्यर्थः त्रिकस्य पृष्ठवंशाधरस्य पृष्ठवंशाधरे त्रिकमित्यमरः नत्वा विततं विस्तृतं यथा तथा प्रसार्य्य विस्तार्य्य अङ्गम् अवयवम् उच्चैः द्राघयित्वा दीर्घी-कृत्य आभुग्नकण्ठः नमितगलः मुखम् उरसि वक्षसि आसज्य कृत्वा धूलिभिः धूम्राः धूसरा इत्यर्थः सटा जटा विधूय कम्पयित्वा घासानां शष्पाणां ग्रासे कवलने अभिलाषः तस्मात् अनवरतं चलत् प्रोथं नासिका यस्य तादृशं तुण्डं वदनं यस्य तथोक्तः मन्दं शब्दायमानः शब्दं कुर्वन् खुरेण क्ष्मां भुवं विलिखति कुट्टयति। स्रग्धरावृत्तम्। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धराकीर्त्तितेयम्। इति लक्षणम्।

(१३०) कुर्वन्निति। तुरङ्गः अश्वः निविड़िते कुञ्चिते श्रोत्रे शुक्ती इव शुक्तास्फोटाविव येन यस्य वा तथोक्तः तथा आभुग्नम् आकुञ्चितं पृष्ठं येन तथोक्तः मुखस्य निकटे सन्निधौ कटिः मध्यभागः यस्य तथाभूतः कन्धरां ग्रीवाम् आतिरश्चीम् आभङ्गुरां कुर्वन् लोलेन चपलेन तुहिनकणमुचा शिशिरबिन्दुवर्षिणा चञ्चता चलता केसरेण जटाजालेन आहन्यमानं सन्ताड्यमानं निद्राकण्डूः निद्रावेशावशेषः

(१३१) पूर्वोद्घातेन विदिताभिप्रायः तेषां पुरो हर्षचरितं कथयितुम् आरेभे ।

श्रूयताम् ।

(१३२) अस्ति पुण्यकृताम् अधिवासो वासवावास इव वसुधाम् अवतीर्णः सततम् (१३३) असङ्कीर्णवर्णव्यवहारस्थितिः (१३४) कृतयुगव्यवस्थः स्थलकमलवनबहलतया (१३५) पीतोन्मूल्यमानमृणालैः उद्गीतमेदिनीसारगुणैः इव कृतमधुकरकोलाहलैः हलैः उल्लिख्यमानक्षेत्रः (१३६) क्षीरोदपयःपायिपयोदसिक्ताभिरिव पुण्ड्रेक्षुवाटसन्ततिभिः

---

तया कषायः आविलः तम् अच्छः नेत्रस्य कोणं लङ्घन्तु प्रसरन्तु पक्ष्माग्रेषु वामाग्रेषु लग्नाः संसक्ताः प्रतनवः स्वल्पाः वुत्तकणाः रजोबिन्दवः यत्र तद् यथा तथा क्षुरेण कषति घर्षयति । स्रग्धरावृत्तम् ।

(१३१) पूर्वोद्घातेन पूर्वकृतप्रस्तावेन विदिताभिप्रायः विज्ञाताशयः ।

(१३२) अस्तीत्यादि । श्रीकण्ठो नाम जनपदः अस्तीति अन्वयः तमेव विशिनष्टि पुण्येत्यादिभिः । पुण्यकृतां पुण्यशालिनाम् अधिवासः आवासस्थानम् । वासवावास इव इन्द्रालय इव वसुधां पृथ्वीम् ।

(१३३) असङ्कीर्णेति । न सङ्कीर्णा सङ्करदोषैः अनाक्रान्तेत्यर्थः वर्णानां ब्राह्मणादीनां व्यवहाराः आचाराः स्थितयः मर्यादाश्च यत्र तथोक्तः ।

(१३४) कृतेति । कृतयुगस्येव सत्ययुगस्येव व्यवस्था नियमः यत्र तथाभूतः स्थलकमलबहलतया स्थलपद्मप्राचुर्येण ।

(१३५) पीतेति । पोत्रेण मुखाग्रेण उन्मूल्यमानानि उद्ध्रियमाणानि मृणालानि यैः तथोक्तैः अतएव उद्गीता उच्चैः कीर्तिता मेदिन्याः सारा उत्कृष्टा गुणा यैः तथाभूतैः । कृता मधुकराणां कोलाहला यैः तादृशैः । हलैः लाङ्गलैः उल्लिख्यमानानि उत्खन्यमानानि क्षेत्राणि यस्य तथोक्तः ।

(१३६) क्षीरोदेति । क्षीरोदस्य क्षीरसागरस्य पयांसि पिबन्ति इति

निरन्तरः प्रतिदिशम् (१३७) अपूर्वपर्वतकैः इव खलधानधामभिः विभज्यमानैः शस्यकूटैः सङ्कटसीमान्तः समन्तात् (१३८) उद्घातघटीसिच्यमानैः जीरकजूटैः जटिलितभूमिः (१३९) उर्वरावरीयोभिः शालेयैः अलङ्कृतः (१४०) पाकविशराकराजमाषनिकरकिर्मीरितैश्च (१४१) स्फुटितमुद्गफलकोशीकपिशितैः गोधूमधामभिः स्थलीपृष्ठैः अधिष्ठितः (१४२) महिषपृष्ठप्रतिष्ठितगायद्गोपालपालितैश्च

---

तथोक्ता ये पयोदा मेघाः तैः सिक्ताः ताभिरिव पुण्ड्रेचुवाटसन्ततिभिः पुण्ड्रेचूणाम् इत्तुविशेषाणां वाटसन्ततयः वृतिनिचयाः ताभिः निरन्तरः अविच्छिन्नः।

(१३७) अपूर्वपर्वतकैरिव अभिनवक्षुद्रगिरिभिरिव खलधानधामभिः खलेषु शस्यसमाहरणभूमिषु धानाय स्थापनाय रक्षणाय इत्यर्थः धाम स्थानं येषां तैः। विभज्यमानैः विभागेन स्थाप्यमानैः पृथक् पृथक् रक्ष्यमाणैः इत्यर्थः शस्यकूटैः धान्यादिशस्यराशिभिः सङ्कटसीमान्तः आकीर्णसीमाभागः।

(१३८) उद्घातेति। उद्घातघटीभिः यन्त्रकलसैः इत्यर्थः सिच्यमानानि आर्द्रीक्रियमाणानि तैः। जीरकजूटैः जीरकसमूहैः जटिलिता समाकीर्णा भूमिः यस्य तथोक्तः।

(१३९) उर्वरेति। उर्वरा सर्वशस्याढ्या भूः तया वरीयांसि श्रेष्ठानि अत्युत्कृष्टानि इत्यर्थः शालेयैः धान्यविशेषसङ्घैः शालिक्षेत्रैः वा अलङ्कृतः परिशोभितः।

(१४०) पाकेति। पाकेन विशरारूणां स्फुरतां राजमाषाणां तदाख्यकलायविशेषाणां निकरैः सङ्घैः किर्मीरितानि शबलानि तैः।

(१४१) स्फुटितेति। स्फुटितानां पक्वानां मुद्गफलानां तदाख्यकलायभेदानां कोशीभिः शिम्बिकाभिः कपिशितानि पिङ्गलानि तैः। गोधूमधामभिः गोधूमशालिभिः इत्यर्थः स्थलीपृष्ठैः अकृत्रिमभूतलैः अधिष्ठितः समन्वितः।

(१४२) महिषेति। महिषाणां पृष्ठेषु प्रतिष्ठिताः स्थापिताः गायन्तः गोपालाः तैः पालितानि रक्षितानि तैः।

(१४३) कीटपटललम्पटचटकानुद्रुतैः (१४४) अवटु-घटितघण्टाघटीरटितरमणीयैः अटद्भिः अटवीं (१४५) हरवृषभपीतम् आमयशङ्कया बहुविभक्तं क्षीरोदमिव क्षीरं क्षरद्भिः (१४६) वाष्पच्छेद्यलूनलूनैः गोधनैः धवलितविपिनः (१४७) विविधमखहोमधूमान्धशतमन्यु-मुक्तैः लोचनैरिव सहस्रसङ्ख्यैः कृष्णशारैः शारीकृतोद्देशः (१४८) धवलधूलीमुचां केतकीवनानां रजोभिः पाण्डु-रीकृतैः प्रमथोद्धूलनधूसरैः शिवपुरस्येव प्रवेशैः प्रदेशैः

---

(१४३) कीटेति। कीटानां क्षुद्रप्राणिभेदानां पटलेषु वृन्देषु गोधनानाम् अङ्गलग्नेषु इति भावः लम्पटा लुब्धा ये चटकाः क्षुद्रपक्षिभेदाः तैः अनुद्रुतानि अनुगतानि तैः।

(१४४) अवट्विति। अवटुः ग्रीवापश्चाद्भागः तत्र घटिता योजिता या घण्टाघटी घण्टारूपः क्षुद्रघटः तस्या रटितेन निनादेन रमणीयानि चारूणि मनोज्ञानि इत्यर्थः तैः। अटद्भिः चरद्भिः।

(१४५) हरेति। हरस्य शिवस्य वृषभेण पीतम् आमयशङ्कया अजीर्ण-रोगसम्भावनया बहुतरदुग्धपानेन अजीर्णं सम्भवति इति भावः। क्षीरोदमिव क्षीरसागरं समग्रमिव बहुविभक्तं बहुधा उद्गीर्णम् इति यावत्।

(१४६) वाष्पेति। वाष्पेण लोहनिर्मितेन अस्त्रविशेषेण काक्षिया इति भाषा-प्रसिद्धेन छेद्यानि तृणानि तैः लूनानि सन्तुष्टानि तैः। गोधनैः गाव एव धनानि तैः। धवलितानि श्वेतीकृतानि विपिनानि वनानि यस्य तथोक्तः।

(१४७) विविधेति। विविधानां बहुप्रकाराणां मखानां यज्ञानां होम-धूमैः अन्धानि दर्शनव्यापाररहितानि अतएव शतमन्युना इन्द्रेण मखाहृतेन इति भावः मुक्तानि परित्यक्तानि तैः लोचनैः नयनैरिव सहस्रसङ्ख्यकैः इति भावः कृष्णशारैः शबलवर्णचित्रितैः मृगैः शारीकृतोद्देशः चित्रितप्रदेशः।

(१४८) धवलधूलीमुचां श्वेतरजोमुचां केतकीवनानां रजोभिः परागैः पाण्डुरीकृतैः पाण्डुतां नीतैः। प्रमथानां शिवपारिषदां भूतवर्गाणाम् उद्धूलनेन

उपशोभितः (१४९) शाककन्दलश्यामलितग्रामोपकण्ठ-काश्यपीपृष्ठः पदे पदे करभपालीभिः पीलुपल्लवप्रस्फोटितैः (१५०) करपुटपीड़ितमातुलुङ्गीदलरसोपलिप्तैः (१५१) स्वेच्छाविचितकुङ्कुमकेसरकृतपुष्पप्रकरैः (१५२) प्रत्यग्र-फलरसपानसुखसुप्तपथिकैः (१५३) वनदेवतादीयमाना-नामृतरसप्रपागृहैरिव द्राक्षामण्डपैः स्फुरत्फलानाञ्च (१५४) बीजलग्नशुकचञ्चुरागाणामिव (१५५) समा-

---

लुण्ठनेन धूसराः उद्धृतरजसः तैः। शिवपुरस्येव शिवालयस्येव प्रविश्यते एभिरिति प्रवेशाः मार्गाः तैः।

(१४९) शाकेति। शाकानां कन्दलेन अभिनवेन अङ्कुरेण श्यामलिता ग्रामाणाम् उपकण्ठाः प्रान्तभागा यस्य तथोक्तं काश्यपीपृष्ठं भूतलं यस्य तथाभूतः। करभपालीभिः करभा उष्ट्रशिशवः तेषां पाल्यः वृन्दानि ताभिः। पीलुपल्लवेन पीलूनां पल्लवाः किसलयाः करभभक्ष्या इति भावः तैः प्रस्फोटितैः शोभितैः।

(१५०) करपुटेति। करपुटैः पीड़ितानां मर्दितानाम् इत्यर्थः। मातु-लुङ्गीदलानां मातुलङ्गी नाम वृक्षभेदः तस्या दलानि पल्लवाः तेषां रसैः द्रवैः उपलिप्तानि प्रलिप्तानि तैः।

(१५१) स्वेच्छेति। स्वेच्छया विचिताः उच्चिताः कुङ्कुमानां केसराः किञ्जल्काः तैः कृतः रचितः पुष्पाणां प्रकरः माल्यं येषु तथोक्तैः।

(१५२) प्रत्यग्रेति। प्रत्यग्राणि अभिनवानि फलानि तेषां रसपानेन सुख-सुप्ताः पथिकाः अध्वगाः येषु तथोक्तैः।

(१५३) वनेति। वनदेवताभिः दीयमानानि अमृतरसानां प्रपागृहाणि पानीयशालाः तैरिव। द्राक्षामण्डपैः द्राक्षालतानिवहैः स्फुरन्ति विकसन्ति फलानि यासां तासाम्।

(१५४) बीजेति। बीजेषु लग्नाः संसक्ता शुकानां सदाख्यपक्षिभेदानां चञ्चुरागाः चञ्चुलौहित्यानि येषां तथाभूतानामिव।

(१५५) समारूढेति। समारूढानां कपिकुलानां वानरवृन्दानां कपोलैः

रूढ़कपिकुलकपोलसन्दिह्यमानकुसुमानां दाड़िमीनां वनैः विलोभनीयोपनिर्गमः (१५६) वनपालपीयमाननारिकेलरसासवैश्च (१५७) पथिकलोकलुप्यमानपिण्डखर्जूरैः (१५८) गोलाङ्गूललिह्यमानमधुरामोदपिण्डीरसैः (१५९) चकोरचञ्चुजर्जरितारुकैः उपवनैः अभिरामः (१६०) तुङ्गार्जुनपालीपरिवृतैश्च (१६१) गोकुलावतारकलुषितकूलकोलालैः अध्वगशतशरण्यैः अरण्यधराबन्धैः अवन्ध्यवनरन्ध्रः (१६२) कारभीयकुमारकपाल्यमानैः

---

गण्डदेशैः सन्दिह्यमानानि संशय्यमानानि सदृशानीति भावः कुसुमानि यासां तथोक्तानाम्। विलोभनीयोपनिर्गमः विलोभनीया विशेषेण प्रदर्शनीया उपनिर्गमा निर्गमनमार्गो यस्य तथाभूतः।

(१५६) वनेति। वनपालैः वनरक्षिभिः पीयमाना आस्वाद्यमाना नारिकेलानां रसा जलान्येव आसवा मद्यानि येषु तथोक्तैः।

(१५७) पथिकेति। पथिकलोकैः पान्थनिवहैः लुप्यमानानि भक्ष्यमाणानि पिण्डखर्जूराणि येभ्यः तथोक्तैः।

(१५८) गोलाङ्गूलेति। गोलाङ्गूलैः कपिभेदैः लिह्यमानः आस्वाद्यमानः मधुरः मनोहरः आमोदपिण्डीरसः सुरभिपिण्डीखर्जूरविशेषरसः येषु तैः।

(१५९) चकोरेति। चकोराणां पक्षिभेदानां चञ्चुभिः जर्जरितानि आरुकाणि आरुकाख्यवृक्षफलानि इत्यर्थः येषु तथोक्तैः उपवनैः उद्यानैः अभिरामः मनोहरः।

(१६०) तुङ्गेति। तुङ्गाभिः उन्नताभिः अर्जुनपालीभिः अर्जुनाख्यवृक्षश्रेणीभिः परिवृताः वेष्टिताः तैः।

(१६१) गोकुलेति। गोकुलानां गोवृन्दानाम् अवतारेण अवतरणेन कलुषितानि आविलीकृतानि कूलकीलालानि कूलस्थितजलानि येषां तैः। अध्वगशतशरण्यैः पथिकशतपरित्रायिभिः अरण्यधराबन्धैः वनजलाशयैः। अवन्ध्यानि फलवन्ति वनरन्ध्राणि वनाभ्यन्तरभागाः यस्य तथाभूतः।

औष्ट्रकैः औरभ्रैश्च कृतसम्बाधः दिशि दिशि (१६३) रविरथतुरगविलोभनायेव (१६४) विलोडनमृदितकुङ्कुमस्थलीरससमालब्धानाम् उद्घोणपुटैः उन्मुखैः (१६५) उदरशायिकिशोरकजवजननाय प्रभञ्जनमिव च आपिबन्तीनां वातहरिणीनामिव स्वच्छन्दचारिणीनां वडवानां वृन्दैः विचरद्भिः आचितः (१६६) अनवरतक्रतुधूमान्धकारप्रवृत्तैः हंसयूथैरिव वार्णैः (१६७) धवलितभुवनः सङ्गीतगतमुरजरवमत्तैः मयूरैरिव विभवैः मुखरितजीवलोकः

---

(१६२) करभीयेति। करभेभ्यः उष्ट्रशावकेभ्यः हिताः करभीयाः ये कुमाराः पशुपालशिशव इत्यर्थः तैः पाल्यमानाः रक्ष्यमाणाः तैः। औष्ट्रकैः उष्ट्राणां समूहाः तैः। औरभ्रैः मेषनिचयैः कृतसम्बाधः समाकीर्णः।

(१६३) रवीति। रवेः सूर्य्यस्य रथे ये तुरगा अश्वाः तेषां विलोभनम् अनुरागप्रकटनेन लोभप्रदर्शनं तस्मै इव।

(१६४) विलोडनेति। विलोडनेन दलनेन मृदिता मर्दनं नीता या कुङ्कुमस्थली कुङ्कुमोत्पत्तिभूमिः तस्या रसेन द्रवेण समालब्धाः अनुलिप्ताः तासाम्। उद्धतानि घोणपुटानि नासापुटानि येषां तादृशानि तैः। उन्मुखैः ऊर्द्धमुखैः।

(१६५) उदरशायीति। उदरशायिनां गर्भस्थितानां किशोरकाणां शावकानां जवजननाय वेगवर्द्धनाय इत्यर्थः प्रभञ्जनमिव वायुमिव। आपिबन्तीनां भक्षयन्तीनां वातहरिणीनामिव वातमृगीणामिव स्वच्छन्दचारिणीनां स्वेच्छया चरन्तीनां वडवानाम् अश्वानाम्। आचितः आकीर्णः।

(१६६) अनवरतेति। अनवरताः अविरताः क्रतूनां यज्ञानाम् धूमा एव अन्धकाराः तेषु प्रवृत्ताः जाताः तैः वार्णैः तृणविशेषैः।

(१६७) धवलितेति। धवलिता श्वेतीकृता भुवनानि भवनानि येन सः तथोक्तः। भवनेति पाठे भवनानि गृहाणि इत्यर्थः। सङ्गीतेषु गतानां स्थितानां मुरजानां मृदङ्गानां रवेण नादेन मत्ता मादकजनकाः उल्लासितास्तैः। विभवैः सम्पद्भिः। मुखरितः सततव्यापृत इति भावः नादितश्च जीवलोकः प्राणिवर्गः

शशिकरावदातवृत्तैः मुक्ताफलैरिव गुणिभिः प्रसाधितः (१६८) पथिकशतविलुप्यमानस्फीतफलैः महातरुभिरिव सर्वातिथिभिः अभिगमनीयः (१६९) मृगमदपरिमलवाहिमृगरोमाच्छादितैः हिमवत् पादैरिव महत्तरैः स्थिरीकृतः (१७०) प्रोद्दण्डसहस्रपत्रोपविष्टद्विजोत्तमैः नारायणनाभिमण्डलैः इव तोयाशयैः मण्डितः (१७१) मथितपयःप्रवाहप्रक्षालितक्षितिभिः क्षीरोदमथनारम्भैरिव महाघोषैः पूरिताशः श्रीकण्ठो नाम जनपदः।

---

अवकाशश्च यस्य तथोक्तः। शशिकरेति। शशिनः चन्द्रस्य कराः किरणाः तद्वत् अवदातानि विशदानि निर्मलानि इति यावत् वृत्तानि चरितानि येषाम् अन्यच्च शशिकरवत् अवदातानि स्वच्छानि वृत्तानि वर्त्तुलानि तैः। गुणिभिः विद्याविनयशालिभिः सूत्रवद्भिश्च। प्रसाधितः अलङ्कृतः।

(१६८) पथिकेति। पथिकानाम् अध्वगानां शतैः विलुप्यमानानि गृह्यमाणानि स्फीतानि प्रभूतानि फलानि येषां तैः अन्यत्र पथिकशतैः पान्थैः तस्करशतैः इत्यर्थः विलुप्यमानानि चौर्य्यमाणानि स्फीतानि फलानि धनानि येषां तथाभूतैः अभिगमनीयः आश्रयणीयः।

(१६९) मृगेति। मृगमदस्य कस्तूरिकायाः परिमलवाहिभिः सौरभशालिभिः मृगरोमभिः कस्तूरीमृगरोमनिर्मितैः वसनैः इति यावत् आच्छादितैः कृतगात्रावरणैः अन्यच्च तथाविधमृगरोमावृतैः हिमवत्पादैरिव हिमाद्रेः प्रत्यन्तपर्वतैरिव महत्तरैः अतिमहद्भिः लोकैः स्थिरीकृतः आवासितः।

(१७०) प्रोद्दण्डेति। प्रकर्षेण उन्नता दण्डा नाला येषां तानि सहस्रपत्राणि कमलानि तेषु उपविष्टा द्विजोत्तमा उत्कृष्टाः पक्षिणः ब्राह्मणाश्च येषु तथाभूतैः तोयाशयैः जलाशयैः सरोभिरित्यर्थः मण्डितः सुशोभितः।

(१७१) मथितेति। मथितेन विलोड़ितेन पयसां दुग्धानां प्रवाहेण निवहेन स्रोतसा च प्रक्षालिता धौता क्षितिः भूभागो यैः तथोक्तैः महाघोष

(१७२) यत्र त्रेताग्निधूमाश्रुपातजलक्षालिता इव अक्षीयन्त कुदृष्टयः। (१७३) पच्यमानचयनेष्टकादहन-दग्धानीव न अदृश्यन्त दुरितानि। (१७४) क्रियमाण-यूपदारुपरशुपाटित इव व्यदीर्य्यत अधर्म्मः। (१७५) मख-शिखिधूमजलधरधाराधौत इव ननाश वर्णसङ्करः। (१७६) दीयमानानेकगोसहस्रशृङ्गखण्ड्यमान इव अपलायत कलिः। (१७७) सुरालयशिलाघट्टनटङ्क-

---

महद्भिः घोषैः गोपपल्लीभिः घोष आभीरपल्ली स्यात् इति अमरः महारावैश्च पूरिता आशा दिशः आकाङ्क्षा च यत्र तथोक्तः।

(१७२) यत्रेत्यादि। त्रेता दक्षिणाग्निः गार्हपत्यो हवनीयः त्रयोऽग्नयः। अग्नित्रयमिदं त्रेतेत्युक्तत्रिविधः अग्निः त्रेताग्निः तस्य धूमेन योऽश्रुपातः पतितम् अश्रु इत्यर्थः स एव जलं तेन क्षालिता इव धौता इव शमिता इव इति भावः कुदृष्टयः कुत्सिता दृष्टयः ज्ञानानि दृष्टिदोषाश्च अक्षीयन्त क्षयम् अगच्छन्।

(१७३) पच्यमानेति। पच्यमानं दह्यमानं चयनं चित्या पाँजेति भाषा यासां तथाभूतानाम् इष्टकानां दह्यमानानामिति भावः दहनेन सन्तापेन दग्धानि इव भस्मीकृतानि इव दुरितानि पापानि। एतेन बहुलेष्टकानिर्मितहर्म्यवासि-विलासिसद्भावेऽपि न पापे प्रवृत्तिरिति भावः।

(१७४) क्रियमाणेति। क्रियमाणानि कर्त्यमानानि यूपाय दारुखण्डैः तथाभूतैः परशुभिः कुठारैः पाटित इव कर्त्तित इव। अधर्मः पापं व्यदीर्य्यत विदीर्णम् अभूत्।

(१७५) मखेति। मखानां यज्ञानां शिखिनः अग्नयः तेषां धूमाः तैः ये जलधरा मेघा उत्पन्ना इति भावः उक्तञ्च महाकविना कालिदासेन धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघा इति तेषां धाराभिः वृष्टिभिः धौत इव क्षालित इव। वर्णसङ्करः वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां सङ्करः प्रातिलोम्येन सन्तानोत्-पादनम्।

(१७६) दीयमानेति। दीयमानानाम् अनेकेषां प्रभूतानां गोसहस्राणां खण्ड्यमान इव ताड्यमान इव कलिः चतुर्थं युगम्।

निकरनिकृत्ता इव व्यदीर्य्यन्त विपदः । (१७८) महादानविधानकलकलाभिद्रुता इव प्राद्रवन् उपद्रवाः । (१७९) दीप्यमानसत्रमहानससहस्रसन्तापिता इव व्यलीयन्त व्याधयः । (१८०) वृषविवाहप्रहतपुष्पपटहपटुरवत्रासिता इव न उपासर्पन् अपमृत्यवः (१८१) सन्ततब्रह्मघोषबधिरीकृता इव अपजग्मुः ईतयः ।

---

(१७७) सुरेति । सुरालयेषु देवमन्दिरेषु याः शिलाः प्रस्तराः तासां घट्टने घीजने ये टङ्कनिकराः पाषाणदारणास्त्रनिवहाः तैः निकृत्ता इव खण्डिता इव व्यदीर्य्यन्त अखण्ड्यन्त ।

(१७८) महादानेति । महादानानां भूम्यादिदानानामित्यर्थः विधाने अनुष्ठाने यः कलकलः कोलाहलः तेन अभिद्रुता इव ताड़िता इव । उपद्रवा अनिष्टपाताः प्राद्रवन् अपलायन्त । दानेन च महाद्युपद्रवशान्तिः भवति इति भावः ।

(१७९) दीप्यमानेति । दीप्यमानानां राजमानानां सत्राणां दाननिकेतनानां महानसानां रन्धनशालानां सहस्रैः प्राचुर्य्यैः इति यावत् । सन्तापिता इव अभिभूता इव व्याधयः रोगाः ।

(१८०) वृषेति । वृषस्य विवाहः वृषोत्सर्गः यत्र चतसृभिः वत्सतरीभिः समुत्सृष्टो वृषः स्वैरविहारी भवति तत्र प्रहतस्य वादितस्य पुष्पपटहस्य धर्मानकस्य पटुना तारेण रवेण नादेन त्रासिता इव भीषिता इव न उपासर्पन् नापतन् । केचित्तु वृषोऽत्र नीलवृषः लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते इत्युक्तलक्षणः तस्य विवाहः तदुत्सर्ग इत्यर्थः । तादृश वृषोत्सर्गस्य अपमृत्युनिवारकत्वम् अपि इति आचक्षते ।

(१८१) सन्ततेति । सन्ततेन अविरतेन ब्रह्मघोषेण वेदध्वनिना बधिरीकृता इव श्रवणशक्तिरहिता इव ईतयः शस्योपघातकाः अतिवृष्टिः अनावृष्टिः शलभा मूषकाः खगाः । प्रत्यासन्नाश्च राजानः षडेत ईतयः स्मृता इति उक्ताः षट् । ब्रह्मघोषेणासां तथा बधिरत्वं जायते यथा शस्योत्पत्तिकथाम् अपि न श्रोतुं शक्नुवन्तीति भावः ।

(१८२) धर्माधिकारपरिभूतमिव न प्राभवत् दुर्दैवम्।

तत्र चैवंविधे (१८३) नानारामाभिरामकुसुमगन्धपरिमलसुभगो यौवनारम्भ इव भुवनस्य कुङ्कुममलनपिञ्जरितबहुमहिषीसहस्रशोभितोऽन्तःपुरनिवेश इव धर्मस्य (१८४) मरुदुद्धूयमानचमरीबालव्यजनधवलितप्रान्तः एकदेश इव सुरराज्यस्य (१८५) ज्वलन्मखशिखिसहस्रदीप्यमानदशदिगन्तः शिविरसन्निवेश इव कृतयुगस्य (१८६) पद्मासनस्थितब्रह्मर्षिध्यानाधीयमानसकलाकुशलप्रशमः प्रथमोऽवतार इव ब्रह्मलोकस्य (१८७) कलकल-

---

(१८२) धर्मेति। धर्माधिकारः धर्मविचारालयः तेन परिभूतम् इव निराकृतम् इव। दुर्दैवस्य विपद्धेतुत्वेऽपि धर्मविचारेण लोकानां तदपगमादिति भावः।

(१८३) तत्र जनपदे। नानेति। नानारामाणां बहूनाम् उद्यानानां कुसुमानि नानारामा बह्वो महिलाः कुसुमानि इव तेषां गन्धस्य परिमलः आमोदः तेन सुभगः रम्यः। कुङ्कुमेति कुङ्कुमानां मलनेन अनुलेपनेन पिञ्जरिता रञ्जिता इत्यर्थः बहव महिष्यः राजभार्य्याः उत्तमा महिलाश्च तासां सहस्रेण शोभितः अलङ्कृतः।

(१८४) मरुदिति। मरुतो वायवः देवाश्च मरुतौ पवनामराविल्यमरः। तैः उद्धूयमानाः सञ्चाल्यमानाः चमरीणां बालाः पुच्छलोमान्येव व्यजनानि तैः धवलिताः श्वेतीकृताः प्रान्ताः पर्य्यन्तभागा यस्य तथोक्तः।

(१८५) ज्वलदिति। ज्वलतां मखशिखिनां यज्ञाग्नीनां सहस्रैः दीप्यमाना दशानां दिशामन्ता यस्य तथाभूतः शिविरसन्निवेश इव कटकबन्ध इव कृतयुगस्य सत्ययुगस्य।

(१८६) पद्मेति। पद्मासनेषु स्थिताः ये ब्रह्मर्षयः पद्मम् एव आसनं पद्मासनं तत्र स्थितो यद्वा ब्रह्मा एव ऋषिः यद्वा ब्रह्मा च ऋषयश्च ते ध्यानेन समाधिना आधीयमानः क्रियमाणः सकलानाम् अकुशलानाम् अमङ्गलानां प्रशमः शान्तिः यस्मिन् तथाभूतः।

मुखरमहावाहिनीशतसङ्कुलो विक्षेप इव उत्तरकुरूणाम् (१८८) ईश्वरमार्गणसन्तापानभिज्ञसकलजनो विजिगीषुरिव त्रिपुरस्य (१८९) सुधारससिक्तधवलगृहपङ्क्तिपाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य (१९०) मधुमत्तमत्तकाशिनीभूषणरवभरितभुवनो नामाभिहार इव कुबेरनगरस्य स्थाण्वीश्वराख्यो जनविशेषः।

(१९१) यः तपोवनमिति मुनिभिः कामायतनमिति वेश्याभिः सङ्गीतशालेति लासकैः यमनगरमिति शत्रुभिः (१९२) चिन्तामणिभूमिरिति अर्थिभिः वीरक्षेत्रमिति

---

(१८७) कलकलेति। कलकलैः शब्दविशेषैः मुखराः नदन्त्यः महत्यः वाहिन्यः नद्यः सेनाश्च तासां शतेन सङ्कुलः आकीर्णः उत्तरकुरूणाम् उत्तराः कुरवः मेरुसन्निहितदेशवासिनः तेषां विक्षेप इव कृदभिहितो भाववद्द्रव्यवत् प्रकाशते इति न्यायेन विक्षिप्तोत्तरकुरुप्रदेश इवेत्यर्थः।

(१८८) ईश्वरेति। ईश्वरस्य हरस्य राज्ञश्च मार्गणैः शरैः वङ्कुधा कलनार्थादानैश्च यः सन्तापः क्लेशः तस्य अनभिज्ञाः सकला जना यस्मिन् तथाभूतः त्रिपुरस्य तिसृणां पुरां समाहारः त्रिपुरं मयदानवनिर्मितम् अन्तरीक्षस्थितं पुरत्रयमित्यर्थः तस्य। पुरा ईश्वरेण सर्वौगणं त्रिपुरमस्त्रज्वालया दग्धमिति पुराणम्।

(१८९) सुधेति। सुधारसैः चूर्णद्रवैः अमृतैश्च सिक्तानां लिप्तानां धवलगृहाणां पङ्क्तिभिः राजिभिः पाण्डुरः धवलः। प्रतिनिधिरिव प्रतिकृतिरिव।

(१९०) मध्विति। मधुमदेन मद्यपानजनितेनोल्लासेन मत्ता या मत्तकाशिन्यः उत्तमाङ्गनाः यक्षिण्यश्च तासां भूषणरवैः अलङ्कारनिनदैः भरितम् आपूरितं भुवनं येन तथाभूतः नामाभिहार इव पर्य्यायान्तरमिव। स्थाण्वीश्वराख्यः स्थाण्वीश्वरस्य आख्या यत्र तथाभूतः।

(१९१) य इत्यादि। तपोवनं निरन्तरधर्मानुशीलनादिति भावः। कामायतनं विलासप्राचुर्य्यादिति भावः सङ्गीतशाला गान्धर्वविद्यानुशीलनाविश्रयादिति भावः। लासकैः नटैः। यमनगरं भयजनकत्वादिति भावः।

शस्त्रोपजीविभिः गुरुकुलमिति विद्यार्थिभिः (१९३) गन्धर्वनगरमिति गायनैः विश्वकर्म्ममन्दिरमिति विज्ञानिभिः लाभभूमिरिति (१९४) वैदेहकैः द्यूतस्थानमिति भागार्थिभिः साधुसमागम इति सद्भिः (१९५) वज्रपञ्जरमिति शरणागतैः विटगोष्ठीति विदग्धैः सुकृतपरिणाम इति पथिकैः (१९६) असुरविवरमिति वातिकैः शाक्याश्रम इति श्रमिभिः (१९७) अप्सरःपुरमिति कामिभिः महोत्सवसमाज इति चारणैः वसुधारेति विप्रैः अगद्यत।

---

(१९२) चिन्तामणिभूमिः वाञ्छितार्थप्राप्तिक्षेत्रम् अनवरतदानधर्मप्रचारात् इति भावः। वीरक्षेत्रं वीरोत्पत्तिभूमिरित्यर्थः साहसिपुरुषभूयस्त्वात् इति भावः गुरुकुलम् आचार्य्यगृहं सततविद्यार्चनात् इति भावः।

(१९३) गन्धर्वनगरं सततसङ्गीतप्रचारादिति भावः गायनैः गायकैः। विश्वकर्ममन्दिरं शिल्पविद्याप्राचुर्य्यात् इति भावः लाभभूमिः उपार्जनस्थानं बहुविधवस्तूनां व्यवहारात् इति भावः।

(१९४) वैदेहकैः वणिग्भिः। द्यूतस्थानं द्यूतं देवनं क्रीड़ेति यावत् तस्य स्थानं भागार्थिभिः भागः सौभाग्यं तदर्थिभिः तदभिलाषिभिः सौभाग्यशालिभिः सततं देववत् सुखेन दीव्यते इति भावः वन्दिभिरिति पाठान्तरम्।

(१९५) वज्रपञ्जरं वज्रनिर्मितं पञ्जरं तत्र स्थितानां शत्रुदुर्धर्षत्वादिति भावः विटगोष्ठी विलासिसमाजः विदग्धैः विलासिभिः। सुकृतपरिणामः पुण्यपरिणतिः सुखेन स्थानलाभादिति भावः।

(१९६) असुरविवरं पातालं वातिकैः वायुरोगिभिः। शाक्याश्रमः बौद्धसन्यासिमठः श्रमिभिः जैनैः बौद्धधर्माणामपि प्रचारादिति भावः।

(१९७) अप्सरःपुरम् अप्सरसां नगरं विलासप्राचुर्य्यादिति भावः चारणैः कुशीलवैः चारणास्तु कुशीलवा इत्यमरः वसुधारा धनप्रवाहः सर्वतो[illegible]ला-ङ्कारः।

(१९८) यत्र च मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च (१९९) श्यामाः पद्मरागिण्यश्च (२००) धवलद्विजशुचिवदना: मदिरामोदिश्वसनाश्च (२०१) चन्द्रकान्तवपुषः शिरीषकोमलाङ्ग्यश्च (२०२) अभुजङ्गगम्याः कञ्चुकिन्यश्च (२०३) पृथुकलत्रश्रियः दरिद्रमध्यकलिताश्च

---

(१९८) यचेत्यादि। मातङ्गगामिन्यः चाण्डालगामिन्य अथ च शीलवत्यः सुशीला इति विरोधः गजगामिन्य इति तत्परिहारः एवम् उत्तरत्र। गौर्यः पार्वत्यः अथ च विभवरताः विगतं भवे हरे रत रागो यासां ता इति विरोधः गौराङ्ग्यः विभवेषु सम्पत्सु रता इति परिहारः।

(१९९) श्यामाः रजन्यः अथ च पद्मरागिण्यः पद्मेषु रागो विद्यते यासां ताः पद्मविकासिन्य इति यावत् न एतत् सम्भवति इति विरोधः श्यामलाङ्ग्यः यद्वा शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। तप्तकाञ्चनवर्णाभा सा श्यामा परिगीयते इत्युक्तलक्षणा नार्यः। पद्मरागिण्यः पद्मरागरत्नालङ्कृता इति परिहारः।

(२००) धवलेति। धवलानि विशदानि द्विजस्येव शुचीनि पवित्राणि वदनानि यासां ताः अथ च। मदिरेति। मदिरया सुरया तत्पानेन इत्यर्थः आमोदिनः सौरभवन्तः श्वसना निश्वासमरुतः यासां तथोक्ताः मद्यपाने कथं मुखस्य पवित्रतेति विरोधः धवलैः स्वच्छैः द्विजैः दन्तैः शुचीनि उज्ज्वलानि वदनानि यासां ता इति परिहारः।

(२०१) चन्द्रकान्तेति। चन्द्रकान्तो मणिविशेषः तद्वत् वपुः शरीरं यासां ताः अथ च शिरीषकोमलाङ्ग्यः शिरीषपुष्पवत् कोमलं सुकुमारम् अङ्गं यासां ताः चन्द्रकान्तस्य प्रस्तरविशेषत्वेन काठिन्यात् शिरीषकोमलत्वे विरोधः चन्द्रवत् कान्तं रमणीयं वपुर्यासामिति तत्परिहारः।

(२०२) अभुजङ्गेति। भुजङ्गैः सर्पैः न गम्याः अभुजङ्गगम्याः अथ च कञ्चुकिन्यः भुजङ्ग्य इति विरोधः भुजङ्गैः विटैः भुजङ्गो विटसर्पयोरित्यमरः न गम्याः कञ्चुकिन्यः कञ्चुकं स्त्रीणां स्तनावरणभूतवस्त्रविशेषः तद्वत्य इति परिहारः।

(२०३) पृथ्विति। पृथुः आदिराजो वेणतनयः तस्य कलत्राणां महिषीणां

(२०४) लावण्यवत्यो मधुरभाषिण्यश्च (२०५) अप्रमत्ताः प्रसन्नोज्ज्वलरागाश्च (२०६) अकौतुकाः प्रौढ़ाश्च प्रमदाः।

(२०७) यत्र च प्रमदानां चक्षुरेव सहजं (२०८) मुण्डमालामण्डनं (२०९) भारः कुवलयदलदामानि। (२१०) अलकप्रतिबिम्बान्येव कपोलतलगतानि अक्लिष्टाः श्रवणावतंसाः पुनरुक्तानि तमालकिशलयानि (२११) प्रियजनकथा

---

श्रिय: इव सम्पदः इव श्रियो यासां ताः अथ च दरिद्रमध्यकलिताः दरिद्राणां निर्धनानां मध्ये कलिताः संख्याताः गणिता इत्यर्थः तदसम्भवाद् विरोधः पृथ्वी महती कलत्रस्य जघनस्य श्रीर्यासां ताः। दरिद्रं क्षीणं मध्यः कटिदेशः तेन कलिताः शोभिता इति यावत् इति परिहारः।

(२०४) लावण्यवत्यः लवणरसशालिन्यः अथ च मधुरभाषिण्यः मधुरा इति भाषा उक्तिः विद्यते यासां ताः लवणसवीनामपां मधुरत्वोक्ति नः सम्भाव्यते इति विरोधः। लावण्यवत्यः मुक्ताफलेषु छायायाः तरलत्वम् इवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिह स्मृतमित्युक्तसौन्दर्यविशेषवत्य इत्यर्थः। मधुरभाषिण्यः मधुरालापिन्य इति परिहारः।

(२०५) अप्रमत्ताः प्रमादशून्याः प्रसन्नः सौम्यः उज्ज्वलः रागो वर्णो यासां ताः प्रसन्ना सुरा तया उज्ज्वलरागाः अथ च अप्रमत्ता अक्षीवा इति विरोधः।

(२०६) अकौतुकाः कौतुकं हस्तसूत्रं तद्रहिताः विवाहकालपरिहितस्य कौतुकस्य समनन्तरमेव मुक्तत्वादिति भावः प्रौढ़ाः पूर्णयौवना इत्यर्थः कौतुकम् औत्सुक्यं कान्तदौर्लभ्यादिति भावः तद्रहिताः स्वाधीनभर्तृकत्वादिति भावः।

(२०७) यत्रेत्यादि। सहजम् अकृत्रिमम्।

(२०८) मुण्डमाला नीलोत्पलमाला एव मण्डनं मुण्डमालामण्डनम्।

(२०९) कुवलयदलदामानि नीलोत्पलपत्रमालिका भारः बाह्यवस्तुमात्रम् इत्यर्थः चक्षुषामेव स्त्रीणां नीलोत्पलरूपत्वादिति भावः।

(२१०) अलकेति। अलकानां चूर्णकुन्तलानां प्रतिबिम्बानि छाया एव अक्लिष्टा हस्तावमर्षजनिताक्लिष्टताशून्या इत्यर्थः श्रवणावतंसाः श्रोत्रभूषणानि। पुनरुक्तानि निरर्थकानि इति भावः।

एव सुभगा: कर्णालङ्कारा: आड़म्बर: कुण्डलादि:। कपोला एव सततम् आलोककारका: विभवो निशासु मणि-प्रदीपा:। (२१२) निश्वासाकृष्टमधुकरकुलान्येव रम-णीयं मुखावरणं कुलस्त्रीजनाचारो जालिका। वाणी एव मधुरा वीणा बाह्यविज्ञानं तन्त्रीताड़नम्। हासा एव अतिशयसुरभय: (२१३) पटवासा: निरर्थका: कर्पूरपांशव:। अधरकान्तिविसर एवोज्ज्वलतरोऽङ्गराग: (२१४) निर्गुणो लावण्यकलङ्क: कुङ्कुमपङ्क:। बाहव एव कोमलतमा: परिहासप्रहारवेत्रलता: निष्प्रयोजनानि मृणालानि। (२१५) यौवनोष्मस्वेदबिन्दव एव विदग्धा: कुचालङ्कृतय: हारास्तु भारा: श्रोण्य एव (२१६) विशालस्फाटिकशिला-

---

(२११) प्रियजनकथा: कान्तसम्बन्धालापा: सुभगा: श्रुतिसुखा: आड़म्बर: आधिक्यम् इत्यर्थ:। आलोककारका: स्फटिकवत् स्वच्छत्वात् इति भाव:। विभव: ऐश्वर्यं सम्पदिति यावत्।

(२१२) नि:श्वासेति। नि:श्वासेन अतिसुरभिण इति भाव: आकृष्टानां मधुकराणां भ्रमराणां कमलधिया पतताभिति भाव: कुलानि सङ्घा:। मुखावरणं वदनाच्छादनं जालिका अवगुण्ठनवसनम्। बाह्यविज्ञानं बहिर्गतं विज्ञानं विशेषेण वादित्रवादनबोध:।

(२१३) पटवासा: सुगन्धचूर्णविशेषा: निरर्थका: निष्प्रयोजना:। अधर-कान्तिविसर: अधरस्य लावण्यविस्तार:।

(२१४) निर्गुण: निष्फल: लावण्यकलङ्क: लावण्यस्य मालिन्यापादक इत्यर्थ: कुङ्कुमपङ्क: कुङ्कुमद्रव:। कोमलतमा: अतिकोमला:।

(२१५) यौवनेति। यौवनेन तारुण्येन य उष्मा उष्मता ते स्वेदबिन्दव: घर्मजलकणा:। विदग्धा: मनोज्ञा:। श्रोण्य: नितम्बा:।

(२१६) विशालेति। विशालं बृहत् यत् स्फाटिकशिलातलं तद्वत् चतुरस्रा

तलचतुरस्रा रागिणां विश्रामकारणम् अनिमित्तं भवनमणिवेदिकाः । ( २१७ ) कमललोभनिलीनानि अलिकुलानि एव मुखराणि पदाभरणकानि निष्फलानि इन्द्रनीलनूपुराणि । नूपुररवाहृता भवनकलहंसा एव समुचिताः सञ्चरणसहायाः ऐश्वर्य्यप्रपञ्चाः परिजनाः ।

तत्र च साक्षात् सहस्राक्ष इव ( २१८ ) सर्ववर्णधरं धनुर्दधानो मेरुमय इव कल्याणप्रकृतित्वे ( २१९ ) मन्दरमय इव लक्ष्मीसमाकर्षणे जलनिधिमय इव मर्य्यादायाम् आकाशमय इव ( २२० ) शब्दप्रादुर्भावे ( २२१ ) शशि-

---

चतुष्कोणा रागिणां विलासिनां विश्रामकारणं विश्रान्तिस्थानम् अनिमित्तम् अकारणम् ।

( २१७ ) कमलेति । कमललोभेन पदं कमलमिति धिया यो लोभः आसङ्गाभिलाषः तेन निलीनानि संलग्नानि मुखराणि निस्वनवन्ति । इन्द्रनीलनूपुराणि नीलकान्तमणिनिर्मितानि नूपुराणि । सञ्चरणसहायाः विचरणसङ्गिनः । ऐश्वर्य्यप्रपञ्चाः विभवविस्तारः ।

( २१८ ) सर्वेति । सर्वे वर्णा ब्राह्मणादयः शुक्लादयश्च तान् धरति पालयति इति तथोक्तं धनुः कार्मुकं दधानः धारयन् शक्रधनुः विविधवर्णरञ्जितं दृश्यते इति शाब्दी उत्प्रेक्षा । कल्याणप्रकृतित्वे कल्याणं मङ्गलं सुवर्णञ्च प्रकृतिः यस्य तथात्वे ।

( २१९ ) मन्दरमयः क्षीरोदमन्थने मन्दराचलस्य मन्थनदण्डरूपतया तेनैव तत्र स्थिताया लक्ष्म्याः समुद्धारणम् अस्यापि शत्रुराजलक्ष्मीसमाकर्षकत्वमिति भावः । मर्य्यादायाम् आचारे सीमायाञ्च जलनिधिः यथा असीमा तथा अयम् अविचलितसदाचार इति भावः ।

( २२० ) शब्दप्रादुर्भावे शब्दानां यशसां घटपटादिरूपाणाञ्च आकाशाद् यथा शब्दानां प्रादुर्भावः शब्दगुणमाकाशमिति श्रुतेः तथा अस्माद् यशसां समुद्भूतिः इति भावः ।

मय इव कलासंग्रहे वेदमय इव अकृत्रिमालापत्वे धरणि-मय इव (२२२) लोकधृतिकरणे पवनमय इव (२२३) सर्वपार्थिवरजोविकारहरणे गुरुर्वचसि पृथुः (२२४) उरसि विशालो मनसि जनकः तपसि (२२५) सुयात्रः तेजसि सुमन्त्रो रहसि (२२६) बुधः सदसि अर्जुनो यशसि भीष्मो धनुषि निषधो वपुषि शत्रुघ्नः समरे शूरः (२२७) शूर-सेनाक्रमणे दक्षः प्रजाकर्म्मणि सर्वादिराजतेजःपुञ्जनिर्म्मित इव राजा पुष्पभूतिरिति नाम्ना बभूव ।

---

(२२१) शशिमयः चन्द्रमयः कलासंग्रहे कलाश्चतुःषष्टिप्रकारा विद्याः रेखाश्च तासां संग्रहः तस्मिन् । अकृत्रिमालापत्वे अकृत्रिमः अकपटः सत्यमित्यर्थः आलापो वचनं यस्य तथात्वे वेदवाक्यमिव अस्य वाक्यं सत्यमिति भावः ।

(२२२) लोकधृतिकरणे लोकानां प्रजानां जगताञ्च धृतिः धैर्य्यं धारणञ्च तस्याः करणं सम्पादनं तस्मिन् ।

(२२३) सर्वेति । सर्वेषां पार्थिवानां राज्ञां रजोविकारस्य रजोगुण-विकृतेः दम्भाहङ्कारादेः इत्यर्थः अन्यत्र पार्थिवानां पृथिवीसम्बन्धिनां रजसां धूलीनां विकारस्य हरणे अपनयने । वचसि गुरुः महान् अतिसुवक्ता इति भावः बृहस्पतिश्च ।

(२२४) उरसि वक्षसि पृथुः विशालः आदिराजविशेषश्च । मनसि विशालः विस्तीर्णः उदारमना इत्यर्थः तदाख्यो राजा च । जनकः उत्पादकः तदाख्यो राजा च यथा, राजा जनकस्तपसि निरतः तथायम् इति भावः ।

(२२५) सुयात्रः शोभना यात्रा युद्धार्थप्रयाणं यस्य तथोक्तः तदाख्यो नृपश्च । सुमन्त्रः शोभनः मन्त्रः कर्त्तव्यावधारणवचनं यस्य तथोक्तः तदाख्यो दशरथमन्त्री च ।

(२२६) बुधः पण्डितः चतुर्थग्रहश्च सदसि सभायाम् । अर्जुनः धवलः कार्त्तवीर्य्यश्च यद्वा पार्थश्च । भीष्मः भयङ्करः शान्तनवश्च । निषधः कठिनः राज-विशेषश्च । शत्रुघ्नः शत्रुघाती रामानुजश्च । शूरः वीरः यदुवंशीयराजविशेषश्च ।

(२२७) शूरेति । शूराणां शौर्य्यशालिनीनां सेनानां शूरसेनस्य देशविशेषस्य

(२२८) पृथुना गौरियं कृतेति यः स्पर्द्धमान इव महीं महिषीं चकार। (२२९) निसर्गस्वैरिणी स्वरुच्यनुरोधिनी भवति हि महतां मतिः। यतः तस्य केनचित् अनुपदिष्टा सहजैव शैशवादारभ्य अन्यदेवताविमुखी भगवति भक्तिसुलभे भुवनभृति भूतभावने भवच्छिदि भवे भूयसी भक्तिः अभूत्। अकृतवृषभध्वजपूजाविधिः न स्वप्नेऽपि आहारम् अकरोत्। अजम् अजरम् अमरगुरुम् असुरपुररिपुम् अपरिमितगणपतिम् अचलदुहितृपतिम् अखिलभुवनकृतचरणनतिं पशुपतिं प्रपन्नोऽन्यदेवताशून्यम् अमन्यत त्रैलोक्यम्। भर्त्तृचित्तानुवर्त्तिन्यश्च अनुजीविनां प्रकृतयः। तथाहि गृहे गृहे भगवान् अपूज्यत खण्डपरशुः। ववुः अस्य (२३०) होमानलज्वालाविलीयमानबहलगुग्गुलुगन्धगर्भाः स्नपनक्षीरशीकरक्षोदक्षारिणः (२३१) विल्वपल्लव-

---

च आक्रमणं तस्मिन्। दक्षः निपुणः प्रजापतिभेदश्च प्रजाकर्म्मणि प्रजापालने सृष्टिव्यापारे च।

(२२८) पृथुनेत्यादि। इयं मही गौः गोरूपधरा इत्यर्थः कृतेति स्पर्द्धमान इव तं जिगीषन् इव इत्यर्थः महिषी कृताभिषेका महिषीति अमरोक्ता राज्ञः प्रधानपत्नी तां महिषस्त्रीरूपाञ्च।

(२२९) निसर्गस्वैरिणी स्वभावतः स्वेच्छाचारिणी स्वरुच्यनुरोधिनी अभिमतानुवर्त्तिनी। अनुपदिष्टा अशिक्षिता। भवच्छिदि संसारध्वंसिनि भवे हरे। अजं जन्मरहितम् अजरं जराशून्यम् अमरगुरुं देवदेवम्। प्रपन्नः आश्रितः। खण्डपरशुः शिवः। ववुः वहन्ति स्म।

(२३०) होमेति। होमानलज्वालायां होमकुण्डाग्निशिखायां विलीयमानानां द्रवतां बहलानां बहूनां गुग्गुलूनां गन्धो गर्भे येषां तथाभूताः स्नपनं स्नानोपकरणं यत् क्षीरं दुग्धं तस्य शीकरक्षोदान् कणचूर्णान् क्षरन्तीति तथोक्ताः।

दामदलोद्वाहिनः पुण्यालयेषु वायवः। (२३२) शिव-सपर्य्यासमुचितैः उपायनैः प्राभृतकैश्च पौराः पादोपजीविनः सचिवा भुजबलनिर्जिताश्च करदीकृता महासामन्ताः तं सिषेविरे। तथाहि (२३३) कैलासकूटधवलैः (२३४) कनकपत्रलतालङ्कृतविषाणकोटिभिः (२३५) महाप्रमाणैः सन्ध्यावलिवृषैः सौवर्णैश्च स्नपनकलसैः अर्घभाजनैश्च धूप-पात्रैश्च पुष्पपटैश्च (२३६) मणियष्टिप्रदीपैश्च ब्रह्मसूत्रैश्च महार्हमाणिक्यखण्डखचितैश्च मुखकोषैः परितोषम् अस्य मनसि चक्रुः। अन्तःपुराणि अपि स्वयम् (२३७) आरब्ध-बालेयतण्डुलकण्डनानि (२३८) देवगृहोपलेपनलोहित-

---

(२३१) विल्वेति। विल्वपल्लवानां दामानि माल्यानि तेषां दलानि निचयानि उद्वहन्तीति तथाविधाः। पुण्यालयेषु पुण्यस्थानेषु पूजास्थानेषु इति यावत्।

(२३२) शिवेति। शिवस्य सपर्य्या पूजा तत्समुचितानि तदुपयोगीनि इत्यर्थः तैः उपायनैः उपढौकनैः यानि स्वयमानीयन्ते प्रभुप्रीतिकराणि द्रव्याणि तैः इत्यर्थः प्राभृतकैः सुहृत्प्रेषितैर्द्रव्यैः इत्यर्थः। महासामन्ताः श्रेष्ठनृपतयः।

(२३३) कैलासेति। कैलासस्य रजतगिरेः कूटानि शृङ्गाणि तद्वत् धवलाः तैः।

(२३४) कनकेति। कनकपत्रलताभिः स्वर्णनिर्मितपत्रभङ्गालङ्कृताः विषाण-कोटयः शृङ्गाग्राणि येषां तैः।

(२३५) महाप्रमाणैः बृहदाकारैः सन्ध्यावलिवृषैः सन्ध्याकालीनपूजार्थवृषभैः सौवर्णैः काञ्चननिर्मितैः स्नपनकलसैः स्नानसाधनकुम्भैः अर्घ्यभाजनैः अर्घ्यपात्रैः पुष्पपटैः येषु वसनेषु सूत्रैः पुष्पाकृतयो विरच्यन्ते ते पुष्पपटाः तैः।

(२३६) मणियष्टिप्रदीपाः ज्वलन्मणिशिखा दीपाः तैः। मुखकोषैः शिवलिङ्गमुखाच्छादनैः। अस्य पुष्पभूतेः। अन्तःपुराणि अवरोधवर्गाः।

(२३७) आरब्धेति। आरब्धानि बालेयानि बलिः पूजा तस्मै हितानि तण्डुलानां कण्डनानि अवघातविशेषाः यैः तथाभूतानि।

तरकरकिसलयानि (२३९) कुसुमग्रथनव्यग्रसमस्तपरिजनानि तस्य अभिलषितम् अन्ववर्त्तन्त।

तथाच परममाहेश्वरः स भूपालो लोकतः शुश्राव भुवि भगवन्तम् अपरमिव साक्षात् दक्षमखमथनं (२४०) दाक्षिणात्यं बहुविधविद्याप्रभावप्रख्यातैः गुणैः शिष्यैरिव अनेकसहस्रसङ्ख्यैः व्याप्तमर्त्यलोकं भैरवाचार्य्यनामानं महाशैवम्। उपनयन्ति हि हृदयम् अदृष्टमपि जनं शीलसंवादाः। यतः स राजा श्रवणसमकालमेव तस्मिन् भैरवाचार्य्ये भगवति द्वितीय इव कपर्दिनि दूरगतेऽपि गरीयसीं बबन्ध भक्तिम् आचकाङ्क्ष च मनोरथैरपि अस्य सर्वदा दर्शनम्।

(२४१) अथ कदाचित् पर्य्यस्ते अस्ताचलचुम्बिनि वासरे अन्तःपुरवर्त्तिनं राजानम् उपसृत्य प्रतीहारी विज्ञापितवती देव! द्वारि परिव्राट् आस्ते कथयति च भैरवाचार्य्यवचनात् देवम् अनुप्राप्तोऽस्मीति। राजा तु तत् श्रुत्वा सादरं क्व असौ आनय अत्रैव प्रवेशय एनमिति च अब्रवीत्। तथा च अकरोत् प्रतीहारी। न चिरात् च प्रविशन्तं प्रांशुम्

---

(२३८) देवेति। देवगृहस्य शिवमन्दिरस्य उपलेपनेन गोमयादिना संशोधनेन लोहिततरा अतिलोहिताः करकिसलयाः येषां तथोक्तानि।

(२३९) कुसुमेति। कुसुमानां ग्रथने गुम्फने व्यग्राः समस्ताः परिजनाः परिवारा येषां तानि अन्ववर्त्तन्त अन्वसरन्। परममाहेश्वरः महेश्वरस्य परमभक्त इत्यर्थः दक्षमखमथनं दक्षप्रजापतेः यज्ञध्वंसिनमित्यर्थः।

(२४०) दाक्षिणात्यं दक्षिणदेशभवम्। उपनयन्ति उपस्थापयन्ति शीलसंवादाः चरित्रसादृश्यानि। कपर्दिनि शिवे।

(२४१) अथेत्यादि। पर्य्यस्ते अवसिते। परिव्राट् सन्यासी। प्रांशुम्

आजानुलम्बभुजं भैक्षक्षाममपि स्थूलास्थिभिः अवयवैः पीवानमिव उपलक्ष्यमाणं पृथुतमोत्तमाङ्गम् (२४२) उत्तुङ्गवलिभङ्गस्थपुटललाटं (२४३) निर्मांसगण्डकूपं (२४४) मधुबिन्दुपिङ्गलपरिमण्डलाक्षम् (२४५) ईषदावक्रघोणम् (२४६) अतिप्रलम्बैककर्णपाशम् (२४७) अलाबुबीजविकटोन्नतदन्तपङ्क्तिं (२४८) तुरगानूकश्लथाधरलेखं (२४९) लम्बचिबुकायततरलपनम् (२५०) अंसावलम्बिना काषायेण योगपट्टकेन विरचितवैकक्ष्यकं (२५१)

---

उन्नतकायमित्यर्थः भैक्षक्षामं भिक्षा एव भैक्षं तेन क्षामं क्षीणम्। पीवानमिव स्थूलम् इव। पृथुतमोत्तमाङ्गं बृहन्मस्तकम्।

(२४२) उत्तुङ्गेति। उत्तुङ्गा दीर्घा वलिभङ्गा यत्र तादृशं स्थपुटं निम्नोन्नतं ललाटं भालदेशः यस्य तथोक्तम्।

(२४३) निर्मांसेति। निर्मांसौ मांसशून्यौ अस्थिमयावित्यर्थः गण्डौ कपोलौ कूपाविव यस्य तथोक्तम्।

(२४४) मध्विति। मधुबिन्दुवत् पिङ्गलं परिमण्डलं गोलकं ययोः तथाभूते अक्षिणी नेत्रे यस्य तम्।

(२४५) ईषदिति। ईषत् आवक्रा घोणा नासिका यस्य तम्।

(२४६) अतीति। अतिशयेन प्रलम्बः लम्बमानः एकः कर्णपाशो यस्य तथोक्तम्।

(२४७) अलाब्विति। अलाबुबीजवत् विकटा उन्नता दन्तपङ्क्तिः दशनावली यस्य तम्।

(२४८) तुरगेति। तुरगस्य अनूकः अधोगत ओष्ठः तद्वत् श्लथा शिथिला लम्बमाना इत्यर्थः अधरलेखा यस्य तम्।

(२४९) लम्बेति। लम्बेन चिबुकेन आयततरं यद्वा लम्बं चिबुकं यस्य तथाभूतम् आयततरं लपनं मुखं यस्य तथोक्तम्।

(२५०) अंसावलम्बिना स्कन्धावलम्बिना काषायेण कषायरञ्जितेन योगपट्टकेन

हृदयमध्यनिबद्धग्रन्थिना च रागेणेव खण्डशः कृतेन धातुरसारुणेन कर्पटेन कृतोत्तरासङ्गं (२५२) पुनरुक्तबालप्रग्रहवेष्टननिश्चलमूलेन (२५३) बद्धमृत्परिशोधनवंशत्वक्तितउना (२५४) कौपीनसनाथशिखरेण (२५५) खर्जूरपुटसमुद्गकगर्भीकृतभिक्षाकपालकेन (२५६) दारवफलकत्रयत्रिकोणतिर्यष्टिनिविष्टकमण्डलुना (२५७) बहिरुपपादितपादुकावस्थानेन (२५८) स्थूलदशासूत्रनियन्त्रि-

---

उपवीतकाकारेण योगसाधनेन पट्टवसनखण्डेन इत्यर्थः विरचितं वैकक्ष्यकं तिर्यक् वक्षालम्बी हारविशेषो येन तम्।

(२५१) हृदयेति। हृदयस्य उरसः मध्ये निबद्धः रचितः ग्रन्थिः बन्धनविशेषः यस्य तथोक्तेन रागेणेव विषयानुरागेणेव धातुरसारुणेन गैरिकरक्तेन इत्यर्थः कर्पटेन कृतः उत्तरासङ्गः उत्तरीयं येन तथोक्तम्।

(२५२) पुनरुक्तेति। पुनरुक्तेन पुनः पुनः जटितेन बालेन नूतनेन प्रग्रहेण रज्वा यद् वेष्टनं तेन निश्चलं मूलं यस्य तेन।

(२५३) बद्धेति। बद्धः रचितः इत्यर्थः मृदां मृत्तिकानां शिवलिङ्गादिनिर्माणसाधनानाम् इति भावः परिशोधनाय वंशत्वचा वेणुवल्कलेन कृतः तितउः चालनी यत्र तेन।

(२५४) कौपीनेति। कौपीनेन सनाथं युक्तं शिखरम् अग्रभागः यस्य तेन।

(२५५) खर्जूरेति। खर्जूरस्य वृक्षभेदस्य पुटैः श्लिष्टैः पत्रैरित्यर्थः समुद्गकः रचितः इति भावः तस्य गर्भीकृतं गर्भे स्थापितम् इत्यर्थः भिक्षाकपालं यस्य तथोक्तेन।

(२५६) दारवेति। दारुण इदं दारवं काष्ठसम्बन्धीत्यर्थः यत् फलकत्रयं तस्मिन् ये त्रयः कोणाः तेषु यास्तिस्रो यष्टयः तासु निविष्टः कमण्डलुर्यस्य तेन।

(२५७) बहिरिति। बहिः बाह्यदेशे उपपादितं सम्पादितं पादुकयोरवस्थानं यस्य तेन।

(२५८) स्थूलेति। स्थूलैः दशासूत्रैः वसनाञ्चलतन्तुभिः नियन्त्रितं निबद्धं

तपुस्तिकापूलकेन वामकरधृतेन योगभारकेण अध्यासितस्कन्धम् (२५९) इतरकरगृहीतवेत्रासनं मस्करिणम् अद्राक्षीत् ।

क्षितिपतिरपि उपगतम् उचितेन च एनम् आदरेण अन्वग्रहीत् आसीनञ्च पप्रच्छ क्व भैरवाचार्य्य इति । सादरनरपतिवचनमुदितमनास्तु परिव्राट् तम् उपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितम् आचचक्षे । भूयश्च आवभाषे अर्च्चयति हि महाभागं भगवान् आशीर्वचसा । इत्युक्त्वा च उपनिन्ये योगभारकात् आकृष्य भैरवाचार्य्यप्रहितानि रत्नवन्ति (२६०) बहलालोकलिप्तान्तःपुराणि पञ्चराजतानि पुण्डरीकाणि ।

(२६१) नरपतिस्तु प्रियजनप्रणयभङ्गकातरो दाक्षिण्यम् अनुरुध्यमानो ग्रहणलाघवञ्च लङ्घयितुम् असमर्थो दोलाय-

---

पुस्तिकापूलकं क्षुद्रपुस्तकसमूहः यत्र तेन वामकरधृतेन वामहस्तगृहीतेन योगभारकेण योगसाधनद्रव्यसञ्चयस्थल्या इत्यर्थः ।

(२५९) इतरेति । इतरेण दक्षिणेनेत्यर्थः करेण गृहीतं वेत्रासनं स्थाने स्थाने विश्रामार्थम् इति भावः । मस्करिणं परिव्राजकम् । उपगतम् उपस्थितम् । उपनगरं नगरसमीपे । उपनिन्ये अर्पितवान् ।

(२६०) बहलेति । बहलेन प्रभूतेन आलोकेन उद्योतेन लिप्तम् उद्भासितम् अन्तःपुरं यैः येषां वा तानि रत्नवन्ति मणिखचितानि राजतानि रौप्यमयानि पुण्डरीकाणि पद्मानि ।

(२६१) नरपतिरित्यादि । प्रियेति प्रियजनस्य प्रीतिभाजनस्य भैरवाचार्य्यस्येत्यर्थः प्रणयभङ्गः अग्रहणे याच्ञाभङ्गः तेन कातरः कथं तादृशस्य प्रणयभङ्गं करोमि इति व्याकुल इत्यर्थः दाक्षिण्यम् औदार्य्यम् अनुरुध्यमानोऽनुसरन् ग्रहणलाघवं ग्रहणे लाघवं लघुतां दत्तवस्तुग्रहणं शूराणां स्वयं बलात् जिघृक्षूणां

मानेन मनसा स्थित्वा कथं कथमपि (२६२) अतिसौजन्य-निघ्नः तानि जग्राह जगाद च सर्वफलप्रसवहेतुः शिवभक्ति-रियं नो यया मनोरथदुर्लभानि फलन्ति फलानि यया च अस्मासु प्रीयते भगवान् भुवनगुरुर्भैरवाचार्य्यः। श्वो द्रष्टास्मि भगवन्तम्। इत्युक्त्वा च मस्करिणं व्यसर्जयत् अनया च वार्त्तया परां मुदम् अवाप।

(२६३) अपरेद्युश्च प्रातरेव उत्थाय वाजिनम् अधि-रुह्य (२६४) समुच्छ्रितश्वेतातपत्रः (२६५) समुद्धूय-मानधवलचामरयुगलः कतिपयैरेव राजपुत्रैः परिवृतो भैरवाचार्य्यं सवितारमिव शशी द्रष्टुं प्रतस्थे। गत्वा च किञ्चित् अन्तरं तदीयमेव अभिमुखम् (२६६) आपतन्तम् अन्यतमं शिष्यम् अद्राक्षीत् अप्राक्षीच्च क्व भगवान् आस्ते इति। सोऽकथयत् अस्य जीर्णमातृगृहस्य उत्तरेण बिल्व-वाटिकाम् अध्यास्ते इति। गत्वा च तं प्रदेशम् अवततार तुरङ्गमात् प्रविवेश च बिल्ववाटिकाम्।

---

लज्जाकरत्वादिति भावः। दोलायमानेन किंकर्त्तव्यविमूढतया गच्छामि नवेति संशयितेनेत्यर्थः।

(२६२) अतिसौजन्यनिघ्नः अतिसौजन्यवशंवदः। फलन्ति भवन्ति।

(२६३) अपरेद्युरित्यादि। अपरेद्युः परस्मिन् दिवसे। वाजिनम् अश्वम्।

(२६४) समुच्छ्रितेति। समुच्छ्रितं समुद्धृतं श्वेतम् आतपत्रं छत्रं यस्य तथाभूतः।

(२६५) समुद्धूयमानेति। समुद्धूयमानं संवीज्यमानं धवलं श्वेतं चामर-युगलं यस्य तथोक्तः सवितारमिव सूर्य्यमिव। शशी चन्द्रः। आपतन्तम् आगच्छन्तम्।

(२६६) जीर्णमातृगृहस्य पुरातनदेवीमन्दिरस्येत्यर्थः बिल्ववाटिका बिल्ववृक्षैर्युक्तां वाटीमित्यर्थः। अवततार अवारुरोह।

(२६७) अथ महत: कार्पटिकवृन्दस्य मध्ये प्रातरेव स्नातं दत्ताष्टपुष्पिकम् अनुष्ठिताग्निकार्य्यं (२६८) कृतभस्मचयपरिहारपरिकरे (२६९) हरितगोमयोपलिप्त-चितितलविततै व्याघ्रचर्म्मणि उपविष्टं (२७०) कृष्ण-कम्बलप्रावरणनिभेन (२७१) असुरविवरप्रवेशाशङ्कया पातालान्धकारावासमिव अभ्यस्यन्तम् उन्मिषता विद्युत्कपि-लेन आत्मतेजसा (२७२) महामांसविक्रयक्रीतेन मन:शिला-पङ्केनेव शिष्यलोकं लिम्पन्तं (२७३) जटोकृतैकदेशलम्बमान-रुद्राक्षशङ्खगुटिकेन ऊर्द्ध्ववद्धेन शिखापाशेन बध्नन्तमिव विद्याव-

---

(२६७) अथेत्यादि। कार्पटिकवृन्दस्य व्रतिसमूहस्य। दत्ताष्टपुष्पिक दत्ता इष्टदेवायेति भाव: अष्टौ पुष्पिका: पद्मादय: येन तम्।

(२६८) कृतेति। कृत: भस्मचयपरिहारस्य धूलिसमूहसंमार्जनस्य परिकर: प्रक्रिया यस्य तस्मिन् भस्मराशिरहिते इति भाव:।

(२६९) हरितेति। हरितेन श्यामलेन सरसेनेति भाव: गोमयेन उपलिप्तं शोधितम् इति भाव: चितितलं तस्मिन् विततं विस्तृतं तस्मिन्।

(२७०) कृष्णकम्बलेति। कृष्णवर्णं कम्बलम् एव प्रावरणं गात्राच्छादनं तस्य निभम्छलं तदेव निभं छलं वा तेन।

(२७१) असुरेति। असुरविवरं पातालं तस्मिन् प्रवेश: तस्य आशङ्का सम्भावना तया। उन्मिषता स्फुरता विद्युत्कपिलेन तड़ित्पिङ्गलेन आत्मतेजसा निजज्योतिषा।

(२७२) महामांसेति। महामांसं नरमांसं तस्य विक्रय: विक्रयलब्धं धनम् इत्यर्थ: तेन क्रीत: तेन यद्वा विक्रय: विनिमय: तेन क्रीत: तेन। मन:शिलापङ्केन मन:शिला उपधातुविशेष: तस्या: पङ्क: द्रव इत्यर्थ: तेन।

(२७३) जटीति अजटा जटा सम्पाद्यमान: जटीकृत: एकदेश: एकांश: तस्मिन् लम्बमाना रुद्राक्षा: शङ्खगुड़िका: शङ्खनिर्मितगुटिकाश्च यद्वा रुद्राक्षवत् शङ्ख गुटिका यस्मिन् तथोक्तेन ऊर्द्ध्ववद्धेन उन्नम्य नियमितेन शिखापाशेन

लेपदुर्विदग्धान् उपरि सञ्चरतः सिद्धान् ( २७४ ) धवलकतिपयशिरोरुहेण शिरसा पञ्चपञ्चाशतं वर्षाण्यतिक्रामन्तं ( २७५ ) खालित्यचीयमाणशङ्खलोमलेखम् ( २७६ ) लोमशकर्णशष्कुलीप्रदेशं पृथूललाटतटं तिरश्च्या भस्मललाटिकया बहुशः ( २७७ ) शिरोर्द्धप्लुत-दग्ध-गुग्गुलु-सन्ताप-स्फुटित-कपालास्थि-पाण्डुर-राजि-शङ्कामिव जनयन्तं ( २७८ ) सहजललाटबलिभङ्गसङ्कोचितकूर्च्चभागं बभ्रुभासं ( २७९ ) भ्रूसङ्गत्या निरन्तराम्

---

शिखाकुपरज्वा। प्रशस्ता शिखा शिखापाश इति केनचिद् व्याख्यातं तत् न समीचीनं पाशः कुत्सायाम् इति सूत्रेण कुत्सार्थे एव पाशप्रत्ययस्य विधानात्। विद्येति। विद्यया योऽवलेपः अहङ्कारः तेन दुर्विदग्धाः दुर्विनीताः तान्। उपरि आकाशे इत्यर्थः।

( २७४ ) धवलेति। धवलाः श्वेताः कतिपये शिरोरुहाः केशा यस्मिन् तथोक्तेन शिरसा मस्तकेन वयसा इति पाठे वयसा जीवनकालेन जरयेति भावः।

( २७५ ) खालित्येति। खलतिः खल्वाटः तस्य भावः खालित्यं तेन चीयमाणा शङ्खस्य ललाटास्थ्नः शङ्खोनिधौ ललाटास्थ्नीत्यमरः लोमलेखा केशनिचयः यस्य तथोक्तम्।

( २७६ ) लोमशेति। लोमशः लोमाकीर्णः कर्णशष्कुली कर्णकुहरम् एव प्रदेशः यस्य तं पृथुललाटतटं विशालभालदेशं तिरश्च्या तिर्य्यग्वर्त्तिन्या ललाटिकया तिलकविशेषेण।

( २७७ ) शिर इति। शिरस ऊर्द्धं शिरोर्द्धं निपातनात् सकारलोपः। तस्मिन् प्लुतानां दग्धानां गुग्गुलूनां गन्धद्रव्यभेदानां सन्तापेन उत्तापेन स्फुटितानि कपालस्य भालदेशस्य अस्थीनि तेषां पाण्डुरा धवला राजिः आवलिः तस्याः शङ्काम् इव।

( २७८ ) सहजेति। सहजेन स्वाभाविकेन ललाटबलिभङ्गेन सङ्कोचितः

आयामिनीम् एकामिव भ्रूलेखां बिभ्राणम् ईषत्कातरकनीनिकेन (२८०) रक्तापाङ्गेन निर्गतांशुप्रतानेन मध्यधवलभासा इन्द्रायुधेनेव अतिदीर्घेण लोचनयुगलेन परितो महामण्डलमिव अनेकवर्णरागम् आलिखन्तं (२८१) सितपीतलोहितपताकावलीशबलं शिवबलिमिव दिक्षु विक्षिपन्तं (२८२) तार्क्ष्यतुण्डकोटिकुब्जाग्रघोणं (२८३) दूरविदीर्णसृक्कसंक्षिप्तकपोलं किञ्चित् दन्तुरतया सदाहृदयसन्निहितहरमौलिचन्द्रातपेनेव निर्गच्छता दन्तालोकेन धवलयन्तं दिशां चक्रवालं (२८४) जिह्वाग्रस्थितसर्वशैव-

---

कूर्चभागः भ्रूमध्यभागः यस्य तथोक्तं कूर्चमस्त्री भ्रुवोः मध्यमित्यमरः। बभ्रुभासं पिङ्गलकान्तिम्।

(२७९) भ्रूसङ्गत्येति। भ्रुवोः सङ्गतिः सम्मेलनं तया निरन्तराम् अविच्छिन्नाम् आयामिनीम् आयतां भ्रूलेखां भ्रुवोरेखाम्। ईषदिति ईषत् कातरा पीतवर्णा कनीनिका मध्यतारा यस्य तेन। रक्तापाङ्गेन शोणप्रान्तदेशेन।

(२८०) निर्गतेति। निर्गताः अंशूनां किरणानां प्रतानाः प्रसराः यस्मात् तेन। मध्येति मध्ये धवला भासो यस्य तेन। परितः समन्तात् महामण्डलम् सर्वतोभद्रादिरूपं यन्त्रमित्यर्थः।

(२८१) सितेति। सिता श्वेता पीता लोहिता रक्ता च याः पताकाः वैजयन्त्यः ताभिः शबलं विविधवर्णरञ्जितमित्यर्थः नेत्रयुगलस्य प्रागुक्तत्रिविधवर्णशालित्वात् इति भावः शिवबलिं शिवपूजाविधिम्।

(२८२) तार्क्ष्येति। तार्क्ष्यो गरुडः तस्य तुण्डकोटिः मुखाग्रं चञ्चुरित्यर्थः तद्वत् कुब्जम् अग्रघोणं घोणा नासिका तस्या अग्रं यस्य तथोक्तम्।

(२८३) दूरेति। दूरम् अत्यन्तं विदीर्णाभ्यां विस्तृताभ्यां सृक्कभ्याम् ओष्ठप्रान्ताभ्यां प्रान्तावोष्ठस्य सृक्कणी इत्यमरः। संक्षिप्तौ सङ्कोचितौ कपोलौ गण्डौ यस्य तम्। किञ्चिद्दन्तुरतया ईषद्दीर्घदन्तत्वेन सदा हृदये सन्निहितस्य हरस्य मौलौ यः चन्द्रः तस्य आतपः आलोकः तेन एव। निर्गच्छता बहिर्गच्छता दन्तालोकेन दन्तप्रभया दिशां चक्रवालं मण्डलं धवलयन्तं श्वेतयन्तम्।

संहितातिभारेणेव मनाक्प्रलम्बितौष्ठं (२८५) प्रलम्ब-श्रवणपालीप्रेङ्खिताभ्यां स्फाटिककुण्डलाभ्यां शुक्रबृहस्पति-भ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्धया अनुबध्यमानं (२८६) बद्धविविधौषधिमन्त्रसूत्रपङ्क्तिना सलोहवलयेन एकप्रकोष्ठेन (२८७) शङ्खखण्डं पूष्णो दन्तमिव भगवता भवेन भग्नं भक्त्या भूषणीकृतं कलयन्तम् (२८८) अखिलरस-कूपोदञ्चनघटीयन्त्रमालाम् इव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तम् उरसि दोलायमानेन आपिङ्गलाग्रेण कूर्चकलापेन सम्मार्जयन्तमिव अन्तर्गतं निजरजोनिकरम् (२८९) अतिनिविड़नीललोममण्डलनिचितञ्च ध्यान-

---

(२८४) जिह्वेति। जिह्वाया रसनाया अग्रे स्थिता या सर्वा शिवसंहिता शिवचरितगाथा तस्या अतिभारेणेव मनाक् ईषत् प्रलम्बितः ओष्ठः यस्य तथोक्तम्।

(२८५) प्रलम्बेति। प्रलम्बयोः प्रकर्षेण लम्बमानयोः श्रवणपाल्योः कर्णरेखयोः प्रेङ्खिते आन्दोलिते ताभ्यां अनुबध्यमानम् अनुगम्यमानम्।

(२८६) बद्धेति। बद्धा विविधानाम् ओषधीनां मन्त्राणाञ्च सूत्रपङ्क्तिः यस्मिन् तथोक्तेन सलोहवलयेन लौहवलयालङ्कृतेन एकप्रकोष्ठेन एकेन अरत्निमणि-बन्धयोः अन्तरदेशेन प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोरित्यमरः।

(२८७) शङ्खखण्डं कम्बुशकलं पूष्णः सूर्य्यस्य। भवेन हरेण भग्नं पाटितं पुरा दक्षस्य प्रजापतेः यज्ञे हरनिन्दाश्रवणे पूष्णा जहास। तेन अतिकुपितो हरः तस्य दन्तपाटीं चपेटप्रहारेण बभञ्जेति पुराणवार्त्ता। कलयन्तं धारयन्तम्।

(२८८) अखिलेति। अखिलस्य समग्रस्य रसस्य जलस्य उदञ्चनाय उद्धरणाय घटीयन्त्रमालाम् इव घटीयन्त्रराजिम् इव। उरसि वक्षसि आपिङ्गला-ग्रेण ईषत्कपिशाग्रेण कूर्चकलापेन श्मश्रुनिचयेन इत्यर्थः। निजरजोनिकरं स्वं रजोगुणविकारं धूलिसञ्चयञ्च।

(२८९) अतीति। अतिनिविड़ेन अतिघनेन नीलेन कृष्णेन लोममण्डलेन

लग्नेन ज्योतिषा दर्पमिव हृदयदेशे दधानम् ( २९० ) ईषत्प्रशिथिलवलिवलयबध्यमानतुन्दम् ( २९१ ) उपचीयमानस्फिङ्मांसपिण्डकं ( २९२ ) पाण्डुरपवित्रक्षौमावृतकौपीनं सावष्टम्भपर्य्यङ्कबन्धमण्डलितेन ( २९३ ) अस्तफेनश्वेतरुचा योगपट्टकेन वासुकिना इव ( २९४ ) अप्रतिहतानेकमन्त्रप्रभावाविर्भूतेन प्रदक्षिणीक्रियमाणम् ( २९५ ) अरुणतामरससुकुमारतलस्य पादयुगलस्य निर्मलैः नखमयूखजालकैः जर्जरयन्तमिव ( २९६ ) महानिधानोद्धरणरसेन रसातलं ( २९७ ) तोयक्षालितशुचिना धौतपादुका-

---

रोमनिवहेन निचितं व्याप्तम् । ज्योतिषा अन्तर्ज्योतिषा ज्ञानरूपेणेति भावः ।

( २९० ) ईषदिति । ईषत् प्रशिथिलेन प्रश्लथेन वलिवलयेन वलित्रयेण इत्यर्थः बध्यमानं वेष्ट्यमानं तुन्दम् उदरं यस्य तथोक्तम् ।

( २९१ ) उपचीयमानेति । उपचीयमानम् आप्याय्यमानं स्फिचोः कट्योः नितम्बयोरिति भावः मांसपिण्डं यस्य तं स्त्रियां स्फिचौ कटी प्रोथावित्यमरः ।

( २९२ ) पाण्डुरेति । पाण्डुरेण धवलेन पवित्रेण क्षौमेण पट्टवसनेन आवृतम् आच्छादितं कौपीनम् अन्तर्वस्त्रं यस्य तथाभूतम् । सावष्टम्भेति सावष्टम्भं सगर्वं सवेगम् इत्यर्थः दृढम् इति यावत् यः पर्य्यङ्कबन्धः आसनविशेषः तेन मण्डलितं वलयीकृतं तेन ।

( २९३ ) अस्तेति । अस्तफेनवत् श्वेता शुभ्रा रुक् यस्य तेन योगपट्टकेन प्रागुक्तेन योगिधार्य्यपट्टसूत्रविशेषेण ।

( २९४ ) अप्रतिहतेति । अप्रतिहतानां प्रतिहन्तुम् अशक्तानाम् अनेकेषां मन्त्राणां प्रभावेण सामर्थ्येन आविर्भूतः वशीकृत इति भावः तेन प्रदक्षिणीक्रियमाणं समन्तात् वेष्ट्यमानम् इत्यर्थः ।

( २९५ ) अरुणेति । अरुणं रक्तं यत् तामरसं पद्मं तद्वत् सुकुमारं सुकोमलं तलं यस्य तथाभूतस्य । जर्जरयन्तम् इव विदारयन्तमिव ।

युगलेन हंसमिथुनेन इव (२९८) भागीरथीतीर्थयात्रा-परिचयागतेन (२९९) आमुच्यमानचरणान्तिकं (३००) शिखरनिखातकुब्जकालायसकण्टकेन वैणवेन विशाखिकादण्डेन (३०१) सर्वविद्यासिद्धिविघ्नविनायकापयनाङ्कुशेन इव सततपार्श्ववर्त्तिना विराजमानम् अबहुभाषिणं मन्दहासिनं सर्वोपकारिणं कुमारब्रह्मचारिणम् अतितपस्विनं महामनस्विनं (३०२) कृशक्रोधम् अकृशानुरोधं महानगरमिव (३०३) अदीनप्रकृतिशोभितं मेरुमिव (३०४)

---

(२९६) महानिधानेति महानिधानस्य महतो निधेः रत्नविशेषस्य उद्धरणम् उत्तोलनं तस्मिन् रसः रागः तेन। रसातलं पातालम्।

(२९७) तीर्थेति। तीर्थेन जलेन चालितं धौतम् अतएव शुचि पवित्रं तेन।

(२९८) भागीरथीति। भागीरथी गङ्गा एव तीर्थं पुण्यक्षेत्रं तस्मिन् यात्रा गमनं तत्र यः परिचयः सङ्गतिः तेन आगतं तेन।

(२९०) आमुच्यमानेति। आमुच्यमानं सेव्यमानं चरणान्तिकं चरणसन्निधिः यस्य तथोक्तम्।

(३००) शिखरेति। शिखरे शृङ्गे अग्रे वा निखातेनः कुब्जः कुञ्चित इत्यर्थः कालायसकण्टकः कृष्णवर्णलौहकण्टकः यस्य तेन वैणवेन वेणुः वंशविशेषः तस्यायं वैणवः वेणुनिर्मित इत्यर्थः तेन विशाखिकादण्डेन खनित्रेणेत्यर्थः।

(३०१) सर्वेति। सर्वासां विद्यानां सिद्धौ विघ्नः अन्तरायः यो विनायकः गणपतिः तस्य अपनयनाय अपसारणाय अङ्कुशः अस्त्रविशेषः तेन इव। कुमारब्रह्मचारिणं नैष्ठिकब्रह्मचारिणम् इत्यर्थः।

(३०२) कृशक्रोधम् अल्पक्रोधं प्रायेण क्रोधवर्जितम् इत्यर्थः अकृशानुरोधम् अकृशः अनल्पः अनुरोधः आदर इत्यर्थः यस्य तथोक्तं बहादृतमित्यर्थः।

(३०३) अदीनेति। अदीना दैन्यवर्जिता या प्रकृतिः स्वभावः तया शोभितः तम् उदारप्रकृतिमित्यर्थः अन्यत्र अदीनाभिः दारिद्रविहीनाभिः प्रकृतिभिः प्रजाभिः प्रधानपुरुषैः वा शोभितम्।

कल्पतरुपल्लवराशिसुकुमारच्छायं कैलासमिव (३०५) पशुपतिचरणरजःपवित्रितशिरसं शिवलोकमिव (३०६) माहेश्वरगणानुयातं जलनिधिमिव (३०७) अनेकनदनदीसहस्रप्रक्षालितशरीरं जाह्नवीप्रवाहमिव (३०८) बहुपुण्यतीर्थस्थानशुचिं धाम धर्मस्य तीर्थं तथ्यस्य कोशं कुशलस्य पत्तनं पूततायाः (३०९) शालां शीलस्य क्षेत्रं क्षमायाः शालेयं शालीनतायाः स्थानं स्थितेः आधारं धृतेः आकरं करुणायाः निकेतनं कौतुकस्य आरामं रामणीयकस्य प्रासादं प्रसादस्य आगारं गौरवस्य समाजं सौजन्यस्य सम्भवं सद्भावस्य कालं कलेः भगवन्तं साक्षात् इव विरूपाक्षं भैरवाचार्यं ददर्श।

---

(३०४) कल्पेति। कल्पतरूणां पल्लवराशयः किसलयनिचयाः तद्वत् तैश्च सुकुमारा छाया कान्तिः अनातपश्च यस्य तथोक्तः तम्।

(३०५) पशुपतीति। पशुपतेः हरस्य चरणरजोभिः पवित्रितं पावितं शिरः मस्तकम् अन्यच्च पवित्रितानि शिरांसि शृङ्गाणि यस्य तथोक्तः तम्।

(३०६) माहेश्वरेति। महेश्वरो देवता येषां ते माहेश्वराः शैवा इत्यर्थः ते गणाः अनुचराः अन्यच्च महेश्वरस्य इमे माहेश्वराः ये गणाः प्रमथवर्गाः तैः अनुयातः अनुगतः तम्।

(३०७) अनेकेति। अनेकेषु नदनदीनां सहस्रेषु प्रक्षालितं स्नातम् इत्यर्थः शरीरं यस्य अन्यच्च अनेकैर्नदनदीसहस्रैः प्रक्षालितं शरीरं यत्र तथोक्तः तम्।

(३०८) बह्विति। बहुषु पुण्येषु तीर्थेषु स्थानेन स्थित्या शुचिः पवित्रः तम्। धाम आश्रयम्। तीर्थं क्षेत्रं तथ्यस्य सत्यस्य। कोशं भाण्डागारं कुशलस्य मङ्गलस्य। पत्तनं नगरं पूततायाः पवित्रतायाः।

(३०९) शालां गृहं शीलस्य सुचरितस्य। क्षेत्रं भूमिं क्षमायाः क्षान्तेः। शालेयं शाला एव शालेयं गृहम् इत्यर्थः शालीनतायाः विनयितायाः स्थितेः

भैरवाचार्य्यस्तु दूरात् एव राजानं दृष्ट्वा शशिनमिव जलनिधिः ( २१० ) चचाल प्रथमतरोत्थितशिष्यलोकश्च उत्थाय प्रत्युज्जगाम समर्पितश्रीफलोपायनश्च ( २११ ) जह्नुकर्णसमुद्गीर्य्यमाणगङ्गाप्रवाहह्रादगम्भीरया गिरा स्वस्ति-शब्दम् अकरोत्।

नरपतिरपि ( २१२ ) प्रीतिविस्तार्य्यमाणधवलिम्ना चक्षुषा प्रत्यर्पयन्निव बहुतराणि पुण्डरीकवनानि ( २१३ ) ललाटपट्टपर्य्यस्तेन च उदंशुना शिखामणिना महेश्वरप्रसाद-मिव तृतीयनयनोद्गमेन प्रकाशयन् ( २१४ ) आवर्जितकर्ण-

---

मर्य्यादायाः शिष्टाचारस्य इत्यर्थः धृतेः धैर्य्यस्य। आकरम् उत्पत्तिनिकेतनम्। निकेतनम् आलयम्। आराममुपवनं रामणीयतायाः प्रासादं हर्म्यं समाजं गोष्ठीं कालम् अन्तकम्।

( २१० ) चचाल गाम्भीर्य्यादिति भावः। समर्पितेति। समर्पितानि प्रदत्तानि श्रीफलान्येव उपायनानि येन तथोक्तः श्रीफलानि उपायनीकुर्वन् इत्यर्थः।

( २११ ) जह्नुकर्णेति। जह्नुः नाम राजर्षिः तस्य कर्णात् समुद्गीर्य्यमाणा या गङ्गा तस्याः प्रवाहः स्रोतः तस्य ह्रादवत् गम्भीरा तया। पुरा भगीरथेन आनीयमाना गङ्गा पथि तपस्यतो जह्नुनृपतेः तपोभूमिं तदुपकरणानि च प्लावयन्ती वहति स्म तद्दृष्ट्वा असौ मुनिः क्रोधात् तां गङ्गां गण्डूषेण पपौ, अथ भगीरथेन पश्चात् आयान्तीं गङ्गाम् अदृष्ट्वा क्व गता मे गङ्गा इति अनुसन्दधता जह्नुः पृष्टः तमेव-माचख्यौ। ततः तदनुरोधेन स्वात् कर्णरन्ध्रात् तां गङ्गाम् उद्गीर्य्य तस्मै ददौ इति पुराणवार्त्ता।

( २१२ ) प्रीतीति। प्रीत्या विस्तार्य्यमाणो धवलिमा धावल्यं यस्य तथाभूतेन प्रत्यर्पयन्निव प्रतिददद्दिव पुण्डरीकवनानि कमलवनानि।

( २१३ ) ललाटेति। ललाटपट्टे भालफलके पर्य्यस्तः पतितः तेन। उदंशुना उद्गतकिरणेन शिखामणिना चूड़ारत्नेन तृतीयनयनोद्गमेन तृतीयनयनोद्गमेन इव इति पाठः समीचीनः उद्गततृतीयेन नयनेन इव इत्यर्थः।

पल्लवपलायमानमधुकरः शिवसेवासमुन्मूलिताशेषपापलव-मुच्यमान इव दूरावनतः प्रणामम् अभिनवं चकार । आचार्य्योऽपि आगच्छ अत्रोपविश इति शार्दूलचर्म आत्मीयम् अदर्शयत् । उपदर्शितप्रश्रयस्तु राजा (२१५) मत्तहंसकलगद्गदस्वर-सुभगां मधुरसमयीं महानदीमिव प्रवर्त्तयन् वाचं व्याजहार भगवन् ! न अर्हसि माम् (२१६) अन्यनृपस्खलितैः खलीकर्त्तुम् (२१७) अशेषराजकोपेच्छिताया राजलक्ष्म्याः खलु अयं (२१८) शीलापराधः द्रविणदौरात्म्यं वा यदेवम् आचरति मयि गुरुः । अभूमिरयम् (२१९) उपचाराणाम् । अलम् अतियन्त्रणया । दूरस्थितोऽपि

---

(२१४) आवर्जितेति । आवर्जितेन आन्दोलितेन कर्णपल्लवेन कर्णकिसलयेन पलायमानाः मधुकरा भ्रमरा यस्मात् सः । अतएव शिवेति शिवस्य सेवया समुन्मीलितानां सम्प्रकाशितानाम् अशेषाणां पापानां लवैः विन्दुभिः मुच्यमान इव हीयमान इव । आत्मीयं स्वकीयम् । उपदर्शितप्रश्रयः प्रदर्शितविनयः ।

(२१५) मत्तेति । मत्तस्य हंसस्य कलः मधुरास्फुटः गद्गदस्वरः अर्द्धोच्चरितस्वरविशेषः तेन सुभगां मनोज्ञाम् ।

(२१६) अन्येति । अन्येषां नृपाणां स्खलितानि दोषाः तैः खलीकर्त्तुम् अखलं खलं कर्त्तुं सदोषं सम्भावयितुम् इत्यर्थः अन्ये नृपतयः बहुभिः दोषैः कलुषीक्रियन्ते न अहं तथेति भावः ।

(२१७) अशेषेति । अशेषाणां राज्ञां कोपेन ईच्छिताया दृष्टायाः बहवो राजानो निर्जिताः तेषां विजितलक्ष्म्याः कोपदृष्टिः सम्भवति एवेति भावः । राजलक्ष्म्याः इत्यत्र हतलक्ष्म्या इति पाठे दुर्वृत्ताया लक्ष्म्या इत्यर्थः ।

(२१८) शीलापराधः चरितदोषः, द्रविणदौरात्म्यं धनदुर्वृत्तता गुरुः भवान् मयि विषये एवम् इत्थं राजा अयमिति कृत्वा विशिष्टसम्मानादिकमित्यर्थः । आचरति करोति इति यावत् एष हतलक्ष्म्याः चरितदोषः धनदुश्चरितं वा इति अन्वयः । अयमिति आत्मनिर्देशः ।

मनोरथशिष्यः अयं जनो भवताम्। (२२०) माननीयश्च गुरुवत् न उल्लङ्घनम् अर्हति गुरोः आसनम्। आसताञ्च भवन्त एव अत्र। इति व्याहृत्य परिजनोपनीते वाससि निषसाद। भैरवाचार्य्योऽपि प्रीत्या अनतिक्रमणीयं नृपवचनम् अनुवर्त्तमानः पूर्ववत् तदेव व्याघ्राजिनम् अभजत।

आसीने च सराजके परिजने च समुचितम् अर्घ्यादिकं चक्रे। क्रमेण च (२२१) नृपमाधुर्य्यहृतान्तःकरणः (२२२) शशिकरनिकरविमला दशनदीधितीः स्फुरन्तीः शिवभक्तीरिव साक्षात् दर्शयन् उवाच तात! अतिनम्रता एव ते कथयति गुणानां गौरवम्। (२२३) सकलसम्पत्पात्रमसि। विभवानुरूपास्तु प्रतिपत्तयः। जन्मनः प्रभृति अदत्तदृष्टिः अस्मि स्वापतेयेषु। यतः (२२४) सकलदोष-

---

(२१९) उपचाराणां विशिष्टसमादराणाम् अभूमिः अपात्रम्। अतियन्त्रणया अतिक्लेशेन अतियत्नेन इत्यर्थः मदर्थमिति भावः। मनोरथशिष्यः अहं भवता मनसा धृतः समुपस्थास्ये आज्ञाकर इति भावः।

(२२०) माननीय सम्मानार्हम्। आसतां तिष्ठन्तु। अनुवर्त्तमानः अनुमोदमानः। अर्घ्यादिकं पूजाविधानं चक्रे कृतवान् भैरवाचार्य्य इति शेषः।

(२२१) नृपेति। नृपस्य माधुर्य्येण रमणीयतागुणेन सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता इति दर्पणः हृतम् आकृष्टम् अन्तःकरणं यस्य तथाभूतः।

(२२२) शशीति। शशिनः चन्द्रस्य कराणां मयूखानां निकरवत् विमलाः विशदाः दशनदीधितीः दन्तमयूखान् स्फुरन्तीः द्योतमानाः। गौरवमुत्कर्षं भारवत्त्वञ्च यत्र अंशे भारातिशयस्तदंश एव नमतीति ध्वन्यते।

(२२३) सकलेति। सकलानां सम्पदां पात्रं भाजनम् असि भवसि। प्रतिपत्तयः ज्ञानानि विभवानां सम्पदाम् अनुरूपास्तु सदृश्य एव यथा त्वं सर्वसम्पत्पूर्णः तथा सर्वज्ञानपूर्णोऽपि इति भावः। स्वापतेयेषु धनेषु अदत्तदृष्टिरस्मि धनेषु मम दृष्टिः नास्तीत्यर्थः।

कलापानलेन्धनैः धनैः अविक्रीतं क्वचित् शरीरकमस्ति। (२२५) भैक्षरक्षिताः सन्ति प्राणाः। दुर्गृहीतानि कतिचित् विद्यन्ते विद्याक्षराणि। (२२६) भगवत् शिवभट्टारकपादसेवया समुपार्जिता कियत् अपि सन्निहिता पुण्यकणिका। स्वीक्रियतां यत् अत्र उपयोगार्हम्। (२२७) प्रतनुगुणग्राह्याणि कुसुमानि इव हि भवन्ति सतां मनांसि। अपि च (२२८) विद्वत्सम्मता श्रूयमाणा अपि साधवः शब्दा इव सुधीरेऽपि हि मनसि यशांसि कुर्वन्ति। विवरं विशतः कुतूहलस्य फेनधवलैः स्रोतोभिरिव अपक्रियमाणो गुणगणैः आनीतोऽस्मि कल्याणिना इति।

राजा तु तं प्रत्यवादीत् भगवन्! (२२९) अनुरक्ते ष्वपि

---

(२२४) सकलेति। सकला दीपकलापाः दीपनिवहा एव अनलाः अग्नयः तेषाम् इन्धनानि काष्ठानि तैः काष्ठैः एव अग्नय उद्दीप्यन्ते इति भावः।

(२२५) भैक्षेति। भिक्षया लब्धं भैक्षं तेन भिक्षाणाम् अन्नादिना इत्यर्थः रक्षिताः पालिताः। दुर्गृहीतानि दुःखेन गृहीतानि।

(२२६) भगवदिति। भगवतः ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तषड्गुणशालिनः शिवभट्टारकस्य शिवस्वामिनः पादसेवया चरणशुश्रूषया। पुण्यकणिका पुण्यबिन्दुः। यत् पुण्यकणिकारूपं वस्तु अत्र जगति उपयोगार्हम् उपयोगम् अर्हतीति तयोक्तं क्वचित् कदाचित् उपकारितां व्रजतीति यावत्।

(२२७) प्रतन्विति। प्रतनुना स्वल्पेनेत्यर्थः गुणेन उपकारादिना तन्तुना च ग्राह्याणि ग्रहीतुं शक्यानि।

(२२८) विद्वदिति। विद्वद्भिः सम्मताः अभिमताः। विवरं छिद्रं गह्वरम् अन्तःकरणमिति भावः पातालं वा विशतः गच्छतः। कल्याणिना कल्याणभाजनेन भवता इति शेषः।

शरीरादिषु इव साधूनां स्वामिन एव प्रणयिनः। युष्मद्दर्शनात् उपार्जितमिव च अपरिमितं (२३०) कुशलजातम्। अनेनैव आगमनेन स्पृहणीयं पदम् आरोपितोऽस्मि गुरुणा। इति विविधाभिश्च कथाभिः चिरं स्थित्वा गृहम् अगात्।

अन्यस्मिन् दिवसे भैरवाचार्य्योऽपि राजानं द्रष्टुं ययौ। तस्मै च राजा सान्तःपुरं सपरिजनं (२३१) सकोषम् आत्मानं निवेदितवान्। स च विहस्य उवाच तात! क्व विभवाः? क्व च वयं वनवर्द्धिताः?। धनोष्मणा म्लायति अलं लता इव मनस्विता। खद्योतानामिव अस्माकमियम् अपरोपतापिनी राजते तेजस्विता। भवादृशा एव भाजनं भूतेः। इति स्थित्वा च कञ्चित् कालं जगाम।

परिव्राट् तेनैव क्रमेण पञ्च पञ्च राजतानि पुण्डरीकाणि उपायनीचकार एकदा तु (२३२) श्वेतकर्पटावृतं किमपि आदाय प्राविशत्। उपविश्य च पूर्ववत् स्थित्वा मुहूर्त्तम् अब्रवीत् महाभाग! भवन्तम् आह भगवान् यथा अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः। तेन ब्रह्म-

---

(२२९) अनुरक्तेषु अनुरागभाजनेषु शरीरेषु इव साधूनां स्वामिनः प्रभवः भवादृशा इति शेषः प्रणयिनः प्रणयवन्तः अनुरागिणो भवन्तीत्यर्थः प्रभवः सेवकेषु शरीरेषु अनुरक्ता भवन्तीति भावः।

(२३०) कुशलजातं मङ्गलसमूहः। स्पृहणीयम् अभिलषणीयम्।

(२३१) सकोषं सधनभाण्डारं निवेदितवान् अर्पयामास। म्लायति म्लानिं प्राप्नोति धनोष्मणा धनदर्पेणेति यावत् मनस्विता प्रशस्तमनस्कता। खद्योतानामिव कीटमणिविशेषाणामिव अपरोपतापिनी न परान् उपतापयतीति तथोक्ता धनिनां तु तेजस्विता परोपतापिनी इति भावः। भूतेः सम्पदः एवमुक्तोऽन्यव्यवच्छेदकः तथाच न मादृशा इति भावः।

हाससहस्तात् अपहृतो महासिः अट्टहासनामा । सोऽयं भवद्भुजयोग्यो गृह्यताम् । इति अभिधाय अपहृतकर्पटाच्छादनात् परिजनात् आचकर्ष शरद्गगनमिव पिण्डतां नीतं ( ३३३ ) कालिन्दीप्रवाहमिव स्तम्भितजलं नन्दकजिगीषया कृष्णकोपितं कालियमिव कृपाणतां गतं लोकविनाशाय प्रकाशितधारासारं प्रलयकालमेघखण्डमिव नभस्तलात् पतितं ( ३३४ ) दृश्यमानविकटदन्तमण्डलं हासमिव हिंसायाः हरिबाहुदण्डमिव कृतदृढमुष्टिग्रहं सकलभुवनजीवितापहरणक्षमेण कालकूटेन एव निर्मितं ( ३३५ ) कृतान्तकोपानलतप्तेन इव अयसा घटितम् अतितीक्ष्णतया पवनस्पर्शेन अपि रुषेव क्वणन्तं ( ३३६ ) मणिप्रभाकुट्टिम-

---

(३३२) श्वेतकर्पटाहतं शुभ्रवसनाच्छादितम् । किमपि वस्त्विति शेषः । महासिः महान् तलवारः । अपहृतेति । अपहृतम् अपनीत कर्पटाच्छादनं येन तथोक्तात् परिजनात् अनुचरजनादित्यर्थः शरद्गगनमिव शरत्कालीनाकाशमिव पिण्डतां नीतं, घनत्वं प्रापितम् ।

( ३३३ ) स्तम्भितजलं स्थिरीकृततोयं कालिन्दीप्रवाहमिव यमुनास्रोत इव नन्दकजिगीषया नन्दकस्य विष्णोः खड्गविशेषस्य जिगीषया विजयेच्छया कृष्णेन कोपितं दमनादिति भावः कालियं तदाख्यं यमुनावासिनं नागविशेषम् इव लोकविनाशाय जगत्संहाराय प्रकाशितः व्यक्तीकृतः धारासारः धारासम्पातः येन तथोक्तम्।

( ३३४ ) दृश्यमानेति । दृश्यमानानि विकटानि दन्तमण्डलानि दशनराजयः यस्मिन् तथाभूतम् । कृतेति कृतः रचितः दृढः कठिनः मुष्टिग्रहः मुष्टिबन्धः यस्मिन् तम् ।

( ३३५ ) कृतान्तेति । कृतान्तस्य यमस्य कोपानलः क्रोधाग्निः तेन तप्तं दूषितं तेन अयसा लौहेन । रुषेव कोपेनेव क्वणन्तं रणन्तम्।

पतत्प्रतिबिम्बच्छद्मना आत्मानम् अपि द्विधेव पाटयन्तम् (२३७) अरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारं मुहुर्मुहुः (२३८) तड़िदुन्मेषतरलैः प्रभाचक्रच्छुरितैः जर्जरितातपं खण्डशश्छिन्दन्तमिव दिवसं कटाक्षमिव कालरात्रेः कर्णोत्पलमिव कालस्य (२३९) ओङ्कारमिव क्रौर्य्यस्य अलङ्कारम् अहङ्कारस्य कुलमित्रं कोपस्य देहं दर्पस्य सुसहायं साहसस्य अपत्यं मृत्योः आगमनमार्गं लक्ष्म्याः निर्गमनमार्गं कीर्त्तेः कृपाणम् ।

अवनिपतिस्तु तं गृहीत्वा करेण आयुधप्रीत्या (२४०) प्रतिमानिभेन आलिङ्गन्निव सुचिरं ददर्श सन्दिदेश च वक्तव्यो भगवान् (२४१) परद्रव्यग्रहणावज्ञादुर्विदग्धम् अपि हि मे मनो युष्मद्विषये न शक्नोति वचनव्यतिक्रमव्यभिचारम् चरितुमिति । परिव्राट् तु गृहीते तस्मिन् परितुष्टः

---

(२३६) मणीति । मणिसभाकुट्टिमेषु मणिमयसभातलेषु पतत् यत् प्रतिबिम्बं तस्य छलं तदेव छलं वा तेन पाटयन्तं खण्डयन्तम् ।

(२३७) अरीति । अरीणां शत्रूणां शिरांसि तेषां छेदेन लग्नाः संसक्ताः तैः कचैरिव केशैरिव करालितधारं करालिता व्याप्ता धारा यस्य तथोक्तम् ।

(२३८) तड़िदिति । तड़ितां विद्युताम् उन्मेषा विकासाः तद्वत् तरलानि चपलानि तैः । प्रभाचक्राणां किरणमण्डलानां छुरितैः छुरणैः उन्मेषैरित्यर्थः जर्जरितः आतपः सूर्य्यालोकः येन तथोक्तम् ।

(२३९) ओङ्कारं प्रणवं प्रारम्भमिति भावः क्रौर्य्यस्य निष्ठुरतायाः । कुलमित्रं कुलेन वंशपरम्परया मित्रं सुहृदम् । कृपाणम् असिम् ।

(२४०) प्रतिमानिभेन प्रतिबिम्बच्छलेन स्वस्येति भावः । भगवान् भैरवाचार्य्य इति भावः ।

स्वस्ति भवते साधयामि इत्युक्त्वा निरयासीत्। नृपश्च प्रकृत्या वीररसानुरागी तेन कृपाणेन अमन्यत करतलवर्त्तिनीं मेदिनीम्।

अथ व्रजत्सु दिवसेषु एकदा भैरवाचार्य्यो राजानम् (२४२) उपह्वरे सोपग्रहम् अवादीत् तात! स्वार्थालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानाम्। भवादृशाञ्च अर्थिदर्शनं महोत्सवः प्रयाचनम् आराधनम् अर्थग्रहणम् उपकारः। भूमिरसि सर्वलोकमनोरथानाम्। येन अभिधीयसे—श्रूयताम् भगवतो (२४३) महाकालहृदयनाम्नो महामन्त्रस्य (२४४) कृष्णस्रगम्बरानुलेपेन आकल्पेन कल्पकथितेन महाश्मशाने जपकोट्या (२४५) कृतपूर्व-

---

(२४१) परेति। परेषां द्रव्याणि धनानि तेषां ग्रहणं तस्मिन् अवज्ञा घृणा तया दुर्विदग्धं दुर्विनीतं हृतम् इति यावत्। वचनेति वचनस्य आज्ञावाक्यस्य व्यतिक्रमो लङ्घनमेव व्यभिचारः दोषः तम्।

(२४२) उपह्वरे एकान्ते सोपग्रहं साभ्यर्थनम्। स्वार्थालसाः स्वकार्य्यपराङ्मुखा इत्यर्थः। भव्यानां सज्जनानाम्। अर्थिदर्शनं भिक्षुकदर्शनं महोत्सवः भवादृशा अर्थिनो दृष्ट्वा महान्तम् आनन्दम् अनुभवन्ति इत्यर्थः। प्रयाचनं याच्ञा आराधनं पूजनम् अर्थिषु याचमानेषु आत्मानम् आराधितं मन्यन्ते इति भावः अर्थग्रहणम् उपकारः अर्थिषु अर्थान् गृह्णत्सु आत्मानम् उपकृतं मन्यन्ते इति भावः। भूमिः पात्रम्। अभिधीयसे कथ्यसे।

(२४३) महाकालेति। महाकालस्य हृदयं हृदयनिहितं वस्त्विति महाकालहृदयं तत् नाम यस्य तथोक्तस्य जपकोट्या इत्यनेनान्वयः कोटिसङ्ख्यकजपेन इत्यर्थः।

(२४४) कृष्णेति। कृष्णानि कृष्णवर्णानि स्रजः माल्यानि अम्बराणि वसनानि अनुलेपनानि गन्धद्रव्याणि यस्मिन् तथाभूतेन आकल्पेन परिच्छदेन कल्पकथितेन एतन्महामन्त्रविधानग्रन्थोक्तेन। भगवतः ईश्वरस्य हरस्य इत्यर्थः।

सेवोऽस्मि । (२४६) तस्य वेतालसाधनावसाना सिद्धिः । असहायैश्च सा दुरवापा । त्वञ्चालम् अस्मै कर्मणे । त्वयि च गृहीतभरे भविष्यन्ति अपरे सहायाः त्रयः । एकः स एव अस्माकं टीटिभनामा (२४७) बालमित्रं मस्करी यो भवन्तम् उपतिष्ठते । द्वितीयः स पातालस्वामी । अपरो मच्छिष्य एव कर्णतालनामा द्राविड़ः । यदि साधु मन्यसे ततो नीयताम् अयं दिङ्नागहस्तदीर्घो गृहीताट्टहासो निशामेकाम् एकदिङ्मुखार्गलतां बाहुः ।

इति कृतवचसि च तस्मिन् (२४८) अन्धकारं प्रविष्ट इव दृष्टदीपप्रकाशः (२४९) प्राप्तोपकारावकाशः प्रमुदितेन अन्तरात्मना नरेन्द्रः समभाषत भगवन् ! परम् अनुगृहीतोऽस्मि अनेन शिष्यजनसामान्येन निदेशेन कृतपरिग्रहमिव आत्मानम् अवैमोति । ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्य्यः चकार च सङ्केतम् आगामिन्याम् एव असित-

---

(२४५) कृतेति कृता पूर्वं सेवा येन तथाभूतः ।

(२४६) तस्य तादृशमन्त्रजपस्येत्यर्थः । वेतालेति । वेतालस्य साधनं वशीकरणम् अवसानं यस्याः तथाभूता सिद्धिः फलम् । वेतालसाधनमृते सा सिद्धिः न लभ्यते इति भावः । सा सिद्धिः असहायैः सहायशून्यैः । अलं समर्थः अलं व्यर्थसमर्थयोरित्यमरः । अस्मै कर्मणे मत्साहाय्यायेत्यर्थः गृहीतभरे भारं गृह्णतीत्यर्थः ।

(२४७) बालमित्रं शैशवसुहृत् मस्करी परिव्राट् । द्राविड़ः द्रविड़देशीयः । दिङ्नागहस्तदीर्घः ऐरावतशुण्डवदायतः । एकदिङ्मुखार्गलताम् एका दिक् तस्याः सुखस्य अर्गलताम् अवरोधकदण्डताम् । सशस्त्रः सन् एकस्यां रात्रौ मम वेतालसाधनविषये साहाय्यं कुरु इति भावः ।

(२४८) अन्धकारं प्रविष्ट इव तिमिरं गत इवेत्यर्थः दृष्टदीपप्रकाशः दृष्टदीपालोकः ।

(२४९) प्राप्तेति । प्राप्तः उपकारस्य भैरवाचार्य्यकृतोपकारपरिशोधार्थम्

पक्षचतुर्दशीक्षपायाम् इयत्यां वेलायाम् अमुष्मिन् महाश्मशानसमीपभाजि शून्यायतने मत्स्वद्वितीयेन आयुष्मता द्रष्टव्या वयमिति।

(२५०) अथ अतिक्रान्तेषु अहःसु प्राप्तायाञ्च कृष्णपक्षचतुर्दश्यां शैवेन विधिना दीक्षितः क्षितिपालो नियमवान् अभूत्। कृताधिवासश्च (२५१) सम्पादितगन्धपुष्पधूपमाल्यादिपूजं खड्गम् अट्टहासम् सहायम् अकरोत्। ततः परिणते दिवसे केन अपि कर्मसाधनाय कृतरुधिरबलिविधानासु इव लोहितायमानासु दिक्षु रुधिरबलिलम्पटासु च वेतालजिह्वासु इव लम्बमानासु च रविदीधितिषु नरेन्द्रानुरागेण इव (२५२) गृहीतापरदिशि स्वयमेव दिक्पालतां चिकीर्षति सवितरि यातुधानेषु इव वर्द्धमानासु तरुच्छायासु पातालतलवासिषु विज्ञाय दानवेषु इव उत्तिष्ठत्सु

---

इति भावः अवकाशः समयो येन तथाभूतः। निदेशेन आज्ञया। कृतेति। कृतः परिग्रहः ग्रहणम् आश्रयदानम् इति भावः यस्य तथोक्तमिव अवैमि वेद्मि मन्ये इत्यर्थः। नरेन्द्रव्याहृतेन राजवचनेन। सङ्केतम् इङ्गितम्। महाश्मशानसमीपभाजि महाश्मशानस्य समीपं भजते इति तथोक्ते महाश्मशाननिकटवर्त्तिनि इत्यर्थः शून्यायतने निर्जने स्थाने।

(२५०) अथेति। अतिक्रान्तेषु अतीतेषु अहःसु दिवसेषु शैवेन विधिना शिवोपासनाविधानेन दीक्षितः संयतः नियमवान् व्रतनिष्ठः। कृताधिवासेति कृतः अधिवासः गन्धादिना संस्कारः यस्य तम्। संस्कारो गन्धमाल्याद्यैः यः स्यात् तत् अधिवासनमित्युक्तः।

(२५१) सम्पादितेति। सम्पादिता गन्धपुष्पधूपमाल्यादिभिः पूजा यस्य तथोक्तम्। परिणते अवसानं गते। केनापि जनेनेति शेषः। कृतम् अनुष्ठितं रुधिरबलिविधानं यासां तथोक्तासु इव लोहितायमानासु सन्ध्यारागरञ्जितासु इति भावः रुधिरबलिषु लम्पटाः लुब्धाः तासु वेतालजिह्वासु इव भूतरसनासु इव रविदीधितिषु सूर्य्यकिरणेषु नरेन्द्रानुरागेण राजानुरक्त्या।

तमोमण्डलेषु नभसि पुञ्जीभवति रौद्रं कर्म्म दिदृक्षमाणे इव नक्षत्रगणे विगाढ़ायां शर्व्वर्य्यां (२५२) सुप्तजननिःशब्दे स्तिमिते निशोथे राजा (२५४) सान्तःपुरं परिजनं वञ्चयित्वा (२५५) वामकरस्फुरत्सरुः दक्षिणकरेण उत्खातं खड्गम् अट्टहासम् आदाय विसर्पता च खड्गप्रभापटलेन नीलांशुकपटेन इव दर्शनभयात् (२५६) अवगुण्ठितनिखिलगात्रयष्टिः अनादिष्टयापि अनुगम्यमानो राजलक्ष्म्या पृष्ठतः (२५७) परिमललग्नमधुकरवेणिव्याजेन केशेषु इव कर्मसिद्धिम् आकर्षन् एकाकी नगरात् निरगात् अगाच्च तम् देशम्।

---

(२५२) गृहीतेति। गृहीता अपरा पश्चिमा दिक् येन तथोक्ते। सवितरि सूर्य्ये। यातुधानीषु इव निशाचरीषु इव वर्द्धमानासु वृद्धिं गच्छन्तीषु लम्बमानासु इत्यर्थः पातालतलवासिषु रसातलाभ्यन्तरस्थितेषु। विघ्नाय कार्य्यव्याघाताय। तमोमण्डलेषु तिमिरनिचयेषु। नभसि आकाशे पुञ्जीभवति बहुलीभवति कृष्णपक्षरजन्यां नक्षत्राणि बहुलानि दृश्यन्ते इति भावः। रौद्रं दारुणं दिदृक्षमाणे इव द्रष्टुमिच्छति इव। विगाढ़ायां घनीभूतायां शर्व्वर्य्यां रजन्याम्।

(२५३) सुप्तेति। सुप्ता निद्रिता जना यस्मिन् तथोक्तः अतएव निःशब्दः शब्दरहितः तस्मिन्। स्तिमिते तूष्णीम्भूते इति भावः। निशीथे अर्द्धरात्रे अर्द्धरात्रनिशीथौ द्वावित्यमरः।

(२५४) सान्तःपुरम् अन्तःपुरम् अन्तःपुरवर्त्तिनी महिषी तत्सहितं परिजनं स्वजनम् इत्यर्थः वञ्चयित्वा प्रतार्य्य परित्यज्य इत्यर्थः।

(२५५) वामेति। वामे करे हस्ते स्फुरन् त्सरुः खड्गमुष्टिः यस्य तथाभूतः। उत्खातं निष्कोषितम् इत्यर्थः। विसर्पता प्रसरता खड्गप्रभापटलेन खड्गप्रभासमूहेन नीलांशुकपटेन इव नीलांशुकं नीलवसनमेव पटः तिरस्करिणी तेन इव।

(२५६) अवगुण्ठितेति। अवगुण्ठिता आच्छादिता निखिला समस्ता गात्रयष्टिः शरीरदण्डः येन यस्य वा तथोक्तः। अनादिष्टयापि अनुक्तयापि।

(२५८) अथ प्रत्युज्जग्मु: ते त्रयोऽपि (२५९) द्रौणि-कृपकृतवर्माण इव सौप्तिके सन्नद्धाः (२६०) स्नाता: स्रग्विणो गृहीतविकटवेशा: (२६१) कुसुमशेखरसञ्चारिभि: क्रियमाणमन्त्रशिखाबन्धा इव गुञ्जद्भि: षट्चरणै: उष्णीषपट्टकान् (२६२) ललाटमध्यघटितविकटस्वस्तिकाग्रन्थीन् महामुद्राबन्धान् इव धारयन्तो मूर्द्धभि: (२६३)एक-श्रवण-विवर-विततविमलदन्तपत्रप्रभालेपधवलित-

---

(२५७) परिमलेति। परिमलेन गात्रसौरभेण लग्नानां सक्तानां मधुकराणां भ्रमराणां वेणि: राजि: तस्या: सैव वा व्याज: छलं तेन। कार्य्यसिद्धिं कार्य्यसिद्धिम्। एकाकी असहाय:। देशं स्थानम्।

(२५८) अथेत्यादि। प्रत्युज्जग्मु: प्रत्युद्गतवन्त: राजानं दृष्ट्वा तत्सम्मानार्थं मुत्तस्थु: इत्यर्थ:।

(२५९) द्रौणीति। द्रोणस्यापत्यं द्रौणि: अश्वत्थामा, कृप: कृपाचार्य्य:, कृतवर्म्मा यादववीरविशेष: ते इव। सौप्तिके सुप्तेषु भवं सौप्तिकं तस्मिन् महाभारतीयसौप्तिकाख्ये पर्वणि पुरा दुर्य्योधने भग्नोरौ समरपतिते अश्वत्थामादयस्त्रय: प्रभो: प्रीतिसम्पादनाय यौधिष्ठिरे शिविरे धृष्टद्युम्नाधिष्ठिते सुप्तेषु सर्व्वेषु अवशिष्टेषु सैनिकवीरेषु कथमपि प्रविश्य सर्वाणि सैनिकानि व्यनाशयन्निति भारती वार्त्ता।

(२६०) स्नाता: कृतस्नाना: स्रग्विण: मालाधारिण:।

(२६१) कुसुमेति। कुसुमशेखरेषु शिरोभूषणभूतपुष्पमालासु इत्यर्थ: सञ्चरन्तीति तै:। षट्चरणै: मधुकरै: क्रियमाणा: मन्त्रेण शिखाबन्धा: कायबन्धा: प्रसिद्धा: येषां ते इव। उष्णीषपट्टकान् शीर्षावरणकपटान्।

(२६२) ललाटेति। ललाटस्य भालस्य मध्ये घटित: रचित: विकट: दृढ: स्वस्तिकाग्रन्थि: स्वस्ति शुभं तस्मै हितं स्वस्तिकं स्वस्तिका च तस्या ग्रन्थिर्बन्धविशेष: येषु तान्। महामुद्राबन्धानिव महान्त: मुद्राबन्धा: वीराचारानुष्ठेयबन्धनविशेषा: तानिव। मूर्द्धभि: शिरोभि:।

कपोलैः मुखैः आपिबन्त इव (२६४) निशाचरापचय-चिकीर्षया शार्वरम् अन्धकारम् (२६५) इतरकर्णावलम्बिनां रत्नकुण्डलानाम् अच्छाच्छया रुचा गोरोचनयेव मन्त्रपरि-जप्तया समालब्धाः स्वप्रतिबिम्बगर्भान् कर्मसिद्धये (२६६) दत्तपुरुषोपहारान् इव उल्लासयन्तो निशितान् निस्त्रिंशान् (२६७) निशितनिस्त्रिंशांशुसन्तानसीमन्तिततिमिराम् (२६८) आत्मीयदिग्भागसंरक्षणाय त्रिधेव त्रियामां पाटयन्तः सार्द्रचन्द्रैः (२६९) कलधौतबुद्बुदावलितरलतारागणैः

---

(२६३) एकेति। एकस्मिन् श्रवणविवरे श्रोत्ररन्ध्रे वितता विसृता विमलस्य विशदस्य दन्तपत्रस्य गजदन्तनिर्मितपत्राकारस्य कर्णभूषणविशेषस्य इत्यर्थः प्रभालिपैः धवलिताः सितीकृताः कपोला येषां तैः। आपिबन्त इव ग्रसन्त इव।

(२६४) निशाचरेति। निशाचराणां राक्षसानाम् अपचयचिकीर्षा अप-कारेच्छा हानिकरणेच्छा तया। शार्वरं शर्वरी रात्रिः तत्र भवः शार्वरः तम्। निशा-चराः निशासु अन्धकारे एव प्रभवन्ति अन्धकारापगमे तेषां प्रभावाभावेन तदप-कारस्य सौकर्य्यादिति भावः।

(२६५) इतरकर्णावलम्बिनाम् अपरकर्णलम्बमानानाम्। अच्छाच्छया अति-निर्मलया रुचा प्रभया गोरोचनयेव गोरोचना द्रव्यभेदः तया। पीतप्रभयेति भावः। मन्त्रपरिजप्तया मन्त्रेण परिजप्ता विशोधिता तया। समालब्धाः अनुलिप्ताः। स्वप्रति-बिम्बगर्भान् स्वस्य प्रतिबिम्बं गर्भे अन्तरे येषां तान्। कर्म्मसिद्धये कार्य्यसिद्ध्यर्थम्।

(२६६) दत्तेति। दत्तः पुरुषोपहारः नरबलिः येभ्यः तानिव। उल्लासयन्तः सञ्चालयन्तः निस्त्रिंशान् खड्गान्।

(२६७) निशितनिस्त्रिंशेति। निशितनिस्त्रिंशानां शाणितखड्गानाम् अंशुस-न्तानैः प्रभानिवहैः सीमन्तितानि विभक्तानि इति यावत् तिमिराणि तमांसि यस्याः ताम्।

(२६८) आत्मीयेति। आत्मीयः स्वीयः दिशां भागः तस्य संरक्षणं सन्दर्शनम्

निशाया इव (२७०) परुषासिधारानिकृत्तैः खण्डैः गृहीतैः चर्मफलकैः अकाण्डशर्वरीम् अपरां घटयन्तः (२७१) काञ्चनशृङ्खलाकलापनियमितनिविड़विनिष्प्रवाणयः बद्धासिधेनवः टोटिभकर्णतालपातालस्वामिनो निवेदितवन्तश्च आत्मानम्।

अवनिपतिस्तु कोऽत्र क इति त्रीन् अपृच्छत्। आचचक्षिरे च स्वं स्वं नाम त्रयोऽपि ते तैरेव च अनुगम्यमानो जगाम तां (२७२) बलिदीपालोकजर्जरितगुग्गुलुधूपधूमग्रस्यमानदिग्भागतया विक्षिप्यमाणरक्षासर्षपाईदग्धान्धकारपलायमाननिशामिव समुपकल्पितसर्वोपकरणां निःशब्दाञ्च गम्भीराञ्च भीषणाञ्च साधनभूमिम्।

---

इति भावः तथैः। त्रियामां रजनीं पाटयन्तः खण्डयन्तः सार्द्धचन्द्रैः अर्द्धचन्द्रालङ्कृतैः इत्यर्थः।

(२६९) कलधौतेति। कलधौतं रौप्यं कलधौतं रौप्यहेम्नोः इति अमरः तस्य बुद्बुदावलिः जलस्फोटा बुद्बुदाः तदाकारविन्दुविशेषाः इत्यर्थः तेषामावलिः सङ्घः तद्वत् तरलः स्फुरन् इति भावः तारागणो येषु तैः।

(२७०) परुषेति। परुषाभिः निशिताभिः असिधाराभिः निकृत्ताः छिन्नाः तैः। चर्मफलकैः ढालेतिप्रसिद्धैः अकाण्डशर्वरीम् असमयरजनीं घटयन्तः जनयन्तः।

(२७१) काञ्चनेति। काञ्चनशृङ्खलाकलापेन स्वर्णमेखलाहारेण नियमितं निबद्धं निविड़ं घनं निष्प्रवाणि नवं वस्त्रं यैः ते। बद्धेति। बद्धा गृहीता असिधेनुः छुरिका यैः तथोक्ताः।

(२७२) बलिदीपेति। बलिदीपस्य पूजाप्रदीपस्य आलोकेन प्रभया जर्जरितानां गुग्गुलुधूपानां धूमैः ग्रस्यमानः छाद्यमानः दिग्भागो यस्याः तस्या भावः तत्ता तया। विक्षिप्यमाणेति। विक्षिप्यमाणैः प्रसार्य्यमाणैः विघ्नापनयनार्थमिति भावः रक्षासर्षपैः रक्षार्थं विघ्नेभ्यो विधानरक्षणार्थं सर्षपाः गौरसिद्धार्थाः

तस्याश्च (२७२) कुमुदधूलिधवलेन भस्मना लिखितस्य महतो मण्डलस्य मध्ये स्थितं (२७४) दीप्ततरतेजःप्रसरं (२७५) पृथुपरिवेशपरिक्षिप्तमिव शरत्सवितारं (२७६) मथ्यमानक्षीरोदावर्त्तमध्यवर्त्तिनम् इव मन्दरं (२७७) रक्तचन्दनानुलेपिनो (२७८) रक्तस्रगम्बराभरणस्य उत्तानशयस्य शवस्य उरसि उपविश्य (२७९) जातजातवेदसि मुखकुहरे (२८०) प्रारब्धाग्निकार्य्यम् (२८१) कृष्णोष्णीषं कृष्णाङ्ग-

---

मन्त्रपूता इति भावः तैः अर्द्धदग्धम् अन्धकारं यस्याः तथाभूता अतएव पलायमाना निशा यस्यां तथोक्ताम् समुपकल्पितानि समायोजितानि सर्वाणि उपकरणानि साधनद्रव्याणि यस्यां ताम्। साधनभूमिं मन्त्रसाधनक्षेत्रम्।

(२७२) कुमुदेति। कुमुदानाम् उत्पलानां धूलिः परागः तद्वत् धवलः तेन। लिखितस्य रचितस्य।

(२७४) दीप्तेति। दीप्ततरः तेजसां प्रसरः यस्य तथोक्तम्।

(२७५) पृथ्विति। पृथुना विशालेन परिवेशेन परिधिना मण्डलविशेषेण परिवेशस्तु परिधिरुपसूर्य्यकमण्डले इत्यमरः परिक्षिप्तः वेष्टितः तमिव शरत्सवितारं शारदं सूर्य्यम्।

(२७६) मथ्यमानेति। मथ्यमानस्य विलोड्यमानस्य क्षीरोदस्य क्षीरसागरस्य आवर्त्तमध्ये वर्त्तते इति तथोक्तं मन्दरं मन्दराद्रिम्।

(२७७) रक्तेति। रक्तचन्दनम् एव अनुलेपः रक्तचन्दनानुलेपः स विद्यतेऽस्येति तथोक्तस्य रक्तचन्दनानुलिप्तस्येत्यर्थः।

(२७८) रक्तेति। रक्तं रक्तवर्णं स्रगम्बरं माल्यवसनम् आभरणं यस्य तथाभूतस्य उत्तानशयस्य उत्तानशायिनः शवस्य मृतदेहस्य।

(२७९) जातेति। जातः उत्पन्नः उत्थित इत्यर्थः मन्त्रबलेनेति भावः जातवेदाः अग्निर्यस्मात् तथाभूते मुखकुहरे वदनगह्वरे।

(२८०) प्रारब्धेति। प्रारब्धम् अग्निकार्य्यं होमः येन तथोक्तम्।

रागं कृष्णप्रतिसरं कृष्णवाससं (३८२) कृष्णतिलाहुतिनिभेन विद्याधरत्वतृष्णाया (३८३) मानुषनिर्माणकारणकालुष्यपरमाणूनिव चयम् उपनयन्तम् आहुतिदानपर्य्यस्ताभिः प्रेतमुखस्पर्शदूषितं प्रक्षालयन्तमिव आशुशुक्षणिं करनखदीधितिभिः (३८४) धूमालोहितेन चक्षुषा क्षतजाहुतिमिव हुतभुजि पातयन्तम् (३८५) ईषद्विवृताधरपुटप्रकटितसितदशनशिखरेण दृश्यमानमूर्त्तमन्त्राक्षरपङ्क्तिनेव मुखेन किमपि जपन्तं (३८६) होमश्रमस्वेदसलिलप्रतिविम्बिताभिः आसन्नदीपिकाभिः दहन्तमिव सिद्धये सर्वावयवान्

---

(३८१) कृष्णं कृष्णवर्णम् उष्णीषं शिरोवेष्टनवसनं यस्य तथाभूतं कृष्णाङ्गरागं कृष्णवर्णविलेपनं कृष्णप्रतिसरं कृष्णवर्णहस्तसूत्रं कृष्णवाससं कृष्णवसनपरिधायिनम्।

(३८२) कृष्णेति। कृष्णतिलानाम् आहुतिनिभेन आहुतिच्छलेन विद्याधरत्वतृष्णाया विद्यां धरतीति विद्याधरः देवयोनिविशेषः तस्य भावः तत्त्वं तस्य तृष्णा स्पृहा तया आत्मनो विद्याधरत्वलाभेच्छया इत्यर्थः।

(३८३) मानुषेति। मानुषस्य स्वस्येति भावः निर्माणं सृष्टिः तस्य कारणानि उपादानसामग्र्यः कालुष्यपरमाणवः मालिन्यपरमाणवः। तानिव चयम् राशिम् उपनयन्तं प्रापयन्तम् आहुतिदाने पर्य्यस्ताः पतिताः ताभिः करनखदीधितिभिः हस्तनखमयूखैः प्रेतस्य शवस्य मुखस्पर्शेन दूषितम् आशुशुक्षणिम् अग्निं प्रक्षालयन्तमिव।

(३८४) धूमेति। धूमेन आलोहितम् आरक्तं तेन। चक्षुषा नेत्रेण। हुतभुजि अग्नौ क्षतजाहुतिमिव रक्ताहुतिमिव पातयन्तं क्षिपन्तम्।

(३८५) ईषदिति। ईषद्विवृतेन व्यात्तेन अधरपुटेन प्रकटितानि प्रकाशितानि सितानां स्वच्छानां दशनानां दन्तानां शिखराणि अग्राणि यस्य तथोक्तेन। अतएव दृश्यमाना मूर्त्ता मूर्त्तिमती मन्त्राणां प्रणवादीनाम् अक्षरपङ्क्तिः वर्णराजिः यत्र तादृशेन।

(३८६) होमेति। होमेन यः श्रमः श्रान्तिः तेन स्वेदसलिलानि घर्मोदकानि तेषु प्रतिविम्बिताः प्रतिफलिताः ताभिः। सिद्धये विद्याधरत्वलाभाय इत्यर्थः।

(२८७) अंसावलम्बिना बहुगुणेन विद्याधरराज्येनेव ब्रह्मसूत्रेण परिगृहीतं महाभैरवं भैरवाचार्य्यम् अपश्यत् उपसृत्य च अकरोत् नमस्कारम् अभिनन्दितश्च तेन स्वव्यापारम् अन्वतिष्ठत् ।

अत्रान्तरे पातालस्वामी (२८८) शातक्रतवीम् आशाम् अङ्गीचकार कर्णतालः कौवेरीम् परिव्राट् ( २८९ ) प्राचेतसीम् । राजा तु ( २९० ) त्रैशङ्कवेन ज्योतिषा अङ्कितां ककुभम् अलङ्कृतवान् ।

(२९१) एवञ्च अवस्थितेषु प्रतिदिशं दिक्पालेषु दिक्पालभुजपञ्जरप्रविष्टे (२९२) साधयति विस्रब्धं कर्म भैरवं भैरवा-

---

(२८७) अंसावलम्बिना स्कन्धलम्बिना बहुगुणेन बहुतन्तुना ब्रह्मसूत्रेण यज्ञोपवीतेन । स्वव्यापारं स्वकार्य्यं भैरवाचार्य्योक्तमिति शेषः ।

(२८८) शातक्रतवीं शतक्रतुरिन्द्रः तस्य इयं शातक्रतवी तां प्राचीमित्यर्थः आशां दिशं दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः । अङ्गीचकार अधितष्ठौ । कौवेरीं कुवेरसम्बन्धिनीं कुवेरपालितां वा उदीचीमित्यर्थः ।

(२८९) प्राचेतसीं प्रचेतसा वरुणेन अधिष्ठिता प्राचेतसी तां प्रतीचीमित्यर्थः ।

(२९०) त्रैशङ्कवेन त्रिशङ्कुर्नाम राजा तस्य इदं त्रैशङ्कवं तेन । ज्योतिषा तेजसा अङ्किता चिह्निता तां दक्षिणामिति यावत् । ककुभं दिशम् । पुरा त्रिशङ्कुर्नाम राजा सशरीरी दिवं जिगमिषुः स्वाय गुरुं वशिष्ठमन्वरुणत् । सतु नैतत् त्वया अधिक्रियते इत्यवज्ञातवान् । ततो गुरुपुत्रैश्च अवज्ञातः गुरुद्वेषिणं विश्वामित्रं शरणमगात् । तेन च कृतयज्ञः सशरीरी दिवं गच्छन् देवराजेन गुरुद्वेषी इति स्वर्गात् निराकृतः पतन् विश्वामित्रम् उच्चैः जगाद मुने ! त्रायस्व मां नरके पतन्तम् इति विश्वामित्रश्च तत्रैव अन्तरीक्षे दक्षिणदिग्भागवर्त्तिनि तिष्ठ इति ततश्च असौ तथैव अद्यापि स्थितः तच्च स्थानं त्रिशङ्कुस्वर्ग इति ख्यायते इति पुराणवार्त्ता अत्र अनुसन्धेया ।

(२९१) एवमित्यादि । दिक्पालेषु दिशां रक्षकेषु पातालस्वामिप्रभृतिषु

चार्य्ये (३९३) अतिचिरं कृतकोलाहलेषु निष्फलप्रयत्नेषु प्रत्यूहकारिषु श्रान्तेषु कौणपेषु गलति अर्द्धरात्रसमये मण्डलस्य (३९४) नातिदवीयसी उत्तरेण अकस्मात् (३९५) प्रलयमहावराहदंष्ट्राविवरमिव दर्शयन्ती मही अदीर्य्यत। सहसैव च तस्मात् विवरात् आशावारणोत्क्षिप्त इव आलानलोहस्तम्भः (३९६) महावराहपीवरस्कन्धपीठो नरकासुर इव भुवो गर्भात् उद्भूतः बलिदानव इव भित्त्वोत्थितः पातालम् इन्द्रनीलप्रासाद इव (३९७) उपरिज्वलितरत्नप्रदीपः (३९८) स्निग्धनीलघननिविडकुटिलकुन्तलकान्तमौलिः (३९९) उन्मीलन्मालतीमुण्डमालः

---

चतुर्षु इत्यर्थः। दिक्पालेति दिक्पालानाम् एषां पातालस्वामिप्रभृतीनां भुजा बाहव एव पञ्जरं तस्मिन् प्रविष्टः तस्मिन् अकुतोभये इति भावः।

(३९२) विस्रब्धं निःशङ्कं विश्वस्तं वा यथा तथा साधयति अनुतिष्ठति।

(३९३) अतिचिरं अतिपूर्वं प्रत्यूहकारिषु विघ्नकारिषु श्रान्तेषु शान्तिं प्राप्तेषु कौणपेषु राक्षसेषु राक्षसः कौणपः क्रव्यादित्यमरः। गलति अतिक्रामति।

(३९४) नातिदवीयसी नातिदूरवर्त्तिनी इत्यर्थः उत्तरेण उत्तरस्यां दिशि।

(३९५) प्रलयेति। प्रलये प्रलयकाले महावराहः आदिवराहः पृथिव्युद्धरणार्थं नारायणावतारविशेषः तस्य दंष्ट्रा दशनः तस्या विवरं रन्ध्रम् इव दर्शयन्ती प्रकटयन्ती। विवरात् रन्ध्रात् पुरुषः उज्जगाम इति उत्तरेण सम्बन्धः तमेव विशिनष्टि आशेत्यादिभिः। आशावारणः दिग्गजः पातालस्थ इति भावः तेन उत्क्षिप्त इव उपरिक्षिप्त इव आलानलोहस्तम्भः आलानं गजबन्धनं तदर्थं लोहस्तम्भः लोहनिर्मितः विपुलः कीलविशेषः इत्यर्थः।

(३९६) महावराहेति। महावराहस्य इव पीवरं स्कन्धपीठं यस्य तथोक्तः। नरकासुर इव भूमिसुत इति भावः। इन्द्रनीलप्रासाद इव नीलकान्तमणिनिर्मितहर्म्यम् इव।

(३९७) उपरीति। उपरि ज्वलितौ रत्नप्रदीपौ नेत्रे इति भावः यस्य तथाभूतः।

गद्गदतया स्वरस्य स्वभावपाटलतया च चक्षुषः क्षीव इव यौवनमदेन (४००) वल्गद्गलदामकः (४०१) करसम्पुट-मृदितया मृदा (४०२) दिङ्नागकुम्भाभौ अंसकूटौ पुनः पुनः पङ्कयन् (४०३) सान्द्रचन्दनपङ्कदत्तैः अव्यवस्था-स्थासकैः (४०४) अतिसितजलधरशकलशारित इव शार-दाकाशैकदेशः (४०५) केतकीगर्भपत्रपाण्डुरस्य चण्डा-तकस्य उपरि क्षामतरीकृतकुक्षिः कक्ष्याबन्धं विधाय विलासविक्षिप्तेन (४०६) धवलव्यायामफालीपटान्तेन

---

(३९८) स्निग्धेति। स्निग्धैः नीलैः घनैः अविरलैः निविड़ैः सङ्कीर्णैः कुटिलैः भङ्गिमद्भिः कुन्तलैः केशैः कान्तः मनोज्ञः मौलिः किरीटं यस्य तथोक्तः।

(३९९) उन्मीलदिति। उन्मीलन्ती स्फुरन्ती मालतीमुण्डमाला मालती-पुष्पहारः यत्र तथोक्तः। गद्गदतया अर्द्धस्फुटतया स्वभावपाटलतया सहजरक्ततया क्षीव इव मत्त इव।

(४००) वल्गदिति। वल्गत् चलत् गले कण्ठे दाम माल्यं यस्य तथाभूतः।

(४०१) करेति। करयोः सम्पुटेन योगेन मृदिता दलिता तया। मृदा मृत्तिकया।

(४०२) दिङ्नागकुम्भाभौ ऐरावतकुम्भनिभौ अंसकूटौ स्कन्धशृङ्गे पङ्कयन् कर्दमयन् मलिनयन् इत्यर्थः।

(४०३) सान्द्रेति। सान्द्रेण घनेन चन्दनपङ्केन चन्दनरसेन दत्तानि विर-चितानि तैः अव्यवस्थास्थासकैः अव्यवस्थया अयथाव्यवस्थया इत्यर्थः। स्थासकाः चन्द्रकाः बुद्बुदाकारा विन्दवः इत्यर्थः तैः।

(४०४) अतीति। अतिसितेन अतिस्वच्छेन जलधराणां मेघानां शकलेन खण्डेन शारित इव चित्रित इव शारदाकाशैकदेशः शरत्कालिकगगनैकभागः।

(४०५) केतकीति। केतक्या गर्भपत्रम् अभ्यन्तरच्छदं तद्वत् पाण्डुरं धवलं तस्य चण्डातकस्य परिधानवसनभेदस्य। क्षामतरीकृतकुक्षिः अतिशयेन क्षीणता नीतोदरः। कक्ष्याबन्धं कटिबन्धम्। विलासविक्षिप्तेन लीलानिक्षिप्तेन।

धरणितलगतेन धार्य्यमाण इव पृष्ठतः शेषेण (४०७) स्थिरस्थूलोरुदण्डः भूमिभङ्गभयेन एव मन्थराणि स्थापयन् पदानि (४०८) निर्भरगर्वगुरु कथम् अपि शैलम् इव गात्रम् उद्वहन् दर्पेण स्वेन मुहुर्मुहुः उरसि (४०९) द्विगुणिते दोष्णि वामे तिर्य्यक् उत्क्षिप्ते च दक्षिणे जङ्घाकाण्डे (४१०) कुण्डलिते चण्डास्फोटनटाङ्कारैः (४११) कर्मविघ्ननिर्घातानिव पातयन् (४१२) एकेन्द्रियविकलमिव जीवलोकं कुर्वन् (४१३) कुवलयदलश्यामलः पुरुषः उज्जगाम जगाद च विहस्य (४१४) नरसिंहनादनिर्घोषघोरया भारत्या भो (४१५) विद्याधरोऽस्त्राकामुक ! किम् अयं

---

(४०६) धवलेति। धवलः शुभ्रः फालीपटान्तः कटिबन्धवस्त्रान्तः तेन। धार्य्यमाण इव रक्ष्यमाण इव। शेषेण अनन्तनागेन।

(४०७) स्थिरेति। स्थिरौ दृढौ स्थूलौ ऊरुदण्डौ यस्य तथोक्तः। मन्थराणि मन्दसञ्चाराणीत्यर्थः। स्थापयन् अर्पयन्।

(४०८) निर्भरेति। निर्भरेण निरतिशयेन गर्वेण अहङ्कारेण गुरु भारवदित्यर्थः।

(४०९) द्विगुणिते विरचिते दोष्णि भुजे। जङ्घाकाण्डे जङ्घारूपे स्कन्धे।

(४१०) कुण्डलिते इत्यादि। कुण्डलीकृते कुञ्चिते इत्यर्थः चण्ड उत्कटं यत् आस्फोटनम् आघातः तेन ये टाङ्काराः शब्दविशेषाः तैः।

(४११) कर्मेति। कर्मणि भैरवाचार्य्यस्य साधनकार्य्ये विघ्नाय अन्तरायार्थमित्यर्थः निर्घाताः आकाशपतितवायुजनिताः शब्दविशेषाः तानिव। तथा चोक्तं यदन्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भव इति।

(४१२) एकेन्द्रियविकलमिव एकेन इन्द्रियेण श्रवणेनेति भावः विकलमिव बधिरमिवेत्यर्थः।

(४१३) कुवलयदलश्यामलः नीलोत्पलदलश्यामः इत्यर्थः।

विद्यावलेपः सहायमदो वा यत् अस्मै जनाय अविधाय (४१६) बलिं बालिश इव सिद्धिम् अभिलषसि। का ते दुर्बुद्धिरियम्? एतावता कालेन क्षेत्राधिपतिः अस्य मन्नाम्ना एव लब्धव्यपदेशस्य देशस्य नागतस्ते (४१७) श्रोत्रोपकण्ठं श्रीकण्ठनामा नागोऽहम्?। अनिच्छति मयि का शक्तिः (४१८) ग्रहगणस्य अपि गन्तुं गगने?। भूनाथोऽपि अयम् (४१९) अनाथः तपस्वी यस्तु त्वादृशैः (४२०) शैवापसदैः उपकरणीक्रियते। सहस्व इदानीं सह अमुना दुर्नरेन्द्रेण दुर्नयस्य फलम्। इति अभिधाय च निष्ठुरैः (४२१) प्रकोष्ठप्रहारैः त्रीनपि टीटिभप्रभृतीन्

---

(४१४) नरेति। नरसिंहावतारः नृसिंहावतारः तस्य निर्घोषः निनादः तद्वत् घोरा गम्भीरा तया। भारत्या वाचा।

(४१५) विद्याधर्य्यां श्रद्धया रागेण कामुकः अभिलाषी तत्सम्बुद्धौ। विद्यावलेपः विद्यागर्वं सहायमदः सहकारिसद्भावजनितोऽद्धत्यम्। अस्मै जनायेति आत्मनिर्देशः मह्यमित्यर्थः।

(४१६) बलिं पूजाम् अविधाय अकृत्वा बालिश इव मूर्ख इव। मन्नाम्नैव मदीयेन नाम्नैव लब्धव्यपदेशस्य प्राप्ताभिधानस्य अस्य देशस्य श्रीकण्ठाख्यजनपदस्य इत्यर्थः क्षेत्राधिपतिः क्षेत्रस्वामी भूस्वामी इत्यर्थः।

(४१७) श्रोत्रोपकण्ठं श्रुतिसमीपम्। श्रीकण्ठनामा नागः एतद्देशस्वामी त्वया एतावतापि कालेन न श्रुत इत्यर्थः।

(४१८) ग्रहगणस्यापि ग्रहा रव्यादयः तेषां गणः तस्य। भूनाथः भूपालः अयं पुष्पभूतिः इत्यर्थः।

(४१९) अनाथः अस्वामिकः यद्यस्य कोऽपि स्वामी अभविष्यत् तदा एनमस्माद्व्यापारात् न्यवारयिष्यदिति भावः। तपस्वी वराकः अधूर्तः यदयं धूर्तेन अनेन प्रतारित इति भावः।

अभिमुखं प्रधावितान् सशरीरावरणकृपाणान् अपातयत्।

(४२२) अथ अपूर्वाधिक्षेपश्रवणात् अशस्त्रव्रणैः अपि अमर्षस्वेदच्छलेन (४२३) अनेकसमरपीतम् असिधाराजलमिव वमद्भिः अवयवैरपि रोमाञ्चनिभेन मुक्तशरशतशल्यनिकरभरलघुमिव आत्मानं रणाय कुर्वद्भिः (४२४) अट्टहासेन अपि प्रतिबिम्बिततारागणेन (४२५) स्पष्टदृष्टधवलदन्तमालम् अवज्ञया हसतेव कथ्यमानसत्त्वावष्टम्भः (४२६) परिकरबन्धविभ्रमभ्रमितकरनखकिरण-

---

(४२०) शैवापसदैः शैवाधमैः। उपकरणीक्रियते प्रलोभ्य सहायीक्रियते इत्यर्थः। दुर्नरेन्द्रेण कुराज्ञा। दुर्नयस्य दुश्चेष्टितस्य।

(४२१) प्रकोष्ठप्रहारैः प्रकोष्ठस्य हस्तावयवविशेषस्य प्रहारैः चपेटाघातैः इति वार्थः। सशरीरेति। शरीरावरणं वर्म कृपाणः खड्गः ताभ्यां सह वर्तमानान् असिचर्मसहितान् इत्यर्थः।

(४२२) अथेति। अपूर्वेति अपूर्वोऽभिनवः ततपूर्वः इत्यर्थः योऽधिक्षेपः निर्भर्त्सनं तस्य श्रवणम् आकर्णनं तस्मात् अशस्त्रव्रणैः न शस्त्रेण व्रणं क्षतं येषां तैः शस्त्राघातमलभमानैः इत्यर्थः। अमर्षस्वेदच्छलेन अमर्षेण क्रोधेन यः स्वेदः तस्य छलेन।

(४२३) अनेकेति। अनेकेषु समरेषु सङ्ग्रामेषु पीतम् आस्वादितम् असिधाराजलमिव खड्गशत्रुप्रयुक्तखड्गधाराजलमिव वमद्भिः उद्गिरद्भिः अवयवैः अङ्गैः रोमाञ्चनिभेन लोमाञ्चच्छलेन मुक्तः निःसारितः शरशतानि शल्यनिकराश्च एव भरो येन तथाभूतः अतएव लघुः तमिव रणाय रणकर्मणे।

(४२४) अट्टहासेन तदाख्येन असिना प्रतिबिम्बितः प्रतिफलितः तारागणः नक्षत्रवृन्दं यस्मिन् तेन।

(४२५) स्पष्टेति। स्पष्टं स्फुटं दृष्टा धवला दन्तमाला दशनश्रेणी यत्र तद् यथा तथा हसतेव हासं कुर्वतेव। कथ्यमानेति कथ्यमानः अभिधीयमानः प्रकाश्यमान इति यावत् सत्त्वस्य उत्साहस्य बलस्य वा अवष्टम्भः वेगः यस्य तथाभूतः।

चक्रवालेन व्यपगमनाशङ्कया (४२७) नागदमनमन्त्रमण्डलबन्धेनेव रुन्धन् दशदिशः नरनाथः सावज्ञम् अवादीत् अरे (४२८) काकोदर! काक! मयि स्थिते राजहंसे न जिह्रेषि बलिं याचितुम्?। अमीभिः किं वा परुषभाषितैः?। भुजे वीर्य्यं निवसति न वाचि। प्रतिपद्यस्व शस्त्रम्। अयं न भवसि। (४२९) अगृहीतहेतिषु अशिक्षितो मे भुजः प्रहर्त्तुमिति। नागस्तु अनादृततरम् एहि किं शस्त्रेण भुजाभ्यामेव भनज्मि भवतो दर्पम्। इति अभिधाय आस्फोटयामास। नरपतिरपि (४३०) निरायुधम् आयुधेन युधि लज्जमानो जेतुम् उत्सृज्य सचर्मफलकम् अट्टहासम् असिम् अर्द्धोरुकस्य उपरि बबन्ध बाहुयुद्धाय कक्ष्याम्। युयुधाते च (४३१) निर्दयास्फोटनस्फुटित-

---

(४२६) परिकरेति। परिकरबन्धः कटिबन्धः तस्य विभ्रमेण चेष्टया व्यापारेणेत्यर्थः भ्रमितयोः चलितयोः करयोः हस्तयोः नखकिरणानां चक्रवालमण्डलं तेन। व्यपगमनाशङ्कया शत्रोः पलायनाशङ्कयेत्यर्थः।

(४२७) नागेति। नागानां सर्पाणां दमनमन्त्रः शासनमन्त्रः गारुड़ादिः इत्यर्थः यो मण्डलबन्धः मण्डलाकारबन्धनविशेषः यत्र स्थितो नागः न पलायितुं प्रभवतीति भावः तेनेव रुन्धन् आवृण्वन् सावज्ञं सहेलम्।

(४२८) काकोदर भुजङ्ग! काकस्य वायसस्य उदरं तत्सम्बुद्धौ च। राजहंसे राजश्रेष्ठे मराले च बलिं पूजां पूजाविधानोक्तं तण्डुलादिकञ्च। काकानां बलिभोजनं प्रसिद्धम्। जिह्रेषि लज्जसे। परुषभाषितैः कटूक्तिभिः। प्रतिपद्यस्व गृहाण। भवसि जीवसि।

(४२९) अगृहीतहेतिषु अगृहीतशस्त्रेषु अशिक्षितः अज्ञातः। अनादृततरं सावज्ञातिशयमित्यर्थः एहि आगच्छ आस्फोटयामास आस्फालयामास बाहो कराघातम् अकार्षीदित्यर्थः।

भुजरुधिरशीकरसिच्यमानौ शिलास्तम्भैरिव पतद्भिः बाहुदण्डैः शब्दमयमिव कुर्वाणौ भुवनं तौ। नचिराच्च पातयामास भूतले भुजङ्गं भूपतिः। जग्राह च केशेषु (४३२) उच्चखान च शिरश्छेत्तुम् अट्टहासम् अपश्यच्च वैकक्षक-मालान्तरेण अस्य यज्ञोपवीतम्। उपसंहृतशस्त्रव्यापारश्च अवादीत् दुर्विनीत! अस्ति ते (४३३) दुर्नयनिर्वाहबीजम् इदं यतो विश्रब्धमिव आचरसि चापलानि। इत्युक्त्वा उत्ससर्ज तम्। अनन्तरञ्च सहसैव अतिबहलां ज्योत्स्नां ददर्श शरदि विकसतां कमलवनानामिव च घ्राणावलेपि-नम् आमोदम् अजिघ्रत् झटिति च नूपुरशब्दम् अशृणोत् व्यापारयामास च शब्दानुसारेण दृष्टिम्।

(४३४) अथ करतलस्थितस्य अट्टहासस्य मध्ये तड़ित-मिव नीलजलधरोदरे स्फुरन्तीं प्रभया पिबन्तीमिव

---

(४३०) निरायुधम् अशस्त्रम् आयुधेन शस्त्रेण अङ्गीकृतस्य ऊर्वोरधरपर्य्य-न्ताङ्गाच्छादनवस्त्रस्य। कक्ष्यां वसनरज्जुम्।

(४३१) निर्दयेति। निर्दयं निष्ठुरं यत् आस्फोटनं प्रहरणं तेन स्फुटितस्य विच्छतस्य भुजस्य रुधिराणां रक्तानां शीकरैः बिन्दुभिः सिच्यमानौ आकीर्य्य-माणौ इत्यर्थः।

(४३२) उच्चखान उत्तोलयामास। वैकक्षकमालां तिर्य्यक्वक्षावलम्बि-हारविशेषम् अन्तरेण मध्ये अन्तरेणेति योगे द्वितीया।

(४३३) दुर्नयेति। दुर्नयस्य दुश्चेष्टितस्य निर्वाहः सम्पादनं तस्य बीजं कारणम् इदं यज्ञोपवीतमिति यावत् एतद्दर्शनेन ब्राह्मणोऽयमिति मत्वा दुरा-चारोऽपि त्वं न केनापि दण्ड्यसे ब्रह्महत्याभयादिति भावः विश्रब्धं निःशङ्कम्। चाप-लानि दुश्चेष्टितानि। घ्राणावलेपिनं नासारन्ध्रपूरकमिति भावः।

त्रियामां तामरसहस्तां (४३५) कोमलाङ्गुलिरागराजिजालकानि च चरणालक्तानि (४३६) वेलावालविद्रुमलतावनानि इव आकर्षन्तीं (४३७) करपङ्कजसङ्कोचाशङ्कया शशाङ्कमण्डलमिव खण्डशः कृतं (४३८) निर्मलचरणनखनिवहनिभेन बिभ्रतीं (४३९) गुल्फावलम्बिनूपुरपुटतया स्थितनिविड़कटकावलिबन्धनादिव परिभ्रश्य आगतां (४४०) बहुविधकुसुमशकुनिशतशोभितात् (४४१) पवनचलिततनुतरङ्गात् अतिस्वच्छात् अंशुकात् उदधिसलिलादिव (४४२) उत्तरन्तीम् उदधिजन्मप्रेम्णा

---

(४३४) अथेत्यादि। अट्टहासस्य तदाख्यस्य अंसैः। तड़ितमिव सौदामिनीमिव स्फुरन्तीं राजमानां पिबन्तीमिव ग्रसन्तीमिव त्रियामां रात्रिम्। तामरसहस्तां रक्तोत्पलकराम्।

(४३५) कोमलेति। कोमलानाम् अङ्गुलीनां रागराजिः लोहितधारा तस्या जालकानि प्रवाहान्।

(४३६) वेलेति। वेलायां तटभूमौ बालानि नवानि यानि विद्रुमलतावनानि प्रवालवल्लीवनानि तानि इव।

(४३७) करेति। कर एव पङ्कजं पद्मं तस्य सङ्कोचः निमीलनं चन्द्रोदयादिति भावः तस्य शङ्का भयं तया शशाङ्कमण्डलमिव चन्द्रमण्डलम् इव।

(४३८) निर्मलेति। निर्मलानां चरणनखानां निवहः समूहः तन्निभेन तच्छलेन।

(४३९) गुल्फेति। गुल्फम् अवलम्बते इति गुल्फावलम्बि नूपुरपुटं नूपुरसन्धिः यस्य तद्भावः तत्ता तया हेतुना। स्थितेति स्थितं निविड़ं दृढं कटकावल्यां सैनिकचक्रे बन्धनं तस्मादिव परिभ्रश्य विच्युत्य पलाय्य इत्यर्थः आगतां उपस्थिताम्।

(४४०) बहुविधेति। बहुविधैः विचित्रैः कुसुमानां शकुनीनां पक्षिणां शतैः एकत्र तन्तुनिर्मितैः अन्यत्र उपरिपतितैः शोभितं तस्मात्।

त्रिवलिच्छलेन त्रिपथगयेव परिष्वक्तमध्याम् अत्युन्नतस्तनमण्डलां ( ४४३ ) दृश्यमानदिङ्नागकुम्भामिव ककुभं (४४४) मदलग्नैरावतकरशीकरनिकरम् इव ( ४४५ ) शरत्तारागणतारं हारम् उरसा दधानां धवलचामरैरिव च ( ४४६ ) मन्दमन्दनिश्वासदोलायितैः हारकिरणैः उपवीज्यमानां स्वभावलोहितेन ( ४४७ ) मदान्धगन्धेभकुम्भास्फालनसंक्रान्तसिन्दूरेणेव करद्वयेन द्योतमानां ( ४४८ ) हरशिखण्डेन्दुद्वितीयखण्डेनेव कुण्डलीकृतेन ज्योत्स्नामुचा दन्तपत्रेण विभ्राजमानां ( ४४९ ) कौस्तुभगभस्तिस्तवकेन

---

( ४४१ ) पवनेति। पवनेन वायुना चलिताः तनवः अल्पाल्पाः तरङ्गभङ्गयः ऊर्मयश्च यस्य तस्मात् अतिस्वच्छात् अतिविशदात् अंशुकात् वसनात्।

( ४४२ ) उत्तरन्तीम् उत्तिष्ठन्तीम् उदधिजन्मप्रेम्णा समुद्रोत्पत्तिस्नेहेन त्रिवलिच्छलेन त्रिवलिमिषेण त्रिपथगयेव त्रिधारया गङ्गयेव परिष्वक्तमध्याम् आलिङ्गितमध्यभागाम्।

( ४४३ ) दृश्यमानेति। दृश्यमानौ दिङ्नागस्य ऐरावतस्य कुम्भौ यस्यां तथाभूताम् इव। ककुभं दिशम्।

( ४४४ ) मदेति। मदे लग्नः सक्तः मदलग्नः समद इत्यर्थः य ऐरावतः तस्य करः शुण्डः तस्य शीकराणां जलबिन्दूनां निकरः सङ्घः तमिव।

( ४४५ ) शरदिति। शरदि यः तारागणः नक्षत्रवृन्दं तद्वत् तारः महान् उज्ज्वल इत्यर्थः तम्। उरसा वक्षसा। धवलचामरैरिव श्वेतचामरैरिव।

( ४४६ ) मन्देति। मन्दमन्देन निश्वासेन दोलायिताः तैः उपवीज्यमाना संवीज्यमाना ताम्। स्वभावलोहितेन सहजरक्तेन।

( ४४७ ) मदान्धेति। मदान्धः मदमत्तः य इभ हस्ती तस्य कुम्भास्फालनं कुम्भावमर्शः तेन संक्रान्तं संसक्तं सिन्दूरं यस्मिन् तेनेव करद्वयेन करयुगलेन द्योतमानां राजमानाम्।

( ४४८ ) हरेति। हरस्य शिखण्डः शेखरं चूड़ेत्यर्थः तत्र यः इन्दुद्वितीय

इव च श्रवणलग्नेन अशोककिसलयेन अलङ्कृतां महता मातङ्गमदमयेन तिलकेन (४५०) अदृश्यच्छत्रच्छायामण्डलेनेव अविरहितललाटाम् आपादतलात् आसीमन्ताच्च चन्द्रातपधवलेन चन्दनेन आदिराजयशसेव धवलीकृतां (४५१) धरणितलचुम्बिनीभिः कण्ठकुसुममालाभिः सरिद्भिरिव सागरादृष्टाभिः अधिष्ठितां मृणालकोमलैः अवयवैः (४५२) कमलसम्भवत्वम् अनचरम् आचक्षाणां स्त्रियम् अपश्यत्। असम्भ्रान्तश्च पप्रच्छ भद्रे! कासि किमर्थं वा दर्शनपथम् आगतासीति?। सा तु स्त्रीजनविरुद्धेन अवष्टम्भेन अभिभवन्तीव अभाषत तम् वीर! विद्धि मां (४५३) नारायणोरःस्थलीलीलाविहारहरिणीं (४५४) पृथुभरतभगीरथादिराजवंशपताकां (४५५) सुभटभुजजय-

---

खण्डः अर्द्धचन्द्र इत्यर्थः तेन इव कुण्डलीकृतेन कुण्डलरूपतां नीतेन ज्योत्स्नामुचा प्रभावर्षिणा दन्तपत्रेण हस्तिदन्तनिर्मितकर्णभूषणेन विभ्राजमानां विराजमानाम्।

(४४९) कौस्तुभेति। कौस्तुभस्य मणिविशेषस्य गभस्तिनां किरणानां स्तवकः गुच्छः तेन इव श्रवणलग्नेन श्रोत्रगतेन। मातङ्गमदमयेन गजदाननिर्मितेन इत्यर्थः।

(४५०) अदृश्येति। अदृश्यं छत्रस्य छायामण्डलं तेन इव अविरहितः अशून्यः ललाटो यस्याः ताम् आपादतलात् पादतलपर्य्यन्तम् आसीमन्तात् सीमन्तपर्य्यन्तम् आदिराजयशसा इव आदिराजस्य मनोः वैवस्वतस्य यशः तेन इव।

(४५१) धरणितलेति। धरणितलं भूतलं चुम्बन्ति स्पृशन्ति इति तथोक्ताभिः सागरादृष्टाभिः सागरेण अदृष्टाः ताभिः असागरगामिनीभिः इत्यर्थः।

(४५२) कमलसम्भवत्व कमलादुत्पत्तिम् अनचरम् अचररहितं तूष्णीम्भावेन इत्यर्थः आचक्षाणां कथयन्तीम्। असम्भ्रान्तः अचकितः। अवष्टम्भेन गर्व्वेण।

(४५३) नारायणेति। नारायणस्य उरः वक्षःस्थलम् एव स्थली अकृत्रिमाभूमिः अरण्यम् इत्यर्थः तत्र लीलया यो विहारः तत्र हरिणी मृगी ताम्।

(४५४) पृथ्विति। पृथुप्रभृतीनां राज्ञां वंशस्य कुलस्य पताका वैजयन्तीम् उज्ज्वलकारिणीम् इति भावः।

स्तम्भविलासशालभञ्जिकां (४५६) रण-रुधिर-तरङ्गिणी-तरङ्ग-क्रीड़ा-दोहद-दुर्ललित-राजहंसीं (४५७) सितनृपच्छत्रषण्डशिखण्डिनीम् (४५८) अतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीम् असिधाराजलकमलिनीं श्रियम्। (४५९) अपहृतास्मि तव अमुना शौर्य्यरसेन। याचस्व ददामि ते वरम् अभिलषितमिति।

वीराणां तु (४६०) अपुनरुक्ताः परोपकाराः। यतो राजा तां प्रणम्य स्वार्थविमुखो भैरवाचार्य्यस्य सिद्धिं ययाचे। लक्ष्मीस्तु देवी (४६१) प्रीततरहृदया विस्तीर्य्यमाणेन चक्षुषा क्षीरोदेनेव उपरिपर्य्यस्तेन अभिषिञ्चन्ती

---

(४५५) सुभटेति। सुभटानां सुवीराणां भुजा बाहव एव जयस्तम्भाः तेषु विलासशालभञ्जिका विलासपुत्तिका ताम्।

(४५६) रणेति। रणेषु संग्रामेषु या रुधिरतरङ्गिण्यः रक्तनद्यः तासां तरङ्गेषु क्रीड़ा विहारः तत्र दोहदेन अभिलाषेण दुर्ललिता दुर्विनीता राजहंसी ताम्।

(४५७) सितेति। सितं धवलं नृपस्य राज्ञः छत्रषण्डम् आतपत्रमण्डलम् आतपत्रवनम् इत्यर्थः तत्र शिखण्डिनी मयूरी ताम्।

(४५८) अतीति। अतिनिशितानां शस्त्राणां धारा एव वनानि तेषु भ्रमणम् एव विभ्रमः विलासः तत्र सिंही ताम्। असीति। असीनां तलवाराणां धारा एव जलानि तत्र कमलिनी पद्मिनी ताम्।

(४५९) अपहृता आकृष्टा शौर्य्यरसेन वीर्य्योत्साहेन।

(४६०) अपुनरुक्ताः पुनरुक्तिदोषरहिताः परोपकाराः परेषामुपकाराः। वीराः परोपकारं करिष्याम इति प्रतिज्ञाय तथा एव आचरन्ति न तत्र कापि अन्योक्तिरिति भावः यद्वा अपुनरुक्ताः अनधिकाः परोपकारा न तेषाम् अधिकता अवश्यकर्त्तव्यत्वात् स्वतःसिद्धा इति भावः।

भूपालम् एवमस्तु इति अब्रवीत् अवादीच्च पुन: अनेन (४६२) सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या च असाधारणया भवान् भुवि सूर्य्याचन्द्रमसो: तृतीय इव अविच्छिन्नस्य प्रतिदिनम् उपचीयमानवृद्धे: (४६३) शुचिसुभगसत्यत्यागधैर्य्यशौण्डपुरुषप्रकाण्डप्रायस्य महतो राजवंशस्य कर्त्ता भविष्यति। (४६४) यस्मिन् उत्पत्स्यते सर्वद्वीपानां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्त्ती त्रिभुवनविजिगीषु: द्वितीयो मान्धातेव यस्य अयं कर: स्वयमेव ग्रहीष्यति चामरम् इति वचसोऽन्ते तिरोबभूव।

भूमिपालस्तु तदाकर्ण्य हृदयेन अतिमात्रम् अप्रीयत। भैरवाचार्य्योऽपि तस्या देव्या: तेन वचसा (४६५) कर्मणा च सम्यक् उपपादितेन सद्य एव (४६६) कुन्तली किरीटी कुण्डली हारी केयूरी मेखली मुद्गरी खड्गी च भूत्वा अवाप

---

(४६१) प्रीततरेति। प्रीततरम् अतिशयेन प्रीतं राज्ञ: स्वार्थनिस्पृहत्वेन इति भाव: हृदयं यस्या: सा उपरिपर्य्यस्तेन उपरिपतितेन।

(४६२) सत्त्वोत्कर्षेण साहसातिशयेन महानुभावतातिरेकेण वा असाधारणया निरुपमया। अविच्छिन्नस्य विच्छेदमगतस्य उपचीयमानवृद्धे: वर्द्धमानाभ्युदयस्य।

(४६३) शुचीति। शुचय: बाह्याभ्यन्तरपूता: सुभगा: सौभाग्यशालिन: सत्यं त्याग: दानं धैर्य्यं तेषु शौण्डा: तत्परायणा वदान्या: वीराश्च इत्यर्थ: पुरुषप्रकाण्डा: पुरुषश्रेष्ठा: प्रायेण यत्र तादृशस्य कर्त्ता उत्पादक:।

(४६४) यस्मिन् राजवंशे। अयं मदीय इत्यर्थ:।

(४६५) कर्मणा अवसाधनरूपकार्य्येण सम्यग् उपपादितेन सम्यगनुष्ठितेन।

(४६६) कुन्तली कुन्तलवान् सुकेश इति यावत् किरीटी मुकुटधारी

विद्याधरत्वम् प्रोवाच च राजन् ! (४६७) अदूरव्यापिनः फल्गुचेतसाम् अलसानां मनोरथाः सतान्तु भुवि विस्तारवत्यः स्वभावेनैव उपकृतयः । स्वप्नेऽपि असम्भावितां दातुमिमां दक्षिणां क्षमः कोऽन्यो भवन्तम् अपहाय ? (४६८) सम्पत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिः उन्नतिम् आयाति । त्वदीयैः गुणैः उपकरणीकृतस्य त्वत्त एव च (४६९) लब्धात्मलाभस्य निर्लज्जता इयम् अस्य मूढहृदयस्य । तदिच्छामि येन केनचित् (४७०) कार्य्यलवोपपादनोपयोगेन स्मारयितुम् आत्मानमिति । (४७१) प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भाः अतः त्वं राजा भवत्सिद्धैरेव परिसमाप्तकृत्योऽस्मि साधयतु मान्यो यथासमीहितं स्थानमिति (४७२) प्रत्याचचक्षे ।

---

कुण्डली कर्णान्दोलितकुण्डलः हारी हारवान् केयूरी अङ्गदी मेखली काञ्चीदामालङ्कृतकटिः मुद्गरी दण्डविशेषः तद्वान् ।

(४६७) अदूरव्यापिनः अदूरविस्ताराः न दूरप्रसारिण इत्यर्थः फल्गुचेतसाम् असारचित्तानाम् अलसानां कार्य्यपराङ्मुखानाम् इत्यर्थः मनोरथाः कामाः । उपकृतयः उपकाराः । इमां दक्षिणां विद्याधरत्वलाभरूपाम् ।

(४६८) कणिकां कणामात्रम् अतिस्वल्पं वस्तु इति यावत् लघुप्रकृतिः क्षुद्रस्वभावा । उपकरणीकृतस्य उपकृतस्य इत्यर्थः । अस्य मदीयस्य इति भावः ।

(४६९) लब्धेति । लब्ध आत्मनो लाभः अभीष्टरूपः येन तथाभूतस्य ।

(४७०) कार्य्येति । कार्य्यस्य लवः लेशः विन्दुः इत्यर्थः यत्किञ्चित्कार्य्यम् इत्यर्थः तस्य उपपादनं सम्पादनं तेन उपयोगः उपकारः तेन । स्मारयितु स्मृतिपथं नेतुम् ।

(४७१) प्रत्युपकारेति । प्रत्युपकारस्य अन्यकृतस्य इति भावः दुष्प्रवेशाः

तथोक्तश्च भूभुजा जिगमिषुः सुदृढं समालिङ्ग्य टीटिभादीन् (४७३) कुवलयवनेनेव अवश्यायशीकरस्राविणा सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिं पुनः उवाच तात! ब्रवीमि यामीति न स्नेहसदृशम्। त्वदीयाः प्राणा इति पुनरुक्तम्। गृह्यताम् इदं शरीरकमिति (४७४) व्यतिरेकेण अर्थकरणम्। तिलशः क्रीता वयमिति न उपकारानुरूपम्। बान्धवोऽसीति (४७५) दूरीकरणमिव। त्वयि स्थितं हृदयमिति अप्रत्यक्षम्। (४७६) त्वद्विरहकारिणी कारणा इयं नः सिद्धिरिति (४७७) अश्रद्धेयम् (४७८)

---

प्रवेष्टुमशक्या इत्यर्थः हृदयावष्टब्धाः हृदयगाम्भीर्य्याणि धीराणां हृदयानि परप्रत्युपकारं नार्थयन्ते इति भावः।

(४७२) प्रत्याचचक्षे प्रत्याख्यानं कृतवान् प्रत्युपकृतिग्रहणे असम्मतोऽभूत् इति भावः।

(४७३) कुवलयवनेन इव नीलोत्पलकाननेन इव। अवश्यायेति। अवश्यायानां शिशिराणां शीकरान् विन्दून् स्रवति इति तथोक्तेन। सास्रेण सजलेन। स्नेहसदृशं स्नेहसुचितम्। प्राणा मदीया इति शेषः त्वदीयाः त्वमहमभिन्न इति भावः पुनरुक्तं कार्य्येण प्रदर्शितत्वात् तव वचनमधिकम् इति भावः।

(४७४) व्यतिरेकेण पृथग्भावेन अर्थकरणम् अर्थसाधनम्। तिलशः खण्डशः यावन्त उपकाराः कृताः मदीयेषु अवयवेषु तिलशः खण्डितेषु क्रीतेषु अपि न परिशोध्यन्ते इति भावः।

(४७५) दूरीकरणम् इव दूरे निक्षेप इव बान्धवस्य स्वतो बन्धुषा भिन्नतया दूरवर्त्तित्वात् इति भावः। अप्रत्यक्षं वचनमात्रम् एतत् हृदयस्य तथास्थितस्य दृष्टिविषयत्वायोगात् इति भावः।

(४७६) त्वद्विरहकारिणी तव विच्छेदजननी अतएव नः अस्माकं सिद्धिः वराधरत्वलाभः इयं कारणा यातना क्लेश एव इत्यर्थः।

निष्कारणः तव उपकार इति अनुवादः। स्मर्त्तव्या वयमिति (४७९) आज्ञा। सर्वथा (४८०) कृतघ्नालापेषु असज्जनकथासु च चेतसि कर्त्तव्योऽयं स्वार्थनिष्ठुरो जनः। इत्यभिधाय (४८१) वेगच्छिन्नहारोच्छलितमुक्ताफलनिकरताड़िततारागणं गगनतलम् उत्पपात ययौ च (४८२) सीमन्तितग्रहग्रामः (४८३) सिद्धरचितं धाम। श्रीकण्ठोऽपि राजन्! (४८४) पराक्रमक्रीतः कर्त्तव्येषु नियोगेन अनुग्राह्यो ग्राहितविनयोऽयं जनः इत्यभिधाय राज्ञा अनुमोदितः तदैव भूयो (४८५) भूविवरं विवेश।

---

(४७७) अश्रद्धेयम् अविश्वास्यम् एतस्मिन् महिरहेण कारणस्थाने कथम् अत्र प्रवृत्तिः इति एतद्वाक्यस्य अश्रद्धेयत्वम् इति भावः।

(४७८) निष्कारणः निरर्थकः अहेतुः वा इति एतत्कथनम् अनुवादः उक्तार्थस्य प्रकारान्तरेण कथनम्।

(४७९) आज्ञाः आदेशः प्रभुं प्रति नहि आदिश्यते अपि तु प्रभुणा अनुजीविजन आदिश्यते इति भावः।

(४८०) कृतघ्नालापेषु कृतं घ्नन्तीति कृतघ्नाः तेषाम् आलापाः नविषयालापा इत्यर्थः तेषु स्वार्थनिष्ठुरः स्वकार्य्य परायणः।

(४८१) वेगेति। वेगेन गतिरंहसा छिन्नात् हारात् उच्छलितानां निर्गलितानां मुक्ताफलानां मौक्तिकानां निकरैः समूहैः ताड़ितः आहतः तारागणः नक्षत्रसमूहः यस्य यत्र वा तत्।

(४८२) सीमन्तितेति। सीमन्तितः द्विधाकृतः ग्रहाणाम् अन्तरीक्षचारिणां ग्रामः मण्डलं येन तथाभूतः।

(४८३) सिद्धरचितं विद्याधरलोचितं धाम स्थानं श्रीकण्ठोऽपि तदाख्यो नागोऽपि।

(४८४) पराक्रमक्रीतः। वीर्य्यं क्रीतः नियोगेन आदेशेन। ग्राहितविनयः अर्पितविनयः पराजयेन इति भावः। भूविवरं पातालम्।

नरपतिस्तु (४८६) क्षीणभूयिष्ठायां क्षपायां प्रवातुम् आरब्धे (४८७) प्रबुध्यमानकमलिनीनिश्वाससुरभौ (४८८) वनदेवताकुचांशुकापहरणपरिहासखेदिनि इव सावश्यायशीकरे (४८९) परिमलाकृष्टमधुकृति (४९०) कुमुदनिद्रावाहिनि (४९१) निशापरिणतिजड़े तुषारलेशिनि वनानिले (४९२) विरहविधुरचक्रवाकचक्रनिश्वसितसन्तापितायामिव अपरजलनिधिमवतरन्त्यां त्रियामायां (४९३) साक्षात् आगतलक्ष्मीविलोकनकुतूहलिनीषु इव समुन्मील-

---

(४८५) क्षीणभूयिष्ठायां प्रायेण क्षीणायाम् इत्यर्थः।

(४८६) क्षपायां रजन्यां प्रवातुं प्रकर्षेण सञ्चरितुम्।

(४८७) प्रबुध्यमानेति। प्रबुध्यमानानां सूर्योदयप्रारम्भात् विकाशं लभमानानां कमलिनीनां पद्मिनीनां निःश्वासवत् सुरभिः सुगन्धः तस्मिन्।

(४८८) वनेति। वनदेवतानां कुचयोः स्तनयोः अंशुकस्य वसनस्य अपहरणमेव परिहासः क्रीड़नविशेषः तेन यः खेदः घर्मोदकं सञ्जातं इति भावः तद्वति इव सावश्यायशीकरे शिशिरविन्दुयुक्ते इत्यर्थः।

(४८९) परिमलेति। परिमलः पुष्पादिविमर्द्दजनितो गन्धः विमर्दोत्थे परिमल इत्यर्थः तेन आकृष्टाः मधुकृतः भ्रमराः येन तथोक्ते।

(४९०) कुमुदेति। कुमुदानां निद्रासङ्कोच इत्यर्थः तां वाहयति जनयति इति तस्मिन्।

(४९१) निशेति। निशायाः परिणतिः परिणामः अवसानम् इत्यर्थः तया जड़ः मन्थरः शिशिरभारेण इति भावः तस्मिन्। तुषारलेशिनि शिशिरविन्दुवाहिनि इत्यर्थः।

(४९२) विरहेति। विरहेण विधुराणां व्याकुलानां चक्रवाकानां चक्रस्य समूहस्य निश्वसितेन उष्णेन इति भावः सन्तापितानाम् इव। अपरजलनिधिं पश्चिमसागरम्। त्रियामायां रजन्याम्।

(४९३) साक्षादिति। साक्षात् आगतायाः प्रत्यक्षदृश्यमानायाः इत्यर्थः

न्तीषु नलिनीषु (४८४) उन्निद्रपद्मिनि क्षरति कुसुम-विसरमिव तुहिनकणनिकरं (४८५) मृदुपवनलासितलते कानने (४८६) कमललक्ष्मीप्रबोधमङ्गलशङ्खेषु इव रसत्सु (४८७) अन्तर्बद्धध्वनन्मधुकरेषु मुकुलायमानेषु कुमुदेषु (४८८) उज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रोत्सार्य्य-माणासु इव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामालताकलि-कासु तारकासु (४८९) मन्दरशिखराश्रयिणि (५००) मन्दा-निललुलितकल्पलतावनकुसुमधूलिविच्छुरिते इव धूसरी-भवति सप्तर्षिमण्डले (५०१) सुरवारणाङ्कुशे इव च्युते

---

लक्ष्म्याः श्रियाः विलोकने कुतूहलिन्यः कौतुकवत्यः तासु इव। समुन्मीलन्तीषु विकसन्तीषु नलिनीषु पद्मिनीषु।

(४९४) उन्निद्रेति। उन्निद्रा गतनिद्राः प्रबुद्धा इत्यर्थः पद्मिनी यत्र तस्मिन्। क्षरति वर्षति। कुसुमविसरम् इव पुष्पनिकरम् इव।

(४९५) मृद्विति। मृदुना मन्देन पवनेन लासिताः कम्पिता लताः व्रतत्यः यत्र तादृशे।

(४९६) कमलेति। कमलानां पद्मानां लक्ष्मीः श्रीः तस्याः प्रबोधाय जाग-रणाय मङ्गलशङ्खाः तेषु रसत्सु ध्वनत्सु।

(४९७) अन्तरिति। अन्तरभ्यन्तरे बद्धाः ध्वनन्तः मधुकरा येषां तेषु मुकु-लायमानेषु मुकुलभावं गच्छत्सु।

(४९८) उज्जिहानेति। उज्जिहानैः प्रबुद्धैः रवेः सूर्य्यस्य रथवाजिभिः रथाश्वैः विसृष्टाः त्यक्ताः तैः। प्रोथपवनैः नासामारुतैः। प्रोत्सार्य्यमाणासु इव अप-सार्य्यमाणासु इव। वारुण्यां ककुभि पश्चिमायां दिशि। श्यामा रात्रिः एव लता तस्याः कलिकाः कुसुममुकुलानि तासु। तारकासु नक्षत्रेषु।

(४९९) मन्दरेति। मन्दरस्य पर्वतभेदस्य शिखरं शृङ्गम् आश्रयतीति तथोक्ते।

(५००) मन्दानिलेति। मन्देन अल्पाल्पेन अनिलेन लुलितम् आन्दोलितं

गलति तारामये मृगे त्रीनपि टीटिभादीन् गृहीत्वा (५०२) नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्य अङ्गानि नगरीं विवेश। अन्यस्मिन् अहनि तेषाम् आत्मशरीरानन्तरं स्नानभोजनाच्छादनादिना प्रीतिम् अकरोत्।

कतिपयदिवसापगमे च (५०३) परिव्राट् भूभुजा वार्य्यमाणोऽपि वनं ययौ। पातालस्वामिकर्णतालौ तु शौर्य्यानुरक्तौ तमेव सिषेवाते। (५०४) सम्पादितमनोरथातिरिक्तविभवौ च सुभटमण्डलमध्ये (५०५) निष्कृष्टमण्डलाग्रौ समरमुखेषु प्रथमम् उपयुज्यमानौ कथान्तरेषु

---

यत् कल्पलतावन तस्य कुसुमानां धूलिभिः परागैः विच्छुरिते इव विलिप्ते इव धूसरीभवति धूसरतां व्रजति।

(५०१) सुरेति। सुरवारणस्य ऐरावतस्य अङ्कुशे इव। च्युते स्वस्थानात् भ्रष्टे गलति सरति तारामये नक्षत्रमये मृगे मृगशीर्षाख्ये नक्षत्रे स हि चितारीऽङ्कुशाकार इति तथोत्प्रेक्षितम्। टीटिभादीन् टीटिभ-कर्णताल-पातालस्वामिन इत्यर्थः।

(५०२) नागेति। नागेन सह यत् युद्धं तस्य व्यतिकरः सम्पर्कः तेन मलीमसानि मलिनानि। शुचिनि पवित्रे वनवापीपयसि अरण्यसरसीजले। तेषां टीटिभादीनाम् आत्मशरीरम् अनन्तरम् अव्यवहितोत्तरं यस्मिन् तद् यथा तथा तेषां स्नानभोजनादि व्यापारं समाधाय पश्चात् स्वयं स्नानभोजनादिव्यापारो यथा स्यात् तथेति भावः।

(५०३) परिव्राट् टीटिभ इत्यर्थः। भूभुजा राज्ञा।

(४०४) सम्पादितेति। सम्पादितः मनोरथस्य आशायाः अतिरिक्तः विभवः सम्पद् ययोः तौ सुभटमण्डलमध्ये सुवीरसङ्घमध्ये।

च अन्तरान्तरा समादिष्टौ विचित्राणि भैरवाचार्य्यचरितानि शैशववृत्तान्तांश्च कथयन्तौ तेनैव सार्द्धं जराम् आजग्मतुः इति।

इति श्रीबाणभट्टविरचिते हर्षचरिते भैरवाचार्य्यसिद्धि-
साधनं नाम तृतीयः उच्छ्वासः॥ ३॥

---

(५०५) निष्कृष्टेति। निष्कृष्टम् अत्युत्कृष्टमित्यर्थः मण्डलाग्रं खड्गः ययोः तौ। अन्तरान्तरा मध्यमध्ये। जरां वार्द्धकम्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
हर्षचरितस्य तृतीयोच्छ्वासव्याख्या समाप्ता।

# चतुर्थः उच्छ्वासः ।

योगं स्वप्नेऽपि नेच्छन्ति कुर्वते न करग्रहम् ।
महान्तो नाममात्रेण भवन्ति पतयो भुवः ॥ १ ॥
सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥२॥

अथ (३) तस्मात् पुष्पभूतेः द्विजवरस्वेच्छागृहीतकोषो

---

योगमिति । महान्तः महानुभावा जनाः स्वप्नेऽपि योगं छद्म पराभिसन्धानार्थमुपधिं न इच्छन्ति करग्रहं करेषु राजग्राह्यभागेषु ग्रहः आग्रहः तं पीड़नम् इत्यर्थः करग्रहं दण्डग्रहणञ्च न कुर्वते अथच नाममात्रेण भुवः पृथिव्याः पतयः भवन्ति नाममात्रश्रवणेन सर्वे कम्पमानास्तान् पतित्वे वृण्वन्तीति भावः ॥ १ ॥

सकलेति । विपुले महति अपि नृपवंशे राजवंशे गणाधिपस्य गणपतेः मुखे दण्ड इव पृथुः आदिराजः तत्प्रतिमः तत्सदृशः पृथुः विशाला प्रतिमा सादृश्यं यस्य तथाभूतः एक एव कश्चिदेव सकलानां महीभृतां राज्ञां पर्वतानाञ्च कम्पकृत् भयप्रद इति भावः उत्पद्यते जायते एतेन महाराजस्य हर्षस्य उत्पत्तिः सूचिता ॥ २ ॥

(३) अथेत्यादि । तस्मात् पुष्पभूतेः राजवंशः 'निर्जगामेति सम्बन्धः तमेव विशिनष्टि द्विजवरेत्यादिभिः । द्विजवरैः ब्राह्मणश्रेष्ठैः अन्यत्र द्विजेषु वरः श्रेष्ठः ब्रह्मेत्यर्थः तेन स्वेच्छया यथाकाममित्यर्थः गृहीतः कोषः धनं कर्णिका च यस्य तथाभूतः । पुण्डरीकेक्षणात् कमललोचनात् पुण्डरीकाक्षात् नारायणाच्च । लक्ष्मीः पुरःसरा यस्य तथोक्तः लक्ष्माः पुरःसरस्य रत्नसञ्चय इव रत्नानां रत्नभूतानाम् उत्कृष्टानामित्यर्थः पुरुषाणामिति भावः जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते इति सञ्चयः समुत्पत्तिः यत्र सः रत्नानां सञ्चयः यस्य तथाभूतो वा रत्नानां मणीनां सञ्चयः समूहश्च । रत्नाकरात् रत्नानाम् आकरः आश्रयः उत्पत्तिस्थानञ्च

नाभिपद्म इव पुण्डरीकेक्षणात् लक्ष्मीपुरःसरो रत्नसञ्चय इव रत्नाकरात् गुरुबुधकविकलाभृत्तेजस्विभूनन्दनप्रायो ग्रहगण इव उदयस्थानात् (४) महाभारवाहनयोग्यः सागर इव सगरप्रभावात् (५) दुर्जयबलसनाथो हरिवंश इव शूरात् निर्जगाम राजवंशः। यस्मात् अविनष्टधर्मधवलाः प्रजासर्गाः

---

तस्मात् समुद्राच्च। गुर्विति गुरवः उपदेष्टारः बुधाः पण्डिताः कवयः काव्यकृतः कलाभृतः सङ्गीताभिज्ञाः तेजस्विनः शूराः भूनन्दनाः राजानः अन्यत्र गुरुर्बृहस्पतिः बुधः सोमात्मजः कविः शुक्रः कलाभृत् चन्द्रः तेजस्वी सूर्यः भूनन्दनः मङ्गलः एते प्रायेण यत्र तथाभूतः। उदयस्थानात् उदयाचलादित्यर्थः।

(४) महाभारेति महान् भारः भूभार इत्यर्थः तस्य वाहनं निर्वाहणं तस्य योग्यः सगरप्रभावात् सगरस्य सूर्यवंशीयस्य राजविशेषस्य प्रभावात् सामर्थ्यात् पुरा सगरस्य नृपतेः षष्टिसहस्राणि पुत्रा आसन्। ते तु कालेन महाबलाः पराक्रान्ताश्च वीराः पितुः सगरस्य अश्वमेधीयाश्वं रक्षन्तः सर्वां पृथ्वीं प्रदक्षिणीकुर्वन्तः चेरुः। अत्रान्तरे शक्रेण तेषां मध्यचारी अश्वः दैवशक्त्या हरता पाताले कपिलमुनिसमीपे रक्षितः। अथ ते रक्षकाः तथाश्वम् अपश्यन्तः सर्वां पृथ्वीं स्वर्गञ्च भ्रमन्तः परं न अश्वमवापुः। ततः पित्राज्ञया पातालं खनित्वा कपिलसमीपे तमश्वं दृष्ट्वा कपिलं व्यपीड़यन्। स च मुनिः तान् कोपदृष्ट्या पश्यन्नेव भस्मीचकार। तेषां तदा पातालखननेन यो जलराशिरुत्पन्नः स एव सगरादुत्पन्न इति सागरसंज्ञां लेभे इति पुराणवार्त्ता अन्यत्र सगरस्येव प्रभावो यस्य तथाभूतः तस्मात्।

(५) दुर्जयबलसनाथः दुर्जयं बलं येषां तैः अन्यत्र दुर्जयेन जेतुमशक्येन बलेन बलदेवेन सनाथः सहितः शूरात् वीरात् तदाख्यात् वसुदेवपूर्वपुरुषाच्च। यस्मात् राजवंशात् राजानः अजायन्तेति सम्बन्धः। तानेव विशिनष्टि अविनष्टेत्यादिभिः। अविनष्टेन अविलुप्तेन धर्मेण वेदोदितानुष्ठानेन चोदनालक्षणो धर्म इत्युक्तेः चोदना वेदविधिस्तया लक्ष्यते इति तद्व्याख्यानाच्च। धवला विशुद्धाः चतुष्पाद्धर्मशालिन इति यावत् प्रजासर्गाः मानुषसृष्टयः क्षतमुखात् शिक्षितमुखात् संस्कारपूतवचस इति भावः सत्ययुगप्रारम्भाच्च।

इव कृतमुखात् (६) प्रतापाक्रान्तभुवनाः किरणा इव तेजोनिधेः (७) विग्रहव्याप्तदिङ्मुखा गिरय इव भूभृत्प्रवरात् (८) धरणिधारणक्षमा दिग्गजा इव ब्रह्मकरात् उदधीन् पातुम् उद्यता जलधरा इव घनागमात् (९) इच्छाफलदायिनः कल्पतरव इव नन्दनात् (१०) सर्वभूताश्रया विश्वरूपप्रकारा इव श्रीधरात् अजायन्त राजानः ।

(११) तेषु चैवमुत्पद्यमानेषु क्रमेण उदपादि हूणहरिणकेसरी सिन्धुराजज्वरो गुर्जरप्रजागरः गान्धाराधिपगन्धद्विप-

---

(६) प्रतापेति । प्रतापेन कोषदण्डजशक्त्या स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजमित्यमरः तेजसा च आक्रान्तं भुवनं यैः तथोक्ताः तेजोनिधेः प्रतापशालिनः सूर्य्यांश्च ।

(७) विग्रहेति । विग्रहेण युद्धेन अवयवेन च व्याप्तानि दिङ्मुखानि यैः तथोक्ताः भूभृत्प्रवरात् भूभृद्भिः राजभिः भूभृतां पर्वतानाञ्च प्रवरः श्रेष्ठः तस्मात् ।

(८) धरणीति धरण्याः पृथिव्याः धारणे क्षमाः शक्ताः ब्रह्मकरात् ब्रह्म वेदोक्तधर्मम् इत्यर्थः करोतीति तस्मात् विधातृहस्ताच्च उदधीन् समुद्रान् पातुं रक्षितुं ग्रसितुञ्च । घनागमात् घनः सान्द्रः दृढ़ इत्यर्थः आगमः शास्त्रज्ञानं येषां तथोक्ताः मेघागमाच्च ।

(९) इच्छेति । इच्छया कामनया अर्थिनामिति भावः फलानि अभिलषितानि ददतीति तथोक्ताः नन्दनात् नन्दयतीति तथोक्तात् तदाख्योद्यानात् ।

(१०) सर्वेति । सर्वेषां भूतानां प्राणिनां प्रजानां जीवानाञ्च क्षित्यादिमहाभूतानां वा आश्रयाः आश्रयणीयाः विश्वरूपप्रकाराः विश्वेषां जगतां रूपप्रकाराः रूपनिबद्धाः श्रीधरात् श्रियं सम्पदं राजलक्ष्मीञ्च धरतीति तथोक्तात् विष्णोश्च ।

(११) तेष्वित्यादि । उदपादीति प्रभाकरवर्द्धनो नाम राजाधिराजः उदपादि उत्पन्न इत्यन्वयः । तमेव विशिनष्टि हूणेत्यादिभिः । हूणाः तदाख्यक्षत्रियविशेषा देशविशेषाश्च हरिणा इव मृगा इव तेषां तेषु वा केसरी सिंहः । सिन्धुराजज्वरः सिन्धुराजस्य ज्वरः रोगविशेषः । गुर्जरप्रजागरः गुर्जरनिद्राच्छयः गुर्जरदेशीया जना यस्य भयेन सततं जाग्रतीति भावः । गान्धाराधिपः गान्धारराज एव गन्धद्विपः गन्धप्रधानो द्विपः मत्तहस्तीत्यर्थः । स्वेदं मूत्रं पुरीषञ्च मज्जाञ्चैव मतङ्गजाः । यस्या-

कूटपाकलः (१२) लाटपाटवपाटच्चरः (१३) मालवलक्ष्मीलतापरशुः प्रतापशील इति प्रथितापरनामा (१४) प्रभाकरवर्द्धनो नाम राजाधिराजः। (१५) यो राज्याङ्गसङ्गीनि अभिषिच्यमान एव मलानीव मुमोच धनानि। यः परकीयेणापि कातरवल्लभेन रणमुखे तृणेनेव धृतेन अलज्जत जीवितेन। यः (१६) करधृतधौतासिप्रतिविम्बितेन आत्मनापि अदूयत समितिषु सहायेन रिपूणां पुरः प्रधनेषु धनुषापि नमता। यो (१७) मानी मानसेन अखिद्यत। यस्य (१८) अन्तर्गतापरिमितरिपुशल्य-

---

प्राय विमायन्ति तं विद्याद् गन्धहस्तिनमित्युक्तलक्षणो वा। तस्य कूटपाकलः हस्तिज्वरविशेषः।

(१२) लाटेति। लाटानां लाटदेशीयानां क्षत्रियाणां पाटवस्य नैपुण्यस्य पाटच्चरः चौरः तद्विध्वंसीत्यर्थः।

(१३) मालवेति। मालवानां तदाख्यजनपदानां लक्ष्मीरेव लता तस्याः परशुः कुठारः। हूणादिराजविजेतेति निष्कर्षः। प्रथितापरनामा विख्यातान्यनामधेयः।

(१४) प्रभेति। प्रभाकरः सूर्य्यः तद्वत् वर्द्धते इति तथोक्तः।

(१५) राज्याङ्गसङ्गीनि राज्याङ्गानि अमात्याद्याः तत्सङ्गीनि तत्संक्रान्तानि अभिषिच्यमानः राज्ये प्रतिष्ठाप्यमानः मलानि दूषितानि क्लेदांश्च तानीव धनानि मुमोच तत्याज दीनानाथादिभ्यो दत्तवानित्यर्थः। परकीयेणापि परार्थप्रदत्तेनापि इत्यर्थः कातरेषु जनेषु कातराणां दुर्बलानां जनानां वा वल्लभेन प्रियेण त्रातुमशक्येनेति भावः तृणेनेव अतितुच्छेनेति भावः अलज्जत किं मया जगति कृतमिति कुण्ठितोऽभूदित्यर्थः।

(१६) करेति। करे धृतः धौतः निशितः असिः तलवारः तत्र प्रतिबिम्बितेन प्रतिफलितेन समितिषु संग्रामेषु सहायः तेन। प्रधनेषु युद्धेषु नमता ज्यारोपणार्थमिति भावः अदूयत सन्तप्तवान्। असिः धनुश्च मया सहायत्वेन नीयते न सङ्ग्रामश्रवणेन केवलेन उपस्थित्या वा भवतो न जीयन्ते इति दुःखेनेति भावः।

(१७) मानी अभिमानवान् मानसेन मनोबलेनेति यावत् अहं स्वतो मानी न, परं मम बलेनैवेति खेदहेतुरिति भावः।

शङ्कुकीलितामिव निश्चलामुवाह राजलक्ष्मीम्। यश्च सर्वासु दिक्षु (१९) समीकृततटावटविटपाटवीतरुतृणगुल्मवल्मीकगिरिगहनैर्दण्डयात्रापथैः पृथुभिर्भृत्योपयोगाय व्यभजतेव वसुधां बहुधा। यश्च (२०) अलब्धयुद्धदोहदमात्मीयोऽपि (२१) सकलरिपुसमुत्सारकः परकीय इव ततापं प्रतापः। यस्य च वह्निमयो हृदयेषु जलमयो लोचनपुटेषु मारुतमयो निश्वसितेषु क्षमामयोऽङ्गेषु आकाशमयः शून्यतायां पञ्चमहाभूतमयो मूर्त्त इव अदृश्यत (२२) निहतप्रति-

---

(१८) अन्तर्गतेति। अन्तर्गतैः अपरिमितैः रिपूणां शत्रूणां शल्यशङ्कुभिः कीलिता संयमिता तामिव निश्चलाम् अनपायिनीम्।

(१९) समीकृतेति। समीकृतानि समतलतां नीतानि तटाः नदीतीराणि अवटानि विवराणि विटपाः शाखाः अटव्यः विपिनानि तरवः तृणानि गुल्माः व्रतत्यः वल्मीकाः पिपीलिकाकृतिकीटविशेषसञ्चिता मृत्कूटाः गिरिगहनानि पार्वतीयवनानि येषु तैः दण्डयात्रापथैः युद्धप्रयाणमार्गैः। भृत्योपयोगाय भृत्यानाम् अनुजीविनाम् उपयोगाय सुखभोगाय सुखेन गमनायेति भावः व्यभजत भृत्येभ्यः विभागेन दत्तवानिवेत्यर्थः।

(२०) अलब्धेति। न लब्धः युद्धदोहदः युद्धाभिलाषः येन तम् अलब्धयुद्धाभिलाषमित्यर्थः।

(२१) सकलेति। सकलानां रिपूणां शत्रूणां समुत्सारकः निराकर्त्ता। परकीय इव परसम्बन्धीव। परकीयः प्रतापी यथा तपति तथा स्वप्रतापोऽपि सदृशयुद्धव्यापाराप्राप्तेरिति भावः। वह्निमयः अग्निरूपः हृदयेषु अन्तःकरणेषु सततवैकृतस्मरणादिति भावः जलमयः अश्रुमयः इत्यर्थः शोकातिशयादिति भावः, मारुतमयः उष्णदीर्घवायुरूपः दुःखातिशयादिति भावः। क्षमामयः क्षान्तिपूर्णः स्थैर्येनाविनाशित्वादिति भावः आकाशमयः गगनरूपः शून्यतायां विरहितायामिति यावत् प्रियतमविच्छेदादिति भावः अतएव पञ्चमहाभूतमयः क्षित्यप्तेजोमरुद्व्योमानि महान्ति पञ्चभूतानि तदात्मकः तत्तद्रूपेण परिणत इत्यर्थः मूर्त्तः मूर्त्तिमान्।

सामन्तान्तःपुरेषु प्रतापः। (२३) यस्य च आसन्नेषु भृत्यरत्नेषु प्रतिविम्बितेव तुल्यरूपा समलक्ष्यत लक्ष्मीः। तथाच यस्य प्रतापाग्निना भूतिः शौर्य्योष्मणा सिद्धिः असिधाराजलेन वंशवृद्धिः (२४) शस्त्रव्रणमुखैः पुरुषकारोक्तिः (२५) धनुर्गुणकिणेन करग्रहीतिः अभवत्। यश्च (२६) वैरमुपायनं विग्रहमनुग्रहं समरागमं महोत्सवं शत्रुं निधिदर्शनम् अरिबाहुल्यमभ्युदयम् आहवाह्वानं वरप्रदानम् अवस्कन्दपातं दिष्टवृद्धिं शस्त्रप्रहारपतनं वसुधारारसम् अमन्यत। यस्मिंश्च

---

(२२) निहतेति। निहतानां संग्रामे व्यापादितानां प्रतिसामन्तानाम् अवीश्वराणाम् अन्तःपुरेषु अन्तःपुरवर्त्तिनीषु नारीषु इत्यर्थः।

(२३) आसन्नेषु सन्निहितेषु भृत्या रत्नानीव यद्वा भृत्येषु रत्नानि तेषु भृत्यश्रेष्ठेषु अमात्यप्रधानेषु इति यावत् जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते इति उत्पलमाला। प्रतिविम्बितेव प्रतिफलितेव तुल्यरूपा समभागेन विभक्ता प्रतापाग्निना प्रतापरूपेणानलेन भूतिः सम्पद् भस्म च भूतिर्भस्मनि सम्पदीत्यमरः। शौर्य्योष्मणा वीर्य्यौष्मभावेन सिद्धिः राज्यादिलाभः पाकश्च। वंशस्य कुलस्य वेणोश्च वृद्धिः अभ्युदयः वर्द्धनञ्च।

(२४) शस्त्रेति। शस्त्राणां व्रणानि क्षतानि एव मुखानि तैः पुरुषकारोक्तिः पौरुषप्रकटनमित्यर्थः मुखैरेव उक्तिर्भवतीति तथारोपः।

(२५) धनुरिति। धनुषो गुणः मौर्वी तस्य किणः कलङ्करेखा तेन। करग्रहीतिः करस्य हस्तस्य ग्रहणं दण्डग्रहणञ्च।

(२६) वैरमित्यादि वैरं शत्रुणा कृतम् अनिष्टाचरणमित्यर्थः उपायनम् उपढौकनं तत्प्रतिसमाधाने प्रीत्यतिशयादिति भावः। विग्रहं युद्धं शत्रुभिः क्रियमाणमिति शेषः। अनुग्रहम् अनुकम्पां तस्यातीव प्रीतिकरत्वादिति भावः। समरागमं संग्रामागमनं महोत्सवम् आनन्दवर्द्धनत्वादिति भावः। निधिदर्शनं निधेः महामूल्यरत्नस्य दर्शनं यद्वा निधेरिव दर्शनं यस्य तथाभूतम्। युद्धकण्डूविनोदनोपायत्वादिति भावः। अरिबाहुल्यं बहुशत्रुताम् आहवाह्वानं युद्धे आकारणं वरप्रदानम् अभीष्टदानम् अवस्कन्दपातं शत्रुष्वभिगमोऽवस्कन्दः तस्य पातः उपस्थितिः तं दिष्टवृद्धिं

राजनि (२७) निरन्तरैर्यूपनिकरैरङ्कुरितमिव कृतयुगेन दिङ्मुखविसर्पिभिः अध्वरधूमैः पलायितमिव कलिना ससुधैः सुरालयैः अवतीर्णमिव स्वर्गेण (२८) सुरालयशिखरोद्धूयमानैर्धवलध्वजैः पल्लवितमिव धर्मेण (२९) वहिरुपरचितविकटसभासत्रप्रपाप्राग्वंशमण्डपैः प्रसूतमिव ग्रामैः काञ्चनमयसर्वोपकरणैर्विभवैर्विशीर्णमिव मेरुणा (३०) द्विजदीयमानैः अर्थकलशैः फलितमिव भाग्यसम्पदा।

(३१) तस्य च जन्मान्तरेऽपि सती पार्वतीव शङ्करस्य

---

भाग्यवर्द्धनं शस्त्रप्रहारेण अवीरिति शेषः। पतनं धरातले लुण्ठनमित्यर्थः। वसुधारारसं वसुधा पृथ्वी तस्या रा दानं रालदाने इत्यस्मात् क्विपी रूपं तस्य रसः रागः स्वादो वा तं यथा भूमिदः स्वर्गं गच्छेत् तथा संग्रामे शस्त्रप्रहारपतितोऽपीति भावः।

(२७) निरन्तरैः अविच्छिन्नैः यूपनिकरैः यूपाः यज्ञार्थपशुबन्धनदारूणि तेषां निकराः सङ्घाः तैः अङ्कुरितं प्ररोहरूपेण समुत्थितमिव। कृतयुगेन सत्ययुगेन। दिङ्मुखविसर्पिभिः दिगन्तरालविसृमरैः अध्वरधूमैः यज्ञधूमैः पलायितमिव समाच्छन्नदृष्टित्वेनेति भावः कलिना चतुर्थयुगेन। ससुधैः सुधा अमृतं चूर्णद्रवश्च तेन सहितैः तैः सुरालयैः देवमन्दिरैः।

(२८) सुरेति। सुरालयानां देवागाराणां शिखरेषु शिरःसु उद्धूयमानाः उड्डीनतां नीयमानाः तैः धवलध्वजैः श्वेतपताकाभिः पल्लवितमिव समन्तात् प्रसृतमिव।

(२९) वहिरिति। वहिर्वाह्ये देशे उपरचितानि निर्मितानि विकटानि वृहन्ति विशालानि सभानां संसदां समज्या परिषद् गोष्ठी सभासमिति संसदः। आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सद इत्यमरः। सत्राणां सदादानानां सत्रमाच्छादने यज्ञे सदादाने वनेऽपि वेत्यमरः प्रपाणां जलदानानां प्राग्वंशानाम् अवरोधानां मण्डपानि गृहाणि तैः विशीर्णमिव विसृतमिव।

(३०) द्विजेति। द्विजेभ्यो विप्रेभ्यः दीयमानाः वितीर्य्यमाणाः तैः अर्थकलसैः धनकुम्भैः। भाग्यसम्पदा सौभाग्यसम्बृद्ध्या।

(३१) तस्य यशोमती नाम महादेवी अभूदिति सम्बन्धः तामेव विशिनष्टि

गृहीतहृदया लक्ष्मीरिव लोकगुरोः (३२) स्फुरत्तरलतारका रोहिणीव कलावतः सर्वजनजननी बुद्धिरिव प्रजापतेः (३३) महाभूभृत्कुलोद्गता गङ्गेव वाहिनीनायकस्य (३४) मानसानुवर्त्तनचतुरा हंसीव राजहंसस्य (३५) सकललोकार्चितचरणा त्रयीव धर्मस्य दिवानिशम् (३६) अमुक्तपार्श्वस्थितिः अरुन्धतीव महामुनेः हंसमयीव गतिषु परपुष्टमयीव आलापेषु चक्रवाकमयीव प्रतिप्रेमणि प्रावृण्मयीव पयोधरोन्नतौ मदिरामयीव (३७) विलासेषु निधिम-

---

सतीत्यादिभिः। सती पतिव्रता सती नाम्नी च शङ्करस्य शं मङ्गलं करोतीति तथोक्तस्य हरस्य च। गृहीतहृदया हृदयग्राहिणी वक्षःस्थलवासिनी च लोकगुरोः जगद्गुरोः नारायणस्य पृथिवीपतेश्च।

(३२) स्फुरदिति। स्फुरन्ती तरला चञ्चला तारका कनीनिका यस्याः सा स्फुरन्ती दीप्यमाना तरला तारका नक्षत्ररूपिणीत्यर्थश्च। कलावतः चन्द्रस्य चतुःषष्टिविद्याशालिनश्च। सर्वजनजननी सर्वेषां जनानां जननी उत्पादनी माता च। राजभार्य्या प्रसूः पृथ्वी गुरुदारोपमातृका। श्वश्रूः पूर्वजपत्नी च सप्तैता मातरः स्मृता इत्युक्तेः। प्रजापतेः ब्रह्मणः प्रजापालस्य।

(३३) महेति। महत् भूभृतां कुलं वंशः महाभूभृतः हिमाद्रेः कुलञ्च तस्मात् उद्गता जाता निर्गता च। वाहिनीनायकस्य सेनापतेः नदीपतेः समुद्रस्य च।

(३४) मानसेति। मानसस्य चित्तस्य तदाख्यस्य सरसश्च अनुवर्त्तनम् अनुसरणं तस्मिन् चतुरा निपुणा राजहंसस्य मरालस्य राजश्रेष्ठस्य च।

(३५) सकलेति। सकलैः लोकैः जनैः अर्चितौ सेवितौ चरणौ पादौ शाखाश्च यस्याः सा त्रयी त्रिवेदी ऋग्यजुःसामाख्यानां वेदानां त्रयमित्यर्थः धर्मस्य विहितक्रियाकलापस्य तज्जनितादृष्टस्य वा। धर्मोऽस्त्यस्येति। धर्मः अर्शआदित्वादच्प्रत्ययः तस्य धर्मवत इत्यर्थः।

(३६) अमुक्तेति। न मुक्ता न त्यक्ता पार्श्वे स्थितिर्यया सा पार्श्वचारिणीत्यर्थः महामुनेर्वशिष्ठस्य राजर्षेश्च। हंसमयीव हंसरूपिणीव मृदुमन्दगमनादिति भावः परपुष्टमयीव कोकिलरूपिणीव मधुरस्वरत्वादिति भावः पतिप्रेमणि भर्तृप्रणये विरहे कातर्य्यातिशयादिति भावः। प्रावृण्मयीव वर्षामयीव पयोधरोन्नतौ स्तनोन्नतौ मेघोन्नतौ च।

यीव अर्थसञ्चयेषु वसुधारामयीव प्रसादेषु कमलमयीव कोषसंग्रहेषु (३८) कुसुममयीव फलदानेषु सन्ध्यामयीव वन्द्यत्वे (३९) चन्द्रमयीव निरुष्मत्वे दर्पणमयीव प्रतिप्राणिग्रहणेषु सामुद्रमयीव परचित्तज्ञानेषु परमात्ममयीव व्याप्तिषु स्मृतिमयीव पुण्यवृत्तिषु मधुमयीव सम्भाषणेषु अमृतमयीव तृप्त्यसु वृष्टिमयीव भृत्येषु निर्वृतिमयीव सखीषु वेतसमयीव गुरुषु गोत्रवृद्धिरिव विलासानां प्रायश्चित्त-

---

(३७) विलासेषु विभ्रमचेष्टितेषु। अर्थसञ्चयेषु अर्थानां धनानां सञ्चयः संग्रहः तेषु निधिमयी निधिर्गुप्तं धनं तन्मयीव। वसुधारामयीव वसूनां धनानां धारा वर्षणं तन्मयीव प्रसादेषु दयासु एतदृशी दयावती यत् सततं वसूनि अनुजीविभ्योऽर्थिभ्यश्च वितरतीति भावः कमलमयीव पद्मरूपिणीव कोषसंग्रहेषु धनभाण्डाररक्षणेषु इत्यर्थः कर्णिकासम्पूरणेषु च।

(३८) कुसुममयी पुष्परूपिणी च फलदानेषु पुष्पानन्तरमेव फलस्योत्पत्तिः इति भावः सन्ध्यामयीव सन्ध्यारूपिणीव वन्द्यत्वे पूज्यत्वे सन्ध्या यथा लोकैः पूज्यते तथासौ पूज्यते इति भावः।

(३९) चन्द्रमयीव चन्द्ररूपिणीव निरुष्मत्वे उष्मराहित्ये शीतलप्रकृतित्वादिति भावः। दर्पणमयीव आदर्शरूपिणीव प्रतिप्राणिग्रहणेषु सर्वलोकवशीकरणेषु सर्वजनप्रतिबिम्बधारणेषु च। सामुद्रमयीव सामुद्रं परचित्तज्ञानसाधनं शास्त्रं तद्रूपिणीव परचित्तज्ञानेषु परेषां चित्तस्य मनसः मानसोदितस्य विषयस्येति भावः ज्ञानेषु बोधेषु परेषां मनोऽभिप्रेतकार्य्यसमाचरणादिति भावः। परमात्ममयीव परमेश्वररूपिणीव व्याप्तिषु सर्वत्र कार्य्येषु अभिनिवेशात् सर्वलोकान्तर्यामित्वात्। स्मृतिमयीव स्मरणरूपिणीव पुण्यवृत्तिषु पुण्यकर्मव्यापारेषु पुण्यानि कर्माणि न विस्मर्य्यन्ते बहुव्याप्ततयापीति भावः। मधुमयीव सम्भाषणेषु संलापेषु मधुरभाषित्वात् इति भावः। अमृतमयीव तृप्यत्सु सन्तोषं गच्छत्सु सर्वतृप्तिकरणे पाटवादिति भावः। वृष्टिमयी वर्षणरूपिणी भृत्यवाञ्छापूरकत्वादिति भावः। निर्वृतिमयीव सुखमयीव सखीषु वयस्यासु तासां सततसुखसङ्गादिति भावः। वेतसमयीव वेतसरूपिणीव सततनम्रत्वादिति भावः। गोत्रवृद्धिरिव वंशोन्नतिरिव विलासानां विभ्रम-

शुद्धिरिव स्त्रीत्वस्य आज्ञासिद्धिरिव मकरध्वजस्य (४०) व्युत्थानवृद्धिरिव रूपस्य दिष्टवृद्धिरिव रतेः मनोरथसिद्धिरिव रामणीयकस्य दैवसम्पत्तिः इव लावण्यस्य वंशोत्पत्तिरिवानुरागस्य वरप्राप्तिरिव कान्तेः सर्गसमाप्तिरिव सौन्दर्य्यस्य आयतिरिव यौवनस्य अनभ्रवृष्टिरिव वैदग्ध्यस्य अयशःप्रमृष्टिरिव लक्ष्म्याः यशःपुष्टिरिव चारित्रस्य हृदयतुष्टिरिव धर्मस्य सौभाग्यपरमाणुसृष्टिरिव प्रजापतेः शमस्यापि शान्तिरिव विनयस्यापि विनीतिरिव आभिजात्यस्यापि अभिजातिरिव संयमस्यापि संयतिरिव धैर्य्यस्यापि धृतिरिव विभ्रमस्यापि विभ्रान्तिरिव यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत्। या अस्य वचसि नरकजितो लक्ष्मीरिव ललास।

---

चेष्टितानां विभ्रमातिशयविस्तारादिति भावः। प्रायश्चित्तशुद्धिः प्रायश्चित्तेन चान्द्रायणादितपसा शुद्धिः पूतत्वं स्त्रीत्वं हि पापमयं कातर्य्यादिदोषदूषितत्वात् तत्तु अनया निजगुणैः अन्यथाकृतमिति भावः। मकरध्वजस्य कामस्य आज्ञासिद्धिः अस्याः तथा कमनीयत्वं यथा एतद्दर्शने कस्यापि कामावेशः न शाम्यतीति कामस्य अव्याहताज्ञत्वमिति भावः।

(४०) व्युत्थानवृद्धिरिव विशेषेण उत्थाने अभ्युदये वृद्धिरिव प्रज्ञेव। दिष्टवृद्धिः इव भाग्योदय इव। सर्गसमाप्तिरिव सृष्टिशेष इव नान्यदितः सौन्दर्य्यमिति भावः। आयतिरिव आभोग इव। अनभ्रवृष्टिरिव विना मेघं वर्षणमिव असम्भवत्वात् इति भावः। अयशः प्रमृष्टिः दुर्यशसः चपलत्वजनितस्येति भावः प्रमृष्टिः प्रमार्जनम् अपनयनमित्यर्थः सा इव अनपायिनी लक्ष्मीरियमिति भावः। यशःपुष्टिरिव यशसां कीर्त्तीनां पुष्टिः पोषणं सेव। आभिजात्यस्य कौलीन्यस्य अभिजातिः सत्कुलजातत्वं सेव। महादेवी महाराज्ञी भूमिर्भाजनम्। नरकजितः नरकासुरजेतुः नारायणस्य इत्यर्थः नरकं निरयं जितवानिति तथाभूतस्य।

निसर्गत एव च स (४१) नृपतिः आदित्यभक्तो बभूव। प्रतिदिनमुदये दिनकृतः स्नातः सितदुकूलधारी धवलकर्पटप्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डलके पवित्रपद्मरागपात्रीनिहितेन स्वहृदयेनेव सूर्य्यानुरक्तेन रक्तकमलषण्डेन अर्घ्यं ददौ। अजपच्च जप्यं सुचरितः प्रत्युषसि मध्यन्दिने दिनान्ते च अपत्यहेतोः प्राध्वं प्रयतेन मनसा जञ्जपूको मन्त्रमादित्यहृदयम्।

(४२) भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि यतः स राजा कदाचित् ग्रीष्मसमये यदृच्छया सितकरकरसितसुधाधवलस्य हर्म्यस्य पृष्ठे सुष्वाप। पार्श्वे चास्य द्वितीयशयने देवी यशोवती शिश्ये। परिणतप्रायायान्तु श्यामायाम् (४३) आसन्नप्रभातवेलाविलुप्यमानलावण्ये लिल-

(४१) आदित्यभक्तः सूर्य्यभक्तः सूर्य्योपासक इत्यर्थः। सितदुकूलधारी परिहितशुभ्रवसनः। धवलेति धवलेन श्वेतेन कर्पटेन वसनेन प्रावृतम् आच्छादितं शिरो यस्य तथाभूतः। कुङ्कुमेति कुङ्कुमस्य पङ्केन द्रवेण अनुलिप्तं प्रलिप्तं रञ्जितमिति यावत् तस्मिन्। मण्डलके मण्डलाकारे पद्मादिरूपे सूर्य्योपासनाविधिविहिते इति भावः। पवित्रेति पवित्रा विशुद्धा पद्मरागस्य पात्री पद्मरागमणिनिर्म्मितं भाजनं तस्यां निहितं रक्षितं तेन। सूर्य्यानुरक्तेन सूर्य्यप्रियेण। रक्तकमलषण्डेन रक्तोत्पलनिचयेन अर्घ्यं पूजाम्। जप्यं जपनीयं दिनान्ते सायंकाले। अपत्यहेतोः पुत्रार्थम्। प्राध्वं नम्रं यथा तथा अव्ययम् एतत्। प्रयतेन अभिनिविष्टेन जञ्जपूकः पुनः पुनर्जपपरायणः आदित्यहृदयम् आदित्यस्य सूर्य्यस्य हृद् चित्तम् अयते इति आदित्यहृदयं सूर्य्यचित्तप्रियमिति यावत् आदित्यप्रीतिकरमिति भावः।

(४२) भक्तेति। भक्तजनानाम् अनुरोधस्य निर्बन्धस्य विधेयानि वश्यानि। यदृच्छया स्वेच्छया। सितेति सितकरः चन्द्रः तस्य कराः किरणास्तद्वत् सिताभिः शुभ्राभिः सुधाभिः चूर्णप्रलेपैरिति यावत् धवलं शुभ्रं तस्य। हर्म्यस्य प्रासादस्य पृष्ठे उपरिभागे। द्वितीयशयने अपरशय्यायाम्। परिणतप्रायायाम् अवसितप्रायायां श्यामायां रजन्याम्।

लिम्बिषमाणे सीदत्तेजसि तारकेश्वरे (४४) कराग्रस्पृष्टकुमुदिनीप्रमोदजन्मनि श्रमधरस्वेद इव गलति अतिशीतले (४५) अवश्यायपयसि मधुमदमत्तप्रसुप्तसीमन्तिनीनिश्वासहतेषु संक्रान्तमदेष्विव घूर्णमानेषु अन्तःपुरप्रदीपेषु राजनि च विमलनखप्रतिबिम्बिताभिः संवाह्यमानचरण इव तारकाभिः (४६) विस्रब्धप्रसारितैः दिगङ्गनानामिवार्पितैरङ्गैर्मधुसुगन्धिभिः स्वहस्तकमलतालवृन्तवातैरिव श्वसितैर्मुखश्रिया वीज्यमाने विमलकपोलस्थलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकचग्रहलम्बितेन प्रतिमाशशिबिम्बेन विराजिते स्वपति देवी यशोवती सहसैव आर्य्यपुत्र! परित्रायस्व परित्रायस्व इति भाषमाणा भूषणरवेण व्याहरन्तीव परिजनम् उत्कम्पमानाङ्गयष्टिः उदतिष्ठत्।

---

(४३) आसन्नेति आसन्नया आपतन्त्येत्यर्थः प्रभातवेलया प्रत्यूषसमयेन विलुप्यमानं लावण्यं कान्तिर्यस्य तथाभूते। लिलम्बिषमाणे लम्बितुमिच्छति पश्चिमायां दिशीति शेषः। सीदत्तेजसि चीयमाणरश्मौ तारकेश्वरे ताराराजे चन्द्रमसि।

(४४) करेति कराग्रैः किरणाग्रैः हस्ताग्रैश्च स्पृष्टायां धृतायां कुमुदिन्यां यः प्रमोदः सत्त्वोदयजनितप्रीतिः तस्मात् जन्म उत्पत्तिर्यस्य तथोक्ते श्रमधरस्वेद इव चन्द्रघर्म इव गलति पतति।

(४५) अवश्यायपयसि शिशिरजले मध्विति मधुमदेन मद्यपानजनितोल्लासेन मत्तानां प्रसुप्तानां निद्रितानां सीमन्तिनीनां नारीणां निःश्वासैः हताः सञ्चालिताः तेषु संक्रान्तमदेष्विव तासां सीमन्तिनीनां सकाशादिति भावः। विमलेति विमलेषु निर्मलेषु स्वच्छेषु इत्यर्थः नखेषु प्रतिबिम्बिताः प्रतिफलिताः ताभिः तारकाभिः नक्षत्रैः संवाह्यमानेति संवाह्यमानौ संसेव्यमानौ चरणौ यस्य तथाभूते इव।

(४६) विस्रब्धेति। विस्रब्धं विश्वस्तं यथा तथा प्रसारितानि विस्तारितानि तैः मुखश्रिया वदनलक्ष्म्या। विमलेति विमलं स्वच्छं कपोलस्थलं तस्मिन् स्थितं प्रतिफलितं तेन सितकुसुमशेखरेणेव श्वेतपुष्पशिरोमाल्येनेव। रतीति रतिकेलिः सुरतलीला तत्र यः कचग्रहः केशाकर्षणं तेन लम्बितं तेन। प्रतिमाशशिबिम्बेन

अथ तेन सर्वस्यामपि पृथिव्याम् (४७) अश्रुतपूर्वेण किमुत देवीमुखे परित्रायस्वेति ध्वनिना दग्ध इव श्रवणयोः एकपद एव निद्रां तत्याज राजा। शिरोभागाच्च कोपकम्पमानदक्षिण-कराकृष्टेन कर्णोत्पलेनेव निर्गच्छता अच्छधारेण धौतासिना सीमन्तयन्निव निशाम् (४८) अन्तरालव्यवधायकम् आकाशम् इव उत्तरीयांशुकं विक्षिपन् वामकरपल्लवेन, करविक्षेपवेग-गलितेन हृदयेनेव भयनिमित्तान्वेषिणा भ्रमता दिक्षु कनक-वलयेन विराजमानः (४९) सत्वरावतारितवामचरणाक्रान्ति-कम्पितप्रासादः पुरः पतितेन असिधारागोचरगतेन शशि-मयूखखण्डेनेव खण्डितेन हारेण राजमानः लक्ष्मीचुम्बन-लग्नताम्बूलरसरञ्जिताभ्यामिव निद्रया कोपेन च अतिलोहि-

---

शशिप्रतिबिम्बेन इत्यर्थः स्वपिति निद्राति राजनीति पूर्वेणान्वयः। उत्कम्पमानाङ्गयष्टिः उच्चैरतिशयेन कम्पमाना वेपमाना अङ्गयष्टिः यस्याः तथाभूता।

(४७) अश्रुतपूर्वेण पूर्वमश्रुतेन तादृशसौराज्ये देशे प्रजानां तथाभूतविपत्-पातस्य असम्भवादिति भावः। दग्ध इव ज्वलित इव एकपदे सद्य एवेत्यर्थः। राजा वेगेन उत्पपातेति सम्बन्धः तमेव विशिनष्टि शिरोभागादिति। शिरोभागात् शीर्षदेशात्। कोपेति कोपेन कम्पमानः दक्षिणः करः तेन आकृष्टः तेन। निर्गच्छता निर्गलता अच्छधारेण निर्मलधारेण धौतासिना निशिततलवारेण सीमन्तयन्निव द्विधा कुर्वन्निव।

(४८) अन्तरेति। अन्तरालस्य स्वस्य विपद्ग्रस्तेश्च मध्यस्य व्यवधायकं व्यवधानकारणमित्यर्थः आच्छादकमिति यावत्। उत्तरीयांशुकम् उत्तरासङ्गं वामकर-पल्लवेन विक्षिपन् त्यजन् इत्यर्थः। करेति करस्य विक्षेपः प्रसारणमित्यर्थः तस्य वेगः रयः तेन गलितं निःसृतं तेन। भयेति भयस्य निमित्तं कारणम् अन्विच्छतीति तथोक्तेन कनकवलयेन काञ्चनकटकेन।

(४९) सत्वरं सवेगम् अवतारितेन विक्षिप्तेन वामचरणेन या आक्रान्तिः आघातः तया कम्पितः प्रासादः हर्म्यं येन तथाभूतः। असिधारागोचरगतेन असिधारायाः गोचरं गतः तेन असिधाराप्रतिबिम्बितेन इत्यर्थः। शशिमयूख-

ताभ्यां लोचनाभ्यां (५०) पाटलयन् पर्य्यन्तान् आशानाम् आबद्धान्धकारया त्रिपताकया भ्रूकुट्या पुनरिव त्रियामां परिवर्त्तयन् देवि! न भेतव्यं न भेतव्यम् इत्यभिदधानो वेगेन उत्पपात। सर्वासु च दिक्षु विक्षिप्तचक्षुः यदा न अद्राक्षीत् किञ्चिदपि तदा पप्रच्छ तां भयकारणम्।

अथ (५१) गृहदेवतास्विव प्रधावितासु यामिकविलासिनीषु प्रबुद्धे च समीपशायिनि परिजने शान्ते च हृदयोत्कम्पकारिणि (५२) साध्वसे सा समभाषत। आर्य्यपुत्र! जानामि स्वप्ने भगवतः सवितुर्मण्डलात् निर्गत्य द्वौ कुमारकौ तेजोमयौ बालातपेनेव पूरयन्तौ दिग्भागान् वैद्युतम् इव जीवलोकं कुर्वाणौ मुकुटिनौ कुण्डलिनौ अङ्गदिनौ कवचिनौ गृहीतशस्त्रौ इन्द्रगोपकरुचा रुधिरेण धाम्ना स्नातौ उन्मुखेन उत्तमाङ्गघटमानाञ्जलिना जगता निखिलेन प्रणम्यमानौ कन्यया एकया च चन्द्रमूर्त्त्येव सुषुम्नरश्मिनिर्गतया अनुगम्य-

---

खण्डेनेव चन्द्रकिरणशकलेनेव खण्डितेन छिन्नेन राजमानः शोभमानः। लक्ष्मीति लक्ष्म्याः कलङ्कभूतायाः चुम्बनं तेन लग्नः संसक्तः यः ताम्बूलरसः तेन रञ्जिताभ्याम् इव अतिलोहिताभ्याम् अतिरक्ताभ्याम्।

(५०) पाटलयन् रक्तीकुर्वन् आशानां दिशां पर्य्यन्तान् प्रान्तदेशान्। आबद्धान्धकारया आपूर्णतिमिरया। त्रिपताकया त्रिरेखया। त्रियामां प्रहरत्रितयवतीं रजनीमित्यर्थः। परिवर्त्तयन् प्रकारान्तरेण उपस्थापयन्नित्यर्थः। विक्षिप्तचक्षुः प्रसृतनेत्रः।

(५१) गृहदेवतासु इव गृहाधिष्ठातृदेवीषु इव प्रधावितासु आपतितासु आर्त्तनादश्रवणादिति भावः। यामिकविलासिकनीषु प्रहरपालिनीषु प्रहररक्षिकासु नारीषु इति यावत्। प्रबुद्धे जागरिते।

(५२) साध्वसे भये। जानामि मन्ये। बालातपेनेव अभिनवसूर्य्यमयूखेनेव पूरयन्तौ आच्छादयन्तौ। वैद्युतमिव तडिन्मयमिव। जीवलोकं जगत्। मुकुटिनौ

मानौ चितितलमवतीर्णौ तौ च मे विलपन्त्याः शस्त्रेण उदरं विदार्य्य प्रवेष्टुम् आरब्धौ। प्रतिबुद्धास्मि च आर्य्यपुत्त्रं विक्रोशयन्ती वेपमानहृदया इति।

एतस्मिन्नेव च कालक्रमे राजलक्ष्म्याः प्रथमालापः (५३) प्रथयन्निव स्वप्नफलम् उपतोरणं रराण प्रभातशङ्खः। भाविनीं भूतिमिव अभिदधाना दध्वनुः अमन्दं दुन्दुभयः। चकाण कोणाहता आनन्दादिव प्रत्यूषनान्दी। जयजयेति प्रबोधमङ्गल-पाठकानाम् उच्चैर्वाचोऽश्रूयन्त। पुरुषश्च वल्लभतुरङ्गमन्दुरा-मन्दिरे मन्दमन्दं सुप्तोत्थितः सप्तीनां क्वणतमधुरह्रेषारवाणां पुरस्रोतत्तुषारसलिलशीकरं किरन् मरकतहरितं यवसं वक्त्रा-परवक्त्रं पपाठ।

---

किरीटधारिणौ कुण्डलिनौ कुण्डलालङ्कृतौ अङ्गदिनौ केयूरशोभितौ कवचिनौ वर्मधरौ। इन्द्रगोपकरुचा इन्द्रगोपकस्तृणकीटमणिविशेष तद्वत् रुग् यस्य तेन। रुधिरेण रक्तेन। उन्मुखेन ऊर्द्ध्वमुखेन। उत्तमेति उत्तमाङ्गे शिरसि घटमानो मिलन् अञ्जलिर्यस्य तेन शिरोबद्धाञ्जलिनेति यावत्। निखिलेन समस्तेन प्रणम्यमानौ अभिवन्द्यमानौ। सुषुम्नरश्मिनिर्गतया सुसुम्नाख्योऽमृतमयो रविरश्मिः तस्मात् निर्गता निःसृता तया। तौ च कुमारावित्यर्थः। प्रतिबुद्धा जागरिता, विक्रोशन्ती आर्त्तस्वरेण आकारयन्ती।

(५३) प्रथयन्निव विस्तारयन्निव। उपतोरणं तोरणे इति उपतोरणं विभक्त्यर्थेऽव्ययीभावः तोरणसमीपे वा रराण दध्वान। प्रभातशङ्खः प्रातःकालशङ्खः। भाविनीम् आगामिनीं भूतिम् अभ्युदयम्। अभिदधाना कथयन्तः सूचयन्त इत्यर्थः अमन्दं गम्भीरम्। चकाण दध्वान कोणाहता कोणो वीणादिवादनदण्डः तेन आहता ताड़िता प्रत्यूषनान्दी प्रभातभेरीवाद्यविशेषः। प्रबोधेति प्रबोधे जागरण-काले राज्ञ इति शेषः। मङ्गलपाठकानां माङ्गलिकस्तोत्रपाठिनाम्। पुरुषश्च कश्चित् अश्वपाल इति भावः। वल्लभेति वल्लभानां प्रियाणां तुरङ्गाणाम् अश्वानां मन्दुरा वाजिशाला एव मन्दिरं तस्मिन् वाजिशाला तु मन्दुरेत्यमरः सप्तीनाम् अश्वानाम्। क्वणेति क्वणतः मधुरः मनोज्ञः ह्रेषारवः ध्वनिविशेषः यैः तथोक्तानाम्। पुरः अग्रतः।

निधिस्तरुविकारेण सन्मणिः स्फुरता धाम्ना ।
शुभागमो निमित्तेन स्पष्टमाख्यायते लोके ॥ ५४ ॥
अरुण इव पुरःसरो रविं पवन इवातिजवो जलागमम् ।
शुभमशुभमथापि वा नृणां कथयति पूर्वनिदर्शनोदयः ॥५५॥

नरपतिस्तु तत् श्रुत्वा प्रीयमाणेन अन्तःकरणेन तामवादीत् देवि ! (५६) किं मुदोऽवसरे विषीदसि?। सम्पन्ना: ते गुरुजनाशिषः पूर्णा नो मनोरथाः परिगृहीतासि कुलदेवताभिः प्रसन्नस्ते भगवान् अंशुमाली नचिरेणैव अतिगुणवदपत्यद्वयलाभेन अनन्दयिष्यति भवतीम्। इति अभिधाय अवतीर्य्य च यथाक्रियमाणाः क्रियाश्चकार। यशोवती अपि तुतोष तेन पत्युः भाषितेन।

---

च्योतदिति च्योतन्तः निःसरन्तः तुषारसलिलानां हिमजलानां शीकराः विन्दवः यस्मात् तथोक्तम्। मरकतहरितं मरकतवत् हरितः श्यामवर्णः तम्। यवसं घासं किरन् ददत् वक्त्रापरवक्त्रं वक्त्रञ्च अपरवक्त्रञ्च ते तदाख्ये मात्रावृत्ते।

निधिरिति। लोके जगति तरुविकारेण तरूणां वृक्षाणां विकारेण विकृतभावेन शाखानां परिणाहोद्गतानामधोमुखत्वादिरूपेण निधिः अवस्थितरत्नविशेषः स्फुरता विसरता धाम्ना तेजसा प्रभयेति यावत् सन्मणिः सद्रत्नं तथा निमित्तेन सुलक्षणेन निदर्शनेन शुभागमः मङ्गलागमः स्पष्टं स्फुटम् आख्यायते सूच्यते ॥ ५४ ॥

अरुण इवि। पूर्वनिदर्शनोदयः प्राक् शुभलक्षणाविर्भावः पुरःसरः अग्रोदित इति यावत्, अरुणः सूर्य्यसारथिः रविं सूर्य्यमिव अतिजवः अतिवेगवान् पवनः जलागममिव नृणां मानवानां शुभं मङ्गलम् अथवापि अशुभम् अमङ्गलं कथयति आचष्टे सूचयतीत्यर्थः ॥ ५५ ॥

(५६) मुदोऽवसरे आनन्दसमये इत्यर्थः विषीदसि विषण्णा भवसि। सम्पन्नाः सम्पन्नाः सिद्धा इति यावत्। पूर्णाः सफलाः। कुलदेवताभिः वंशदेवताभिः परिगृहीतासि अनुकम्पितासि। अंशुमाली सूर्य्यः। न चिरेणैव अविलम्बेनैव अतिगुणवदिति अतिगुणवताम् अतिगुणशालिनाम् अपत्यानां पुत्रयोः पुत्राश्च इत्यर्थः लाभेन।

ततः समतिक्रान्ते कस्मिंश्चित् (५७) कालांशे देव्याञ्च यशोवत्यां देवो राज्यवर्द्धनः प्रथममेव सम्बभूव गर्भे। गर्भस्थितस्यैव च यस्य यशसेव पाण्डुतामादत्त जननी। (५८) गुणगौरवक्लान्तेव गात्रमुद्वोढुं न शशाक। कान्तिविसरामृतरसतृप्तेव आहारं प्रति पराङ्मुखी बभूव। शनैः शनैः उपचीयमानगर्भभरालसा च गुरुभिः वारितापि वन्दनाय कथमपि सखीभिर्हस्तावलम्बेन अनीयत। विश्राम्यन्ती शालभञ्जिकेव समीपगतस्तम्भभित्तिषु अलक्ष्यत। (५९) कमललोभनिलीनैः अलिभिरिव व्रती उद्वर्त्तुं नाशकत् चरणौ। मृणाललोभेन च चरणनखमयूखलग्नैः भवनहंसैरिव सञ्चार्य्यमाणा मन्दमन्दं बभ्राम। (६०) मणिभित्तिपातिनीषु प्रतिमास्वपि हस्तावलम्बनलोभेन प्रसा-

---

(५७) कालांशे समयविभागे सम्बभूव सम्भूतः सञ्जात इत्यर्थः स्वतेजस आधानादिति भावः। यस्य राज्यवर्द्धनस्य आत्मन इति भावः आत्मा वै जायते पुत्र इति श्रुतेः। जननी यशोवती पाण्डुतां पाण्डुवर्णत्वम् आदत्त जग्राह। पाण्डुवर्णा भूदित्यर्थः।

(५८) गुणेति। गुणानां दयादाक्षिण्यादीनां गर्भस्थजीवस्य इति भावः गौरवेण अतिशयगुरुत्वेन क्लान्तेव खिन्नेव इत्यर्थः उद्वोढुं धारयितुमित्यर्थः। कान्तीति कान्तीनां लावण्यानां विसरः प्रसर एव अमृतरसः तेन तृप्ता इव लब्धतृप्तिः एव। उपचीयमानेति उपचीयमानः वर्द्धमानः यो गर्भभरः गर्भस्य भारः तेन अलसा मन्थरा वारितापि निषिद्धापि वन्दनाय गुरूणामिति शेषः हस्तावलम्बेन हस्तधारणेन। विश्राम्यन्ती विश्रामार्थं तिष्ठन्ती शालभञ्जिकेव पुत्तलिकेव समीपगतस्तम्भभित्तिषु सन्निहितस्तम्भकुड्येषु अलक्ष्यत अदृश्यत।

(५९) कमलेति। कमलेषु लोभः चरणयोः कमलबुद्ध्या लोभ इत्यर्थः तेन निलीनैः संसक्तैः चरणयोरिति भावः अलिभिरिव भृङ्गैरिव व्रती आकीर्णौ। मृणाललोभेन मृणालानि एतानीति धिया यो लोभः तेन। चरणेति चरणयोः नखाः तेषां मयूखेषु किरणेषु लग्नाः संसक्ताः तैः सञ्चार्य्यमाणा सञ्चाल्यमाना।



रयामास करकमलं किमुत सखीषु । (६१) माणिक्यस्तम्भदीधितीः अपि आलम्बितुम् आचकाङ्क्ष किं पुनर्भवनलताः । समादेष्टुमपि असमर्था आसीत् गृहकार्य्याणि कैव कथा कर्त्तुम् । आस्तां नूपुरभारखेदितं चरणयुगलं मनसापि न उदसहत सौधम् आरोढुम् । अङ्गान्यपि न अशक्नोत् धारयितुं दूरे भूषणानि । चिन्तयित्वापि क्रीड़ापर्वताधिरोहणम् उत्कम्पितस्तनी तत्रास । प्रत्युत्थानेषु उभयजानुशिखरविनिहितकरकिशलयापि गर्वादिव गर्भेण अधार्य्यत । प्रतिदिवसञ्च अधोमुखी (६२) स्तनपृष्ठसंक्रान्तेन अपत्यदर्शनौत्सुक्यात् अन्तःप्रविष्टेन एव मुखकमलेनैवं प्रीयमाणा ददर्श गर्भम् । उदरे तनयेन हृदये च भर्त्रा तिष्ठता द्विगुणितामिव लक्ष्मीमुवाह । पत्युत्सङ्गसुप्तशरीरा च शरीरपरिचारिकाणाम् अङ्केषु सपत्नीनान्तु शिरस्सु पादौ चकार । (६३) अवतीर्णे च

---

(६०) मणीति । मणिभित्तिषु मणिमयकुड्येषु पतन्तीति पातिन्यः तासु प्रतिमासु प्रतिविम्बेषु हस्तावलम्बलोभेन हस्तधारणाशया ।

(६१) माणिक्येति । माणिक्यस्य रत्नविशेषस्य स्तम्भाः माणिक्यनिर्मितस्तम्भा इत्यर्थः तेषां दीधितयः मयूखाः ताः भवनलताः गृहाङ्गनवर्त्तिनीः वल्लीरित्यर्थः समादेष्टुम् आज्ञप्तुम् । आस्तां तिष्ठतु । नूपुरेति नूपुरयोः भारेण खेदितं सञ्जातखेदम् उदसहत उत्साहमकरोत् सौधं हर्म्योपरितलमित्यर्थः । दूरे किमुतेत्यर्थः । तत्रास भीता बभूव । प्रत्युत्थानेषु गुरुजनाद्यागमने समुत्थानेषु उभयोर्जान्वोः शिखरयोः अग्रयोः विनिहितः अर्पितः करकिसलयः हस्तपल्लवः यया तथाभूता ।

(६२) स्तनेति । स्तनपृष्ठे स्तनोपरि संक्रान्तं प्रतिविम्बितं तेन । अपत्येति अपत्यस्य पुत्रस्य गर्भस्थितस्येति भावः दर्शने यत् औत्सुक्यं कुतूहलं तस्मात् । द्विगुणितां द्विरावृत्तां लक्ष्मीं श्रियम् । पत्युत्सङ्गेति पत्युः स्वामिनः उत्सङ्गे क्रोड़े सुप्तं निहितं शरीरं यया तथाभूता । सपत्नीनां समानभर्तृकाणां दुर्भगानामिति भावः ।

दशमे मासि (६४) सर्वोर्वीभृत्पक्षपाताय वज्रपरमाणुभिः इव निर्मितं त्रिभुवनभारधारणसमर्थं (६५) शेषफणामण्डलोपकरणैः इव कल्पितं सकलभूभृत्कम्पकारिणं दिग्गजावयवैः इव विहितम् असूत देवं राज्यवर्द्धनम्। यस्मिन् जाते जातप्रमोदा नृत्यमय्य इव अजायन्त प्रजाः। (६६) पूरितासङ्ख्यशङ्खशब्दमुखरं प्रहतपटहशतपटुरवं गम्भीरभेरीनिनादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मासमेकं दिवसमिव महोत्सवम् अकरोत् नरपतिः।

अथ अन्यस्मिन्नतिक्रान्ते कस्मिंश्चित् काले (६७) कन्दलिनि कुड्मलितकदम्बतरौ तोकमलवणस्तम्बे स्तम्भिततामरसे विकसितचातकचेतसि मूकमानसौकसि नभसि देव्या देवक्या

---

(६३) अवतीर्णे उपस्थिते।

(६४) सर्वेति। सर्वेषाम् उर्वीभृतां राज्ञां पर्वतानाञ्च पक्षपाताय सहायनिपाताय गरुत्कर्त्तनाय च वज्रपरमाणुभिरिव वज्रस्य कुलिशस्य परमाणवः अतिक्षुद्रा अंशविशेषाः तैरिव।

(६५) शेषेति। शेषस्य अनन्तनागस्य फणामण्डलानि एव उपकरणानि उपादानकारणानि तैरिव अन्यथा कथं तादृशभारधारणे सामर्थ्यमस्येति भावः। सकलेति सकलानां भूभृतां राज्ञां पर्वतानाञ्च कम्पकारिणं कम्पहेतुम्। असूत प्रसूतवती। राज्यवर्द्धनं राज्यं वर्द्धयतीति तथोक्तम् अन्वर्थाभिधेयमिति भावः। यस्मिन् राज्यवर्द्धने। जातप्रमोदाः जातोत्सवाः।

(६६) पूरितेति। पूरितानाम् आध्मापितानाम् असंख्यानां बहूनां शङ्खानां शब्दैः मुखरः कोलाहलपूर्णः तम्। प्रहतेति प्रहतानां ताड़ितानां पटहशतानां वादित्रशतानां पटवः महान्तः रवा यस्मिन् तथाविधम्। गम्भीरेति गम्भीरैः घनैः भेरीणां वाद्यविशेषाणां निनादैः निःस्वनैः निर्भरम् अत्यन्तं यथा तथा भरितम् आपूरितं भुवनं येन तथाविधम्। प्रमोदेति प्रमोदेन प्रहर्षेण उन्मत्तैः उल्लसितैः मर्त्यलोकैः मनोहरं रमणीयम्।

(६७) कन्दलिनि कन्दलाख्यलताशोभिनि। कुड्मलितेति कुड्मलिताः मुकुलिताः कदम्बतरवः यस्मिन् तथोक्ते तोकमलवणस्तम्बे तरुणलवणगुच्छे। स्तम्भितेति स्तम्भि-

इव चक्रपाणिः यशोवत्या हृदये गर्भे च सममेव सम्बभूव हर्षः। शनैः शनैः च अस्याः सर्वप्रजापुण्यैरिव (६८) परिगृहीता भूयोऽपि आपाण्डुताम् अङ्गयष्टिर्जगाम। गर्भारम्भेण (६९) श्यामायमानचारुचूचुकचूलिकौ चक्रवर्त्तिनः पातुं मुद्रितौ इव पयोधरकलशौ बभार। (७०) स्तन्यार्थम् आननिहिता दुग्धनदीव दीर्घस्निग्धधवला माधुर्य्यम् अधत्त दृष्टिः। सकलमङ्गलगणाधिष्ठितगात्रगरिम्णेव गतिः अमन्दायत। मन्दमन्दं सञ्चरन्त्या (७१) निर्मलकुट्टिमनिमग्नप्रतिबिम्बनिभेन गृहीतपादपल्लवा पूर्वसेवामिव आरेभे पृथिवी अस्याः। (७२) दिवसम् अधिशयानायाः शयनीयम् अपाश्रयपत्त्रभङ्गपुत्त्रिकाप्रतिमा विम-

---

तानि निश्चलानि वातविरहादिति भावः तामरसानि रक्तोत्पलानि यत्र तादृशे। विकसितेति विकसितम् उल्लसितं सतताम्बुलाभादिति भावः चातकानां पक्षिविशेषाणां चेतः मानसं यस्मिन् तथोक्ते। मूकेति मूकाः निःशब्दाः मानसौकसः मानससरोविहारिणः हंसा इति यावत् यस्मिन् तादृशे वर्षासु मर्त्त्यलोके वृष्टिजलस्य आविलत्वात् हंसानां तत्स्थहाराहित्येन मानससरसि निर्मले विहरणस्य कविसमयप्रसिद्धेरिति भावः। नभसि श्रावणे मासि। चक्रपाणिः कृष्णः। हृदये हर्षः आनन्दः, गर्भे हर्षः हर्षनामा नरपतिरित्यर्थः।

(६८) परिगृहीता आश्रिता।

(६९) श्यामायमानेति। श्यामायमाना नीलायमाना चारुः मनोज्ञा चूचकयोः कुचाग्रयोः चूलिका कलङ्कविशेषः ययोः तादृशौ चक्रवर्त्तिनः भाविनः सम्राजो हर्षस्य नृपतेः मुद्रिताविव मुद्रया अङ्किताविव पयोधरकलसौ स्तनकुम्भौ।

(७०) स्तन्यार्थं स्तनदुग्धार्थं माधुर्य्यं मधुररसम्। अधत्त धृतवती। सकलेति सकलैः मङ्गलगणैः माङ्गलिकवस्तुनिवहैः अधिष्ठितम् आश्रितं यत् गात्रं शरीरं तस्य गरिमा गुरुत्वं तेनेव अमन्दायत मन्दा इव आचरत्।

(७१) निर्मलेति। निर्मलेषु कुट्टिमेषु गृहाभ्यन्तरतलेषु निमग्नं निपतितं यत् प्रतिबिम्बं चरणयोरिति भावः तन्निभेन तद्व्याजेन गृहीतपादपल्लवा धृतचरणकिसलया पृथिवी भूमिः अस्याः यशोवत्याः।

(७२) दिवसं दिवसे इत्यमरः शयनीयं शय्याम् अधिशयानायाः। अपाश्रयस्

लकपोलोदरगता प्रसवसमयं प्रतिपालयन्ती लक्ष्मीरिव अलक्ष्यत। (७३) क्षपासु सौधशिखराग्रगताया गर्भोन्माथमुक्तांशुके स्तनमण्डले संक्रान्तमुडुपतिमण्डलम् उपरि गर्भस्य श्वेतातपत्रमिव केनापि धार्य्यमाणम् अदृश्यत। (७४) सुप्ताया वासभवने चित्रभित्तिचामरग्राहिण्योऽपि चामराणि चालयाञ्चक्रुः। (७५) स्वप्नेषु करविधृतकमलिनीपलाशपुटसलिलैः चतुर्भिः अपि दिक्करिभिः अक्रियत अभिषेकः। (७६) प्रतिबुध्यमानायाः च चन्द्रशालिकाशालभञ्जिकापरिजनो जयशब्दम् असकृत् अजनयत्। (७७) परिजनाह्वानेषु आदिश इति अशरीरा वाचो निश्चेरुः। क्रीड़ायाम् अपि न असहत आज्ञाभङ्गम्। अपिच चतुर्णामपि महार्णवानाम् एकीकृतेन अम्भसा स्नातुं वाञ्छा

---

पर्य्यङ्कस्य या पत्रभङ्गपुत्रिका तस्याः प्रतिमा प्रतिविम्बम्। विमलं कपोलोदरं गण्डाभ्यन्तरं तत् प्रतिफलित इत्यर्थः प्रतिपालयन्ती प्रतीक्षमाणा।

(७३) क्षपासु रजनीषु सौधशिखरस्य प्रासादशिखरस्य अग्रम् उपरिभागः तद्गतायाः तत्र स्थिताया इत्यर्थः। गर्भेति गर्भस्य उन्माथेन क्लेशेन मुक्तं त्यक्तम् अंशुकं वसनं यस्मात् तथाभूते स्तनमण्डले संक्रान्तं प्रतिफलितम् उडुपतिमण्डलं चन्द्रमण्डलं केनापि अनिर्दिष्टेन जनेन सेवकेनेति भावः।

(७४) सुप्तायाः निद्रितायाः। चित्रेति चित्रभित्तिषु आलेख्यकुड्येषु स्थिताः चामरग्राहिण्यः ताः।

(७५) स्वप्नेषु निद्रावस्थायां विषयानुभवाः तेषु। स्वप्नो निद्रासुपेतस्य विषयानुभवस्तु य इति दर्पणः। करेति करैः शुण्डैः विधृतानि गृहीतानि कमलिनीपलाशानां पुटगृहीतानि सलिलानि जलानि यैः तथाभूतैः दिक्करिभिः दिग्गजैः।

(७६) प्रतिबुध्यमानायाः जाग्रत्याः। चन्द्रशालिका शिरोगृहं तत्र या याः शालभञ्जिकाः पुत्तलिकाः तासां परिजनः ता एव परिजनो वा असकृत् पुनः पुनः।

(७७) परिजनाह्वानेषु परिवाराकारणासु आदिश आज्ञापय। अशरीरा आकाशचारिण्य इत्यर्थः।

बभूव। (७८) वेलालतागृहोदरपुलिनपरिसरेषु पर्य्यटितुं हृदयम् अभिललाष। (७९) आत्ययिकेषु अपि कार्य्येषु सविभ्रमं भ्रूलता चचाल। (८०) सन्निहितेषु अपि मणिदर्पणेषु मुखम् उत्खाते खड्गपट्टे वीक्षितुं व्यसनमासीत्। (८१) उत्सारितवीणाः स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतौ असुखायन्त। (८२) पञ्जरकेसरिषु चक्षुः अरमत। (८३) गुरुप्रणामेषु अपि स्तम्भितमिव शिरः कथमपि ननाम। (८४) सखिजनाश्च अस्याः प्रमोदविस्फारितैः लोचनपुटैः आसन्नप्रसवमहोत्सवधियेव धवलयन्तो भवनं विकचकुमुदकमलकुवलयपलाशवृष्टिमयं रक्षावलिविधिमिवानवरतं विदधाना दिक्षु क्षणमपि न मुमुचुः पार्श्वम्।

---

(७८) वेलेति। वेलासु समुद्रतीरेषु यानि लतागृहाणि तेषाम् उदरेषु अभ्यन्तरेषु यानि पुलिनानि सैकतभागाः तेषां परिसराः आभोगाः तेषु।

(७९) आत्ययिकेषु अवश्यकर्त्तव्येषु। सविभ्रमं सविलासं भ्रूलता चचाल पस्पन्दे। भ्रूलतासञ्चालनेनैव अवश्यकर्त्तव्यानि कारयामास न तु हस्तादिना इति आलस्यपरवशतातिशयोक्तिः। अथवा आत्ययिकेषु कष्टसाध्येषु कार्य्येषु भ्रूलता चचाल इयेष। गर्भे वीरपुरुषस्य अवस्थित्या कष्टसाध्यकार्य्ये प्रवृत्तिः आसीत्।

(८०) सन्निहितेषु अपि निकटस्थितेषु अपि मणिदर्पणेषु अनादरे सप्तमी तान् अनादृत्येत्यर्थः। उत्खाते उद्धृते परिजनेन इति भावः खड्गपट्टे असिफलके मुखं वीक्षितुं द्रष्टुं व्यसनम् आसक्तिरभिलाष इत्यर्थः महावीराश्रितगर्भत्वात् वीरैस्य खड्गफलके एव मुखदर्शनस्य प्राकृतिकत्वादिति भावः।

(८१) उत्सारितवीणा उत्सारिता अपसारिता वीणा येभ्यः तथाभूताः धनुर्ध्वनयः धनुर्निनादाः श्रुतौ श्रवणेन्द्रिये असुखायन्त श्रुतिसुखा जाता इति यावत्।

(८२) पञ्जरकेशरिषु बन्धनं गतेषु सिंहेषु इत्यर्थः चक्षुः अरमत अप्रीयत।

(८३) गुरुप्रणामेषु गुरुजनवन्दनेषु स्तम्भितमिव निश्चलोन्नतमिव। पूर्वोक्तेषु सर्वेषु एव वाक्येषु वीरपुरुषाश्रितगर्भत्वात् तथोक्तिरिति भावः।

(८४) सखिजनाः सहचारिण्यः प्रमोदविस्फारितैः आनन्दविसारितैः धवलयन्तः शुभ्रीकुर्वन्तः विदधानाः कुर्वन्तः। मुमुचुः तत्यजुः।

(८५) आत्मोचितस्थाननिषण्णाश्च महान्तो विविधौषधिधरा भिषजो भूधरा इव भुवो धृतिं चक्रुः। (८६) पयोनिधीनां हृदयानीव लक्ष्म्या सहागतानि ग्रीवासूत्रग्रन्थिषु प्रशस्तरत्नानि अबध्यन्त।

ततश्च प्राप्ते (८७) ज्येष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्यां व्यतीते प्रदोषसमये समारुरुक्षति क्षपायौवने सहसैवान्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य। निर्गत्य च ससम्भ्रमं यशोवत्याः स्वयमेव (८८) हृदयनिर्विशेषा धात्र्याः सुता सुयात्रा इति नाम्ना राज्ञः पादयोर्निपत्य देव! दिष्ट्या वर्द्धसे द्वितीयसुतजन्मना इति व्याहरन्ती पूर्णपात्रं जहार।

---

(८५) आत्मेति। आत्मनः स्वस्य उचितेषु स्थानेषु निषण्णाः उपविष्टाः भिषजः वैद्याः विविधानि नानाविधानि औषधीः रोगोपशमनद्रव्याणि लताश्च धरन्तीति तथोक्ताः भूधरा इव पर्वता इव भुवः स्थानस्य प्रसवस्थानस्य इत्यर्थः पृथिव्याश्च धृतिम् अवधारणं धारणञ्च चक्रुः कृतवन्तः।

(८६) पयोनिधीनां समुद्राणाम्। लक्ष्म्या पयोनिधिसमुत्थितयेति भावः सह आगतानि उपनीतानि ग्रीवासूत्रग्रन्थिषु ग्रीवायां ये सूत्रग्रन्थयः तेषु। प्रशस्तरत्नानि उत्कृष्टमणयः अबध्यन्त बद्धानि परिजनैः इति शेषः।

(८७) ज्येष्ठामूलीये ज्यैष्ठे बहुलासु कृत्तिकासु नक्षत्रेषु बहुलपक्षद्वादश्यां कृष्णपक्षद्वादश्यां तिथौ व्यतीते अतिक्रान्ते प्रदोषसमये रजनीमुखे समारुरुक्षति समारोढुमिच्छति प्रादुर्भवतीत्यर्थः क्षपायौवने रात्रितारुण्ये निशीथे इत्यर्थः समुदपादि सञ्जातः।

(८८) हृदयनिर्विशेषा हृदयादभिन्ना इत्यर्थः। धात्र्याः सुता धात्रेयीत्यर्थः। व्याहरन्ती कथयन्ती पूर्णपात्रं प्रियभाषणपरितोषजनितवसनरत्नादिपूरितपात्रं दीयमानं पूर्णपात्रम् आनन्ददोऽतिसौहार्दादित्य वस्त्रादिकं बलात्। अजानतो इरत्येव पूर्णपात्रन्तु तत् स्मृतम् इत्युक्तलक्षणं दानवस्तु च। जहार गृहीतवती।

अस्मिन्नेव च काले राज्ञः (८९) परमसम्मतः शतशः संवादितातीन्द्रियादेशो दर्शितप्रभावः सङ्कलिती ज्योतिषि सर्वासां ग्रहसंहितानां पारदृश्वा सकलगणकमध्ये महितो हितश्च त्रिकालज्ञानभाक् भोजकस्तारको नाम गणकः समुपसृत्य विज्ञापितवान् देव! श्रूयतां मान्धाता किलैवंविधे (९०) व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि सर्वेषु उच्चस्थानस्थितेषु एवं ग्रहेषु ईदृशि लग्ने भेजे जन्म। (९१) अर्वाक् ततोऽस्मिन् अन्तराले पुनः एवंविधे योगे चक्रवर्त्तिजनने न अजनि जगति कश्चिदपरः। (९२) समानां चक्रवर्त्तिनाम्

---

(८९) परमसम्मतः अतिप्रियः शतशः शतवारान् बहुश इत्यर्थः। संवादितेति संवादितः प्रत्यक्षीकृतः अतीन्द्रियः इन्द्रियमतिक्रान्तः भावीति भावः आदेशः घटना येन तथाभूतः भविष्यद्वक्तेति भावः। दर्शितप्रभावः दर्शितः प्रकटितः प्रभावः सामर्थ्यं येन तथोक्तः सङ्कलिती सङ्कलितम् अस्यास्तीति सङ्कलिती सङ्कलनाभिज्ञः गणिताभिज्ञ इति यावत्। ज्योतिषि ज्योतिषशास्त्रे। ग्रहसंहितानां ग्रहा रव्यादयः तेषां संहिताः सन्दर्भाः तत्तद् ग्रहज्ञानशास्त्राणीति यावत् तासु पारदृश्वा पारदर्शी विशेषज्ञ इति यावत् महितः पूजितः हितः हितकर इत्यर्थः भोजकः आहारपटुरिति भावः। मान्धाता सूर्य्यवंशीययुवनाश्वसुतः सार्वभौमनृपतिविशेषः।

(९०) व्यती पातादीति। व्यतीपातः गगने हि मकरार्कौ युगपत् स्यातां यदैकमार्गस्थौ भगणार्द्धेऽर्कश्च यदा शशी स भवेद् व्यतीपात इत्युक्तलक्षणो योगविशेषः आदिर्येषां तथोक्ताः सर्वे दोषाः तेषाम् अभिषङ्गः व्यतिकरः सम्बन्ध इति यावत् तेन रहितं वर्जितं तस्मिन् अहनि दिवसे उच्चस्थानस्थितेषु तुङ्गेषु इत्यर्थः ग्रहेषु रव्यादिषु ईदृशि एवंविधे शुभे इति भावः लग्ने राश्युदये राशीनाम् उदयो लग्नमित्यमरः। भेजे लेभे।

(९१) अर्वाक् ततः, तत्पश्चादित्यर्थः अस्मिन् अन्तराले समये एवंविधे सर्वशुभाकारे इति भावः योगे ग्रहादीनां सम्मिलने इत्यर्थः चक्रवर्त्तिनः सम्राजः जननम् उत्पत्तिर्यस्मिन् तादृशे। अपरः हर्षनृपात् अन्य इति यावत् न अजनि न जातः।

(९२) समानां चक्रवर्त्तिनां सार्वभौमनृपतीनां भरतार्जुनमान्धातृभगीरथ-

अग्रणीः चक्रवर्त्तिचिह्नानां महारत्नानाञ्च भाजनं सप्तानां सागराणां पालयिता सप्ततन्तूनां सर्वेषां प्रवर्त्तयिता सप्तसप्तिसमः सुतोऽयं देवस्य जात इति।

अत्रान्तरे स्वयमेव (९३) अनाध्माता अपि तारमधुरं शङ्खा विरेसुः। अताड़ितोऽपि क्षुभितजलनिधिजलध्वनिधीरं जुगुञ्ज अभिषेकदुन्दुभिः। अनाहतानि अपि (९४) मङ्गलतूर्य्याणि रेणुः। (९५) सर्वभुवनाभयघोषणापटह इव दिगन्तरेषु बभ्राम तूर्य्यप्रतिशब्दः। (९६) विधुतकेसरसटाश्च साटोपगृहीतहरितदूर्वापल्लवकवलप्रशस्तैर्मुखपुटैः समक्रेषन्त हृष्टा वाजिनः। (९७) सलीलम् उत्क्षिप्तैः हस्तपल्लवैः नृत्यन्त इव श्रवणसुभगं जगर्जुः गजाः। (९८) ववौ च अचिरात् चक्रायुधम्

---

युधिष्ठिराः। सगरो महुषश्चैव सप्तैते चक्रवर्त्तिनः॥ इत्युक्तानाम् अग्रणीः अग्रगण्यः तेषां सप्तानां श्रेष्ठ इत्यर्थः चक्रवर्त्तिलक्षणानां सार्वभौमचिह्नानां पद्मजालहस्तत्वादीनामित्यर्थः भाजनं पात्रं सागराणां लवणेक्षुसुरासर्पिर्दधिदुग्धजलशालिनाम् इत्यर्थः सप्ततन्तूनां यज्ञानां यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुरित्यमरः। प्रवर्त्तयिता सम्पादकः सप्तसप्तिसमः आदित्यसदृशः।

(९३) अनाध्माता अपूरिताः। तारमधुरम् उच्चैर्मधुरं विरेसुः दध्वनुः। अताड़ितः अनाहतः। क्षुभितेति क्षुभितस्य विलोड़ितस्य जलनिधेः सागरस्य जलं तस्य ध्वनिवत् धीरं गम्भीरं जुगुञ्ज दध्वान।

(९४) मङ्गलतूर्य्याणि माङ्गलिकवाद्यविशेषाः रेणुः रणन्ति स्म।

(९५) सर्वेति। सर्वेषां भुवनानाम् अभयघोषणाया निर्भयताप्रचारस्य पटह इव वाद्यविशेष इव तूर्य्यप्रतिशब्दः नान्दीवाद्यप्रतिध्वनिः।

(९६) विधुतेति। विधुताः कम्पिताः केसरा ग्रीवारोमाणि एव सटा जटा यैः तथोक्ताः। साटोपेति साटोपं ससम्भ्रमं गृहीतानां हरितानां श्यामलानां दूर्वापल्लवानां कवले ग्रासे प्रशस्तानि समुद्यतानि तैः मुखपुटैः मुखावयवैः समक्रेषन्त क्रेषारवम् अकुर्वन् हृष्टाः प्रसन्ना वाजिनः अश्वाः।

(९७) सलीलं सावहेलम् उत्क्षिप्तैः उन्नमितैः इत्यर्थः हस्तपल्लवैः शुण्डाकिसलयैः श्रवणसुभगं श्रुतिसुखं जगर्जुः गर्जितवन्तः।

उत्सृजन्त्या लक्ष्म्या निश्वास इव सुरामोदसुरभिः दिव्यानिलः। (९९) यज्वनां मन्दिरेषु प्रदक्षिणशिखाकलापकथितकल्याणागमाः प्रजज्वलुः अनिन्धना वैतानवह्नयः। (१) भुवस्तलात् तपनीयशृङ्खलाबन्धबन्धुरकलशीकोशाः समुद्गुः महानिधयः। (२) प्रहतमङ्गलतूर्य्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदात् अक्रियत एव दिष्टवृद्धिकलकलः। तत्क्षण एव च (३) शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातयः। साक्षाद्धर्म इव

---

(९८) ववौ वहति स्म चक्रायुधं विष्णुम् उत्सृजन्त्या त्यजन्त्याः। सुरामोदसुरभिः सुरायाः आमोदः विमर्दोत्थगन्धः तद्वत् सुरभिः घ्राणतर्पणः।

(९९) यज्वनां मन्दिरेषु यज्ञशालासु इत्यर्थः। प्रदक्षिणेति प्रदक्षिणेन दक्षिणदिग्भागगतः शिखाकलापः ज्वालासमूहः तेन कथितः सूचितः कल्याणागमः शुभागमः यैः तथोक्ताः। अनिन्धनाः इन्धनं काष्ठं तद्रहिताः वैतानवह्नयः यज्ञाग्नयः।

(१) भुवस्तलात् पृथ्वीतलात्। तपनीयेति तपनीयं स्वर्णं तस्य शृङ्खला हारविशेषः सौवर्णरशनेत्यर्थः तस्या बन्धेन बन्धुराः नतोन्नताः कलशीकोशाः कुम्भभाजनानि येषां तथाविधाः सौवर्णशृङ्खलाबद्धकुम्भभृता इत्यर्थः। महानिधयः महान्ति अमूल्यरत्नानि। समुद्गुः समुद्गच्छन्ति स्म समुत्तस्थुरित्यर्थः।

(२) प्रहतेति। प्रहतस्य ताड़ितस्य मङ्गलतूर्य्यस्य। प्रतिशब्दः प्रतिध्वनिः तन्निभेन तद्व्याजेन प्रमोदात् आनन्दात्। दिष्टवृद्धिकलकलः दिष्टं भाग्यं दिष्टं दैवं भागधेयं भाग्यमित्यमरः। तस्य वृद्धिः उन्नतिः तस्यै कलकलः कलरवः। अक्रियत एव कृत इव।

(३) शुक्लवाससः श्वेतवसनाः ब्रह्ममुखाः ब्रह्म वेदः वेदस्तत्त्वं तपोब्रह्म इत्यमरः। मुखे येषां तथोक्ताः वेदानुदगायन्त इति यावत्। कृतयुगप्रजापतय इव सत्ययुगसृष्टिकर्त्तार इव। प्रजावृद्धये प्रजानां लोकानां प्रजा स्यात् सन्ततौ जने इत्यमरः। सन्तानस्य च वृद्धये अभ्युदयाय। समुपतस्थिरे उपस्थिताः। द्विजातयः ब्राह्मणाः।

(४) शान्त्युदकफलहस्तः तस्थौ पुरः पुरोधाः। (५) पुरातन्यः स्थितय इव अदृश्यन्त आगता बान्धववृद्धाः। (६) प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्ककालकायानि नश्यतः कलिकालस्य बान्धवकुलानि इव आकुलानि अधावन्त मुक्तानि बन्धनवृन्दानि। (७) तत्कालापक्रान्तस्य अधर्मस्य शिविरश्रेणय इव अलक्ष्यन्त लोकविलुण्ठिता विपणिवीथ्यः। (८) विलसदुन्मुखवामनकबधिरवृन्दवेष्टिताः साक्षात् जातमातृदेवता इव बहुबालकव्याकुला ननृतुः वृद्धधात्र्यः।

---

(४) शान्तीति। शान्त्यर्थमुदकं शान्त्युदकं फलञ्च हस्ते यस्य तथाभूतः। पुरोधाः पुरोहितः।

(५) पुरातन्यः चिरन्तन्यः स्थितय इव मर्यादा इव शिष्टाचार इव। बान्धववृद्धाः बान्धवेषु वृद्धाः स्थविराः।

(६) प्रलम्बेति। प्रलम्बेन लम्बमानेन क्षौराभावात् इति भावः। श्मश्रुजालेन जटिलानि आननानि येषां तानि। बहलेति बहलानां बहूनां मलपङ्कानां कलङ्केन कृष्णवर्णचिह्नेन कालः कृष्णवर्णः कायो देहो येषां तानि। नश्यतः पलायमानस्य भाविसौराज्यभयादिति भावः। बान्धवकुलानि इव स्वजनवृन्दानि इव। आकुलानि अधिकारभ्रंशात् विह्वलानि इत्यर्थः। मुक्तानि बन्धनागारात् त्यक्तानि बन्धनवृन्दानि कारानिरुद्धलोकसङ्घाः महोत्सवे राज्ञां कारावासिनो मुच्यन्ते इति चिरप्रसिद्धिः।

(७) तत् कालेति। तस्मिन् काले हर्षजन्मसमये इत्यर्थः। अपक्रान्तस्य अपसृतस्य। शिविरश्रेणय इव सेनानिवेशस्थानानि इव। लोकेति लोकैः जनैः विलुण्ठिताः विशेषेण हृतद्रव्या इत्यर्थः। विपणिवीथ्यः पण्यवीथिकानिवहाः आनन्देन राजाज्ञया लोका विपणिगताः वणिजां राजदेयघतिपूरणानां विपणिद्रव्याणि पराजितशिविरधनानीव लुण्ठितवन्त इत्यर्थः।

(८) विलसदिति। विलसद्भिः आनन्देन स्फुरद्भिः उन्मुखैः ऊर्ध्वमुखैः वामनकानां क्षुद्रकायानां जनविशेषाणां वृन्दैः समूहैः वेष्टिताः आकीर्णाः। जातमातृदेवता इव जातस्य मातृदेव्य इव बहुभिर्बालकैः क्रोड़निहितैः इति भावः। व्याकुलाः व्यापृताः वृद्धधात्र्यः स्थविरा उपमातरः ननृतुः नृत्यन्ति स्म।

(९) प्रावर्त्तत च विगतराजकुलस्थिति: अध:कृतप्रतीहारा-कृति: अपनीतवेत्रिवेत्रो निर्दोषान्त:पुरप्रवेश: समस्वामिपरि-जन: निर्विशेषबालवृद्ध: समानशिष्टाशिष्टजन: दुर्ज्ञेयमत्तामत्त-प्रविभाग: तुल्यकुलयुवतिवेश्याविलास: प्रनृत्तसकलकटका-लोक: पुत्रजन्मोत्सवो महान्।

(१०) अपरेद्यु: आरभ्य सर्वाभ्यो दिग्भ्य: स्त्रीराज्यानि इव आवर्जितानि असुरविवराणि इव अपावृतानि नारायणावरो-धानि इव प्रचलितानि अप्सरसामिव महीमवतीर्णानि कुलानि परिजनेन (११) पृथुकरण्डपरिगृहीता: स्नानीयचूर्णावकीर्ण-

---

(९) प्रावर्त्तत प्रबभूव। विगतेति विगता विनष्टा राजकुलस्य राजवंशस्य स्थिति: नियम: यस्मिन् तथोक्त:। अध:कृतेति अध:कृता पातिता प्रतीहाराणां दौवारिकाणाम् आकृति: आकार: भीषणवेशेन स्थितिरिति यावत् यत्र तथा-भूत: अपनीतवेत्रिवेत्र: अपनीतानि त्यक्तानि वेत्रिभि: वेत्रधारिभि: लोकाप-सारणार्थमिति भाव: वेत्राणि अपसारणयष्टय: यस्मिन् तथोक्त:। निर्दोष: दोष-रहित: अन्त:पुरे प्रवेश: यस्मिन् तथाभूत: अवारितान्त:पुरप्रवेश इत्यर्थ:। समेति समौ तुल्यौ स्वामिपरिजनौ यस्मिन् तथोक्त: अयं स्वामी समुचितमुपचरितव्य: अयं परिजन: तथा नोपचरितव्य इत्येवं विवेकरहित इति भाव:। निर्विशेषा: विशेषरहिता: बाला: शिशव: वृद्धा: स्थविराश्च यस्मिन् तथाभूत:। समाना: तुल्य-सत्कारा: शिष्टा अशिष्टाश्च जना: यस्मिन् तथोक्त:। दुर्ज्ञेयेति दुर्ज्ञेय: अविचार-णीय इति भाव:। मत्तानाम् अमत्तानाञ्च जनानां प्रविभाग: प्रभेद: यस्मिन् तथाभूत:। तुल्येति तुल्य: सम: कुलयुवतीनां कुलाङ्गनानां वेश्यानां वारनारी-णाञ्च विलास: विहार: यस्मिन् तथोक्त:। प्रनृत्तेति प्रकर्षेण नृत्ता: नर्त्तनरता: सकला: कटकलोका: शिबिरजना यस्मिन् तथाभूत:।

(१०) अपरेद्यु: इत्यादि। सामन्तान्त:पुरसहस्राणि परिजनेन अनुगम्यमानचर-णानि आजग्मुरित्यन्वय:। तानि एव विशिनष्टि स्त्रीराज्यानीव इत्यादिभि:। आवर्जितानि आहूतानि। असुरविवराणि इव रसातलानि इव अपावृतानि उद्घाटितानि उज्ज्वलत्वादिति भाव:। नारायणावरोधानि इव कृष्णान्त:पुराणीव

कुसुमाः सुमनःस्रजः स्फटिकशिलाशकलशुक्लकर्पूरखण्डपूरिताः पात्रीः (१२) कुङ्कुमाधिवासभाञ्जि भाजनानि च मणिमयानि सहकारतैलतिम्यत्तनुखदिरकेसरजालजटिलानि चन्दनधवलपूगफलफालीदन्तुरदन्तशफरुकाणि (१३) गुञ्जन्मधुकरकुलपीयमानपारिजातपरिमलानि पाटलानि पाटलकानि च सिन्दूरपात्राणि च पिष्टातकपात्राणि च बाललतालम्बमानविटकवीटकांश्च ताम्बूलवृन्दान् बिभ्राणेन (१४)

---

षोडशसहस्रमहिषीपरिवृतत्वात् तस्येति भावः। महीं पृथ्वीम् अवतीर्णानि आगतानि अप्सरसां कुलानीव वृन्दानीव। परिजनेन दासदासीवर्गेण।

(११) पृथ्विति। पृथुभिः स्थूलैः महद्भिर्वा करण्डैः समुद्गकैः भाजनविशेषैः इत्यर्थः। परिगृहीताः संगृहीताः। स्नानीयेति स्नानीयं स्नानोपकरणं चूर्णं गन्धद्रव्यविशेषाणामिति भावः। तेन अवकीर्णं युक्तम् आकीर्णं वा कुसुमं यासां ताः सुमनःस्रजः पुष्पमाल्यानि बिभ्राणेन इत्यनेनान्वयः एवमुत्तरत्र। स्फटिकेति स्फाटिकं शिलाशकलं प्रस्तरखण्डः तद्वत् शुक्लेन स्वच्छेन कर्पूरखण्डेन पूरिताः आकीर्णाः पात्रीः कर्पूरभाजनानि इत्यर्थः।

(१२) कुङ्कुमेति। कुङ्कुमान्येव अधिवासाः अधिवासनद्रव्याणि सुगन्धद्रव्याणि इत्यर्थः। तान् भजन्ते इति तथोक्तानि तत्पूरितानि इत्यर्थः। मणिमयानि रत्ननिर्मितानि। सहकारेति सहकारस्य अतिसौरभचूतफलस्य तैलेन द्रवेण तिम्यत् सिक्तं तनु अल्पाल्पं खदिरकेसरं खदिरसारः तस्य जालेन समूहेन जटिलानि युक्तानि सम्भृतानि इत्यर्थः। चन्देति चन्दनवत् धवलानि शुभ्राणि पूगफलानि गुवाकफलानि तेषां फालीभिः शकलैः दन्तुराणि सञ्जातदन्तानीव लक्ष्यमाणानि दन्तशफरुकाणि गजदन्तनिर्मितभाजनविशेषाणि इत्यर्थः।

(१३) गुञ्जदिति। गुञ्जद्भिः मधुकरकुलैः भृङ्गसङ्घैः पीयमानः आस्वाद्यमानः आघ्रायमाण इत्यर्थः। पारिजातानां तत्पुष्पाणामित्यर्थः परिमलः विमर्दोत्थगन्धः येषां तानि पाटलानि श्वेतरक्तवर्णानि पाटलकानि पात्रविशेषान्। पिष्टातकपात्राणि सुगन्धिद्रव्यचूर्णं पिष्टातकं पिष्टातः पटवासक इत्यमरः तस्य पात्राणि भाजनानि। बालेति बाला नवा लताः तासु लम्बमानानि विटकवीटकानि

अनुगम्यमानचरणानि (१५) कुट्टनरणितमणिनूपुरमुखरितदिङ्मुखानि नृत्यन्ति राजकुलम् आगच्छन्ति समन्तात् सामन्तान्तःपुरसहस्राणि अदृश्यन्त।

(१६) शनैः शनैः व्यजृम्भत च क्वचित् नृत्तानुचितचिरन्तनशालीनकुलपुत्रकलोकलास्यप्रथितपार्थिवानुरागः क्वचित् (१७) अन्तःस्मितक्षितिपालापेक्षितक्षीवक्षुद्रदासीसमाकृष्यमाणराजवल्लभः क्वचित् (१८) मत्तकटककुट्टनीकण्ठलग्नवृद्धार्थसामन्तनृत्तनिर्भरहसितनरपतिः क्वचित् (१९) क्षिति-

---

पञ्चाशत्ताम्बूलदलैः क्रियमाणाः स्तवकविशेषा येषु तान्। ताम्बूलद्रुमान् ताम्बूलवल्लीरित्यर्थः। बिभ्राणेन दधता परिजनेन द्रव्यस्य विशेषणम्।

(१४) अनुगम्यमानेति। अनुगम्यमानाः सेव्यमानाश्चरणा येषां तानि।

(१५) कुट्टनेति। कुट्टनेन दलनेन पदविक्षेपणेन इति यावत्। रणिताभ्यां स्वनिताभ्यां मणिनूपुराभ्यां मुखरितानि ध्वनितानि दिशां मुखानि येषां यैर्वा तानि नृत्यन्ति क्रियमाणनर्त्तनानि समन्तात् चतुर्दिक्षु। सामन्तेति सामन्तानाम् अधीननृपतीनाम् अन्तःपुराणि अवरोधनार्थाः तेषां सहस्राणि।

(१६) शनैः शनैः क्रमेण। नृत्तेति नृत्ते नर्त्तने अनुचितः अयोग्यः चिरन्तनशालीनः चिरलज्जाशीलः चिरविनीतो वा यः कुलपुत्रलोकः सत्कुलजातः सुसभ्यलोकः तस्य लास्येन नर्त्तनेन निरतिशयानन्दात् तेनापि नर्त्तितुं लज्जात्यागः कृत इति भावः प्रथितः विस्तृतः पार्थिवस्य राज्ञः पार्थिवे राज्ञि वा अनुरागः प्रीतिः यस्मिन् तथाविधः उत्सवामोदः व्यजृम्भत प्रावर्त्तत इति अन्वयः एवमुत्तरत्र।

(१७) अन्तरिति। अन्तःस्मितेन अन्तरीषद्धसता इत्यर्थः क्षितिपालेन अपेक्षिता निरीक्षिताः क्षीवाभिः मद्यपानेन मत्ताभिः क्षुद्राभिः इतरजातीयाभिः दासीभिः समाकृष्यमाणाः राजवल्लभाः राज्ञः नर्मसचिवा इत्यर्थः यत्र तादृशः।

(१८) मत्तेति मत्तानां मधुपानविह्वलानां कटककुट्टनीनां कटकस्थितवारविलासिनीनां कण्ठेषु गलेषु लग्नाः संसक्ताः वृद्धाः स्थविरा आर्याः साधवः सामन्ताः अधीश्वरा नृपतयः तेषां नृत्तेन नर्त्तनेन निर्भरम् अत्यन्तं हसितः कृतहासः नरपतिः सम्राट् यत्र तथाभूतः।

पाचिसंज्ञादिष्टदुष्टदासेरकगीत-सूच्यमानसचिव-चौर्य्यरतप्रपञ्च: क्वचित् (२०) मदोत्कटकुटहारिकापरिष्वज्यमानजरत्प्रव्रजित-जनितजनहास: क्वचित् (२१) अन्योन्यनिर्भरस्पर्द्धोद्धुरचेटकपेटक-कारब्धावाच्यवचनयुद्ध: क्वचित् (२२) नृपाबलाबलात्कार-नर्त्त्य-माननृत्यानभिज्ञान्त:पुरपालभावितभुजिष्य: सपर्वत इव कुसुमराशिभि: सधारागृह इव सीधुप्रपाभि: सनन्दनवन इव पारिजातामोदै: सनीहार इव कर्पूररेणुभि: साट्टहास इव पटहरवै: सामृतमथन इव कलकलै: सावर्त्त इव रासकमण्डलै:

---

(१९) क्षितिपेति। क्षितिपस्य राज्ञ: अक्षिसंज्ञया नेत्रेङ्गितेन आदिष्ट: आज्ञप्त: दुष्ट: दुर्वृत्त: यो दास्या अपत्यं दासेरक: दासीपुत्र इत्यर्थ: तस्य गीतेन गानेन सूच्यमान: प्रकाश्यमान: सचिवानाम् अमात्यानां रतप्रपञ्च: निधुवन-विहारविलसितानि यत्र तथोक्त:।

(२०) मदोत्कटेति। मदोत्कटाभि: मदमत्ताभि: कुटहारिकाभि: कुम्भ-दासीभि: परिष्वज्यमाना: आलिङ्ग्यमाना: ये जरन्त: स्थविरा: प्रव्रजिता: सन्न्या-सिन: तै: जनित: उत्पादित: जनानां हासो यस्मिन् स:।

(२१) अन्योऽन्येति। अन्योऽन्यस्मिन् निर्भरस्पर्द्धा आत्यन्तिका ईर्षेत्यर्थ:, तया उद्धुरा: निर्भरा: रता इत्यर्थ: ये चेटका: नीचदासा: तेषां पेटकेन समूहेन आरब्धम् अवाच्यम् अवक्तव्यं वचनयुद्धं गालिरित्यर्थ: यत्र तथोक्त:।

(२२) नृपेति। नृपस्य राज्ञ: अबलाभि: नारीभि: बलात्कारेण बलप्रयोगेण नर्त्त्यमाना: नृत्यानभिज्ञा: नर्त्तनज्ञानरहिता: अन्त:पुरपाला: अन्त:पुररक्षिण: तै: भाविता अहो एता मम नर्त्तनाज्ञतां जानन्तीति चिन्तित इत्यर्थ:। भुजिष्या: किङ्कर्य्य: यस्मिन् तथोक्त:। सपर्वत: कुसुमराशिभि: पुष्पवृष्टिभि: पर्वताकारपूर्ण इत्यर्थ:। सीधुप्रपाभि: सुरापानशालाभि: सधारागृह इव जलधारामयगृहसम-न्वित इव पारिजातामोदै: पारिजातपुष्पसौरभै: सनन्दनवन इव नन्दनवनं देवो-द्यानं तत्सहित इव देवोद्याने यथा पारिजातानामामोद: तथा अत्रापि पारिजात-वृष्टिभिरिति भाव:। सनीहार इव हिमविन्दुसहित इव कर्पूररेणुभि: कर्पूर-क्षोदै:। साट्टहास इव अट्टहास: उच्चैर्हासविशेष: तेन सहित इव पटहरवै:

सरोमाञ्च इव भूषणमणिकिरणैः सपट्टबन्ध इव चन्दनललाटिकाभिः सप्रसव इव प्रतिशब्दकैः सप्ररोह इव प्रसाददानैः उत्सवामोदः ।

(२३) स्कन्धावलम्बमानकेसरमालाः काम्बोजवाजिन इव आस्कन्दन्तः तरलतारका हरिणा इव उड्डीयमानाः सगरसुता इव खनित्रैः निर्दयैः चरणाभिघातैः दारयन्तो भुवम् अनेकसहस्रसङ्ख्याः चिक्रीडुः युवानः । कथमपि (२४) तालावचरचारणक्षोभं चक्षमे क्षमा । (२५) क्षितिपालकुमारकाणां खेलताम् अन्योन्यास्फालैः आभरणेषु मुक्ताफलानि पेतुः । (२६) सिन्दू-

---

आनकध्वनिभिः । सस्तनितघन इव स्तनितघनसहित इव । सावर्त इव जलभ्रमसदृशभ्रान्तिसहित इव रासकमण्डलैः स्त्रीणां हस्तधारणेन मण्डलाकारेण नर्तनं रासः ततः स्वार्थे कन्प्रत्ययः रासकानां मण्डलानि समूहाः तैः । सरोमाञ्च इव लोमहर्षसहित इव । सपट्टबन्ध इव सोष्णीषबन्ध इव चन्दनललाटिकाभिः चन्दनतिलकरूपैः अलङ्कारैः । सप्रसव इव ससन्तान इव प्रतिशब्दकैः प्रतिध्वनिभिः । सप्ररोह इव साङ्कुर इव प्रसाददानैः पारितोषिकवितरणैः ।

(२३) स्कन्धेति । स्कन्धेषु अवलम्बमानाः केसरमाला बकुलमालाः ग्रीवारोमवल्लयश्च येषां तथोक्ताः । काम्बोजवाजिन इव काम्बोजदेशीया वाह्लीकदेशजा इत्यर्थः अश्वा इव आस्कन्दन्तः आस्फोटयन्तः आक्रमन्तो वा परस्परमिति शेषः तरलतारकाः चञ्चलतारकाः हरिणा इव मृगा इव उड्डीयमानाः उल्लम्फन्त इत्यर्थः सगरसुता इव सगरस्य राज्ञः सुता इव पुत्रा इव षष्टिसहस्रसङ्ख्याका इति शेषः खनित्रैः खननसाधनैः अस्त्रैः चिक्रीडुः क्रीडन्ति स्म ।

(२४) तालेति । तालैः कांस्यतालैः करतालैरित्यर्थः सङ्गीताङ्गविशेषैः वा अवचरन्तीति तालावचराः तेषां चारणानां कुशीलवानां नृत्यतामिति भावः चरणक्षोभं पदविक्षेपजनिताघातं चक्षमे सेहे । क्षमा पृथ्वी ।

(२५) क्षितिपालकुमारकाणां सामन्तकुमाराणां खेलतां क्रीडताम् अन्योन्यास्फालैः परस्परास्कन्दनैः आभरणेषु अलङ्कारेषु मध्ये मुक्ताफलानि मौक्तिकानि पेतुः विसरणं प्रापुः ।

रेणुना पुनरुत्पन्नहिरण्यगर्भगर्भशोणितशोणायम् इव ब्रह्माण्डकपालम् अभवत्। (२७) पटवासपांशुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभस्तलम्। (२८) विप्रकीर्य्यमाणपिष्टातकपरागपिञ्जरितातपा भुवनक्षोभविशीर्णपितामहकमलकिञ्जल्करजोराजिरञ्जिता इव रेजुर्दिवसाः। (२९) सङ्घट्टविघटितहारपतितमुक्ताफलपटलेषु चस्खाल लोकः।

(३०) स्थानस्थानेषु च मन्दमन्दमास्फाल्यमानालिङ्ग्यकेन शिञ्जानमञ्जुवेणुना (३१) झणझणायमानझल्लरीकेण ताद्य-

---

(२६) सिन्दूरेति। सिन्दूररेणुना सिन्दूरचूर्णेन पुनरुत्पन्नस्य हिरण्यगर्भस्य प्रजापतेः हर्षस्येति भावः ब्रह्मणश्च गर्भशोणितेन शोणा रक्ता आशा दिशो यस्य तथोक्तं ब्रह्माण्डकपालं पृथ्वीतलमित्यर्थः।

(२७) पटवासेति। पटवासानां गन्धद्रव्यविशेषाणां पांशुपटलेन रजःसमूहेन। प्रकटितेति प्रकटितं वहिर्निःसृतं मन्दाकिन्याः स्वर्गङ्गायाः सैकतसहस्रं यस्मिन् तथोक्तमिव नभस्तलम् अन्तरीक्षम्।

(२८) विप्रकीर्य्यमाणेति विप्रकीर्य्यमाणैः प्रसार्य्यमाणैः पिष्टातकानां परागैः रेणुभिः पिञ्जरिताः रञ्जिता इत्यर्थः आतपाः सूर्य्यमयूखाः येषु तथाभूताः। भुवनेति भुवनस्य जगतः क्षोभेण सञ्चलनेन आनन्दजनितेनेति भावः विशीर्णं विदलितं यत् पितामहकमलं ब्रह्मकमलं तस्य किञ्जल्काः केसराः तेषु ये रजसां परागाणां राजयः समूहाः तैः रञ्जिता इव रेजुः शुशुभिरे।

(२९) सङ्घट्टेति। सङ्घट्टेन अन्योन्यघर्षणेन लोकानाम् अतिनिविड़त्वादिति भावः विघटितेभ्यः छिन्नेभ्यः हारेभ्यः पतितानि यानि मुक्ताफलानां मौक्तिकानां पटलानि तेषु चस्खाल पपात पिच्छिलत्वात् उच्चावचत्वाच्च तेषामिति भावः।

(३०) स्थानस्थानेषु क्वचित् क्वचित् प्रदेशेषु पण्यविलासिन्यः प्रानृत्यन् इत्युत्तरेणान्वयः। ता विशिनष्टि आतोद्यवाद्येनानुगम्यमाना इत्यादिभिः। आतोद्यवाद्येनेति विशिनष्टि मन्देत्यादिभिः। मन्दं मन्दम् आस्फाल्यमानः वाद्यमानः आलिङ्ग्यकः मुरजवाद्यभेदः यस्मिन् तेन शिञ्जानेति शिञ्जानः रणन् मञ्जुर्मनोज्ञः वेणुर्वंशीवाद्यभेदः यत्र तथोक्तेन।

मानतन्त्रीपटहिकेन (३२) वाद्यमानानुत्तालालाबुवीणेन कलकांस्यकोशीक्वणितकाहलेन (३३) समकालदीयमानानुत्ताल-तालकेन आतोद्यवाद्येन अनुगम्यमानाः पदे पदे झणझणित-भूषणरवैः अपि सहृदयैः इव अनुवर्त्तमानताललयाः कोकिला इव (३४) मदकलकाकलीकोमलालापिन्यो विटानां कर्णामृतानि अश्लीलरासकपदानि गायन्त्यः सकुसुममालिकाः सकर्ण-पल्लवाः सचन्दनतिलकाः समुत्क्षिप्ताभिर्वलयावलीवाचालाभिः बाहुलतिकाभिः सवितारम् इव आलिङ्गयन्त्यः कुङ्कुमप्रसृष्टि-रुचिरकायाः (३५) काश्मीरकिशोर्य्य इव वल्गन्त्यः नितम्ब-

---

(३१) झणेति। झणझणायमाना झल्लरी वाद्यभेदः यत्र तादृशेन। ताड्यमानेति ताड्यमाना वाद्यमानतन्त्रीपटहिका पटहवाद्यविशेषः यत्र तथोक्तेन।

(३२) वाद्यमानेति वाद्यमाना अनुत्ताला अनुत्कटस्वना अलाबुवीणा अलाबुनिर्मिता वीणा यस्मिन् तेन। कलेति कला मधुरस्वना या कांस्यकोशी करतालिका तस्याः क्वणितेन सह काहलं तदाख्यवाद्यस्वनः यत्र तथाविधेन।

(३३) समेति। समकालं युगपत् दीयमानः अनुत्कटः तालः स्वरविशेषः यत्र तेन आतोद्यवाद्येन ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकमित्युक्तेन वाद्यविशेषेण अनुगम्यमानाः सङ्गम्यमानाः। पदे पदे प्रतिपदक्षेपं झणझणितभूषणरवैः झणझणायमानभूषणध्वनिभिः सहृदयैरिव सामाजिकैरिव अनुवर्त्तमानेति अनुवर्त्तमानौ अनुसरन्तौ ताललयौ यासां ताः।

(३४) मदेति। मदेन मद्यपानजनितेन उल्लासेन कला अस्फुटा काकली सूक्ष्ममधुरध्वनिः तया कोमलं मृदुमन्दं यथा तथा आलपन्तीति तथोक्ताः विटानां लम्पटानां विलासिनामित्यर्थः कर्णामृतानि श्रुतिसुखानीत्यर्थः अश्लीलानि लज्जावहानि ग्राम्याणि इति यावत् रसयन्तीति रासकानि शृङ्गाररसोद्दीपनानीति भावः पदानि गेयवस्तूनि गायन्त्यः कीर्त्तयन्त्यः सकुसुममालिकाः सहाराः। समुत्क्षिप्ताभिः समुत्क्षिप्ताभिः वलयावलीवाचालाभिः वलयराजिझणत्कारवतीभिः इत्यर्थः बाहुलतिकाभिः भुजवल्लीभिः सवितारमिव आलिङ्गयन्त्यः आश्लिष्यन्त्यः

विलम्बलम्बिविकटकुरुण्टकशेखराः प्रदीप्ता इव चतुरचंक्र-सिन्दूरच्छटाच्छुरितमुखमुद्राः शासनपट्टपङ्क्तय इव नू। हतशासनस्य कन्दर्पस्य (२६) मुष्टिप्रकीर्य्यमाणकर्पूरपट-वासपांशुलाः मनोरथसञ्चरणरथ्या इव यौवनस्य (२७) उद्दाम-कुसुमदामताड़िततरुणजनाः प्रतीहार्य्य इव तरुणमहोत्स-वस्य प्रचलत्पत्रकुण्डला ललन्त्यो लता इव मदनचन्दनद्रुमस्य (२८) ललितपदहंसकरवमुखराः समुल्लसन्त्यो वीचय इव

---

कुङ्कमेति कुङ्कुमेन प्रमृष्टिः प्रमार्जनं रञ्जनमित्यर्थः तया रुचिरः मनोज्ञः कायो यासां ताः।

(२५) काश्मीरकिशोर्य्य इव कुङ्कुमनिर्मिताः कुमार्य्य इव वल्गन्त्यः चलन्त्यः। नितम्बेति नितम्बविम्बेषु नितम्बभागेषु लम्बिनः लम्बमानाः विकटाः आयता इत्यर्थः कुरुण्टकशेखराः आम्रातकमञ्जर्य्य इत्यर्थः यासां तथोक्ताः। प्रदीप्ता इव प्रज्वलिता इव रागाग्निना अनुरागवह्निना आम्रातकशेखराणां रक्तत्वादिति भावः। सिन्दूरेति सिन्दूरच्छटाभिः सिन्दूरतिलकैः इत्यर्थः छुरिता रञ्जिता मुखमुद्रा मुखशोभा यासां ताः। शासनपट्टपङ्क्तय इव शासनपट्टाः सनन्दपत्राणीति भाषा तेषां पङ्क्तय इव राजय इव शासनपट्टानाम् उपरि सिन्दूरेण मुद्रा क्रियते इति प्रसिद्धिः। अप्रतिहतशासनस्य अव्याहताज्ञस्य।

(२६) मुष्टीति। मुष्टिभिः प्रकीर्य्यमाणैः प्रक्षिप्यमाणैः विलासिभिरिति भावः कर्पूरपटवासैः कर्पूरचूर्णैरित्यर्थः पांशुलाः रजसावृता इत्यर्थः मनोरथेति मनोरथेन स्वेच्छया सञ्चरणं भ्रमणं तस्य रथ्या इव पन्थान इव यौवनस्य तारुण्यस्य यथेच्छसम्भोगयौवनशालिन्य इति भावः।

(२७) उद्दामेति। उद्दामैः उत्कटैः विपुलैरित्यर्थः कुसुमदामभिः पुष्प-माल्यैः ताड़िता आहताः तरुणजनाः युवजना याभिः तथोक्ताः। तरुणमहोत्सवस्य तरुणानां यूनां महोत्सवः तस्य। प्रतीहार्य्य इव रक्षिण्य इवेत्यर्थः। प्रचलत्पत्र-कुण्डलाः प्रचलन्ति पत्राणि किसलया एव कुण्डलानि कर्णभूषणानि अन्यत्र पत्राणि कुण्डलानीव यासां ताः अतएव ललन्त्यः स्फुरन्त्यो लता इव व्रतत्य इव।

(२८) ललितेति ललितानि रमणीयानि पदानि तेषु हंसकाः नूपुराः

शृङ्गाररसप्रदीपिका, (३९) वाच्यावाच्यविवेकशून्या बालक्रीडा इव सौभाग्यस्य घनपटहरवोत्कण्टकितगात्रयष्टयः केतक्य इव कुसुमधूलिमुद्गिरन्त्यः कमलिन्य इव दिवसमुत्फुल्लानना: कुमुदिन्य इव रात्रावनुपजातनिद्राः (४०) आविष्टा इव नरेन्द्रवृन्दपरिवृताः प्रीतय इव हृदयमपहरन्त्यः गीतय इव रागमुद्दीपयन्त्यः पुष्टय इव आनन्दमुत्पादयन्त्यः मदमपि मदयन्त्य इव रागमपि रञ्जयन्त्य इव आनन्दमपि आनन्दयन्त्य इव नृत्यमपि नर्त्तयमाना इव उत्सवमपि उत्सुकयन्त्य इव (४१) कटाक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिः तर्जनेषु संयमयन्त्य इव नखमयूखपाशैः कोपाभिनयेषु ताडयन्त्य इव भ्रूल-

---

चन्द्रहंसाश्च स्वार्थे कप्रत्ययः । तेषां रवेण ध्वनिना मुखराः शब्दिताः समुल्लसन्त्यः समुल्लसन्त्यः वीचय इव तरङ्गा इव ।

(३९) वाच्येति । वाच्यं वक्तव्यम् अवाच्यमवक्तव्यं तयोर्विवेकेन विचारेण शून्याः रहिताः यथाकामं व्याहारिण्य इत्यर्थः बालक्रीडा इव शिशुक्रीडा इव सौभाग्यस्य सौन्दर्यस्य । घनेति घनेन गम्भीरेण पटहस्य वाद्यविशेषस्य रवेण ध्वनिना अन्यत्र घनः मेघ एव पटहः तस्य ध्वनिना उत्कण्टकिताः उद्गतरोमहर्षा गात्रयष्टयः अङ्गलताः यासां तथोक्ताः । केतक्य इव केतकलता इव कुसुमधूलिं पुष्पपरागम् उद्गिरन्त्यः उत्क्षिपन्त्य इत्यर्थः । अनुपजातनिद्राः न उपजाता कामसञ्चारभयादिति भावः निद्रा यासां ताः अनिमीलन्त्यश्च ।

(४०) आविष्टा इव अधिष्ठिता इव भूतादिभिरिति शेषः । नरेन्द्रेति नरेन्द्राणां राज्ञां भूतवैद्यानाञ्च भूतापसारणमन्त्रविदामित्यर्थः । वृन्दैः समूहैः परिवृताः वेष्टिताः । हृदयमपहरन्त्यः मनोहारिण्यः रागं वासनाविशेषम् उद्दीपयन्त्यः उत्तेजयन्त्यः पुष्टय इव स्फूर्त्तय इव इत्यर्थः । मदयन्त्यः समुत्तेजयन्त्य इत्यर्थः । रागं सम्भोगाभिलाषमित्यर्थः । रञ्जयन्त्यः उल्लासयन्त्य इत्यर्थः ।

(४१) कटाक्षितेषु कटाक्षविक्षेपेषु इत्यर्थः । अपाङ्गशुक्तिभिः अपाङ्गा नेत्रप्रान्तभागा एव शुक्तयः मुक्तास्फोटाः मुक्तास्फोटः स्त्रियां शुक्तिरित्यमरः । ताभिः

तातिभागैः प्रणयसम्भाषणेषु वर्षन्त्य इव सर्वरसान् चतुरचंक्रमणेषु विकिरन्त्य इव विकारान् पण्यविलासिन्यः प्रानृत्यन्।

(४२) अन्यत्र वेत्रिवेत्रवित्रासितजनदत्तान्तरालाः ध्रियमाणधवलातपत्रवना वनदेवता इव (४३) कल्पतरुतलविचारिण्यः काश्चित् स्कन्धोभयपालीलम्बमानलम्बोत्तरीयलग्ना लीलादोलाधिरूढ़ा इव प्रेङ्खन्त्यः काश्चित् (४४) कनककेयूरकोटिपाट्यमानपट्टांशुकोत्तरङ्गाः तरङ्गिण्य इव तरच्चक्रवाकसीमन्त्यमानस्रोतसः काश्चित् (४५) उद्धूयमानधवलचामरस-

---

पिबन्त्य इव ग्रसन्त्य इव तरुणानिति शेषः। तर्जनेषु अङ्गुलिताड़नविशेषेषु नखमयूखपाशैः नखानां मयूखाः पाशा इव तैः संयमन्त्य इव संबध्नन्त्य इव। कोपाभिनयेषु कोपसूचकाङ्गचेष्टासु भ्रूलतातिभागैः भ्रूलताभिघातैरित्यर्थः। वर्षन्त्य इव मुञ्चन्त्य इव। चतुरचङ्क्रमणेषु विदग्धभ्रमिषु विकरन्त्य इव विक्षिपन्त्य इव। विकारान् विकृतभावविशेषान् तरुणानामिति शेषः।

(४२) अन्यत्रेत्यादि। राजमहिष्यः प्रारब्धनृत्याः नृत्यन्त्य इत्यर्थः। विरेजुः शुशुभिरे इत्यन्वयः। ता विशिनष्टि वेत्रीत्यादिभिः। वेत्रिभिः वेत्रपाणिभिः दौवारिकैरिति यावत् वेत्रेण वेत्रप्रदर्शनेन वेत्राघातेन च वित्रासितैः विशेषेण भीषितैः जनैः दत्तम् अन्तरालम् अवकाशः यासां ताः। ध्रियमाणेति ध्रियमाणानि धवलानि श्वेतानि आतपत्रवनानि छत्रसङ्घाः यासां तथोक्ताः। वनदेवता इव वनाधिष्ठातृदेव्य इव।

(४३) कल्पेति। कल्पतरूणां तलेषु विचरन्तीति तथोक्ताः। स्कन्धेति स्कन्धस्य उभयोः पार्श्वयोः भागयोः लम्बमानं यत् उत्तरीयम् उत्तरासङ्गः तस्मिन् लग्नाः संसक्ताः अतएव लीलादोलां क्रीड़ादोलयन्त्रम् अधिरूढ़ा इव प्रेङ्खन्त्यः सञ्चरन्त्यः।

(४४) कनकेति। कनककेयूराणां काञ्चनाङ्गदानां कोटिभिः अग्रभागैः पाट्यमानः छिद्यमानः अन्योऽन्यसङ्घर्षणेन इति भावः। पट्टांशुकस्य उत्तरङ्गः उत्तरीयं यासां तथोक्ताः अतएव तरङ्गिण्य इव नद्य इव तरद्भिः प्लवमानैः चक्रवाकैः सीमन्त्यमानानि द्विधा क्रियमाणानि स्रोतांसि यासां तथाभूताः।

टालग्नत्रिकण्टकवलितविकटकटाक्षाः सरस्य इव हंसाकृष्यमाणनीलोत्पलवनाः काश्चित् (४६) चलच्चरणच्युतालक्तकारुणखेदशीकरसिच्यमानभवनहंसाः सन्ध्यारागरज्यमानेन्दुविम्बा इव कौमुदीरजन्यः काश्चित् (४७) कण्ठनिहितकाञ्चनकाञ्चीगुणाञ्चितकञ्चुकिविकारकुञ्चितभ्रुवः कामवागुरा इव प्रसारितबाहुपाशा राजमहिष्यः प्रारब्धनृत्या विरेजुः।

सर्वतश्च नृत्यतः (४८) स्त्रैणस्य गलद्भिः पदालक्तकैः अरुणिता रागमयीव शुशोण क्षोणी। (४९) समुल्लसद्भिः स्तनमण्डलैः

---

(४५) उद्धूयमानेति। उद्धूयमानानां वीज्यमानानां धवलानां श्वेतानां चामराणां सटासु लोमसु लग्नः संसक्तः यः त्रिकण्टकः कर्णाभरणभेदः त्रिकण्टकस्तु वज्रः स्यात् त्रिभीरत्नैश्च भूषणमित्युक्तलक्षणः तेन वलिताः सञ्चलिताः विकटाः उत्कटाः कटाक्षाः अपाङ्गावलोकनानि यासां तथोक्ताः अतएव सरस्य इव वाप्य इव हंसैः आकृष्यमाणानि नीलोत्पलवनानि यासां तथाविधाः।

(४६) चलदिति। चलद्भ्यां सञ्चरद्भ्यां चरणाभ्यां च्युतानि निर्गलितानि अलक्तकानि अरुणा रक्ताः खेदा इव तेषां शीकरैः बिन्दुभिः सिच्यमाना भवनकलहंसाः गृहहंसविशेषाः याभिः तथोक्ताः अतएव सन्ध्याया रागः लौहित्यं तेन रज्यमानम् इन्दुविम्बं चन्द्रविम्बं यासां ता इव कौमुदीरजन्यः कार्त्तिकज्योत्स्नापूर्णा रात्रय इत्यर्थः।

(४७) कण्ठेति। कण्ठेषु निहितेन अर्पितेन काञ्चनकाञ्चीगुणेन सौवर्णमेखलादाम्ना अञ्चितानां पूजितानां परिहासार्थं नियन्त्रितानां वा कञ्चुकिनाम् अन्तःपुरचरो वृद्धो ब्राह्मो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणानाम् अन्तःपुरचारिणां दौवारिकविशेषाणां विकारेण विकृतभावेन कुञ्चिता कुटिलिता भ्रूः यासां तथोक्ताः। कामवागुरा इव कामस्य युवजनबन्धनसाधनानि यन्त्राणि इव इत्यर्थः। प्रसारितौ बाहू भुजौ पाशौ इव याभिः तथाभूताः।

(४८) स्त्रैणस्य स्त्रीणां समूहः स्त्रैणं तस्य। गलद्भिः स्रवद्भिः पदालक्तकैः चरणलाक्षारसैः। अरुणिता रक्तीकृता शुशोण शोणमयी बभूव इत्यर्थः।

मङ्गलकलशमय इव बभूव महोत्सवः। (५०) भुजलताविक्षेपैः मृणालवलयमय इव रराज जीवलोकः। समुल्लसद्भिः (५१) विलासस्मितैः तड़िन्मय इव अक्रियत कालः। (५२) चञ्चलानां चक्षुषाम् अंशुभिः कृष्णसारमया इव आसन् वासराः। समुल्लसद्भिः शिरीषकुसुमस्तवककर्णपूरैः शुकपिच्छमय इव हरितच्छायोऽभूत् आतपः। (५३) विस्रंसमानैः धम्मिल्लतमालपल्लवैः कज्जलमयम् इव अलच्यत अन्तरिक्षम्। (५४) उत्क्षिप्तैः हस्तकिशलयैः कमलिनीमय्य इव बभासिरे सृष्टयः। (५५) माणिक्येन्द्रायुधानाम् अर्चिषा चाषपत्रमया इव चकाशिरे रविमरीचयः। (५६) रणताम् आभरणगणानां प्रतिशब्दकैः किङ्किणीमय्य इव शिशिञ्जिरे दिशः। (५७) जरत्यो-

---

(४९) समुल्लसद्भिः समुद्भासमानैः।

(५०) भुजलताविक्षेपैः मृणालवलयमय इव भुजलतानां मृणालवत् कोमलाकारत्वादिति भावः।

(५१) विलासस्मितैः विभ्रमहसितैः कालः क्षीरादिः कृष्णश्च।

(५२) चञ्चलानां पुनः पुनश्चलताम्। अंशुभिः किरणैः। हरितच्छायः श्यामलकान्तिः।

(५३) विस्रंसमानैः स्खलद्भिः। धम्मिल्लेति धम्मिल्लेषु संयतेषु केशेषु धम्मिलाः संयताः कचा इत्यमरः स्थिता ये तमालपल्लवाः तमालतरुकिसलयाः तैः कज्जलमयमिव अञ्जनमयमिव।

(५४) उत्क्षिप्तैः उन्नमितैः हस्ताः पल्लवा इव तैः बभासिरे शुशुभिरे सृष्टयः सर्गाः जगन्ति इत्यर्थः।

(५५) माणिक्येन्द्रायुधानां माणिक्यानि उत्कृष्टानि रत्नानि इन्द्रायुधानीव तेषाम् अर्चिषा प्रभया चाषपत्रमया नीलकण्ठाख्यपक्षिपक्षमया इव। रविमरीचयः सूर्य्यमयूखाः।

(५६) रणतां झणत्कारवताम् आभरणगणानाम् अलङ्कारजातानां प्रति-

ऽपि उन्मादिन्य इव रमण्यो रेणुः। (५८) वर्षीयांसोऽपि ग्रहगृहीता इव न अपत्रेपिरे। विद्वांसोऽपि मत्ता इव आत्मानं (५९) विसस्मरुः। निनर्त्तिषया मुनीनामपि मनांसि विपुस्फुरुः। सर्वस्वञ्च ददौ नरपतिः। दिशि दिशि (६०) कुवेरकोषा इव अलुप्यन्त लोकेन द्रविणराशयः।

एवञ्च (६१) वृत्ते तस्मिन् महोत्सवे शनैः शनैः पुनरपि अतिक्रामति काले देवे च (६२) उत्तमाङ्गनिहितरक्षासर्षपे समुन्मिषत्प्रतापाग्निस्फुलिङ्गे इव गोरोचनापिञ्जरितवपुषि (६३) समभिव्यज्यमानसहजक्षात्त्रतेजसि इव हाटकवद्धविकटव्याघ्रनखपङ्क्तिमण्डितग्रीवके (६४) हृदयोद्भिद्य-

---

शब्दकैः प्रतिध्वनिभिः किङ्किणीमय्य इव किङ्किण्यः क्षुद्रघण्टिकाः तन्मय्य इव शिशिञ्जिरे स्वनन्ति स्म।

(५७) जरत्योऽपि स्थविरा अपि उन्मादिन्य इव चित्ता इव रेणुः शब्दितवत्यः।

(५८) वर्षीयांसः अतिवृद्धाः ग्रहगृहीता इव भूताद्याविष्टा इव न अपत्रपिरे न लज्जितवन्तः।

(५९) विसस्मरुः विस्मृतवन्तः। निनर्त्तिषया नर्त्तितुमिच्छया विपुस्फुरुः विशेषेण स्फुरन्ति स्म।

(६०) कुवेरकोषा इव कुवेरस्य धनाधिपस्य देवस्य कोषा इव भाण्डागाराणीव अक्षयाणि इति भावः। द्रविणराशयः धनराशयः लोकेन अर्थिजनेन इति भावः। अलुप्यन्त हृतानि इत्यर्थः।

(६१) वृत्ते अवसिते इत्यर्थः। अतिक्रामति अतिगच्छति। देवे इत्यादिपदं हर्षे इत्यस्य विशेषणम्।

(६२) उत्तमेति। उत्तमाङ्गे शिरसि निहितानि रक्षासर्षपाणि यस्य तथोक्ते। समुन्मिषदिति समुन्मिषन्तः वहिःस्फुरन्तः प्रतापाग्नेः अन्तःस्थितस्येति भावः। स्फुलिङ्गाः कणसमूहाः यस्य तथाभूते इव। गोरोचनाया तदाख्येन पीतवर्णमाङ्गलिकद्रव्यभेदेन पिञ्जरितं पिङ्गलितं रञ्जितमित्यर्थः वपुः शरीरं यस्य तथोक्ते।

(६३) समभीति। समभिव्यज्यमानं सम्यक् स्फुटीभवदित्यर्थः सहजं स्वाभा-

मानदर्पाङ्कुर इव (६५) प्रथमाव्यक्तजल्पितेन सत्यस्य शनैः ओङ्कारमिव कुर्वाणे मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि बन्धुहृदयानि आकर्षति (६६) जननीपयोधरकलशपयःशीकर-सेकादिव जायमानैः विलासहसिताङ्कुरैः दशनकैः अलङ्क्रिय-माणमुखकमलके चरित्रे इव अन्तःपुरस्त्रीकदम्बकेन पाल्य-माने (६७) मन्त्रे इव सचिवमण्डलेन रक्ष्यमाणे वृत्ते इव कुलपुत्रकलोकेन अमुच्यमाने यशसीव आत्मवंशेन संवर्द्ध्यमाने

---

विकं चावं तेजो यस्य तथाभूत इव। हाटकेति हाटकेन काञ्चनेन बद्धा नियन्त्रिता विकटा भीषणा व्याघ्रस्य शार्दूलस्य नखपङ्क्तिः नखराजिः तया मण्डिता अलङ्कृता ग्रीवा कण्ठदेशः यस्य तथाभूते।

(६४) हृदयेति। हृदये उद्भिद्यमानः उद्भेदं गच्छन् दर्पस्य अङ्कुरः प्ररोहः यस्य तथाभूत इव।

(६५) प्रथमाव्यक्तेति। प्रथमं यत् अव्यक्तम् अस्फुटं जल्पितं वचनं तेन। सत्यस्य सत्ययुगस्य। ओङ्कारमिव प्रणवमिव तस्य अपरश्रवणशङ्कया अस्पष्टतया उच्चार्यत्वादिति भावः। कुर्वाणे उच्चारयतीत्यर्थः। बन्धुहृदयानि बन्धुजनमनांसि।

(६६) जननीति। जनन्याः मातुर्यशोवत्याः पयोधरौ स्तनौ पयोधरा मेघाश्च तौ कलशौ इव तयोः पयःशीकरसेकादिव पयसां दुग्धानां जलानाञ्च शीकराः बिन्दवः तेषां सेकात् सेचनात् वदनेषु इति भावः। जायमानैः उत्पाद्यमानैः विलासहसिताङ्कुरैः लीलाहासप्ररोहैः दशनकैः क्षुद्रदन्तैः अलङ्क्रियमाणं शोभां नीयमानं वदनकमलं मुखपद्मं यस्य तथाभूते। चरित्रे इव सुचरित्रे इव अन्तःपुरस्त्रीणां कदम्बकेन समूहेन पाल्यमाने लाल्यमाने यथा अन्तःपुरिकाभिः स्वचरित्रं रक्ष्यते तथा अस्मिन् रक्ष्यमाणे इत्यर्थः।

(६७) मन्त्र इव मन्त्रितविषय इव सचिवमण्डलेन मन्त्रिसमूहेन रक्ष्यमाणे गोप्यमाने इत्यर्थः षट्कर्णो भिद्यते मन्त्र इत्युक्तेर्मन्त्रस्य अतिगोपनमेव कर्त्तव्यमिति भावः। वृत्ते इव सदाचारे इव कुलपुत्रकलोकेन सत्कुलजातलोकेन अमुच्यमाने अत्यज्यमाने रक्ष्यमाणे इति यावत् आत्मवंशेन निजकुलेन संवर्द्ध्यमाने सम्यग् वृद्धिं नीयमाने।

(६८) मृगपतिपोते इव रक्षिपुरुषशस्त्रपञ्जरमध्यगते (६९) धात्रीकराङ्गुलिलग्ने (७०) पञ्चषाणि पदानि प्रयच्छति हर्षे षष्ठं वर्षम् अवतरति च राज्यवर्द्धने देवी यशोवती गर्भेण आधत्त नारायणमूर्त्तिरिव वसुधां देवीं (७१) राज्यश्रियम्।

(७२) पूर्णेषु च प्रसवदिवसेषु दीर्घरक्तनालनेत्राम् उत्पलिनीमिव सरसी (७३) हंसमधुरस्वरां शरदमिव (७४) प्रावृट् (७५) कुसुमसुकुमारावयवां वनराजिम् इव (७६) मधुश्रीः (७७) महाकनकावदातां वसुधारामिव द्यौः प्रभावर्षिणीं (७८) रत्नजातिमिव वेला सकलजननयनानन्दकारिणीं चन्द्र-

---

(६८) मृगपतिपोत इव सिंहशिशाविव।

(६९) धात्रीकराङ्गुलिलग्ने उपमातृहस्ताङ्गुलिधारिणि।

(७०) पञ्चषाणि पञ्च वा षड् वा पञ्चषाणि पदानि प्रयच्छति चलतीत्यर्थः।

(७१) राज्यश्रियं तदाख्यां कन्यां गर्भेण आधत्त धृतवती।

(७२) पूर्णेषु प्रसवदिवसेषु दशमे मासि इत्यर्थः दुहितरं प्रसूतवती इत्यन्वयः। दीर्घेति दीर्घे आयते रक्तनाले रक्तोत्पले इव नेत्रे अन्यत्र रक्तोत्पले नेत्रे इव यस्याः ताम् उत्पलिनीमिव पद्मिनीमिव।

(७३) हंसेति। हंसवत् मधुरः स्वरः यस्याः अन्यत्र हंसस्य मधुरः स्वरः यस्यां ताम्।

(७४) प्रावृट् वर्षर्तुः इत्यर्थः प्रावृषोऽनन्तरमेव शरत्प्रवृत्तिः तथा उपनीयते।

(७५) कुसुमेति। कुसुमवत् सुकुमाराः सुकोमला अवयवाः अङ्गानि अन्यत्र कुसुमान्येव सुकुमारा अवयवा भागाः यस्याः ताम्।

(७६) मधुश्रीः वसन्तलक्ष्मीः। माधवश्रीरिति पाठे माधवी वसन्तस्य श्रीरिति स एवार्थः।

(७७) महेति। महाकनकं तिलसुवर्णं तद्वत् अवदाता गौराङ्गी ताम् अन्यत्र महद्भिः प्रभूतैः कनकैः स्वर्णैः अवदाता उज्ज्वला तां वसुधारामिव धनवृष्टिमिव द्यौः अन्तरीक्षं सा हि जगतो महाभ्युदयाय दिवान्तरीक्षात् पततीति प्रसिद्धिः।

लेखामिव प्रतिपत् (७९) सहस्रनेत्रदर्शनयोग्यां जयन्तीमिव शची (८०) सर्वभूभृदभ्यर्थितां गौरीमिव मेना प्रसूतवती दुहितरम्। (८१) यया द्वयोः सुतयोः उपरि स्तनयोः इव एकावलीलतया नितराम् अराजत।

(८२) अस्मिन्नेव तु काले देव्या यशोवत्या भ्राता सुतम् अष्टवर्षदेशीयम् उडूयमानकुटिलकाकपक्षकशिखण्डं (८३) खण्डपरशुहुङ्काराग्निधूमलेखानुबद्धमूर्द्धानं मकरध्वजमिव पुनर्जातम् एकेन (८४) इन्द्रनीलकुण्डलांशुश्यामलितेन शरीरार्द्धेन इतरेण च त्रिकण्टकमुक्ताफलालोकधवलितेन सम्पृक्तकायमिव

---

(७८) रत्नजातिमिव रत्नराजिमिव वेला समुद्रजलविकारः अब्ध्यम्बुविकृतौ वेलेत्यमरः। प्रतिपत् प्रथमा तिथिः।

(७९) सहस्रेति। सहस्रैः नेत्रैः बहुजननयनैरिति भावः सहस्रनेत्रेण इन्द्रेण च दर्शनयोग्या दर्शनीया तां जयन्तीमिव तदाख्यां कन्यकामिव शची इन्द्राणी।

(८०) सर्वेति सर्वैः भूभृद्भिः राजभिः अन्यत्र सर्वभूभृता हिमाद्रिणा अभ्यर्थिता प्रार्थिता तां गौरीमिव पार्वतीमिव। एकावलीलतया एकसरेण हारेण इत्यर्थः।

(८१) यया दुहित्रा नितरामतिशयेन।

(८२) अस्मिन्नेवेति अस्मिन्नेव समये दुहितृजननकाले यशोवत्या भ्राता स्वतनयं भण्डिनामानं कुमारयोः अनुचरम् अर्पितवानिति सम्बन्धः। तं विशिनष्टि अष्टवर्षदेशीयमित्यादिभिः अष्टवर्षदेशीयं प्रायेण अष्टवर्षवयसमित्यर्थः उडूयमानेति उडूयमानः उड्डीयमानः कुटिलः भङ्गिमान् काकपक्षकः शिखा एव शिखण्डः पिच्छं यस्य तं बालानान्तु शिखा प्रोक्ता काकपक्षः शिखण्डक इत्यमरः।

(८३) खण्डेति। खण्डपरशुः हरः तस्य हुङ्कारेण योऽग्निः उत्थितः तृतीयनयनादिति भावः तस्य धूमलेखया अनुबद्धः आक्रान्तः मूर्द्धा शिरो यस्य तथाभूतं मकरध्वजमिव काममिव पुनर्जातं पुनरुत्पन्नम्।

(८४) इन्द्रनीलेति। इन्द्रनीलस्य नीलकान्तमणिविशेषस्य यत् कुण्डलं

हरिहरयोः दर्शयन्तं (८५) पीनप्रकोष्ठप्रतिष्ठितपुष्पलोहवलयं परशुराममिव (८६) क्षत्रक्षपणक्षीणपरशुपाशचिह्नितं बालतां गतं (८७) कण्ठसूत्रग्रथितभङ्गुरप्रवालाङ्कुरं हिरण्यकशिपुमिव उरःकाठिन्यखण्डितनरसिंहनखरखण्डं गृहीतजन्मान्तरं शैशवेऽपि सावष्टम्भं बीजमिव वीर्य्यद्रुमस्य भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्।

(८८) अवनिपतेस्तु तस्य उपरि पुत्रयोः तृतीयस्य नेत्रयोः इव ईश्वरस्य तुल्यं दर्शनमासीत्। राजपुत्रौ अपि सकलजीवलोकहृदयानन्ददायिनौ तेन प्रकृतिदक्षिणेन (८९) मधुमाधवौ इव मलयमारुतेन उपेतौ नितरां रेजतुः। क्रमेण च अपरेणेव

---

कर्णभूषणं तस्य अंशुभिः श्यामलितं तेन। शरीरार्द्धेन अङ्गार्द्धभागेन इतरेण अन्येन शरीरार्द्धेनेति शेषः त्रिकण्टकं तदाख्यं कर्णभूषणं तस्य मुक्ताफलानाम् आलोकेन प्रभया धवलितं तेन सम्पृक्ताकायमिव सम्मिलितावयवमिव।

(८५) पीनेति। पीनयोः स्थूलयोः प्रकोष्ठयोः कर्पूराधोभागयोः प्रतिष्ठितं प्रतिष्ठां गतं स्थितमिति यावत् पुष्पलोहवलयं मणिविशेषवलयं यस्य तथोक्तम्।

(८६) क्षत्रेति। क्षत्राणां क्षत्रियाणां क्षपणेन छेदनेन क्षीणः क्षयं गतः परशुः कुठारः अतएव पाशः रज्ज्वाकारः तेन चिह्नितः परशुरामोऽयमिवेति लक्षित इत्यर्थः तम्। बालतां शिशुत्वं गतं प्राप्तम्।

(८७) कण्ठेति कण्ठसूत्रे ग्रथितः गुम्फितः भङ्गुरः कुटिलः प्रवालाङ्कुरः विद्रुमप्ररोहः यस्य तम्। हिरण्यकशिपुमिव तदाख्यमादिदैत्यमिव उर इति उरसः वक्षसः काठिन्येन दार्ढ्येन खण्डितः भग्नः नरसिंहस्य नृसिंहाकृतेर्भगवतो विष्णोः नखरखण्डः येन तथोक्तं गृहीतजन्मान्तरं पुनर्जातमित्यर्थः सावष्टम्भं सतेज इत्यर्थः बीजमिव प्ररोहमूलमिव वीर्य्यद्रुमस्य शौर्य्यवृक्षस्य।

(८८) अवनिपतेः राज्ञः। तस्य भण्डिनामकस्य कुमारस्य। ईश्वरस्य हरस्य। दर्शनम् अवलोकनम् राजा पुत्राविव तं ददर्शेत्यर्थः। प्रकृतिदक्षिणेन प्रकृत्या स्वभावेन दक्षिणः अनुकूलः तेन दक्षिणदिग्भवेन च।

भ्राता प्रजानन्देन सह वर्द्धमानौ यौवनम् अवतेरतुः। (९०) स्थिरोरुस्तम्भौ च पृथुप्रकोष्ठौ दीर्घभुजार्गलौ (९१) विकटोरःकवाटौ प्रांशुशालाभिरामौ महानगरसन्निवेशौ इव सर्वलोकाश्रयक्षमौ बभूवतुः।

(९२) अथ चन्द्रसूर्य्यौ इव स्फुरज्ज्योत्स्नायशःप्रतापाक्रान्तभुवनौ अभिरामदुर्निरीक्ष्यौ अग्निमारुतौ इव समभिव्यक्ततेजोबलौ एकीभूतौ (९३) शिलाकठिनकायबन्धौ हिमवद्विन्ध्यौ

---

(८९) मधुमाधवाविव चैत्रवैशाखाविव। उपेतौ युक्तौ सङ्गतौ इत्यर्थः प्रजानन्देन प्रजानामानन्देन तयोर्यौवनोदयेन प्रजानामानन्दवृद्धिः जातेति भावः।

(९०) स्थिरौ दृढौ ऊरू स्तम्भाविव अन्यत्र स्थिरा उरवः महान्तः स्तम्भाः ययोः तौ पृथुप्रकोष्ठौ पृथू स्थूलौ प्रकोष्ठौ प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः इत्युक्तौ कूर्पराधोभागौ इत्यर्थः विभागविशेषाश्च ययोः तौ। दीर्घेति दीर्घौ आयतौ भुजौ बाहू अर्गलाविव अन्यत्र भुजाविव अर्गलौ ययोः तौ।

(९१) विकटेति विकटः विशालः उरः वक्षस्थलं कवाट इव द्वारावरणभूतः पट्ट इव अन्यत्र उर इव कवाटौ ययोः तौ। प्रांश्विति प्रांशुः उन्नतः शाल इव तदाख्यवृक्ष इव अभिरामौ दर्शनीयौ अन्यत्र प्रांशुना शालेन प्राकारेण प्राकारोवरणः शाल इत्यमरः यद्वा प्रांशुभिः शालाभिः गृहविशेषैः अभिरामौ। सर्वेति सर्वेषां लोकानाम् आश्रये रक्षणे अधिवेशने च क्षमौ शक्तौ।

(९२) अथेत्यादि। तौ सर्वस्यामेव पृथिव्यां प्रकाशतां जग्मतुरित्यन्वयः। तौ विशिनष्टि स्फुरदित्यादिभिः। स्फुरत् प्रसरत् ज्योत्स्नेव यशः प्रतापः कोषदण्डजं तेजः स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजमित्यमरः आतपश्च तेन आक्रान्तं भुवनं याभ्यां तौ। अभिरामदुर्निरीक्ष्यौ अभिरामः सुदर्शनः चन्द्रतुल्यत्वादिति भावः दुर्निरीक्ष्यः निरीक्षितुमशक्यः दुर्द्धर्ष इति भावः सूर्य्यतुल्यत्वादिति भावः सौम्यभीमाविति भावः। समभिव्यक्तेति समभिव्यक्तानि सम्प्रकटितानि तेजांसि बलानि च याभ्यां ययोर्वा तौ एकीभूतौ समवेतौ अन्योन्यानुवर्त्तिनौ च।

(९३) शिलेति। शिलावत् शिलाभिश्च कठिनः दृढः कायबन्धः अवयव-

इव अचलौ महापक्षौ इव कृतयुगयोग्यौ अरुणगरुडौ इव (८४) हरिवाहनविभक्तशरीरौ इन्द्रोपेन्द्रौ इव नागेन्द्रगतौ कर्णार्ज्जुनौ इव (८५) कुण्डलकिरीटधरौ पूर्वापरदिग्भागौ इव सर्वतेजस्विनामुदयास्तमयसम्पादनसमर्थौ अमान्तौ इव अतिमानेन (८६) आसन्नवेलार्गलनिरोधसङ्कटे कुकुटीरके तेजःपराङ्मुखीं छायामपि जुगुप्समानौ (८७) स्वात्मप्रतिबिम्बेन

---

संश्लेषः ययोः तौ। कृतयुगेति कृतयुगस्य सत्ययुगस्य अन्यत्र कृतस्य हलाकर्षणादौ स्कन्धयोजितस्य युगस्य काष्ठभेदस्य योग्यौ समुचितौ वहनक्षमौ च यद्वा कृतयुगस्य इव योग्या शिक्षा विनीतत्वादिगुणाभ्यास इत्यर्थः ययोः तौ अन्यत्र सत्ययुगे यादृशी शकटादियोजना नियता आसीत् तद्योग्यौ।

(८४) हरीति। हरयोऽश्वाः एव वाहनानि तैः विभक्तं विभज्य गृहीतं शरीरं ययोः तौ पृथक्कृताश्ववाहनौ इति यावत्। अन्यत्र हरिः सूर्य्यस्य विष्णोश्च वाहने विभक्तं शरीरं याभ्यां तौ। यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपि-भेकेषु हरिर्ना कपिले त्रिषु इति शेषः। नागेन्द्रगतौ गजेन्द्रगामिनौ गजेन्द्र-वाहनौ वा अन्यत्र नागानां गजानां पन्नगानाञ्च इन्द्रः ऐरावतः शेषश्च तत्र गतौ स्थितौ।

(८५) कुण्डलेति। कुण्डलं कर्णालङ्कारभेदः किरीटं शिरोभूषणं तयोः धरौ धारिणौ अन्यत्र कुण्डलधरः कर्णः किरीटधारी अर्जुनः तौ। पूर्वेति पूर्वश्च अपरः पश्चिमश्च तौ दिग्भागौ दिशां विभागौ तौ इव। सर्वेति सर्वे च ते तेजस्विनः प्रतापवन्तः राजानः ग्रहाश्च तेषाम्। उदयेति उदयः अभ्युन्नतिः अस्तमयः नाशः अदर्शनञ्च तयोः सम्पादने समर्थौ क्षमौ। अमान्तौ इव पर्य्याप्तिम् अगच्छन्तौ इव अतिमानेन अतिगौरवेण इति यावत्।

(८६) आसन्नेति। आसन्ना निकटवर्त्तिनी वेला जलधिजलमर्य्यादा एव अर्गलं तेन निरोधः तेन सङ्कटम् अप्रशस्तमिति यावत् पर्य्याप्तुम् अयोग्यमिति भावः। तस्मिन् कुः पृथिवी एव कुटीरकं क्षुद्रगृहं तस्मिन् तेजःपराङ्मुखीं तेजः प्रतापः पराङ्मुखं प्रतिनिवृत्तं प्रसरणावकाशविरहादिति भावः यस्याः तथा-भूतां छायां शरीरप्रतिबिम्बं जुगुप्समानौ कथमेषा निवृत्ततेजाः धिगेतामिति निन्दन्तौ।

अपि पादनखलग्नेन लज्जमानौ शिरोरुहाणामपि भङ्गेन दुःखम् अवतिष्ठमानौ चूड़ामणिसंक्रान्तेनापि द्वितीयेन आतपत्रेण अपत्रपमाणौ भगवति (९८) षण्मुखेऽपि स्वामिशब्देन असुखायमानश्रवणौ दर्पणदृष्टेन अपि प्रतिपुरुषेण दूयमाननयनौ (९९) सन्ध्याञ्जलिघटनेषु अपि शूलायमानोत्तमाङ्गौ (१) जलधरधृतेन अपि धनुषा दोदूयमानहृदयौ आलेख्यक्षितिपतिभिः अपि अप्रणमद्भिः सन्तप्यमानचरणौ (२) परिमितमण्डलसन्तुष्टं

---

(९७) स्वात्मेति । स्वस्य आत्मनः प्रतिबिम्बं छाया: तेन लज्जमानौ अभिमानातिशयात् ममापि चरणपतनमिति धिगेति भावः । शिरोरुहाणां केशानां भङ्गेन भङ्गुरत्वेन युद्धे पलायनेन च । चूड़ामणिसंक्रान्तेन शिरोरत्नप्रतिफलितेन ---तएव द्वितीयेन आतपत्रेण छत्रेण अपत्रपमाणौ लज्जमानौ कथमेकच्छत्रत्वे- 'कं द्वितीयच्छत्रं दृश्यते इति धिगेति भावः ।

(९८) षण्मुखे षड़ानने स्कन्ददेवे इत्यर्थः । स्वामिशब्देन स्वामी कुमारः प्रभुश्च तच्छब्देन असुखायमानश्रवणौ दुःखानुभाविकर्णौ इत्यर्थः । कथमस्मद्व्यतिरेकेण अपि स्वामीति प्रयुज्यते इति धिगेति भावः । दर्पणदृष्टेन आदर्शावलोकितेन प्रतिपुरुषेण प्रतिस्पर्द्धिपुरुषेण स्वप्रतिबिम्बं दर्पणपतितं दृष्ट्वा प्रतिस्पर्द्धी अयमिति धिगेति भावः । दूयमाननयनौ असन्तुष्टनेत्रौ ।

(९९) सन्ध्येति । सन्ध्यायाम् अञ्जलिघटनानि सन्ध्याकालीनदेवतावन्दने शिरसि अञ्जलियोजनानि इत्यर्थः तेषु शूलायमानं शूलविद्धमिवाचरत् उत्तमाङ्गं शिरो ययोः तौ अस्मदभिवन्दने एव लोकैः शिरसि अञ्जलिर्बध्यते वयन्तु कथमञ्जलिं शिरसि बध्नाम इति धिगेति भावः ।

(१) जलेति । जलधरधृतेन मेघधृतेन धनुषा शक्रधनुषेत्यर्थः । दोधूयमानहृदयौ पुनः पुनः कम्पमानमानसौ कथमपरेणापि धनुर्ध्रियते अस्माकं समक्षम् इति क्रोधादिति भावः । आलेख्यक्षितिपतिभिः चित्रार्पितनृपतिप्रतिकृतिभिः इत्यर्थः । सन्तप्यमानचरणौ कथमेते अस्माकं चरणेषु न प्रणमन्तीति क्रोधादिति भावः ।

(२) परिमितेति । परिमिते परिच्छिन्ने इयत्तया ईदृक्तया च इति भावः ।

तेजः सवितुरपि अबहुमन्यमानौ (३) भूभृदपहृतलक्ष्मीकं सागरमपि उपहसन्तौ बलवन्तमक्षतविग्रहं मारुतमपि निन्दन्तौ हिमवतोऽपि चमरीवालव्यजनवीजितेन दह्यमानौ जलधीनामपि शङ्खैः खिद्यमानौ चतुःसमुद्राधिपतिम् अपरं प्रचेतसमपि असहमानौ (४) अनपहृतच्छत्रानपि विच्छायान् अवनिपालान् कुर्वाणौ साधुषु अपि असेवितप्रसन्नौ सुखेन मधु चरन्तौ दुष्टराजवंशान् (५) उष्मणा दूरस्थितानपि म्लानिमानयन्तौ अनुदिवसं शस्त्राभ्यासश्यामिकाकलङ्कितम् अशेष-राजकप्रतापाग्निनिर्वापणमलिनमिव करतलमुद्वहन्तौ (६) योग्याकालेषु धीरैः धनु-

---

मण्डले विश्वे विषये च सन्तुष्टं पर्य्याप्तमित्यर्थः। सवितुः सूर्य्यस्य तेजः अबहु न प्रभूतमित्यर्थः। मन्यमानौ अवधारयन्तौ स्वस्य अपरिमिततेजःशालित्वादिति भावः।

(३) भूभृदिति। भूभृता मन्दराचलेन भूभृद्भिः राजभिश्च अपहृता लक्ष्मीः यस्मात् तथाभूतं सागरमपि उपहसन्तौ ततोऽपि स्वस्य दुर्धर्षत्वादिति भावः। अक्षतः विग्रहः युद्धम् अक्षतः अच्युतः विग्रहः शरीरञ्च येन तथोक्तं मारुतं वायुम्। निन्दन्तौ कुत्सयन्तौ यदि विग्रहवत्त्वमस्य अभविष्यत् तदा कियत् बलम् अस्माभिः अद्रक्ष्यतेति धियेति भावः। हिमवतोऽपि हिमाद्रेरपि चमरीणां वालव्यजनेन वीजितं तेन वयमेव चामरव्यजनैः वीज्यामहे कथमयमपि इति ईर्ष्ययेति भावः। जलधीनां सागराणां शङ्खैः कम्बुभिः निधिविशेषैश्च खिद्यमानौ शङ्खनिधिभुजौ वयमेव कथं जलधिषु एतत्सद्भाव इति स्पर्द्धयेति भावः। अपरम् अन्यम् अस्मदतिरिक्तमिति भावः प्रचेतसं वरुणदेवम्।

(४) अनपहृतेति। न अपहृतं छत्रं येषां तान् विजित्य पुनः स्वे स्वे पदे स्थापितानिति भावः। विच्छायान् विगतकान्तीन् पराजयव्यलीकादिति भावः। अवनिपालान् राज्ञः। असेवितप्रसन्नौ विना सेवां प्रसन्नौ सज्जनप्रियौ इत्यर्थः। मधुचरन्तौ मधुरभाषिणौ।

(५) उष्मणा प्रतापाग्निना म्लानिं मालिन्यम्। अनुदिवसं प्रतिदिनं शस्त्रेति शस्त्राणाम् अभ्यासेन सञ्चालनेन या श्यामिका कलङ्करेखा तया कलङ्कितं सञ्जा-

र्ध्वनिभि: अभ्यर्णोपभोगाय दिग्वधूभि: इवालपन्तौ राज्यवर्द्धन इति हर्ष इति सर्वस्यामेव पृथिव्याम् (७) आविर्भूतशब्दप्रादुर्भावौ स्वल्पीयसा एव कालेन द्वीपान्तरेषु अपि प्रकाशतां जग्मतु:।

एकदा च तौ आहूय भुक्तवान् अभ्यन्तरगत: पिता सस्नेहम् अवादीत् वत्सौ! (८) प्रथमं राज्याङ्गं दुर्लभा: सद्भृत्या:। प्रायेण परमाणव इव समवायेषु अनुगुणीभूय द्रव्यं कुर्वन्ति पार्थिवं क्षुद्रा:। क्रीड़ारसेन नर्त्तयन्तो मयूरतां नयन्ति बालिशा:। (९) दर्पणमिवानुप्रविश्य आत्मीयां प्रकृतिं संक्रा-

---

लकिणम् अशेषाणां राजकानां राजन्यानां प्रतापाग्नै: निर्वापणेन मलिनमिव मलदूषितमिव।

(६) योग्याकालेषु अभ्यासकालेषु धीरै: गम्भीरै: धनुर्ध्वनिभि: कार्मुकनिनादै: अभ्यर्ण: सन्निहित: प्रत्यासन्न इत्यर्थ: अचिरभावीति भाव: उपभोग: दिक्बालानां विजयेन सम्भोग: तस्मै।

(७) आविर्भूतेति। आभिर्भूत: प्रकाशित: शब्दप्रादुर्भाव: ख्याति: ययो: तौ स्वल्पीयसैव अत्यल्पेनैव।

(८) प्रथमं प्रधानभूतं राज्याङ्गं राज्यपोषकमिति भाव: सद्भृत्या: सच्चरिता: अमात्या इत्यर्थ:। क्षुद्रा: साधारणा जना इत्यर्थ: क्षुद्रा: अतिसूक्ष्मावयवा: परमाणव इव समवायेषु मन्त्रेषु संहतिषु च अनुगुणीभूय अनुकूलीभूय प्रविश्य च द्रव्यं सामान्यं जनरूपं वस्तु पार्थिवं राजानम् अन्यत्र पार्थिवं पृथिवीसम्बन्धि द्रव्यं वस्तु प्राचेण बाहुल्येन कुर्वन्ति निष्पादयन्ति प्रायेण इत्यनेन अदृष्टादिकमपि हेतुरत्र विद्यते इति ध्वनितम्। क्रीड़ारसेनेति। बालिशा धूर्त्ता: कुमाराश्च क्रीड़ारसेन क्रीड़ारागेण नर्त्तयन्त: सञ्चारयन्त इत्यर्थ:। मयूरतां धूर्त्तजनसेव्यतामित्यर्थ: हास्यतां शिखण्डित्वञ्च नयन्ति प्रापयन्ति बालका यथा क्रीड़न्तो मयूरं नर्त्तयन्ति तथा धूर्त्ता: अबोधं नृपमन्यं वा क्रीड़ारसेन उन्माद्य क्रीड़नकं कुर्वन्तीति भाव:।

(९) दर्पणमिति। पल्लविका: विटा: दर्पणमिव अनुप्रविश्य राजानम् अन्यं वा आत्मीयां प्रकृतिं स्वभावं प्रतिकृतिञ्च संक्रामयन्ति समारोपयन्ति। दर्पणे यथा

मयन्ति पल्लविकाः। (१०) स्वप्ना इव मिथ्यादर्शनैः असद्बुद्धिं जनयन्ति विप्रलम्भकाः। (११) गीतनृत्यहसितैः उन्मत्ततामावहन्ति उपेक्षिता विकारा इव वातिकाः। (१२) चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः। (१३) मानसे मीनमिव स्फुरन्तमेव अभिप्रायं गृह्णन्ति जालिकाः। (१४) यमपट्टिका इव अम्बरे चित्रमालिखन्ति उद्गीतकाः। (१५) शल्यं हृदये निक्षिपन्ति अतिमार्गणाः। (१६) यतः सर्वैर्दोषाभिषङ्गैः

---

प्रतिबिम्बं पतति तथा अभ्यन्तरं प्रविष्टैर्धूर्त्तैः चित्तरञ्जनेन राजा अन्यो वा स्वां प्रकृतिं धूर्त्ततां नीयते इति भावः। पल्लविका विटाः।

(१०) स्वप्ना इव। स्वप्नो निद्रासुप्तेस्य विषयानुभवस्तु य इत्युक्तलक्षणा इव मिथ्यादर्शनैः असच्छास्त्रैः अलीकवस्तुप्रकटनैश्च असतीम् अशोभनां बुद्धिम् असति अविद्यमाने अलीके च बुद्धिं जनयन्ति उत्पादयन्ति। विप्रलम्भकाः प्रतारकाः।

(११) गीतेति। गीतं नृत्यं हसितं तैः उपेक्षिताः उपशमाय अचेष्टिता इत्यर्थः वातिका वायुजनिता इत्यर्थः। विकारा रोगविशेषा इव वातिका धूर्त्ताः उन्मत्ततां ज्ञानान्धताम् आवहन्ति नयन्तीत्यर्थः।

(१२) चातका इव तदाख्यपक्षिविशेषा इव तृष्णावन्तः पिपासिताः धनलुब्धाश्च अकुलीनाः अकुलजाः दुष्कुलजाता इत्यर्थः अथच कौ पृथिव्यां न लीनाश्च आकाशचारिण इत्यर्थः। ग्रहीतुं वशीकर्त्तुं धर्त्तुञ्च न शक्यन्ते न पार्यन्ते।

(१३) मानसे इति। मानसे चित्ते सरसि च। स्फुरन्तं राजमानम् अभिप्रायम् आशयं गृह्णन्ति अवबुध्यन्ते धरन्ति च जालिकाः कूटकारकाः जालोपजीविनः कैवर्त्ताश्च। यमपट्टिका इवेति उद्गीतकाः अतिदुश्चरितत्वेन उच्चैर्गीतं कीर्त्तनं येषां तथाभूताः अतिदुर्विनीता इत्यर्थः।

(१४) यमपट्टिका इव अन्तकशासनपत्राणि इव अम्बरे आकाशे अभित्तौ इत्यर्थः वस्त्रे च चित्रम् आश्चर्य्यम् असम्भावनीयं वस्तु इति भावः। आलेख्यञ्च आलिखन्ति चित्रयन्ति। यमो यथा अतर्कितमेव स्वव्यापारमनुतिष्ठति तथा तादृशा धूर्त्ताः सहसा असम्भाव्यमनिष्टमुत्पादयन्तीति भावः।

(१५) शल्यमिति। अतिमार्गणाः अतिशयेन वाह्यभक्तिप्रदर्शिनः धूर्त्तविशेषाः

असङ्गतौ बहुधा उपधाभिः परीक्षितौ शुचौ विनीतौ विक्रान्तौ अभिरूपौ मालवराजपुत्रौ भ्रातरौ भुजौ इव मे शरीरात् अव्यतिरिक्तौ कुमारगुप्त-माधवगुप्तौ अस्माभिर्भवतोः अनुचरत्वार्थम् इमौ निर्दिष्टौ। अनयोः उपरि भवद्भ्यामपि न अन्यपरिजन-समवृत्तिभ्यां भवितव्यम्। इत्युक्त्वा तयोः आह्वानाय प्रतीहारम् आदिदेश।

(१७) नचिरात् द्वारदेशनिहितलोचनौ राज्यवर्द्धन-हर्षौ प्रतीहारेण सह प्रविशन्तम् अग्रतो ज्येष्ठम् अष्टादशवर्षवयसं नात्युच्चं नातिखर्वम् अतिगुरुभिः पदन्यासैः अनेकनरपति-सञ्चरणचलां निश्चलीकुर्वाणम् इव उर्वीम् (१८) अनवरताभ्य-स्तलङ्घनघनोपचयकठिनमांसमेदुरात् ऊरुद्वयात् निष्पततीव

---

तीक्ष्णशरास्त्र हृदये अन्तरात्मनि वचसि च शल्यं व्यथाविशेषं स्वं फलकञ्च निक्षि-पन्ति निदधतीत्यर्थः।

(१६) यत इति। यस्मात् सर्वैः दोषाभिषङ्गैः दोषाणाम् अविनयादीनाम् अभि-षङ्गाः पराभवाः अभिषङ्गः पराभवे इत्यमरः। तैः असङ्गतौ अमिलितौ अस-स्पृष्टौ इत्यर्थः। बहुधा बहुना प्रकारेण उपधाभिश्छलैः परीक्षितौ अवेक्षितौ शुचौ विशुद्धचरितौ विनीतौ विनयवन्तौ विक्रान्तौ पराक्रमशालिनौ अभिरूपौ सुन्दराकृती अव्यतिरिक्तौ अभिन्नौ निर्दिष्टौ निरूपितौ।

(१७) न चिरादित्यादि। राज्यवर्द्धनहर्षौ कुमारगुप्तं तत् पृष्ठतः माधव-गुप्तञ्च ददृशतुरिति सम्बन्धः। प्रथमं तावत् कुमारगुप्तं विशिनष्टि प्रतीहारेणे-त्यादिभिः। प्रतीहारेण दौवारिकेण। अतिगुरुभिः अतिभारवद्भिः पदन्यासैः पदविक्षेपैः। अनेकेति अनेकेषु नरपतिषु सञ्चरणेन संक्रमणेन चलां चञ्चलां नैकत्रस्थायिनीमित्यर्थः बहुस्वामिकामिति भावः। निश्चलीकुर्वाणमिव एक-स्वामिकां कुर्वाणमिव इत्यर्थः। उर्वीं पृथ्वीम्।

(१८) अनवरतेति। अनवरतम् अविच्छेदं यथा तथा अभ्यस्तेन लङ्घनेन सञ्चारणेन इति यावत्। घनं सान्द्रम् उपचयेन वृद्ध्या कठिनं मांसं तेन मेदुरं

अनुल्बणजानुग्रन्थिप्रसूतेन तनुतरजङ्घाकाण्डयुगलेन भासमानम् (१९) उल्लिखितपार्श्वप्रकाशितकृशिम्ना मन्दरमिव सुरासुररभसभ्रमितवासुकिकषणक्षीणेन मध्येन लक्ष्यमाणम् अतिविस्तीर्णेन उरसा स्वामिसम्भावनानाम् अपरिमितानाम् अवकाशम् इव प्रयच्छन्तम् (२०) प्रलम्बमानस्य भुजयुगलस्य निभृतललितैः विक्षेपैः अतिदुस्तरं तरन्तमिव यौवनोदधिं (२१) वामकरकटकमाणिक्यमरीचिमञ्जरीजालिन्या समुद्भिद्यमानप्रतापानलशिखापल्लवयेव चापकिणलेखया अङ्कितपीवरप्रकोष्ठम् (२२) आलोहिनीम् उच्चांसतटावलम्बिनीम् अस्त्रग्-

---

पुष्टं तस्मात् ऊरुद्वयात् ऊरुयुगलात् निष्पततेव निर्गच्छतेव अनुल्बणः अनुत्कटः यः जानुग्रन्थिः जानुसन्धिः तस्मात् प्रसूतम् उद्भूतं तेन तनुतरजङ्घाकाण्डयुगलेन कृशतरजङ्घाकाण्डद्वयेन भासमानं राजमानम्।

(१९) उल्लिखितेति। उल्लिखितेन तनूकृतेन पार्श्वेन पार्श्वदेशेन प्रकाशितः प्रकटितः कृशिमा कार्श्यं यस्य तेन। सुरेति सुराश्च असुराश्च तैः रभसेन वेगेन भ्रमितस्य वासुकेः नागराजस्य कषणेन घर्षणेन क्षीणं तेन मध्येन मध्यभागेन कटिदेशेन इत्यर्थः। मन्दरमिव मन्दराचलमिव लक्ष्यमाणं दृश्यमानम् अतिविस्तीर्णेन अतिविशालेन उरसा वक्षःस्थलेन स्वामिसम्भावनानां प्रभुसमादराणां प्रभुस्नेहानामिति भावः। अवकाशमिव स्थानमिव प्रयच्छन्तं ददतम्।

(२०) प्रलम्बमानस्य अत्यायतस्य इत्यर्थः निभृतललितैः निभृतानि साधारणदुर्ज्ञेयानीति भावः ललितानि रम्याणि तैः विक्षेपैः सञ्चालनविशेषैः यौवनोदधिं तारुण्यसागरम्।

(२१) वामेति। वामकरे यः कटकः वलयः तस्य माणिक्यं रत्नविशेषः तस्य मरीचयः मयूखा एव मञ्जर्यः तासां जालं समूहः अस्ति अस्यामिति तथोक्तया समुद्भिद्यमानेति समुद्भिद्यमानाः समुद्भेदं नीयमानाः प्रतापानलस्य शिखा एव पल्लवाः किसलयाः यस्यां तथाभूतया चापकिणलेखया धनुर्धारणजनितकलङ्करेखया अङ्कितः चिह्नितः पीवरः पुष्टः प्रकोष्ठः करतिमणिबन्धयोः अन्तरालभागः यस्य तथोक्तम्।

कृष्णव्रतविधृतां रौरवीम् इव त्वचं कर्णाभरणमणेः प्रभां बिभ्राणम् (२३) उत्कोटिकेयूरपत्रभङ्गपुत्रिकाप्रतिबिम्बगर्भकपोलं मुखं चन्द्रमसम् इव हृदयस्थितरोहिणीकम् उद्वहन्तम् (२४) अचपलस्तिमिततारकेण अधोमुखेन चक्षुषा शिक्षयन्तमिव लक्ष्मीलाभोत्तानितमुखानि पङ्कजवनानि विनयं स्वाम्यनुरागमिव अम्लातकम् (२५) उत्तंसीकृतं शिरसा धारयन्तं निर्दयया कङ्कणभङ्गभीतसकलकार्मुकार्पितामिव नम्रतां प्रकाशयन्तं शैशवे एव निर्जितैः इन्द्रियैः अरिभिरिव संयतैः शोभमानं प्रणयिनीमिव विश्वासभूमिं (२६) कुलपुत्रताम् अनुवर्त्त-

---

(२२) आलोहिनीम् आरक्ताम् उच्चांसतटावलम्बिनीम् उच्चमुन्नतम् अंसतटं स्कन्धदेशम् अवलम्बते आश्रयतीति तथोक्ताम् अस्त्रग्रहणमेव व्रतं तस्मै विधृतां गृहीतां रौरवीमिव रुरुर्मृगविशेषः तत्सम्बन्धिनीमिव त्वचं चर्म कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च इति मनुना क्षत्रियब्रह्मचारिणां रौरवचर्माच्छादनस्योक्तत्वादिति भावः। कर्णाभरणमणेः कर्णालङ्काररत्नस्य प्रभां कान्तिं बिभ्राणं दधानम्।

(२३) उत्कोटीति। उद्गता कोटिः यस्य तादृशः यः केयूरपत्रभङ्गः अङ्गदपत्रभङ्गः तत्र या पुत्रिका पुत्तलिकाकृतिः तस्याः प्रतिबिम्बं गर्भे यस्य तादृशौ कपोलौ यस्य तथाभूतं मुखं वदनम्। हृदयेति हृदये अन्तरे स्थिता रोहिणी स्वप्रिया यस्य तथाविधम्।

(२४) अचपलेति। अचपला अचञ्चला स्तिमिता स्थिरा तारका यस्य तेन अधोमुखेन नतेन विनयप्रदर्शिनेति भावः। लक्ष्मीति लक्ष्म्याः श्रिया लाभेन प्राप्त्या उत्तानितानि उन्नमितानि मुखानि येषां तानि पङ्कजवनानि पद्मवनानि विनयं शिष्टाचारं शिक्षयन्तमिव सम्पत्समये नैव औद्धत्यं प्रदर्शितव्यमिति उपदिशन्तमिव इत्यर्थः अम्लातकं पुष्पविशेषं करण्टिकापुष्पभेदम्।

(२५) उत्तंसीकृतं शेखरतां नीतं निर्दयया दयाराहित्येन काठिन्येन इति भावः। कङ्कणस्य हस्ताभरणस्य वलयस्य इत्यर्थः भङ्गात् भीतं सकलं कार्मुकं धनुः तेन अर्पिता मा एवं निर्दयतां कुर्विति शिक्षितामिति भावः नम्रतां विनीतत्वम्।

मानं तेजस्विनमपि शीलेन आह्लादकेन सवितारमिव शशिना अन्तर्गतेन विराजमानम् अचलानामपि कायकार्कश्येन गन्धनम् इव आचरन्तं दर्शनक्रीतम् आनन्दहस्ते विक्रीणानमिव (२७) जनं सौभाग्येन कुमारगुप्तं पृष्ठतः तस्य कनीयांसम् अतिप्रांशुतया गौरतया च मनःशिलाशैलमिव सञ्चरन्तम् (२८) अनुल्बणमालतीकुसुमशेखरनिभेन निर्जिगमिषता गुरुणा शिरसि चुम्बितमिव यशसा परस्परविरुद्धयोः विनययौवनयोः चिरात् प्रथमसङ्गमचिह्नमिव भ्रूसङ्गतकेन कथयन्तम् अतिधीरतया हृदयनिहितां स्वामिभक्तिम् इव निश्चलां दृष्टिं धारयन्तम्

---

शैशव एव बाल्य एव निर्जितैः वशीकृतैः इन्द्रियैः चक्षुरादिभिः अरिभिरिव शत्रुभिरिव संयतैः निगड़ितैः ।

(२६) कुलपुत्रतां कुलीनताम् अनुवर्तमानम् अनुसरन्तम् । तेजस्विनमपि प्रतापवन्तमपि शीलेन चरित्रेण अन्तर्गतेन अन्तःस्थितेन अचलानामपि पर्वतानामपि कायकार्कश्येन अङ्गकाठिन्येन गन्धनमिव विमर्दनमिव आचरन्तं कुर्वाणं दर्शनक्रीतं दृष्टिमात्रेण वशङ्गतमिति यावत् ।

(२७) जनं सौभाग्येन प्रणयित्वेन आनन्दहस्ते विक्रीणानमिव सानन्दं कुर्वाणमिव इत्यर्थः । कनीयांसं कनिष्ठम् अतिप्रांशुतया अत्युन्नतकायत्वेन गौरतया गौराङ्गत्वेन च मनःशिलाशैलमिव तस्य तथोन्नतत्वात् मनःशिलासद्भावेन गौराङ्गत्वाच्च इति भावः ।

(२८) अनुल्बणेति । अनुल्बणं सौम्यं शुभदर्शनमित्यर्थः । यत् मालतीकुसुमशेखरं मालतीपुष्पशिरोमाल्यं तन्निभेन तद्व्याजेन निर्जिगमिषता निर्गन्तुमिच्छता प्रकाशमानेन इति भावः गुरुणा महता पित्रादिगुरुजनेन च यशसा शिरसि चुम्बितमिव स्पृष्टमिव परस्परविरुद्धयोः अन्योऽन्यविरोधिनोः प्रथमसङ्गमचिह्नमिव प्रथमसम्मेलनचिह्नमिव भ्रूसङ्गतकेन भ्रुवोः सङ्गतकं सम्मेलनं तेन कथयन्तं सूचयन्तं यथा भ्रुवौ मम परस्पराविरोधेन युक्ते तथा विनययौवने परस्परमविरोधिनी स्यातम् इति प्रकटयन्तमिव इत्यर्थः ।

(२९) अच्छाच्छचन्दनरसानुलेपशीतलं सन्निहितहारोपधानं वक्षःस्थलम् अनन्तसामन्तसंक्रान्तिश्रान्तायाः श्रियो विशालं शशिमणिशिलापट्टशयनमिव बिभ्राणं चक्षुः कुरङ्गकैः घोणावंशं वराहैः स्कन्धपीठं महिषैः प्रकोष्ठबन्धं व्याघ्रैः पराक्रमं (३०) केसरिभिः गमनं मतङ्गजैः मृगयाक्षपितशेषैर्भीतैः उत्कोचमिव दत्तं दर्शयन्तं माधवगुप्तं ददृशतुः।

प्रविश्य च दूरादेव (३१) चतुर्भिः अङ्गैः उत्तमाङ्गेन च गां स्पृशन्तौ नमश्चक्रतुः। (३२) स्निग्धनरेन्द्रदृष्टिनिर्दिष्टाम् उचितां भूमिं भेजाते। मुहूर्त्तं च स्थित्वा भूपतिः आदिदेश तौ अद्य प्रभृति भवद्भ्यां कुमारौ अनुवर्त्तनीयौ इति। यथा आज्ञापयति देव इति (३३) मेदिनीदोलायमानमौलिभ्याम्

---

(२९) अच्छेति। अच्छाच्छः अतिस्वच्छः यः चन्दनरसः तस्य अनुलेपेन शीतलं सन्निहितस्य अर्पितस्य हारस्य उपधानम् आश्रयमित्यर्थः हारशोभितम् इति भावः अनन्तेषु बहुषु इति यावत् सामन्तेषु राजसु या संक्रान्तिः संक्रमणं सञ्चरणमित्यर्थः तया श्रान्ता क्लान्ता तस्याः श्रियः लक्ष्म्याः विशालं विस्तृतं शशिमणिशिलापट्टशयनमिव चन्द्रकान्तमणिपट्टशय्यामिव। श्रान्ताया शयित्वा विश्रम्यतीति भावः। चक्षुः नेत्रं कुरङ्गकैः मृगविशेषैः दत्तमित्यन्वयः एवमुत्तरत्र। घोणावंशं नासावंशम्। स्कन्धपीठम् अंसतटम्। प्रकोष्ठबन्धं हस्तावयवबन्धविशेषम्।

(३०) केशरिभिः सिंहैः। मतङ्गजैः गजैः। मृगयेति मृगयया आखेटकचरणे क्षपिता नाशिताः तेभ्यः शेषाः तैः भीतैः अस्मानपि क्षपयिष्यति इति धिया शङ्कितैः इत्यर्थः उत्कोचमिव दण्डविशेषमिव।

(३१) चतुर्भिरिति। चतुर्भिरङ्गैः जानुभ्यां हस्ताभ्याञ्च इत्यर्थः उत्तमाङ्गेन शिरसा।

(३२) स्निग्धेति। स्निग्धेन स्नेहवता नरेन्द्रेण राज्ञा प्रभाकरवर्द्धनेन दृष्ट्या नेत्रेण नेत्रसंज्ञयेत्यर्थः निर्दिष्टा प्रदर्शिता तां स्निग्धेति दृष्टिविशेषणं वा। भेजाते उपविविशतुरित्यर्थः।

उत्थाय राज्यवर्द्धनहर्षौ प्रणेमतुः। (३४) तौ च पितरम्। ततश्च आरभ्य क्षणमपि (३५) निमिषोन्मेषौ इव चक्षुर्गोचरात् अनपयान्तौ उच्छ्वासनिश्वासौ इव नक्तन्दिवम् अभिमुखस्थितौ भुजौ इव सततपार्श्ववर्त्तिनौ कुमारयोः तौ बभूवतुः।

(३६) अथ राज्यश्रीरपि नृत्यगीतादिषु विदग्धासु सखीषु सकलासु कलासु च प्रतिदिनमुपचीयमानपरिचया शनैः शनैः अवर्द्धत। (३७) परिमितैरेव दिवसैः यौवनम् आरुरोह। निपेतुः एकस्यां तस्यां शरा इव लक्ष्यभुवि भूभुजां सर्वेषां दृष्टयः। दूतप्रेषणादिभिश्च तां ययाचिरे राजानः।

कदाचित्तु राजा अन्तःपुरप्रासादस्थितो (३८) बाह्यकक्ष्यावस्थितेन पुरुषेण स्वप्रस्तावागतां गीयमानामार्य्यामशृणोत्

उद्वेगमहावर्त्ते पातयति पयोधरोन्नमनकाले।
सरिदिव तटमनुवर्षं विवर्द्धमाना सुता पितरम् ॥ ३८ ॥

---

(३३) मेदिनीति। मेदिन्यां भूमौ दोलायमानः लुठन् मौलिः किरीटी धम्मिल्लो वा ययोः ताभ्याम् अवनमितशिरोभ्यामिति भावः।

(३४) तौ च राज्यवर्द्धनहर्षौ च पितरं प्रणेमतुरित्यन्वयः।

(३५) निमेषोन्मेषौ इव निमीलनोन्मीलने इव चक्षुर्गोचरात् दृष्टिविषयात् अनपयान्तौ अवहिर्गच्छन्तौ सततपार्श्ववर्त्तिनौ निरन्तरपार्श्वचारिणौ।

(३६) राज्यश्रीः तदाख्या राजदुहितापि विदग्धासु चतुरासु कलासु विद्यासु उपचीयमानपरिचया वर्द्धमानशिक्षा।

(३७) परिमितैरेव अल्पैरेव। लक्ष्यभुवि शरव्यविषये। भूभुजां राज्ञाम्।

(३८) बाह्येति बाह्या कक्ष्या प्रकोष्ठः महल इति भाषा तत्र स्थितः तेन। स्वस्य आत्मनः प्रस्तावः कन्यादानविषयकः प्रसङ्गः तेन तत्र वा आगता उपस्थिता तां कन्यादायविषयिणीमिति भावः गीयमानां कीर्त्यमानाम् आर्य्यां छन्दोजातिं यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येत्युक्तलक्षणाम्।

उद्वेगेति। अनुवर्षं प्रतिवर्षं प्रतिवृष्टि च विवर्द्धमाना वृद्धिं गच्छन्ती सुता

ताञ्च श्रुत्वा पार्श्वस्थितां (४०) महादेवीम् उत्सारितपरिजनो जगाद देवि ! तरुणीभूता वत्सा राज्यश्रीः । एतदीया गुणवत्तेव क्षणमपि हृदयात् नापयाति मे चिन्ता । यौवनारम्भ एव च कन्यकानाम् (४१) इन्धनीभवन्ति पितरः सन्तापानलस्य । हृदयम् अन्धकारयति मे दिवसमिव (४२) पयोधरोन्नतिः अस्याः । केनापि कृता धर्म्या नाभिमता मे स्थितिः इयं यत् अङ्गसम्भूतानि अङ्कलालितानि अपरित्याज्यानि अपत्यकानि अकाण्ड एवागत्य असंस्तुतैर्नीयन्ते । एतानि तानि खलु अङ्गनस्थानानि संसारस्य । सेयं (४३) सर्वाभिभाविनी शोकाग्नेः दाहशक्तिः यत् अपत्यत्वे समाने जातायां दुहितरि दूयन्ते सन्तः । एतदर्थं जन्मकाल एव कन्यकाभ्यः प्रयच्छन्ति सलिलम् अश्रुभिः साधवः । एतद्भयात् अकृतदारपरिग्रहाः (४४) परि-

---

कन्या सरिदिव नदीव पयोधरोन्नमनकाले स्तनोन्नतिसमये मेघाभ्युत्थानकाले च पितरं जनयितारं तटमिव उद्वेगः महान् आवर्त्त इव उद्वेग इव महान् आवर्त्तश्च तस्मिन् पातयति निक्षिपति । कन्यादायी महोद्वेगजनक इति भावः । उपमालङ्कारः ॥ ३९ ॥

(४०) महादेवीं यशोवतीम् । उत्सारितपरिजनः अपसारितपरिवारवर्गः । एतदीया एतत्सम्बन्धिनी ।

(४१) इन्धनीभवन्ति काष्ठभूता भवन्ति कथमेषा पात्रसात्क्रियते यदि अपात्रगता स्यात् तदातीव दुःखमिति सन्तापानलस्य उद्वेगाग्नेः ।

(४२) पयोधरोन्नतिः स्तनोन्नतिः मेघोन्नतिश्च । केनापि नियन्त्रेति भावः धर्म्या धर्मादनपेता स्थितिर्मर्य्यादा सदाचार इत्यर्थः अङ्गसम्भूतानि देहोत्पन्नानि अङ्कलालितानि उत्सङ्गवर्द्धितानि अपरित्याज्यानि परित्यक्तुमयोग्यानि अपत्यानि कन्या इत्यर्थः अकाण्ड एव हठादेव असंस्तुतैः अपरिचितैः जनैरिति शेषः । अङ्गनस्थानानि कलङ्कस्थानानि ।

(४३) सर्वेति । सर्वान् जनान् अभिभवतीति तथोक्ता । अपत्यत्वे सन्तानत्वे समाने तुल्ये जातायाम् उत्पन्नायां दूयन्ते तप्यन्ते ।

हृतगृहवसतयः शून्यानि अरण्यानि अधिशेरते मुनयः। को हि नाम सहते विरहम् अपत्यानाम्। यथा यथा (४५) समापतन्ति दूता वराणां वराकी लज्जमानेव चिन्ता तथा तथा नितरां प्रविशति मे हृदयम्। किं क्रियते तथापि (४६) गृहगतैः अनुगन्तव्या एव लोकवृत्तयः। प्रायेण च सत्सु अपि अन्येषु वरगुणेषु (४७) अभिजनमेव अनुरुध्यन्ते धीमन्तः। धरणीधराणाञ्च मूर्ध्नि स्थितो माहेश्वरः पादन्यास इव सकल-भुवननमस्कृतो मौखरी वंशः। (४८) तत्र अपि तिलकभूतस्य अवन्तिवर्मणः सूनुः अग्रजो ग्रहवर्मा नाम ग्रहपतिरिव गां गतः पितुः अन्यूनो गुणैः एनां प्रार्थयते। यदि भवत्या अपि मतिः अनुमन्यते ततः तस्मै दातुम् इच्छामि।

इति उक्तवति भर्त्तरि दुहितृस्नेहकातरतरहृदया साश्रुलोचना महादेवी प्रत्युवाच आर्य्यपुत्र! संवर्द्धनमात्रोपयोगिन्यो

---

(४४) परिहृतगृहवसतयः परित्यक्तगृहस्थितयः। अधिशेरते आश्रयन्ति।

(४५) समापतन्ति समागच्छन्ति। लज्जमानेव दुहितुः अन्यासङ्गभावनाजनितत्रपान्वितेव।

(४६) गृहगतैः गृहस्थैः लोकवृत्तयः लोकस्थितयः।

(४७) अभिजनमेव सत्कुलमेव। अनुरुध्यन्ते अनुसरन्ति। धरणीधराणां राज्ञां पर्वतानाञ्च मूर्ध्नि शिरसि शिखरे च माहेश्वरः महेश्वरस्य हरस्य अयं माहेश्वरः पादन्यास इव चरणनिक्षेप इव निक्षिप्तचरण इवेत्यर्थः कृदभिहितो भावो द्रव्यवत्प्रकाशते इति न्यायादिति भावः सकलैः भुवनैः तद्वासिभिरित्यर्थः नमस्कृतः अभिवन्दितः श्रेष्ठने गणितस्य मौखरः मुखरो नाम कश्चिदवनिपतिः तस्य अयं मौखरः वंशः कुलम्।

(४८) तत्रापि वंशे इत्यर्थः तिलकभूतस्य ललाटालङ्कारभूतस्य अवन्तिवर्मणः तदाख्यस्य नृपतेः। ग्रहपतिरिव सूर्य्य इव गां गतः भुवमवतीर्णः।

(४९) धात्रीनिर्विशेषा भवन्ति खलु मातरः कन्यकानाम्। दाने तु प्रमाणम् आसां पितरः। केवलं (५०) कृपाकृतविशेषः सुदूरेण तनयस्नेहात् अतिरिच्यते दुहितृस्नेहः। यथा यावज्जीवम् आवयोः (५१) न आर्त्तितां प्रतिपद्यते तथा आर्य्यपुत्त्र एव जानाति इति।

राजा तु (५२) जातनिश्चयो दुहितृदानं प्रति समाहूय सुतौ अपि विदितार्थौ अकार्षीत्। (५३) शोभने च दिवसे ग्रहवर्मणा कन्यां प्रार्थयितुं प्रेषितस्य पूर्वागतस्यैव प्रधानदूतपुरुषस्य करे सर्वराजकुलसमक्षं दुहितृदानजलम् अपातयत्। (५४) जातमुदि कृतार्थे गते च तस्मिन् आसन्नेषु च विवाहदिवसेषु (५५) उद्दामदीयमानताम्बूलपटवासकुसुमप्रसाधितसर्वलोकं (५६) सकलदेशादिश्यमानशिल्पिसार्थागमनम्

---

(४९) धात्रीति। धात्री उपमातृका तस्या निर्विशेषाः विशेषरहिताः। प्रमाणं यथेच्छाचारिण इत्यर्थः।

(५०) कृपेति कृपया अनुकम्पया कृतः जनितः विशेषः यस्य तथाभूतः।

(५१) आर्त्तितां मनःपीड़ात्वं प्रतिपद्यते प्राप्नोति मनः पीड़ां जनयतीत्यर्थः कस्येति शेषः। नार्धितामिति पाठे आर्धितां मनः पीड़ां न प्रतिपद्यते न प्राप्नोति इत्यर्थः।

(५२) जातनिश्चयः निश्चितमतिरित्यर्थः विदितार्थौ ज्ञातार्थौ।

(५३) शोभने शुभे दुहितृदानजलं दुहितुः दानाय जलम् अपातयत् प्रायच्छत् वाग्दानविधानेनेति भावः।

(५४) जातमुदि जातहर्षे। आसन्नेषु सन्निहितेषु राजकुलमेवम्भूत मासीदिति सम्बन्धः।

(५५) तदेव विशिनष्टि उद्दामेति उद्दामम् उच्छृङ्खलमिति भावः दीयमानेन ताम्बूलेन पटवासेन गन्धद्रव्यभेदेन कुसुमेन च प्रसाधिताः अलङ्कृताः सम्मानिता वा सर्वे लोका यस्मिन् तत्।

अवनिपाल-पुरुष-गृहीत-समग्रग्रामीणानीयमानोपकरणसम्भारं (५७) राजदौवारिकोपनीयमानानेकनृपोपायनम् (५८) उपनिमन्त्रितागतबन्धुवर्गसंवर्गणव्यग्रराजवल्लभं (५९) लब्धमधुमद-प्रचण्डचर्मकार-करपुटोल्लालितकोणपटुविघट्टनरणन्मङ्गल-पटहं (६०) पिष्टपञ्चाङ्गुलमण्डलमण्ड्यमानोलूखलमुसल-शिलाद्युपकरणम् (६१) अशेषाशामुखाविर्भूतचारणपरम्परा-पूर्य्यमाणप्रकोष्ठप्रतिष्ठाप्यमानेन्द्राणीदैवतं (६२) सितकुसुम-

---

(५६) सकलेति सकलेभ्यः देशेभ्यः सकलैः देशैर्वा आदिश्यमानं शिल्पिसार्थानां कारुकर्मिसमूहानाम् आगमनम् उपस्थितिर्यस्मिन् तत् । अवनीपालेति अवनीपालपुरुषैः राजपुरुषैः राजकर्मचारिपुरुषैर्वा गृहीताः समग्राः ग्रामीणानां जानपदानाम् आनीयमाना उपकरणसम्भाराः उपकरणसामग्रीसञ्चया यस्मिन् तत् ।

(५७) राजेति । राजदौवारिकैः उपनीयमानानि संगृह्यमानानि अनेकेषां बहूनां नृपाणाम् उपायनानि उपढौकनानि यस्मिन् तत् ।

(५८) उपेति । उपनिमन्त्रिताः कन्याविवाहक्रियासमाधानार्थमाहूताः आगता उपस्थिताः ये बन्धुवर्गाः बान्धवसमूहाः तेषां संवर्गणाय संग्रहणाय व्यग्राः व्यापृताः राजवल्लभाः राजनर्मसचिवाः यत्र तत् ।

(५९) लब्धेति । लब्धेन पीतेनेति यावत् मधुना मद्येन यो मदः उल्लासः तेन प्रचण्डाः कार्य्यतत्परा इति भावः । ये चर्मकाराः वाद्यकरा इति यावत् तेषां करपुटेन करयुगलेन उल्लासितः धृतः कोणः वादनदण्डः तस्य पटुना नैपुण्यसहकृतेन विघट्टनेन ताड़नेन रणन्तः ध्वनन्तः मङ्गलपटहाः यस्मिन् तत् ।

(६०) पिष्टेति । पिष्टानां पिटुलि इति भाषाप्रसिद्धानां पञ्चानाम् अङ्गुलीनां समाहारः पञ्चाङ्गुलं तेन पञ्चाङ्गुलगृहीतपिष्टेन इत्यर्थः मण्ड्यमानानि अलङ्क्रियमाणानि उलूखलमुसलशिलादीनि उपकरणानि यत्र तत् ।

(६१) अशेषेति । अशेषाणां सर्वासाम् आशानां दिशां मुखेभ्यः आविर्भूतानाम् आगतानां चारणानां कुशीलवानां नटानामित्यर्थः परम्पराभिः समूहैः पूर्य्यमाणेषु भ्रियमाणेषु प्रकोष्ठेषु वहिर्द्वारेषु प्रतिष्ठाप्यमाना प्रतिष्ठां नीयमाना इन्द्राणी शची एव देवता उत्सवविघ्ननिवारिणीति भावः यस्मिन् तत् । स्वयंवरादिक्षोभकारिणः शच्या विनाश्यन्ते इति श्रुतेः ।

विलेपनवसनसत्कृतैः सूत्रधारैः (६३) आदीयमानविवाहवेदीसूत्रपातम् उत्कूर्चककरैश्च सुधाकर्परस्कन्धैः अधिरोहणीसमारूढैः धवैः धवलीक्रियमाणप्रासादप्रतोलीप्राकारशिखरं (६४) क्षुसच्चाल्यमानकुसुम्भसम्भाराम्भःप्लवपूररज्यमानजनपादपल्लवं (६५) निरूप्यमाणयौतुकयोग्यमातङ्गतुरङ्गतरङ्गिताङ्गनं (६६) गणनाभियुक्तगणकगणगृह्यमाणलग्नगुणं गन्धोदक-

---

(६२) सितेति। सितेन शुभ्रेण कुसुमेन पुष्पेण विलेपनेन रञ्जनद्रव्येण वसनेन वस्त्रेण च सत्कृताः सम्मानिताः तोषिता इति यावत् तैः सूत्रधारैः स्थपतिभिः।

(६३) आदीयमानेति। आदीयमानः क्रियमाण इत्यर्थः विवाहवेद्याः निर्माणार्थमिति भावः सूत्रपातः यत्र तत्। उत्कूर्चककरैः उत्कूर्चकानि कर्णिकेति ख्यातानि राजमिस्त्रिलोकानाम् "इष्टकागृहनिर्माणसाधनानि अस्त्राणि इत्यर्थः करेषु हस्तेषु येषां तैः। सुधेति सुधानां चूर्णद्रव्याणां कर्परा भाजनानि स्कन्धेषु येषां तैः। अधिरोहणीसमारूढैः अधिरुह्यते अनयेति अधिरोहणी निश्रेणी सिँड़ीति भाषा तां समारूढाः तैः धवैः पुरुषैः। धवलीति। धवलीक्रियमाणानि श्वेतीक्रियमाणानि प्रासादाः राजभवनानि प्रतोल्यः रथ्याः प्राकाराः प्राचीराणि तेषां शिखराणि शृङ्गाणि यत्र तत्।

(६४) क्षुसेति। क्षुसानां चूर्णितानां चाल्यमानानां धौतीक्रियमाणानां कुसुम्भसम्भाराणां रञ्जनद्रव्यविशेषाणाम् अम्भःसु जलेषु प्लवपूरेण सन्तरणपरम्परया रज्यमाना जनानां पादपल्लवाः चरणकिसलया यस्मिन् तत्।

(६५) निरूप्यमाणेति। निरूप्यमाणैः दैयत्नेन अवधार्यमाणैः यौतुकयोग्यैः विवाहेषु कन्यावरौ उद्दिश्य सम्बन्धिभिः देयं वस्तु यौतुकं युलमिश्रणे इति धातोः क्तप्रत्ययेन निष्पन्नं तस्य योग्याः तैः मतङ्गैः हस्तिभिः तुरङ्गैः अश्वैश्च तरङ्गितानि सञ्जाततरङ्गाणि इव लक्ष्यमाणानि इत्यर्थः अङ्गनानि चत्वराणि यस्मिन् यस्य वा तत्।

(६६) गणनेति। गणनायां लग्ननिरूपणे इत्यर्थः। अभियुक्तैः अभिनिविष्टैः गणकगणैः ग्रहाचार्य्यैः गृह्यमाणा विचार्य्यमाणा लग्नस्य विवाहकालोदित-

वाहिमकरमुखप्रणालीपूर्य्यमाणक्रीड़ावापीसमूहं (६७) हैमकारचक्रप्रक्रान्तहाटकघटनटाङ्कारवाचालितालिन्दकम् (६८) उत्थापिताभिनवभित्तिपात्यमान-वहलवालुकाकण्टकालेपाकुलालेपकलोकं (६९) चतुरचित्रकरचक्रवाललिख्यमानमङ्गल्यालेख्यं (७०) लेप्यकारकदम्बकक्रियमाणमृण्मयमीनकूर्ममकरनारिकेलकदलीपूगवृक्षकं क्षितिपालैश्च स्वयमाबद्धकक्ष्यैः स्वाम्यर्पितकर्मशोभासम्पादनाकुलैः सिन्दूरकुट्टिमभूमीश्च मसृणयद्भिः (७१) विनिहितसरसातर्पणहस्तान् विन्यस्ता-

---

राशेः गुणाः यस्मिन् तत् । गन्धोदकेति गन्धोदकं सुगन्धवारीत्यर्थः वहतीति गन्धोदकवाहिनी या मकरमुखा मकरस्य इव मुखं यस्याः तथाभूता प्रणाली जलनिःसरणमार्गः तया पूर्य्यमाणा भ्रियमाणाः क्रीड़ावापीनां विहारसरसीनां समूहाः यस्मिन् तत् ।

(६७) हैमकारेति । हैमकाराणां स्वर्णकाराणां चक्रैः वृन्दैः प्रक्रान्तं प्रारब्धं यत् हाटकानां स्वर्णानां घटनम् अलङ्कारादिनिर्माणमित्यर्थः तस्य टाङ्कारैः ध्वनिविशेषैः वाचालिताः शब्दिताः अलिन्दकाः वहिर्द्वारविभागविशेषाः यस्मिन् तत् ।

(६८) उत्थापितेति । उत्थापितेभ्यः अभिनवेभ्यः भित्तिभ्यः कुड्येभ्यः पात्यमानानां वहलानां प्रभूतानां वालुकानां कण्टकाः कणाः तेषाम् आलेपेन आकुलाः आलेपकाः प्रलेपकारिणो लोकाः यस्मिन् तत् ।

(६९) चतुरेति । चतुरैः निपुणैः चित्रकराणां चक्रवालैः वृन्दैः लिख्यमानानि चित्रीयमाणानि आलेख्यानि यस्मिन् तत् ।

(७०) लेप्यकारेति । लेप्यकाराणां मृत्तिकाशिल्पिनां कदम्बकैः समूहैः क्रियमाणानि मृण्मयानि मीनकूर्ममकरनारिकेलकदलीपूगवृक्षकाणि तत्तत्समूहाः यत्र तत् । क्षितिपालैः राजभिः आवद्धकक्ष्यैः बद्धपरिकरैः इत्यर्थः स्वामीति स्वामिना प्रभुणा समाजेत्यर्थः अर्पितानां दत्तानां कर्मणां शोभासम्पादने आकुलाः तैः सिन्दूरकुट्टिमभूमीः सिन्दूररञ्जिताः कुट्टिमाः तलदेशा यासां तथाभूताः भूमीः प्रदेशान् मसृणयद्भिः चिक्कणीकुर्वद्भिः ।

(७१) विनिहितेति । विनिहिताः विशेषेण निहिताः अर्पिताः सरसाः

लक्तकपाटलांश्च चूताशोकपल्लवलाञ्छितशिखरान् (७२) उद्वाहवितर्द्दिकास्तम्भान् उत्तम्भयद्भिः प्रारब्धविविधव्यापारम् आ सूर्य्योदयाच्च प्रविष्टाभिः सतीभिः सुभगाभिः सुरूपाभिः सुवेशाभिः अविधवाभिः (७३) सिन्दूररजोराजिराजितललाटाभिः वधूवरगोत्रग्रहणगर्भाणि श्रुतिसुभगानि मङ्गलानि गायन्तीभिः (७४) बहुविधवर्णकादिग्धाङ्गुलीभिः ग्रीवासूत्राणि च चित्रयन्तीभिः चित्रपत्त्रलतालेख्यकुशलाभिः कलशांश्च धवलितान् शीतलशालाजिरश्रेणीश्च मण्डयन्तीभिः (७५) अभिन्नपुटकार्पासतूलपल्लवांश्च वैवाहिककङ्कणोर्णासूत्रसन्ना-

---

आर्द्राः अतर्पणहस्ताः पिष्टहस्ता हस्तगृहीतपिष्टानि येषु तान्। विन्यस्तेति विन्यस्तेन निहितेन अलक्तकेन लाक्षारसेन पाटलाः रक्तवर्णाः तान्। चूतेति चूतानाम् आम्राणां अशोकानाञ्च पल्लवैः लाञ्छितानि अलङ्कृतानि शिखराणि अग्राणि येषां तान्।

(७२) उद्वाहेति। उद्वाहवितर्द्दिका विवाहवेदिका तस्याः स्तम्भाः तान् उत्तम्भयद्भिः उन्नमयद्भिः प्रारब्धाः विविधा बहवः व्यापाराः कर्माणि यत्र तत्। सुभगाभिः पतिवल्लभाभिः।

(७३) सिन्दूरेति। सिन्दूराणां रजोराजिभिः परागसमूहैः राजिता अलङ्कृता ललाटा भालदेशा यासां ताभिः। वध्विति। वधूवरयोर्गोत्रस्य नाम्नः ग्रहणं गर्भे येषां तानि।

(७४) बहुविधेति। बहुविधैर्वर्णकैः रञ्जनद्रव्यैः हरिद्रादिभिरित्यर्थः आदिग्धा लिप्ता अङ्गुल्यः यासां ताभिः। ग्रीवासूत्राणि ग्रीवाबन्धनसूत्राणि चित्रयन्तीभिः रञ्जयन्तीभिः चित्राणि मनोज्ञानि पत्रलतालेख्यानि तेषु कुशलाभिः निपुणाभिः धवलितान् श्वेतीकृतान् शीतलशालाजिरश्रेणीश्च शीतलगृहाङ्गनसमूहांश्च मण्डयन्तीभिः अलङ्कुर्वतीभिः।

(७५) अभिन्नेति। अभिन्नानि अविदलितानि पुटानि आवरणानि येषां तेषां कार्पासतूलानां पल्लवाः तान्। वैवाहिकेति विवाहाय हितं वैवाहिकं यत्

हांश्च रञ्जयन्तीभिः (७६) बलाघृतघनीकृतकुङ्कुमकल्कमिश्रितांश्च अङ्गरागान् लावण्यविशेषकान्ति च मुखालेपनानि कल्पयन्तीभिः कक्कोलमिश्राः सजातीफलाः स्फुरत्स्फीतस्फटिककर्पूरशकलखचितान्तरालाः लवङ्गमाला रचयन्तीभिः समन्तात् सामन्तसीमन्तिनीभिः व्याप्तम् (७७) बहुविधभक्तिनिर्माणनिपुणपुराणपौरपुरन्ध्रिबध्यमानैश्च आचारचतुरान्तःपुरजरतीजनितपूजाराजमानरजकरज्यमानैः रक्तैश्च उभयपटान्तलग्नपरिजनप्रेङ्खोलितैः छायासु शोष्यमाणैः शुष्कैश्च (७८) कुटिलक्रमरूपक्रियमाणपल्लवपरभागैः अपरैः आरब्धकुङ्कुम-

---

कङ्कणं हस्तसूत्रं तस्य ऊर्णासूत्राणि मेषादिलोमतन्तवः तेषां सन्नाहाः सङ्घाः तान् रञ्जयन्तीभिः रञ्जनद्रव्येण अलङ्कुर्वतीभिः।

(७६) बलेति। बला शणपुष्पाख्या औषधिः तत् पक्वं घृतं रचार्थं क्रियमाणमिति भावः। तेन घनीकृताः कुङ्कुमानां कल्काः शेषाः तैः मिश्रिताः तान् लावण्यविशेषकान्ति कान्तिविशेषसाधनानि इत्यर्थः मुखालेपनानि मुखरञ्जनानि द्रव्याणि इति शेषः कल्पयन्तीभिः रचयन्तीभिः कक्कोलैः वनकर्पूरैः गन्धद्रव्यविशेषैः इत्यर्थः मिश्राः संवलिताः जातीफलसहिताः स्फुरदिति स्फुरतां राजतां स्फीतानां बहुलानां स्फटिककर्पूराणां कर्पूरभेदानां शकलैः खण्डैः खचितम् आकीर्णम् अन्तरालं यासां ताः रचयन्तीभिः ग्रथ्नतीभिः सामन्तसीमन्तिनीभिः राजाङ्गनाभिः व्याप्तम् आकीर्णम्।

(७७) बहुविधेति। बहुविधा विविधा भक्तिः विच्छित्तिः तस्या निर्माणे रचने निपुणाः पटवः पुराणाः स्थविराः पुरन्ध्रयः गृहिण्यः ताभिः बध्यमानाः संगृह्यमाणाः तैः। आचारेति आचारेषु कुलोचितेषु व्यवहारेषु चतुरा निपुणाः या अन्तःपुरजरत्यः अन्तःपुरवृद्धाः ताभिः जनितायाम् अनुष्ठितायां पूजायां देवाराधनकर्मणि राजमानाः शोभमानाः रजकेन वस्त्ररञ्जकजातिभेदेन च रज्यमानाः तैः रक्तैः रक्तवर्णैः उभयोः पटान्तयोः वसनान्तयोः लग्नाः सक्ताः पटप्रान्तधारिण इत्यर्थः परिजनाः तैः प्रेङ्खोलितैः सञ्चालितैः शोष्यमाणैः शोषं नीयमानैः।

पङ्कस्थासकच्छुरणैः अपरैः उद्भुजभुजिष्यभज्यमानभङ्गुरोत्तरीयैः क्षौमैश्च बादरैश्च दुकूलैश्च लालातन्तुजैश्च अंशुकैश्च नेत्रैश्च निर्मोकनिभैः अकठोररम्भागर्भकोमलैः निश्वासहार्य्यैः स्पर्शानुमेयैः वासोभिः सर्वतः स्फुरद्भिः इन्द्रायुधसहस्रैः इव संछादितम् (७९) उज्ज्वलनिचोलकावगुण्ठ्यमानहंसकुलैश्च शयनीयैः तारामुक्ताफलोपचीयमानैश्च कञ्चुकैः (८०) अनेकोपयोगपाट्यमानैश्च अपरिमितैः पट्टपटीसहस्रैः (८१) अभिनवरागकोमलदुकूलराजमानैश्च पटवितानैः (८२) स्तवरकनिवहनिरन्तरच्छाद्यमानसमस्तपटलैश्च मण्डपैः उच्चित्रनेत्रपटवेष्ट्यमानैश्च

---

(७८) कुटिलेति। कुटिलः कौटिल्ययुक्तः क्रमो येषां तादृशैः रूपैः प्रकारभेदैः क्रियमाणाः सम्पाद्यमानाः पल्लवानामिव परभागा उत्कर्षा येषां तैः अपरैः अन्यजनैः आरब्धानि कुङ्कुमपङ्कस्थासकानां छुरणानि येषु येषां वा तैः। उद्भुजेति उद्गता भुजा येषां तैः उत्क्षिप्तभुजैरित्यर्थः भुजिष्यैः चेटैः किङ्करविशेषैः भज्यमानानि भङ्गुराणि भङ्गिमन्ति उत्तरीयाणि येषां तैः क्षौमैः क्षुमाविकारैः बादरैः कार्पासैः दुकूलैः वसनैः लालातन्तुजैः कौशेयैः अंशुकैः सूक्ष्मवसनभेदैः नेत्रैः वसनविशेषैः निर्मोकनिभैः सर्पकञ्चुकसदृशैः अकठोररम्भागर्भकोमलैः मृदुलकदलीगर्भसुकुमारैः स्फुरद्भिः द्योतमानैः निःश्वासहार्य्यैः अतिसूक्ष्मैरिति भावः स्पर्शानुमेयैः स्पर्शमात्रवेद्यैः वासोभिः वसनैः।

(७९) उज्ज्वलेति। उज्ज्वलैः निचोलकैः वसनैः अवगुण्ठ्यमानानि आच्छाद्यमानानि हंसकुलानि हंसाकाराणि अङ्गानि येषां तैः शयनीयैः पर्य्यङ्कैः तारा नक्षत्राणि तद्वत् यानि मुक्ताफलानि मौक्तिकानि तैः उपचीयमानाः अलङ्क्रियमाणाः तैः कञ्चुकैः वर्मभिः।

(८०) अनेकेति। अनेकेषु उपयोगेषु व्यवहारेषु पाट्यमानानि छिद्यमानानि तैः पट्टपटीसहस्रैः पट्टवसनसहस्रैः।

(८१) अभिनवेति। अभिनवः रागः रञ्जनं येषां तानि कोमलानि मृदूनि दुकूलानि वसनानि तैः राजमानाः शोभमानाः तैः पटवितानैः वसननिर्मितचन्द्रातपैः इत्यर्थः।

स्तम्भैः उज्ज्वलं रमणीयञ्च औत्सुक्यदञ्च मङ्गल्यञ्च आसीत् राजकुलम् ।

देवी तु यशोवती (८३) विवाहोत्सवपर्य्याकुलहृदया हृदयेन भर्त्तरि कुतूहलेन जामातरि स्नेहेन दुहितरि उपचारेण निमन्त्रितस्त्रीषु आदेशेन परिजने शरीरेण सञ्चरणे चक्षुषा कृताकृतप्रत्यवेक्षणेषु आनन्देन महोत्सवे एकापि बहुधा विभक्तेव अभवत् । भूपतिरपि उपर्य्युपरि विसर्जितोष्ट्रवामीजनितजामातृतोषः सत्यपि आज्ञासम्पादनदक्षे (८४) मुखेक्षणपरे परिजने समं पुत्राभ्यां दुहितृस्नेहविक्लवः सर्वं स्वयम् अकरोत् ।

एवञ्च तस्मिन् अविधवामय इव भवति राजकुले मङ्गलमय इव जायमाने जीवलोके (८५) चारणमयेषु इव लक्ष्यमाणेषु दिङ्मुखेषु पटहमय इव कृतेऽन्तरिक्षे भूषणमय इव

---

(८२) स्तवरकेति । स्तवरकाणां वस्त्रविशेषाणां निवहेन समूहेन निरन्तरम् अविच्छेदं यथा यथा छाद्यमानानि समस्तानि पटलानि छदयः येषां तैः मण्डपैः गृहैः । उच्चित्रेति उच्चित्रैः उद्गतचित्रैः चित्रितैरिति यावत् नेत्रपटैः वसनभेदैः वेष्ट्यमानाः आच्छाद्यमानाः तैः ।

(८३) विवाहेति । विवाहोत्सवेन पर्य्याकुलं व्यस्तं हृदयं यस्याः तथाभूता । भर्त्तरि पत्यौ हृदयेन विभक्ता हृदयनिहितपतिकेत्यर्थः कुतूहलेन जामातरि विभक्ता कुतूहलविहितजामातृकेत्यर्थः जामातरि कौतूहलवतीत्यर्थः एवमुत्तरत्र विभक्तेत्यनेनान्वयः । उपचारेण समुचितसम्माननेन । कृतेति कृतानि अकृतानि च तेषां प्रत्यवेक्षणानि परिदर्शनानि तेषु । विसर्जितेति विसर्जिताभिः प्रेषिताभिः उष्ट्रवामीभिः उष्ट्रीभिः विविधद्रव्यवाहिणीभिरिति भावः जनितः उत्पादितः जामातुः वरस्य तोषः प्रीतिः येन तथोक्तः ।

(८४) मुखेक्षणपरे मुखदर्शनपरे मुखवचनप्रतीक्षे इति भावः ।

(८५) चारणमयेषु नटमयेषु । पटहमये पटहादिवादित्रमये ।

भ्रमति परिजने बान्धवमय इव दृश्यमाने (८६) सर्गे निर्वृतिमय इव उपलक्ष्यमाणे काले लक्ष्मीमये इव विजृम्भमाणे महोत्सवे निधाने इव सुखस्य फल इव जन्मनः परिणाम इव पुण्यस्य यौवन इव विभूतेः यौवराज्य इव प्रीतेः सिद्धिकाल इव मनोरथस्य वर्त्तमाने (८७) गण्यमान इव जनाङ्गुलीभिः आलोक्यमान इव मार्गध्वजैः प्रत्युद्गम्यमान इव मङ्गल्यवाद्यप्रतिशब्दकैः (८८) आहूयमान इव मौहूर्त्तिकैः आकृष्यमाण इव मनोरथैः परिष्वज्यमान इव वधूसखीहृदयैः आजगाम विवाहदिवसः। प्रातरेव (८९) प्रतीहारैः समुत्सारितनिखिलानिबद्धलोकं विविक्तम् अक्रियत राजकुलम्।

अथ प्रतीहारः प्रविश्य नृपसमीपं देव! जामातुः अन्तिकात् ताम्बूलदायकः पारिजातकनामा (९०) सम्प्राप्तः इति अभिधाय स्वाकारं युवानम् अदर्शयत्। राजा तु तं दूरादेव जामातृबहुमानात् दर्शितादरो बालक! कच्चित् कुशली ग्रहवर्मेति पप्रच्छ। (९१) असौ तु समाकर्णितनराधिपध्वनिः

---

(८६) सर्गे सृष्टौ। निर्वृतिमये सुखमये लक्ष्मीमये शोभामये विजृम्भमाणे प्रकाश्यमाने। निधाने इव आश्रये इव विभूतेः सम्पदः।

(८७) गण्यमान इव संख्यायमान इव आलोक्यमान इव दृश्यमान इव मार्गध्वजैः अध्ववैजयन्तीदण्डैः। प्रत्युद्गम्यमान इव पुरत आगम्य अभिनन्द्यमान इव। मङ्गल्येति मङ्गल्यवाद्यानां प्रतिशब्दकैः प्रतिध्वनिभिः।

(८८) आहूयमान इव आकार्यमाण इव मौहूर्त्तिकैः गणकैः परिष्वज्यमान इव आलिङ्ग्यमान इव वध्विति वध्वाः सखीनां हृदयानि तैः।

(८९) प्रतीहारैः दौवारिकैः। समुत्सारितेति समुत्सारिता अपनीता निखिलाः समग्राः अनिबद्धाः बाह्यालोका यस्मात् तथोक्तं विविक्तं विशोधितं विजनं वा।

(९०) सम्प्राप्तः समागतः। स्वाकारं सुन्दराकृतिं सौम्यदर्शनं वा।

धावमानः कतिचित् पदानि उपसृत्य प्रसार्य्य च बाहू सेवा-चतुरः चिरं वसुन्धरायां निधाय मूर्द्धानम् उत्थाय देव! कुशली यथाज्ञापयसि अर्च्चयति च देवं नमस्कारेण इति व्यज्ञापयत्। (९२) आगतजामातृनिवेदनागतञ्च तं ज्ञात्वा कृतसत्कारं राजा यामिन्याः प्रथमे यामे विवाहकालात्ययकृतो यथा न भवति दोष इति सन्दिश्य प्रतीपं प्राहिणोत्।

(९३) अथ सकलकमलवनलक्ष्मीं बधूमुख इव सञ्चार्य्य समवसिते वासरे विवाहदिवसश्रियः पादपल्लव इव रज्यमाने सवितरि (९४) बधूवरानुरागलघूकृतप्रेमलज्जितेषु इव विघट-मानेषु चक्रवाकमिथुनेषु सौभाग्यध्वज इव (९५) रक्तांशुक-सुकुमारवपुषि नभसि स्फुरति सन्ध्यारागे कपोतकण्ठकर्वुरे वरयात्रागमनरजसीव कलुषयति दिङ्मुखानि तिमिरे लग्न-सम्पादनसज्ज इव (९६) उज्जिहाने ज्योतिर्गणे विवाहमङ्गल-

---

(९१) असौ बालकः समाकर्णितेति समाकर्णितः श्रुतः नराधिपस्य राज्ञः ध्वनिर्येन तथोक्तः। सेवाचतुरः सेवायां निपुणः।

(९२) आगतेति आगतस्य उपस्थितस्य जामातुः निवेदनाय ज्ञापनाय आगतः तम्। यामिन्याः रात्रेः यामे प्रहरे। विवाहेति विवाहस्य कालः समयः तस्य अत्ययः अतिक्रमः तेन कृतः जनितः प्रतीपं प्राहिणोत् प्रतिप्रस्थापयामास।

(९३) अथेत्यादि। सकलेति सकलानां कमलवनानां लक्ष्मीं श्रियं सञ्चार्य्य संक्रमय्य समवसिते शेषतां गते।

(९४) बध्विति बधूवरयोः अनुरागेण प्रेम्णा लघूकृतं प्रेम स्वकीयमिति भावः तेन लज्जितानि तेषु इव विघटमानेषु विच्छेदं गच्छत्सु। सौभाग्यध्वज इव उत्सवीयपताकादण्ड इव।

(९५) रक्तेति रक्तांशुकेन सुकुमारं सुदर्शनं वपुः अवयवः यस्य तथाभूते नभसि आकाशे। स्फुरति दीप्यमाने। कपोतेति कपोतानां कण्ठ इव कर्वुरः पांशुलं तस्मिन्। कलुषयति आविलयति मलिनयतीत्यर्थः। लग्नेति लग्नस्य वैवाहिकशुभसमयस्य सम्पादने निर्धारणे सज्जः प्रवृत्तः तस्मिन्निव।

कलश इव उदयशिखरिणा समुत्क्षिप्यमाणे (९७) वर्द्धमान-धवलच्छाये ताराधिपमण्डले वधूवदनलावण्यज्योत्स्नापरिपीततमसि प्रदोषे द्युथोदितमुपहसत्सु इव रजनिकरम् उत्तानितमुखेषु कुमुदवनेषु आजगाम मुहुर्मुहुः (९८) उल्लासित-स्फारस्फुरितारुणचामरैः मनोरथैः इव उत्थितरागाग्रपल्लवैः पुरो धावमानैः पादातैः (९९) उत्कर्णकटकहयप्रतिह्रेषित-दीयमानस्वागतैः इव वाजिनां वृन्दैश्च आपूरितदिग्भागः (१००) चलकर्णचामराणां चामीकरमयसर्वोपकरणानां वर्णकलम्बिनां बलिनां घण्टाटङ्कारिणां करिणां घटाभिः घटयन् इव पुनः

---

(९६) उज्जिहाने उदयमाने ज्योतिर्गणे तारानिकरे ज्योतिषिकनिवहे उदय-शिखरिणा उदयाद्रिणा समुत्क्षिप्यमाणे समुन्नम्यमाने।

(९७) वर्द्धमानेति वर्द्धमाना धवला छाया कान्तिः प्रभेत्यर्थः यस्य तथाभूते ताराधिपमण्डले चन्द्रमण्डले। वध्विति वध्वा वदनस्य लावण्यमेव ज्योत्स्ना कौमुदी तया परिपीतं ग्रस्तं तमः अन्धकारं यस्य तथाभूते। प्रदोषे रजनीमुखे। द्युथोदितं स्पष्टोदयमानं रजनीकरं चन्द्रम्। उत्तानितमुखेषु उन्मुखेषु विकसितवदनेष्विति भावः आजगाम ग्रहवर्मेति सम्बन्धः।

(९८) उल्लासितेति उल्लासितानि सञ्चालितानि स्फारस्फुरितानि अतिशयेन राजितानि अरुणानि चामराणि यैः तथोक्तानि। उत्थितेति उत्थितः उद्गतो रागो येषां तानि अग्रपल्लवानि पल्लवाग्राणि येषां तैः। धावमानैः गच्छद्भिः पादातैः पादचारिभिः सैनिकैरित्यर्थः।

(९९) उत्कर्णेति उन्नताः कर्णा येषां तेषां कटकहयानां सैनिकाश्वानां प्रतिह्रेषितैः प्रतिह्रेषारवैः दीयमानं निवेद्यमानमित्यर्थः स्वागतं सुखेन आगमनं यैः तथाभूतैः। वाजिनाम् अश्वानां वृन्दैः समूहैः। आपूरितः आकीर्णः दिग्भागो येन तथभूतः।

(१००) चलेति चलानि चपलानि कर्णयोः चामराणि येषां तेषाम्। चामीकरेति चामीकरमयानि स्वर्णमयानि सर्वाणि उपकरणानि अलङ्कारा येषां तेषां वर्णकलम्बिनां विचित्रवर्णरञ्जितानामित्यर्थः बलिनां बलवतां घण्टाटङ्कारिणां

इन्दूदयविलीनम् अन्धकारं (१) नक्षत्रमालामण्डितमुखीं करिणीं निशाकर इव पौरन्दरीं दिशम् आरूढ़: प्रकटित-विविधविहगविरुतै: (२) तालावचरचारणै: पुर:सरै: बालो वसन्त इव उपवनै: क्रियमाणकोलाहलो (३) गन्धतैलावसेक-सुगन्धिना दीपिकाचक्रवालस्य आलोकेन कुङ्कुमपटवासधूलि-पटलेन इव पिञ्जरीकुर्वन् सकलं लोकम् (४) उत्फुल्लमल्लि-कामुण्डमालामध्याध्यासितकुसुमशेखरेण शिरसा हसन्निव सपरिवेशशशपाकरं कौमुदीप्रदोषम् (५) आत्मरूपनिर्जितम-

---

घण्टाध्वनिमतां करिणां हस्तिनां घटाभि: सङ्घै: घटयन्निव समाहरन्निव इन्दू-दयविलीनं चन्द्रोदयक्षीणम् ।

(१) नक्षत्रेति नक्षत्रमालया सप्तविंशतिमौक्तिकरचितकरिणां माला नक्षत्र-माला उच्यते तया अन्यत्र नक्षत्रमालया तारानिचयेन मण्डितम् अलङ्कृतं मुखं यस्या: ताम् । निशाकर: चन्द्र: । पौरन्दरीं पुरन्दर इन्द्र: तस्येयं पौरन्दरी प्राची ताम् । प्रकटितेति प्रकटितं प्रकीर्त्तितं प्रकाशितञ्च विविधं बहुप्रकारं विचित्रमित्यर्थ: विहगेन रागभेदेन वेहाग इति भाषा प्रसिद्धेनेति भाव: विह-गानां पक्षिणाञ्च विरुतं सङ्गीतवाद: शब्दश्च येषां येषु वा तै: ।

(२) तालेति तालेन सङ्गीताङ्गविशेषेण अवचरन्ति आलपन्तीति तथोक्ता ये चारणा: कुशीलवा: तै: । बाल: नव: तरुण इत्यर्थ: अभिनवश्च क्रियमाण-कोलाहल: क्रियमाणकलकलनिनाद: ।

(३) गन्धेति गन्धतैलानाम् अवसेकेन प्रयोगेण सुगन्धि: तेन । दीपिकाचक्र-वालस्य दीपमण्डलस्य आलोकेन उद्योतेन । कुङ्कुमेति कुङ्कुमानां पटवासधूलय: तेषां पटलेन निचयेन पिञ्जरीकुर्वन् रञ्जयन्नित्यर्थ: ।

(४) उत्फुल्लेति । उत्फुल्लानां विकस्वराणां मल्लिकानां या मुण्डमाला शिरो-मालिका तस्या मध्यम् अध्यासितं निवेशितं कुसुमशेखरं पुष्पमयं शिरोभूषणं यस्य तेन । सपरिवेशशशपाकरं परिधिवेष्टितचन्द्रं कौमुदीप्रदोषं ज्योत्स्नालङ्कृतं रजनीमुखम् ।

करकेतुकरापहृतेन कार्मुकेण इव कौसुमेन दाम्ना (६) विरचितवैकक्ष्यकविलासः कुसुमसौरभगर्वभ्रान्तभ्रमरकुलकलप्रलापसुभगः पारिजात इव जातः श्रिया सह पुनः अवतारितो मेदिनीम् नववधूवदनावलोकनकुतूहलेन इव क्लथ्यमाणहृदयः पतन्निव सुखेन (७) प्रत्यासन्नलग्नो ग्रहवर्मा।

(८) राजा तु तम् उपद्वारम् आगतं चरणाभ्यामिव राजचक्रानुगम्यमानः सस्रुतः प्रत्युज्जगाम। अवतीर्णञ्च तं कृतनमस्कारं मन्मथमिव माधवः प्रसारितभुजो गाढ़म् आलिलिङ्ग। यथाक्रमं परिष्वक्तराज्यवर्द्धनहर्षञ्च हस्ते गृहीत्वा अभ्यन्तरं निन्ये। स्वनिर्विशेषासनदानादिना च एनम् उपचारेण उपचचार।

(९) नचिरात् च गम्भीरनामा नृपतेः प्रणयी विद्वान्

---

(५) आत्मेति। आत्मनः स्वस्य रूपेण सौन्दर्य्येण निर्जितस्य पराजितस्य मकरकेतोः कामस्य करात् हस्तात् अपहृतं तेन कार्मुकेण धनुषा कौसुमेन पुष्परचितेन दाम्ना स्रजा।

(६) विरचितेति। विरचितः सम्पादितः वैकक्ष्यकस्य वामस्कन्धात् तिर्य्यगालम्बिनो हारविशेषस्य विलासः शोभा येन तथोक्तः। कुसुमेति कुसुमानां सौरभात् गर्वेण उल्लासेन भ्रान्तानां भ्रमतां भ्रमराणां कुलस्य वृन्दस्य कलप्रलापेन मधुरास्फुटेन झङ्कारेण सुभगः मनोहरः पारिजात इव देवतरुविशेष इव श्रिया लक्ष्म्या सहोदरयेति भावः। अवतारितः अवतारं नीतः विधात्रेति शेषः।

(७) प्रत्यासन्नलग्नः सन्निहितवैवाहिकशुभक्षण इत्यर्थः।

(८) राजेत्यादि। उपद्वारं द्वारसमीपं द्वारं वा विभक्त्यर्थे अव्ययीभावः। राजचक्रानुगम्यमानः राजसमूहैः अनुगम्यमानः। माधवो कृष्णः वसन्तश्च। मन्मथमिव प्रद्युम्नमिव काममिव च। उपचारेण पूजोपकरणेन उपचचार पूजयामास।

(९) न चिरात् नातिविलम्बेन इत्यर्थः द्विजन्मा ब्राह्मणः चिरात् बहोः

द्विजन्मा ग्रहवर्माणम् उवाच तात! त्वां प्राप्य चिरात् खलु राज्यश्रिया घटितौ तेजोमयौ सकलजगद्गीयमानबुधकर्णानन्दकारिगुणगणौ सोमसूर्य्यवंशौ इव पुष्पभूतिमुखरवंशौ। प्रथममेव कौस्तुभमणिरिव गुणैः स्थितोऽसि हृदये देवस्य। इदानीन्तु शशीव शिरसा परमेश्वरेण असि वोढ़व्यो जात इति।

एवं वदति एव तस्मिन् नृपमुपसृत्य मौहूर्त्तिका देव! समासीदति लग्नवेला व्रजतु जामाता (१०) कौतुकगृहमिति जगुः। अथ नरेन्द्रेण उत्तिष्ठ गच्छ इति गदितो ग्रहवर्मा प्रविश्य अन्तःपुरं जामातृदर्शनकुतूहलिनीनां स्त्रीणां पतितानि लोचनसहस्राणि विकचनीलकुवलयवनानि इव लङ्घयन् आससाद कौतुकगृहद्वारम्। निवारितपरिजनश्च प्रविवेश।

(११) अथ तत्र कतिपयाप्तप्रियसखीस्वजनप्रमदाप्राय-

---

कालात् राज्यश्रिया तदाख्यया राजकन्यया राज्यलक्ष्म्या च घटितौ योजितौ सङ्गतौ इत्यर्थः तेजोमयौ प्रतापसम्पन्नौ ज्योतिर्मयौ च। सकलेति सकलैः जगद्भिः सकलेषु जगत्सु वा गीयमानाः कीर्त्त्यमानाः बुधानां विदुषां कर्णानन्दकारिणः बुधकर्णयोः चन्द्रसुतसूर्य्यसुतयोः आनन्दकारिणश्च गुणगणाः गुणसङ्घाः ययोः तथाभूतौ। पुष्पभूतिः प्रभाकरवर्द्धनस्य पूर्वपुरुषः मुखरः ग्रहवर्मणः पूर्वपुरुषः तयोः वंशौ। कौस्तुभमणिरिव तदाख्यमहारत्नमिव। गुणैः धैर्य्यगाम्भीर्य्यादिभिः सूत्रैश्च देवस्य राज्ञः विष्णोश्च हृदये अन्तःकरणे वक्षसि च। शशीव चन्द्र इव परमेश्वरेण सार्वभौमेण हरेण च वोढ़व्यः धार्य्यः।

(१०) मौहूर्त्तिका गणकाः समासीदति समासन्नः भवति लग्नवेला शुभराश्युदयकालः। व्रजतु गच्छतु कौतुकगृहं वैवाहिकमण्डलम्। विकचेति विकचानि प्रस्फुटितानि नीलकुवलयवनानि नीलोत्पलकाननानि लङ्घयन् अतिक्रामन्।

(११) अथेत्यादि। वधूमपश्यदित्यन्वयः। तां विशिनष्टि कतीति कतिपया

परिवाराम् (१२) अरुणांशुकावगुण्ठितमुखीं प्रभातसन्ध्यामिव स्वप्रभया निष्प्रभान् प्रदीपकान् कुर्वाणाम् (१३) अतिसौकुमार्य्यशङ्कितेन इव यौवनेन नातिनिर्भरमुपगूढ़ाम् (१४) साध्वसनिरुध्यमानहृदयदेशदु:खमुक्तै: निभृतायतै: (१५) श्वसितै: अपयान्तं कुमारभावम् इव अनुशोचन्तीम् अत्युत्कम्पिनीं पतनभिया इव त्रपया निष्पन्दं धार्य्यमाणां हस्तं तामरसप्रतिपच्चम् आसन्नग्रहणं शशिनमिव रोहिणीं (१६) भयवेपमानमानसाम् अवलोकयन्तीं चन्दनधवलतनुलतां ज्योत्स्नादानसञ्चितलावण्यात् कुमुदिनीगर्भात् इव

---

आप्ता: विश्वस्ता: प्रियसख्य: स्वजनानां बन्धुजनानां प्रमदाश्च प्रायेण परिवारा: यस्या: तां ताभि: वेष्टितामिति भाव:।

(१२) अरुणेति। अरुणेन रक्तेन अंशुकेन वसनेन अवगुण्ठितम् आच्छादितं मुखं यस्या: ताम्। प्रभातसन्ध्यामिव प्रात:सन्ध्यामिव। निष्प्रभान् प्रभारहितान् मलिनान् इत्यर्थ:।

(१३) अतीति। अतिसौकुमार्य्यम् अतिमार्दवं तेन शङ्कितं विनाशात् भीतमित्यर्थ: तेनेव नातिनिर्भरं नातिगाढ़म् उपगूढ़ा आलिङ्गिता तां नवयौवनामिति भाव:।

(१४) साध्वसेति। साध्वसेन इत:परमन्यस्य वयस आगमने अशुभं वा भवेदिति भयेनेति भाव: निरुध्यमान: अमङ्गलमत्र मां विशेदिति अवरुध्यमान: हृदयदेश: चित्तक्षेत्रं तस्मात् दु:खेन अवकाशनिरोधजनितादिति भाव: मुक्तै: त्यक्तै: निभृतायतै: अस्पष्टायतै: इत्यर्थ: उद्वेगादिति भाव:।

(१५) श्वसितै: दीर्घनि:श्वासै: अपयान्तम् अपसरन्तम् आत्मानं त्यजन्तमिति यावत् कुमारभावं कौमारम् अनुशोचन्तीं शोकेन चिन्तयन्तीम् इत्यर्थ:। अत्युत्कम्पिनीम् अतिशयेन उत्कम्पमानां त्रपया लज्जया निष्पन्दं निश्चलं यथा तथा धार्य्यमाणाम् अवलम्ब्यमानां तामरसप्रतिपक्षं रक्तोत्पलनिभं रक्तकमलवैरिणम् इत्यर्थश्च। आसन्नग्रहणं सन्निहितपरिणयं सन्निहितग्रासञ्च।

(१६) भयेति। भयेन वेपमानं कम्पमानं मानसं यस्या: ताम् अवलोकयन्तीं पश्यन्तीम्। चन्दनेति चन्दनेन चन्दनानुलेपनेन धवला तनुलता अङ्गयष्टि:

प्रसूतां (१७) कुसुमामोदनिर्हारिणीं वसन्तहृदयात् इव निर्गतां निश्वासपरिमलाकृष्टमधुकरकुलां मलयमारुतात् इव उत्पन्नां कृतकन्दर्पानुसरणां रतिमिव पुनर्जातां (१८) प्रभा-लावण्यमदसौरभमाधुर्य्यैः कौस्तुभशशिमदिरापारिजातामृत-प्रभवैः (१९) सर्वरत्नगुणैः अपरामिव सुरासुररुषा रत्नाकरेण कल्पितां श्रियं स्निग्धेन बालिकालोकेन सितसिन्धुवारकुसुम-मञ्जरीभिः इव मुक्तादीधितिभिः कल्पितकर्णावतंसां (२०) कर्णाभरणमरकतप्रभाहरितशाद्वलेन कपोलस्थलीतलेन विनो-

---

यस्याः ताम्। ज्योत्स्नेति ज्योत्स्नानाम् आदानेन ग्रहणेन सञ्चितं परिपुष्टं लावण्यं कान्तिविशेषः यस्य तस्मात् कुमुदिनीगर्भात् कुमुदिन्या जठरादिव प्रसूतां निर्गताम्।

(१७) कुसुमेति। कुसुमानाम् आमोदः सौरभं तेन निर्हरति लोकान् रञ्ज-यतीति यावत् तथोक्ता ताम्। निःश्वासेति निःश्वासपरिमलेन आकृष्टानि मधु-करकुलानि भृङ्गवृन्दानि यया ताम्। कृतेति कृतं कन्दर्पस्य मदनस्य अनुसरणं यया ताम्।

(१८) प्रभेति। प्रभा कान्तिः लावण्यं मुक्ताफलेषु छायायास्तरलत्वमिवा-न्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिह स्मृतमित्युक्तलक्षणं मदः मद्यपान-जनितः उल्लासः सौरभं परिमलः माधुर्यं सर्वावस्थाविशेषेषु माधुर्यं रमणीयता इत्युक्तलक्षणं तैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः तत्र कौस्तुभस्य गुणः प्रभा शशिनो गुणो लावण्यं मदिराया गुणः मदः पारिजातस्य गुणः सौरभम् अमृतस्य गुणो माधुर्यमिति द्रष्टव्यम्।

(१९) सर्वरत्नगुणैः सर्वेषां रत्नानाम् उत्कृष्टानां वस्तूनां जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते इत्युत्पलमाला। गुणाः उत्कर्षाः। सुरासुररुषा देवासुरान् प्रति कोपेन मन्थनजनितेन इति भावः रत्नाकरेण समुद्रेण कल्पितां रचिताम् स्निग्धेन बालिकालोकेन कुमारीजनेन सिताभिः सिन्धुवारकुसुमानां मञ्जरीभिः मुक्तादीधितिभिरिव मौक्तिकप्रभाभिरिव कल्पितः कर्णावतंसः कर्णभूषणं यस्याः ताम्।

दयन्तीम् इव हारिणीं लोचनच्छायाम् अधोमुखं वरकौतुकालोकनाकुलं मुहुर्मुहुः (२१) कृतमुखोन्नमनप्रयत्नं सखीजनं हृदयञ्च निर्भर्त्सयन्तीं वधूम् अपश्यत्।

प्रविशन्तमिव तं हृदयचौरं बध्वा समर्पितं जग्राह कन्दर्पः। (२२) परिहासस्मेरमुखीभिः च नारीभिः कौतुकगृहे यद् यत् कार्य्यते जामाता तत्तत्सर्वम् अतिपेशलं चकार। (२३) कृतपरिणयानुरूपवेशपरिग्रहां गृहीत्वा करे वधूं निर्जगाम। (२४) जगाम च नवसुधाधवलां निमन्त्रितागतैः तुषारशैलोपत्यकाम् इव (२५) त्र्यम्बकाम्बिकाविवाहाहृतैः भूभृद्भिः परिवृतां (२६) सेकसुकुमारयवाङ्कुरदन्तुरैः पञ्चास्यैः

---

(२०) कर्णेति। कर्णाभरणेषु यानि मरकतानि हरिन्मणयः तेषां प्रभाभिः हरितशाद्वलेन श्यामवासनिभेन कपोलस्थलीतलेन गण्डतटेन विनोदयन्तीमिव प्रीणयन्तीमिव हारिणीं मनोहारिणीं लोचनच्छायां नेत्रकान्तिम्। अधोमुखम् अवनतमुखं वरस्य कौतुकेन आलोकने दर्शने आकुलं व्यापृतम्।

(२१) कृतेति। कृतः मुखस्य उन्नमने उत्तोलने प्रयत्नः येन तम्। हृदयं चित्तं निर्भर्त्सयन्तीं निन्दन्तीम्।

(२२) परिहासेति। परिहासेन स्मेरं मृदुहसितं मुखं यासां ताभिः। अतिपेशलम् अतिमार्दवं यथा तथा चकार कृतवान्।

(२३) कृतेति। कृतः परिणयस्य अनुरूपः वेशस्य परिच्छदस्य परिग्रहो यया तथोक्ताम।

(२४) जगाम वेदीमित्युत्तरेणान्वयः। तां विशिनष्टि नव इत्यादि। नवाभिः नूतनाभिः सुधाभिः चूर्णलेपैः इत्यर्थः धवलिता ताम्। निमन्त्रिता सन्तः आगताः तैः तुषारशैलस्य हिमगिरेः उपत्यकामिव आसन्नां भूमिमिव उपत्यकाद्रेरासन्ना भूमिरित्यमरः।

(२५) त्र्यम्बकाम्बिकाविवाहाहृतैः हरगौरीविवाहाहृतैः भूभृद्भिः राजभिः पर्वतैश्च परिवृताम् आकीर्णाम्।

(२६) सेकेति। सेकेन जलक्षालनेन सुकुमाराः सुकोमलाः ये यवाङ्कुराः

कलशैः कोमलवर्णिकाविचित्रैः अमत्रमुखैश्च (२७) मङ्गल्यफलहस्ताभिः अञ्जलिकारिकाभिः उद्भासितपर्य्यन्ताम् (२८) उपाध्यायोपधीयमानेन्धन-धूमायमानाग्निसन्धुक्षण-क्षणिकोपद्रष्टृद्विजाम् (२९) उपक्षयानुनिहितानुपहतहरितकुशां सन्निहितदृषदजिनाज्यस्रुक्समित्पूलीनिवहां (३०) नूतनशूर्पार्पितश्यामलशमीपलाशमिश्रलाजहासिनीं वेदीम्। आरुरोह च तां दिवमिव सज्योत्स्नः शशी। समुत्ससर्प च (३१) वेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुध इव

---

तैः दन्तुराः सञ्जातदन्ता इव लक्ष्यमाणाः तैः पञ्चास्यैः पञ्चमुखैः कलसैः कुम्भैः कोमलाभिः वर्णिकाभिः वर्णविशेषैः विचित्राः तैः अमत्रमुखैः रौप्यमयैः अमित्रमुखैरिति पाठान्तरम् ।

(२७) मङ्गल्येति । मङ्गलाय हितं मङ्गल्यं फलं हस्ते यासां ताभिः अञ्जलिकारिकाभिः मृण्मयप्रतिमाभिः शालभञ्जिकाभिर्वा उद्भासितपर्य्यन्तां विद्योतितप्रान्तभागाम् ।

(२८) उपाध्यायेति । उपाध्यायेन गुरुणा पुरोधसेति यावत् उपधीयमानानि अर्प्यमाणानि इन्धनानि काष्ठानि अग्निसंस्थापनार्थमिति भावः तैः धूमायमानो योऽग्निः तस्य सन्धुक्षणे प्रज्वालने क्षणिकः व्यग्रः उपद्रष्टा साक्षीभूतः द्विजः यस्यां तथोक्ताम् ।

(२९) उपेति । उपक्षयानु अग्निसमीपे निहिताः स्थापिताः अनुपहताः अच्छिन्नाः हरिताः कुशा यस्यां ताम् । सन्निहितेति । दृषत् शिला अजिनं चर्म आज्यं घृतं स्रुक् होमभाण्डं समिधः काष्ठानि तेषां पूल्यः श्रेण्यः तासां निवहाः सङ्घाः सन्निहिताः यस्यां ताम् ।

(३०) नूतनेति । नूतने नवे शूर्पे अर्पितानि श्यामलानि शमीपलाशानि शमीपत्राणि तैः मिश्राः संवलिताः लाजाः तैः हसति राजते इति तथाविधां ताम् । तां वेदीम् आरुरोह । सज्योत्स्नः ज्योत्स्नासहितः शशी इव भूप इति भावः । समुत्ससर्प उपातिष्ठत् ।

(३१) वेल्लितेति । वेल्लिताः चलिताः अरुणा रक्ताः शिखाः पल्लवा इव

रतिद्वितीयो रक्ताशोकस्य समीपम् । इति च (३२) हुतभुजि दक्षिणावर्त्तप्रवृत्ताभिः बधूवदनविलोकनकुतूहलिनीभिः इव ज्वालाभिः एव सह प्रदक्षिणं बभ्राम । पात्यमाने च लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्वबधूवररूपविस्मयस्मेर इव अदृश्यत विभावसुः ।

अत्रान्तरे (३३) स्वच्छकपोलोदरसंक्रान्तमनलप्रतिबिम्बमिव निर्वापयन्ती (३४) स्थूलमुक्ताफलविमलवाष्पविन्दुसन्दोहदर्शितदुर्दिना निर्वदनविकारं रुरोद बधूः । (३५) उदश्रुविलोचनानाञ्च बान्धवबधूनाम् उदपादि महान् आक्रन्दः । परिसमापितवैवाहिकक्रियाकलापस्तु जामाता बध्वा समं प्रणनाम श्वशुरौ । (३६) प्रविवेश च द्वारपक्षलिखितरतिप्रीतिदैवतं प्रणयिभिः इव प्रथमप्रविष्टैः अलिकुलैः




---

शिखा इव पल्लवाश्च यस्य तथाभूतस्य शिखिनः अग्नेः रक्ताशोकस्य विकसिताशोकस्य ।

(३२) हुतभुजि अग्नौ दक्षिणावर्त्तप्रवृत्ताभिः प्रदक्षिणप्रसृताभिरित्यर्थः ज्वालाभिः शिखाभिः । पात्यमाने प्रक्षिप्यमाणे अर्प्यमाणे इत्यर्थः । नखेति नखानां मयूखेन धवलिता तनुः यस्य तथाभूतः अतएव अदृष्टपूर्वेण बधूवरयोः रूपेण यो विस्मयः चमत्कारः तेन स्मेर इव सहास इव । विभावसुः अग्निः ।

(३३) स्वच्छेति । स्वच्छं कपोलस्य उदरं संक्रान्तः तम् अनलप्रतिबिम्बमिव अग्निप्रतिरूपमिव ।

(३४) स्थूलेति । स्थूलानि मुक्ताफलानि इव विमला वाष्पविन्दूनां सन्दोहाः समूहाः तैः दर्शितं दुर्दिनं यया तथाभूता निर्वदनविकारं नास्ति वदनस्य विकारः विकृतिः यस्मिन् तद् यथा तथा ।

(३५) उदश्रुविलोचनानाम् उद्गतवाष्पनेत्राणाम् ।

(३६) प्रविवेश वासगृहमित्युत्तरेण सम्बन्धः । तदेव विशिनष्टि द्वारेत्यादि ।

कृतकोलाहलम् (३७) अलिकुलपक्षपवनप्रेङ्खोलितैः कर्णोत्पलप्रहारभयप्रकम्पितैः इव मङ्गलप्रदीपैः प्रकाशितम् (३८) एकदेशलिखितस्तवकितरक्ताशोकतरुतलभाजा अधिज्यचापेन तिर्य्यक्कूणितनेत्रविभागेण शरमृजूकुर्वता कामदेवेन अधिष्ठितम् एकपार्श्वन्यस्तेन काञ्चनचामरकेण इतरपार्श्ववर्त्तिन्या च (३९) दान्तशफरुकधारिण्या कनकपुत्त्रिकया साक्षाल्लक्ष्म्येव उद्दण्डपुण्डरीकहस्तया सनाथेन सोपधानेन स्वास्तीर्णेन शयनेन शोभमानं शयनशिरोभागस्थितेन च (४०) कृतकुमुदशोभेन कुसुमायुधसाहायकाय आगतेन शशिनेव निद्राकलशेन राजतेन विराजमानं वासगृहम् ।

---

द्वारपक्षे पक्षद्वारे लिखितं चित्रितं रतिप्रीतिदैवतं रतिरेव प्रीतिदैवतं यस्य तत् । प्रणयिभिरिव सुहृद्भिरिव ।

(३७) अलीति । अलिकुलानां भ्रमरवृन्दानां पक्षपवनेन प्रेङ्खोलिताः कम्पिताः तैः । कर्णेति कर्णोत्पलस्य प्रहारात् भयेन प्रकम्पितैरिव ।

(३८) एकेति । एकदेशे एकस्मिन् विभागे लिखितः चित्रितः स्तवकितः सञ्जातस्तवकः रक्ताशोकतरुः तस्य तलं भजते इति तथोक्तेन तत्तलस्थितेन इत्यर्थः अधिज्यचापेन मौर्वीयुतधनुषा । तिर्य्यगिति तिर्य्यग् यथा तथा कूणितः सङ्कोचितः नेत्रविभागः येन तथाविधेन अपाङ्गावलोकनतत्परेणेत्यर्थः । शरम् ऋजूकुर्वता सन्दधतेत्यर्थः । एकपार्श्वन्यस्तेन एकपार्श्वनिहितेन काञ्चनचामरकेण काञ्चनं सौवर्णं चामरकं चमरमृगप्रतिकृतिः तेन ।

(३९) दान्तेति । दान्तं गजदन्तमयं शफरुकं धरतीति तथोक्तया । कनकपुत्त्रिकया काञ्चनपुत्तलिकया । उद्दण्डेति उद्दण्डम् उन्नतनालं पुण्डरीकं श्वेतपद्मं हस्ते यस्याः तथाभूतया । सनाथेन युक्तेन सोपधानेन उपधानं बालिश इति भाषाप्रसिद्धं तत्सहितेन स्वास्तीर्णेन शोभनास्तरणशालिना ।

(४०) कृतेति । कृता कुमुदेन कुमुदस्य वा शोभा यस्य तेन राजतेन रौप्यमयेण ।

तत्र च (४१) व्रीताया नववधूकायाः पराङ्मुखप्रसुप्ताया मणिभित्तिदर्पणेषु मुखप्रतिविम्बानि (४२) प्रथमालापाकर्णनकौतुकागतगृहदेवताननानीव मणिगवाक्षकेषु वीक्षमाणः क्षणदां निन्ये। स्थित्वा च श्वशुरकुले (४३) शीलेन अमृतमिव श्वश्रूहृदये वर्षन् अभिनवाभिनवोपचारैः अपुनरुक्तानि आनन्दमयानि दश दिनानि स्थित्वा दत्त्वा राजदौवारिकमिव राजकुले रणरणकं यौतुकनिवेदितानि इव शम्बलानि आदाय हृदयानि सर्वलोकस्य कथं कथमपि विसर्जितो नृपेण वध्वा सह स्वदेशम् अगमदिति।

इति श्रीवाणभट्टकृते हर्षचरिते चतुर्थः उच्छ्वासः।

---

(४१) व्रीताया लज्जितायाः। मणीति मणिभित्तयः रत्नकुड्यानि एव दर्पणाः आदर्शाः तेषु।

(४२) प्रथमेति। प्रथमालापस्य आकर्णने श्रवणे यत् कौतुकं तस्मै आगता या गृहदेवताः तासाम् आननानि इव मुखानि इव मणिगवाक्षेषु रत्नमयवातायनेषु वीक्षमाणः पश्यन् क्षणदां रात्रिम्।

(४३) शीलेन सच्चरितेन। अपुनरुक्तानि अनधिकानि। रणरणकं विच्छेदजनितमुद्वेगम्। शम्बलानि पाथेयानि।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता हर्षचरितस्य चतुर्थोच्छ्वासव्याख्या समाप्ता।

---

# पञ्चमः उच्छ्वासः ।



नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तड़िदिव वज्रं निपातयति ॥ १ ॥
पातयति महापुरुषान् सममेव बहूननादरेणैव ।
परिवर्त्तमान एकः कालः शैलानिवानन्तः ॥ २ ॥

(३) अथ कदाचित् राजा राज्यवर्द्धनं कवचहरम् आहूय हूणान् हन्तुं हरिणान् इव हरिर्हरिणेशकिशोरम् अपरिमितबलानुयातं चिरन्तनैः अमात्यैः अनुरक्तैश्च महासामन्तैः कृत्वा साभिसारम् उत्तरापथं प्राहिणोत् ।

(४) प्रयान्तञ्च तं देवो हर्षः कतिचित्प्रयाणकानि तुरङ्गैः अनुवव्राज । प्रविष्टे च (५) कैलासप्रभाभासिनीं ककुभं

---

नियतिरिति । नियतिर्दैवं दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः प्रथमम् आदौ इत्यर्थः पुंसां सुखं तरला चपला तड़ित् विद्युदिव आलोकं कृत्वा उपरि पश्चात् वज्रमिव दारुणं भीषणं दुःखं निपातयति ॥ १ ॥

पातयतीति । अनन्तः अशेषः एकः कालः परिवर्त्तमानः परिभ्रमन् शैलानिव पर्वतानिव बहून् महापुरुषान् अनादरेणैव अवहेलनैव पातयति ध्वंसयति । एतेन भाविराजनिधनं सूचितम् । उभयत्रापि उपमालङ्कारः ॥ २ ॥

(३) अथेत्यादि । कवचहरं वर्मधरम् । हूणान् तदाख्यान् म्लेच्छान् । हरिः सिंहः । हरिणेशकिशोरं मृगेन्द्रशिशुम् अपरिमितबलानुयातं प्रभूतैः सैनिकैः अनुयातम् ।

(४) प्रयान्तं गच्छन्तं रणायेति शेषः । प्रयाणकानि पथः ।

(५) कैलासेति । कैलासस्य अद्रेः प्रभया भासते द्योतते इति तथोक्ता तां

भ्रातरि वर्त्तमानो नवे वयसि विक्रमरसानुरोधिनि (६) केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु (७) उत्कण्ठमानवनदेवताकटाक्षांशुशारितशरीरकान्तिः क्रीड़न् मृगयां मृगलोचनः कतिपयानि अहानि वहिरेव व्यलम्बत। चकार च (८) आकर्णान्ताकृष्टकार्मुकनिर्गतभासुरभल्लवर्षी स्वल्पीयोभिः एव दिवसैः निःश्वापदानि अरण्यानि।

एकदा तु (९) वासतेय्याः तुरीये यामे प्रत्युषसि एव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणम् अद्राक्षीत्। तस्मिन् एव च

---

ककुभं दिशं भ्रातरि राज्यवर्द्धने। विक्रमरसानुरोधिनि विक्रमे यो रसः अनुरागः उत्साह इति यावत् तम् अनुरुध्यते इति तथाभूते विक्रमरसानन्दिनीत्यर्थः।

(६) केशरीति। केशरिणः सिंहाः शरभाः अष्टापदमृगाः शार्दूलाः व्याघ्राः वराहाः शूकराः तैः बहुलेषु आकीर्णेषु यद्वा ते बहुलाः प्रभूता येषु तथोक्तेषु तुषारशैलोपकण्ठेषु हिमाद्रिसविधेषु।

(७) उत्कण्ठेति। उत्कण्ठमानानां तादृशवीरपुरुषदर्शनेन शङ्कमानानाम् इत्यर्थः। वनदेवतानां वनाधिष्ठातृदेवीनां कटाक्षाः तिर्य्यगवलोकितानि तेषाम् अंशुभिः मयूखैः शारिता चित्रिता शरीरकान्तिः यस्य तथाभूतः मृगलोचनः हरिणायतनयनः। व्यलम्बत विलम्बं कृतवान्।

(८) आकर्णेति। कर्णान्तात् आ आकर्णान्तम् आकृष्टात् कार्मुकात् धनुषः निर्गतान् निःसृतान् भासुरान् प्रदीप्तान् तीक्ष्णानिति भावः। भल्लान् तदाख्यास्त्रविशेषान् वर्षति मुञ्चतीति तथाभूतः स्वल्पीयोभिः अत्यल्पैः निःश्वापदानि श्वापदरहितानि हिंस्रजन्तुशून्यानीत्यर्थः।

(९) वासतेय्याः वसतिः रात्रिरेव वासतेयी स्वार्थे ष्णियप्रत्ययः तस्याः वसती रात्रिवेश्मनोरित्यमरः। तुरीये चतुर्थे यामे प्रहरे प्रत्यूषसि प्रभाते। चटुलेति चटुलानां चञ्चलानाम् इतस्ततः सञ्चरन्तीनामित्यर्थः। ज्वालानां शिखानां पुञ्जैः समूहैः पिञ्जरीकृताः पिङ्गलिताः सकलाः ककुभः दिशः येन तथाभूतेन

दावदहने (१०) समुत्सृज्य ग्रावकान् उत्प्लुत्य च आत्मानं पातयन्तीं सिंहीम् अपश्यत्। आसीच्च अस्य चेतसि (११) लोके हि लोहेभ्य: कठिनतरा: खलु स्नेहमया बन्धनपाशा: यदाकृष्टा: तिर्य्यञ्चोऽपि एवम् आचरन्तीति प्रबुद्धस्य च अस्य मुहुर्मुहु: (१२) दक्षिणेतरम् अक्षि पस्पन्दे गात्रेषु च अकस्मादेव वेपथु: विपप्रथे निर्निमित्तम् एव अन्तर्बन्धनस्थानात् चचाल इव हृदयम् अकारणादेव च अजायत गरीयसी दु:खासिका। किमिदमिति च (१३) समुत्पन्नविविधविकल्पविमथितमति: अपगतधृति: चिन्तावनमितवदन: स्तिमिततारकेण चक्षुषा (१४) समुद्भिद्यमानस्थलकमलिनीवनामिव चकार चकोरेक्षण: क्षणं क्षौणीम्। अह्नि च तस्मिन् शून्येन एव च चेतसा चिक्रीड़ मृगयाम्। आरोहति च (१५) हरिततहये मध्यमह्नो

---

दुर्निवारेण निवारयितुमशक्येन अनिर्वापनीयेन इत्यर्थ:। दवहुतभुजा दावाग्निना केसरिणं सिंहम्। एतेन पितुर्गाढदाहरूपो व्याधि: सूचित:।

(१०) समुत्सृज्य परित्यज्य एतेन अस्य मातुरग्निप्रवेश: सूचित:।

(११) लोके जगति संसारे इत्यर्थ: बन्धनपाशा: बन्धनरज्जव: यदाकृष्टा: यै: पाशै: आकृष्टा: नियन्त्रिता: तिर्य्यञ्च: पशुपक्ष्यादय: एवम् अग्निप्रवेशेन आत्मत्यागमिति भाव:।

(१२) दक्षिणेतरं वामम् अक्षि नेत्रं वेपथु: कम्प: विपप्रथे अभूदित्यर्थ: निर्निमित्तम् अहेतुकम्। दु:खासिका दु:खेन अवस्थानम्।

(१३) समुत्पन्नेति। समुत्पन्नेन आविर्भूतेन विविधेन नानाप्रकारेण विकल्पेन संशयेन विमथिता आलोड़िता मतिर्यस्य तथाभूत: अपगतधृति: अधीर:। चिन्तेति चिन्तया दुर्भावनया अवनमितं वदनं येन तथाभूत: स्तिमिततारकेण निश्चलकनीनिकेन।

(१४) समुद्भिद्यमानेति। समुद्भिद्यमानं विकासं गच्छत् स्थलकमलिनीवनं यस्या: तामिव क्षौणीं पृथ्वीं चकोरेक्षण: चकोरनेत्र:।

भवनम् आगत्य उभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्त: क्षितितलवितताम् (१६) अतिशिशिरमलयजरसलवलुलित-वपुषम् इन्दुधवलोपधानधारिणीं वेत्रपट्टिकाम् अधिशयान: साशङ्क एव तस्थौ।

(१७) अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चीरचीरिकया रचितमुण्डमालकं (१८) अमातपाभ्याम् आरोप्यमाणकायकालिमानम् अन्तर्गतेन शोकशिखिना अङ्गारताम् इव नीयमानम् (१९) अतित्वरागमनद्रुततरपदो-द्धूयमानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदिन्या

---

(१५) हरितहये हरिदश्वे सूर्ये इत्यर्थ: अह्नो दिवसस्य मध्यम् आरोहति उत्पतति। उभयत: उभयो: पार्श्वयोरित्यर्थ:। संवाह्यमानेति संवाह्यमानं संवीज्यमानं तनु स्वल्पं क्षुद्रमित्यर्थ: तालवृन्तं यस्य तथाभूत: क्षितितल-विततां पृथ्वीतलविस्तृताम्।

(१६) अतिशिशिरेति। अतिशिशिरेण अतिशीतलेन मलयजरसस्य चन्दन-रसस्य लवेन विन्दुना लुलितं लिप्तं वपु: शरीरं यस्य तथोक्तम्। इन्दुधवलेति इन्दु: चन्द्र: तद्वत् धवलम् उपधानं शिरोरक्षणार्थं तूलपूर्णवसनविशेष: तत् धरतीति ताम् तद्विशिष्टामित्यर्थ: वेत्रपट्टिकां वेत्रनिर्मितपर्य्यङ्किकाम्। साशङ्क: सोद्वेग:।

(१७) अथ कुरङ्गकनामानम् आयान्तम् अद्राक्षीदिति सम्बन्ध: तं विशिनष्टि लेखगर्भयेत्यादिभि: लेखगर्भया अन्तर्गतलिपिना। नीलीति नीलीराग: नीलवर्ण: तेन तद्वत्वा मेचका श्यामला रुक् कान्ति: यस्या: तया चीरचीरिकया वसन-खण्डेन। रचितेति रचिता कृता मुण्डमाला शिरोमाला शिरोवेष्टनमित्यर्थ: येन तम्।

(१८) अमेति। अमेण आतपेन च आरोप्यमाण: उत्पाद्यमान: कायस्य देहस्य कालिमा कार्ष्ण्यं यस्य तम्। अन्तर्गतेन हृदयस्थेन शोकशिखिना शोका-ग्निना अङ्गारतामिव नीयमानं कृष्णवर्णदेहप्रभमिति भाव:।

(१९) अतीति। अतित्वरया अतिवेगेन आगमनं तस्मिन् द्रुततरेण पदेन

इव अनुगम्यमानम् (२०) अभिमुखपवनप्रेङ्खत्प्रविततोत्तरीयपटप्रान्तवीज्यमानोभयपार्श्वम् अतित्वरया कृतपक्षम् इव, आशु परापतन्तं प्रेर्य्यमाणम् इव पृष्ठतः स्वाम्यादेशेन, कृष्यमाणम् इव पुरस्तात् आयतैः श्रमश्वाससमीरैः, (२१) खिद्यल्ललाटतटघटमानप्रतिबिम्बकेन कार्य्यकौतुकात् अपक्रियमाणलेखमिव भास्वता, सम्भ्रमभ्रष्टैः इव इन्द्रियैः शून्यीकृतशरीरं (२२) लेखार्पितप्रयोजनगौरवात् इव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तं कालमेघशकलम् इव पतिष्यतो दुर्वार्त्तावज्रस्य, धूमपल्लवम् इव ज्वलिष्यतः शोकज्वलनस्य,

---

पदक्षेपेण उद्धूयमाना उत्क्षिप्यमाणा या धूलीनां रजसां राजिः तद्व्याजेन राजवार्त्ताश्रवणकुतूहलिन्या राज्ञः संवादाकर्णनौत्सुक्यवत्या मेदिन्येव पृथिव्येव राजपत्रेव इति भावः अनुगम्यमानम् अनुस्रियमाणम् ।

(२०) अभिमुखेति । अभिमुखपवनेन सम्मुखागतेन वायुना प्रेङ्खत् चलन् प्रविततस्य सुविस्तृतस्य उत्तरीयपटस्य उत्तरीयवसनस्य प्रान्तः तेन वीज्यमानौ उभौ पार्श्वौ यस्य तम् । कृतपक्षं जनितगरुतमिव परापतन्तम् आपतन्तं प्रेर्य्यमाणमिव प्रेष्यमाणमिव पुरस्तात् अग्रतः आयतैः दीर्घैः श्रमश्वाससमीरैः परिश्रमजनितनिःश्वासमुक्तिभिः ।

(२१) खिद्यदिति । खिद्यत्सु घर्माक्तेषु ललाटतटेषु घटमानं पतत् प्रतिबिम्बं यस्य तथाभूतेन भास्वता सूर्य्येण कार्य्यकौतुकात् कार्य्यौत्सुक्यात् अपक्रियमाणा चौर्य्यमाणा लेखा यस्मात् यस्य वा तं सम्भ्रमभ्रष्टैरिव सम्भ्रमः कार्य्यव्यग्रता तेन भ्रष्टानि च्युतानि तैरिव इन्द्रियैः हस्तपदादिभिः अङ्गैः । शून्यीकृतेति । शून्यीकृतं विरहितमित्यर्थः शरीरं यस्य तथोक्तम् ।

(२२) लेखेति । लेखे पत्रिकायाम् अर्पितस्य लिखितस्य प्रयोजनस्य कार्य्यस्य गौरवं गुरुत्वं तस्मादिव । समे समतले अबन्धुरे इत्यर्थः वर्त्मनि पथि कालमेघशकलमिव कृष्णवर्णमेघखण्डमिव दुर्वार्त्तावज्रस्य दुष्टा कठिना वार्त्ता संवादः एव वज्रं तस्य धूमपल्लवमिव धूमनिचयमिव शोकज्वलनस्य

बीजम् इव फलिष्यतो दुष्कृतशालेः अनिमित्तभूतदीर्घाध्वगं कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्।

(२३) दृष्ट्वा च पूर्वानिमित्तपरम्पराविर्भूतभीतिः अभिद्यत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमम् आननलग्नं विषादम् उपनिन्ये पश्चाल्लेखम्। तञ्च देवो हर्षः स्वयमेव आदाय अवाचयत्। लेखार्थेन एव च समं गृहीत्वा हृदयेन सन्तापम् अवग्रहरूपोऽभ्यधात् कुरङ्गक! किं मान्द्यं तातस्येति। (२४) स चक्षुषा वाष्पजलविन्दुभिः मुखेन च अस्पष्टाक्षरैः क्षरद्भिः युगपत् आचचक्षे देव! दाहज्वरो महान् इति। तच्च आकर्ण्य सहसा सहस्रधा इव अस्य हृदयं पफाल। कृताचमनश्च जनयितुः आयुष्कामो(२५)ऽपरिमितमणिकनकरजतजातमात्मपरिवर्हम् अशेषं ब्राह्मणसात् अकरोत्

---

शीकाद्यैः फलिष्यतः जनिष्यमाणस्य दुष्कृतशालेः दुःखब्रीहिभेदस्य दुर्दैवधान्यविशेषस्य वा अनिमित्तभूतदीर्घाध्वगं दुर्निमित्तसूचकं दीर्घपथिकं यद्वा अनिमित्तभूतं दुर्निमित्तरूपं दीर्घं पन्थानं गच्छतीति तथोक्तम्।

(२३) पूर्वेति। पूर्वाभिः प्रागनुभूताभिः अनिमित्तपरम्पराभिः दुर्लक्षणसमूहैः दुःस्वप्नदर्शनादिभिरिति भावः आविर्भूता सञ्जाता भीतिः यस्य तथाभूतः हृदयेन अभिद्यत भग्नहृदयोऽभूदित्यर्थः। आननलग्नं वदनसंसक्तं वदनवैकृतेन सूचितमिति यावत् उपनिन्ये अर्पितवान् दर्शितवान् वा। लेखार्थेन लिखितवृत्तान्तेन समं सह अवग्रहरूपः स्तम्भिताकृतिरित्यर्थः मान्द्यम् अकुशलमित्यर्थः।

(२४) स कुरङ्गकः वाष्पजलविन्दुभिः नेत्रजलपृषतैः अस्पष्टाक्षरैः अमग्नाक्षरैः अस्पष्टाक्षरैः इत्यर्थः क्षरद्भिः स्खलद्भिः अन्तरान्तरा भङ्गमाप्नुवद्भिरित्यर्थः। पफाल पुस्फोट। आयुष्कामः जीविताकाङ्क्षी।

(२५) अपरिमितेति। अपरिमितानि असंख्यानि मणयः रत्नानि कनकानि काञ्चनानि रजतानि रौप्याणि तेषां जातं समूहम् आत्मनः स्वस्य परिवर्हं परिच्छदम् अश्वोपकरणभूतमिति यावत्। अशेषं समग्रम्।

(२६) अभुक्त एव उच्चचाल दापय वाजिनः पर्य्याणम् इति च पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाण युवानम्। वेपमानहृदयश्च (२७) ससंभ्रमप्रधावितपरिवर्द्धकोपनीतम् आरुह्य तुरङ्गमम् एकाकी एव प्रावर्त्तत।

(२८) अकाण्डप्रयाणसंज्ञाशङ्खक्षुभितं तु संभ्रमात् सज्जीभूतम् उद्भूतमुखरखुररवभरितसकलभुवनविवरम् आगत्यागत्य सर्वाभ्यो दिग्भ्यो धावमानम् अश्वीयम् अढौकत। (२९) प्रस्थितस्य च अस्य प्रदक्षिणेतरं प्रयान्तो विनाशम् उपस्थितं राजसिंहस्य हरिणाः प्रकटयाम्बभूवुः। (३०) अशिशिररश्मिमण्ड-

---

(२६) अभुक्त एव अनाहार एव। दापय परिधापय वाजिनः अश्वस्य पर्य्याणं पल्ययनम्। शिर इति शिरसि कृपाणम् असिं निहितमिति भावः। बिभ्राणं धारयन्तं बभाण उवाच। वेपमानहृदयः कम्पमानचित्तः।

(२७) ससम्भ्रमेति। ससम्भ्रमं सत्वरं प्रधावितः परिवर्द्धकः अश्वपालः तेन उपनीतः उपस्थापितः तम्। एकाकी एव असहाय एव प्रावर्त्तत प्राक्रमे गन्तुम् इति शेषः।

(२८) अकाण्डेति। अकाण्डे असमये सहसा इत्यर्थः प्रयाणं यात्रा प्रत्यावर्त्तनमिति यावत् तस्य संज्ञा सूचना संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना इत्यमरः। तस्यै शङ्खः शङ्खनाद इत्यर्थः तेन क्षुभितं समाकुलितम्। सम्भ्रमात् आवेशात् सज्जीभूतं कृतसज्जम्। उद्भूतेति उद्भूतेन उद्गतेन मुखरेण खुराणाम् अश्वशफानां रवेण नादेन भरितम् आपूरितं सकलं भुवनानां जगतां विवरम् अन्तरालं येन यस्य वा तथाभूतं सर्वाभ्यः चतसृभ्य इत्यर्थः अश्वीयम् अश्वानां समूहः अश्वीयम् अश्वारोहि सैन्यमित्यर्थः अढौकत अनुययौ तमिति शेषः।

(२९) प्रस्थितस्य प्रचलितस्य प्रदक्षिणेतरम् अप्रदक्षिणं यथा तथा वामभागेन इति यावत् प्रयान्तः गच्छन्तः। राजसिंहस्य राजा सिंह इव राजेव सिंहस्य तस्य प्रकटयाम्बभूवुः सूचयामासुः उक्तञ्च वामे शवशिवाकुम्भा दक्षिणे गोमृगद्विजा इति।

(३०) अशिशिरेति। अशिशिरा उष्णा रश्मयो यस्य तस्य मण्डलं बिम्बं

लाभिमुखस्य हृदयम् अवदारयन् इव दावशुष्के दारुणि दारुणं रराण वायसः। (३१) कज्जलमय इव बहुदिवसम् उपचितवहलमलपटलमलिनिततनुः अभिमुखम् आजगाम शिखिपिच्छलाञ्छनो नग्नाटकः। (३२) दुर्निमित्तैः अनभिनन्द्यमानगमनश्च नितराम् अशङ्कत। हृदयेन पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणः तुरङ्गमस्कन्धबद्धलक्ष्यं (३३) चक्षुः अविचलं दधानः समवसितहसितसङ्कथः

---

तदभिमुखः अवदारयन् विदारयन् व्यथयन्निति यावत् अमङ्गलसूचकत्वादिति भावः दावशुष्के वनाग्निना दग्धावशिष्टे इति यावत् दारुणि वृक्षावयवे स्थित इति शेषः दारुणं श्रुतिकठोरं यथा तथा रराण दध्वान एतस्य दुर्लक्षणत्वमुक्तं वराहमिहिरेण। छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वाङ्क्षे इति।

(३१) कज्जलमय इव अञ्जनमय इव। उपचितेति उपचितेन सञ्चितेन अङ्गमलेषु जीवानां सञ्चारसम्भावनया तत्क्षालननिषेधादिति भावः बहलेन प्रभूतेन मलपटलेन मलनिचयेन मलिनिता सञ्जातमला तनुः शरीरं यस्य तथाभूतः। शिखीति शिखिनो मयूरस्य पिच्छं लाञ्छनं चिह्नं यस्य तथाभूतः। नग्नाटकः नग्नः विवसनः सन् अटति भ्रमतीति तथोक्तः नग्नक्षपणक इत्यर्थः। अहिंसां परमं धर्मं वदद्भिः बौद्धैः शरीरकीटविनाशशङ्कया न शरीरसंस्कारः क्रियते मयूरपिच्छरूपेण व्यजनेन च पथि आकाशे च सञ्चारिणः कीटा अपसार्यन्ते इति प्रसिद्धिः तेषाञ्च दर्शने दुर्लक्षणत्वमुक्तम्। नपुंसकव्यङ्गनग्नमुक्तकच्छसिताम्बराः। प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गता इति।

(३२) दुर्निमित्तैः पूर्वोक्तैः हरिणादिभिः अनभिनन्द्यमानम् अप्रशस्यमानं गमनं यस्य तथाभूतः नितराम् अतिशयेन। पित्रेति। पितरि स्नेहः भक्तिविशेषः तेन आहितः जनितः म्रदिमा मार्दवं यस्य तेन। जनकस्नेहाकुलेन इति भावः। तत्तद्दुर्निमित्तजातमित्यर्थः उपेक्षमाणः अगणयन्। तुरङ्गमेति तुरङ्गमस्य स्ववाहनस्य स्कन्धे एव बद्धं लग्नमित्यर्थः लक्ष्यं यस्य तथोक्तम्।

(३३) अविचलं स्थिरं चक्षुः दधानः। समवसितेति समवसिता अवसानं गता हसितेन सङ्कथा यस्य सः।

(३४) तूष्णीम्भूतेन भूपाललोकेन अनुगम्यमानो (३५) बहुयोजनसम्पिण्डितम् अध्वानम् एकेन एव अह्ना समलङ्घयत् ।

(३६) उपलब्धनरेन्द्रमान्द्यवार्त्ताविषण्ण इव नष्टतेजसि अधोमुखीभवति भगवति भानुमति भण्डिप्रमुखेन प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि न आहारम् अकारोत् । (३७) पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च वहन्नेव निन्ये निशाम् ।

(३८) अन्यस्मिन् अहनि मध्यन्दिने विगतजयशब्दम्, अस्तमिततूर्य्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रगीतचारणम्, (३९) अप्रसारितापणपण्यं, स्थानस्थानेषु पवन-

---

(३४) तूष्णीम्भूतेन मौनिना । बहुयोजनेति बहुभिः योजनैः क्रोशचतुष्टयैः स्याद् योजनं क्रोशचतुष्टयेन इति लीलावती । सम्पिण्डितं पूर्णं बहुयोजनविस्तृतमित्यर्थः ।

(३५) अह्ना दिवसेन समलङ्घयत् अतिचक्राम ।

(३६) उपलब्धेति । उपलब्धया विदितया नरेन्द्रस्य राज्ञः मान्द्यवार्त्तया अकुशलसंवादेन विषण्ण इव विषादं गत इव व्यथित इव इत्यर्थः । नष्टतेजसि मन्दप्रभे इत्यर्थः । अधोमुखीभवति पश्चिमाशामवतरतीत्यर्थः भानुमति सूर्य्ये । भण्डिप्रमुखेन भण्डिप्रभृतिना विज्ञाप्यमानोऽपि अनुरुध्यमानोऽपि ।

(३७) पुर इति । पुरः अग्रतः प्रवृत्तेन प्रचलितेन प्रतीहारेण दौवारिकेण गृह्यमाणाः ध्रियमाणा या ग्रामीणपरम्पराः ग्रामवासिगणाः ताभिः प्रकटितं प्रदर्शितं प्रगुणं सहजं सुगमञ्च वर्त्म पन्थाः यस्य तथाभूतः सन् । वहन्निव चलन्निव ।

(३८) मध्यन्दिने मध्याह्ने स्कन्धावारमाससादेत्यन्वयः तं विशिनष्टि विगतेत्यादि । विगतः विरहितः जयशब्दः जयसूचकमङ्गलनिनादः यस्मात् यस्मिन् वा तम् । अस्तमिताः अस्तं गताः नष्टा इत्यर्थः तूर्य्याणां वादित्रभेदानां नादा ध्वनयः यस्मिन् तम् । उपसंहृतानि त्यक्तानीति यावत् गीतं गानं यस्मिन् यस्माद्वा तम् । उत्सारितोत्सवम् अपनीतानन्दम् अप्रगीतचारणं प्रकृष्टं गीतं येषां ते प्रगीताः न सन्ति प्रगीताः चारणाः कुशीलवा नटा इति यावत् यस्मिन् तम् ।

बलकुटिलाभिः कोटिहोमधूमलेखाभिः उल्लसन्तीभिः (४०) यममहिषविषाणकोटिभिः इव उल्लिख्यमानं, कृतान्तपाशवागुराभिः इव वेष्ट्यमानम्, उपरि (४१) कालमहिषालङ्कारकालायसकिङ्किणीभिः इव कटु क्वणन्तीभिः दिवसं वायसमण्डलीभिः भ्रमन्तीभिः आवेद्यमानप्रत्यासन्नाशुभं, क्वचित् (४२) प्रतिशायितस्निग्धबान्धवाराध्यमानाहिर्बुध्न्यं, क्वचित् (४३) दीपिकादह्यमानकुलपुत्रकप्रसाद्यमानमातृमण्डलं, क्वचित्

---

(३९) अप्रसारितेति। न प्रसारितानि न विस्तारितानि आपणेषु हट्टेषु पण्यानि विक्रेयवस्तूनि यस्मिन् तम्। पवनेति पवनस्य वायोर्बलेन वेगेन कुटिलाः भङ्गिमत्यः ताभिः। कोटीति कोटिहोमस्य राज्ञः पीडानिवृत्त्यर्थं स्वस्त्ययनेषु इति भावः धूमलेखाभिः धूमराजिभिः उल्लसन्तीभिः उद्गच्छन्तीभिः।

(४०) यमेति। यमस्य राज्ञो ग्रहणार्थम् आगतस्य इति भावः यो महिषः वाहनभूत इति भावः तस्य विषाणकोटिभिरिव शृङ्गाग्रैरिव उल्लिख्यमानम् उद्घृष्यमाणं समन्तादाकीर्य्यमाणमिति यावत्। कृतान्तेति कृतान्तस्य यमस्य पाशाः प्राणिसंयमनार्थं रज्जव एव वागुराः पशुबन्धनजालविशेषा वागुरा मृगबन्धनीत्यमरः ताभिः वेष्ट्यमानमिव संयम्यमानमिव।

(४१) कालेति। कालस्य यमस्य यो महिषः तस्य अलङ्काराः याः कालायसकिङ्किण्यः कृष्णलौहनिर्मितक्षुद्रघण्टिकाः ताभिरिव कटु श्रुतिविरसं यथा तथा क्वणन्तीभिः रुवतीभिः वायसमण्डलीभिः काकनिवहैः। आवेद्यमानेति आवेद्यमानं सूच्यमानं प्रत्यासन्नम् उपस्थितम् अशुभम् अमङ्गलं राजविनाशरूपमिति भावः यस्मिन् तम्। क्वचित् कुत्रचित् विभागे।

(४२) प्रतिशायितेति। प्रतिशायितैः कृतोपवासैः इत्यर्थः स्निग्धैः राजनि अनुरक्तैरित्यर्थः। बान्धवैः बन्धुजनैः आराध्यमानः अर्च्यमानः आरोग्यकामनयेति भावः अहिर्बुध्न्यः शिवः यस्मिन् तम्।

(४३) दीपकेति। दीपिकाभिः सर्वासु दिक्षु प्रज्वलन्तीभिरिति भावः। एतदपि स्वस्त्ययनार्थमिति भावः एवमुत्तरत्रापि। दह्यमानेन दीपमण्डलीमध्यस्थितेनेति भावः कुलपुत्रकेण सत्कुलजातकुमारेण प्रसाद्यमानं सन्तर्प्यमाणं मातॄणां ब्राह्मी-

(४४) मुण्डोपहाराहरणोद्यतद्रविडप्रार्थ्यमानामर्दकं, क्वचित् (४५) अन्ध्रोद्ध्रियमाणबाहुवप्रोपयाच्यमानचण्डिकम्, अन्यत्र (४६) शिरोविधृतविलीयमानगुग्गुलुविकलनवसेवकानुनीयमानमहाकालम्, अपरत्र (४७) निशितशस्त्रीनिकृत्तात्ममांस-

---

त्यादीनां मण्डलं समूहः यस्मिन् तम् । मातरश्चोक्ता यथा, ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डाः सप्त मातरः ॥ इति ।

(४४) मुण्डेति । मुण्डं नरशिरः तदेव उपहारः बलिः तस्य आहरणे संग्रहणे उद्यतः प्रवृत्तः द्रविडः द्रविडदेशीयोपासकविशेषः तेन प्रार्थ्यमानः याच्यमानः राज्ञ आरोग्यमिति भावः आमर्दकः वेतालविशेषः यस्मिन् तथोक्तं वेताला हि मुण्डोपहारप्रिया अलौकिकप्रभावेण उपासकानामभीष्टं साधयन्तीति धिया केनचित् द्रविडेन राज्ञ आरोग्यकामेन नरशिरःसंग्रहणेन यत्र क्वचित् वेतालसिद्धिः क्रियते इति भावः ।

(४५) अन्ध्रेति । अन्ध्रैः तदाख्यदेशभवैः उपासकैः उद्ध्रियमाणैः उत्तोल्यमानैः बाहुभिः वप्रैरिव वप्रसदृशैरित्यर्थः बृहद्भिरिति भावः उपयाच्यमाना राजजीवनं प्रार्थ्यमाना चण्डिका तदाख्या देवीमूर्त्तिः यस्मिन् तम् । यत्र क्वचित् अन्ध्राः स्वान् स्वान् बाहून् उत्तोल्य स्तुतिभिः चण्डिकान्तिके राजारोग्यं प्रार्थयामासुरिति भावः । आन्ध्रेति पाठान्तरेऽपि स एवार्थः । चण्डिकामाहात्म्यस्तुतेरारोग्यफलकत्वमुक्तं देवीमाहात्म्ये यथा । श्रुतं हरति पापानि तथारोग्यं प्रयच्छति । तथा सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा । स्मरन्ममैतन्माहात्म्यं नरो मुच्येत सङ्कटादिति च । अन्ध्रोद्ध्रियमाणान्त्रोपयाच्यमानचण्डिकम् इति पाठे अन्ध्रैः उद्ध्रियमाणं यदन्त्रं बलिपशोः उदरदेशस्थनाडीविशेषः तेन तद्दानेन इत्यर्थः उपयाच्यमाना देवि ! एतदन्त्रग्रहणेन सन्तुष्टा राजानं नीरुजं कुरु इति प्रार्थ्यमाना चण्डिका यत्र तम् ।

(४६) शिर इति । शिरसा मूर्ध्ना विधृतेन स्थापितेन विलीयमानेन अग्न्युत्तापेन विगलता गुग्गुलुना तन्निर्मितधूपविशेषेण विकलः विह्वलः यो नवः नवीनः युवेत्यर्थः वृद्धानां तद्धारणासामर्थ्यादिति भावः सेवकः उपासकः तेन अनुनीयमानः प्रसाद्यमानः राजजीवनार्थमिति भावः महाकालः हरः यस्मिन् तम् । तदुक्तमग्निपुराणे । गुग्गुलुं घृतसंयुक्तं साक्षाद् गृह्णाति शङ्कर इति ।

होमप्रसक्ताप्तवर्गम्, अपरत्र (४८) प्रकाशनरपतिकुमारकक्रियमाणमहामांसविक्रयप्रक्रमम्, उपहतमिव (४९) श्मशानपांशुभिः अमङ्गलैरिव परिगृहीतं, यातुधानैरिव विध्वस्तं, कलिकालेन इव कवलितं, (५०) पापपटलैः इव संछादितम्, अधर्मविक्षेपैः इव लुण्ठितम् अनित्यताधिकारैः इव आक्रान्तं, नियतिविलासैः इव आलोकितं, शून्यमिव सुप्तमिव मुषितमिव विलक्षितमिव छलितमिव मूर्च्छितमिव स्कन्धावारम् आससाद ।

---

(४७) निशितेति । निशितया तीक्ष्णया शस्त्या छुरिकया निकृत्तेन छिन्नेन आत्मनः मांसेन यो होमः तस्मिन् प्रसक्ताः प्रवृत्ताः आप्तवर्गाः स्वजनाः यस्मिन् तम् । उक्तञ्च तन्त्रसारे यः स्वहृदयसञ्जातं मांसं माषप्रमाणतः । तिलमुद्गप्रमाणं वा दद्याद् भक्तियुतो नरः स एव मासाभ्यन्तरे काममिष्टमवाप्नुयादिति ।

(४८) प्रकाशेति । प्रकाशं यथा तथा नरपतीनां राज्ञां करदानां सामन्तानामित्यर्थः कुमारकैः क्रियमाणः महामांसानां निहतपुरुषावयवगृहीतानामिति भावः विक्रयस्य पिशाचादिभ्य इति भावः प्रक्रमः प्रारम्भः यस्मिन् तथोक्तं पिशाचादयोऽपि महामांसप्राप्त्या तद्विनिमयेन अलौकिकशक्त्या विकीर्णामुपकारं कुर्वन्ति अत्र तु राजजीवनोपायभूतौषधादिदानमेव उपकार इति भावः । तादृशक्रियायाः राजदण्डभयात् अप्रकाशेन अनुष्ठानं जनैः क्रियते इह तु राजाभीष्टसिद्धये क्रियते न अत्र दण्डभयमिति प्रकाशशब्देन द्योत्यते ।

(४९) श्मशानपांशुभिः श्मशानरजोभिः उपहतमिव दूषितमिव अमङ्गलैः अशुभैः परिगृहीतमिव आक्रान्तमिव यातुधानैरिव राक्षसैरिव राक्षसः कौणपः क्रव्याद् क्रव्यादोऽस्रप आशरः । यातुधानः पुण्यजन इत्यमरः । विध्वस्तं विशेषेण ध्वंसं गतं कवलितं ग्रस्तम् ।

(५०) पापपटलैरिव कलुषनिचयैरिव संछादितम् आकीर्णम् । अधर्मविक्षेपैः इव अधर्मसञ्चारैरिव लुण्ठितं कृतलुण्ठनम् । अनित्यताधिकारैरिव संसारोऽयमनित्यः क्षणभङ्गुरः तस्य भावः अनित्यता तया धिक्काराः अनित्यं संसारं धिगिति वचनानि तैरिव आक्रान्तम् आश्रितम् । नियतिविलासैरिव भाग्यविचेष्टितैः

प्रविशन्नेव च ( ५१ ) विपणिवर्त्मनि कुतूहलाकुलबहलबालकपरिवृतम् ऊर्द्ध्वयष्टिविष्कम्भवितते वामहस्तवर्त्तिनि ( ५२ ) भीषणमहिषाधिरूढ़प्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरम् इतरकरकलितेन शरकाण्डेन कथयन्तं यमपट्टिकं ददर्श तेनैव च गीयमानं श्लोकम् अशृणोत्।

मातापितृसहस्राणि पुत्त्रदारशतानि च।
युगे युगे व्यतीतानि कस्य ते? कस्य वा भवान्? ॥५३॥ इति।

तेन च अधिकतरम् अवदीर्य्यमाणहृदयः क्रमेण राजद्वारं (५४) प्रतिषिद्धसकललोकप्रवेशं ययौ। तुरगात् अवतीर्य्य

---

इव आत्मीकृतं गृहीतं शून्यमिव जनरहितमिव सुप्तमिव निद्रितमिव मुषितमिव हृतसर्वस्वमिव इत्यर्थः विलम्बितमिव अप्रतिभमिव छलितमिव प्रतारितमिव मूर्च्छितमिव मोहं गतमिव स्कन्धावारं कटकं सैनिकनिवेशनस्थानमित्यर्थः।

(५१) विपणिवर्त्मनि पण्यवीथिकामार्गे आपणस्तु निषद्यायां विपणिः पण्यवीथिकेत्यमरः। यमपट्टिकं ददर्शेत्यन्वयः। कुतूहलेति कुतूहलेन किमेतदिति कौतुकेनाकुला आक्रान्ता बहला: बहवः बालकाः तैः परिवृतः तम्। ऊर्द्ध्वेति ऊर्द्ध्वा दीर्घेति यावत् या यष्टिः दण्डः सैव विष्कम्भः अवष्टम्भः अवलम्बनमिति यावत् तत्र विततः प्रसारितः तस्मिन् वामहस्तवर्त्तिनि वामकरस्थिते।

(५२) भीषणेति। भीषणो भयङ्करः महिषः तम् अधिरूढ़ः प्रेतनाथः यमः तत्सनाथे तद्युक्ते चित्रवति चित्रिते पटे फलके इत्यर्थः। परलोकव्यतिकरं परलोकव्यापारम् इतरकरकलितेन दक्षिणहस्तधृतेन शरकाण्डेन तदाख्यतृणविशेषस्तम्बेन यमपट्टिकं यमपट्टेन जीवतीति यमपट्टिकः तं तेनैव यमपट्टिकेन।

मातेति। मातापितॄणां सहस्राणि पुत्रदारशतानि च स्त्रीपुत्रशतानि च युगे युगे प्रतियुगं व्यतीतानि अतिक्रान्तानि स्वं स्वं सम्बन्धिनं त्यक्त्वा नाशं गतानि इत्यर्थः। ते मातापित्रादयः स्त्रीपुत्रादयश्च कस्य? न कस्यापि इत्यर्थः भवान् वा कस्य? न कस्यापि इत्यर्थः॥ ५३॥

(५४) प्रतिषिद्धेति। प्रतिषिद्धः निवारितः सकलानां लोकानां प्रवेशः यस्मिन्

अभ्यन्तरात् निष्क्रामन्तम् अप्रसन्नमुखरागं मुक्तमिव इन्द्रियै: सुषेणनामानं वैद्यकुमारम् अद्राक्षीत्। कृतनमस्कारश्च अप्राक्षीत् सुषेण! अस्ति तातस्य विशेषो न वेति। सोऽब्रवीत् नास्ति इदानीं यदि भवेत् कुमारं दृष्ट्वेति। मन्दमन्दं द्वारपालै: (५५) प्रणम्यमानश्च दीयमानसर्वस्वं पूज्यमानकुलदैवतं (५६) प्रारब्धामृतचरुपचनक्रियं क्रियमाणषडाहुतिहोमं (५७) हूयमानपृषदाज्यलवलिप्तप्रचलद्दूर्वापल्लवम्

---

तत्। निष्क्रामन्तं निर्गच्छन्तम्। अप्रसन्नेति न प्रसन्न: मुखस्य राग: कान्ति: यस्य तम्। इन्द्रियै: चक्षुरादिभि: मुक्तमिव परित्यक्तमिव रोगशान्तिगतचित्ततया बाह्यव्यापाररहितमिव इत्यर्थ:। नास्ति इदानीं विशेष इति शेष:। भवेत् विशेष इति शेष:।

(५५) प्रणम्यमानश्च राजकुलं विवेशेति सम्बन्ध:। तद् विशिनष्टि दीयमानेत्यादि। दीयमानानि ब्राह्मणादिभ्य इति भाव:। सर्वाणि स्वानि धनानि यत्र तत्। पूज्यमानेति पूज्यमाना: कुलदेवता: चण्डीप्रभृतयो गृहदेवता: यस्मिन् तत्।

(५६) प्रारब्धेति। प्रारब्धा प्रक्रान्ता अमृतचरो: रोगशान्तये देवेभ्य: दीयमानस्य क्षीरपक्वान्नविशेषस्य पायसस्येति यावत् पचनक्रिया पाकानुष्ठानं यस्मिन् तत्। पुष्यनक्षत्रजनितरोगशान्तये घृतपायसेन होमविधानादिति भाव: उक्तञ्च षट्कर्मदीपिकायां पुष्ये घृतपायसमिति। क्रियमाणेति क्रियमाण: अनुष्ठीयमान: षट् आहुतय: एव होमा यस्मिन् तत् षडाहुतिहोमानामशुभशान्तिकरत्वं तत्तन्मन्त्रैरेवोक्तं यथा शाकल:। ओं देवकृतस्यैनसोऽवयजनमसि स्वाहा १। ओं मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा २। ओं पितृकृतस्यैनसोऽवयजनमसि स्वाहा ३। ओं आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ४। ओं एनसोऽवयजनमसि स्वाहा ५। ओं यच्चैनो विश्वांश्चचार यद्वा विद्वांसस्य सर्वस्यैनसोऽवयजनमसि स्वाहा ६। इति।

(५७) हूयमानेति। हूयमाना: अग्नौ प्रक्षिप्यमाणा: पृषदाज्यस्य दधियुक्तघृतस्य पृषदाज्यं सदध्याज्ये इति कोष: लवेन विन्दुना लिप्ता: प्रचला:

(५८) पठ्यमानमहामायूरि प्रवर्त्त्यमानगृहशान्ति (५८) निर्व-र्त्त्यमानभूतरक्षाबलिविधानं प्रयतविप्रप्रस्तुतसंहिताजपं (६०) जप्यमानरुद्रैकादशीशब्दायमानशिवगृहम् अतिशुचि-शैवसम्पाद्यमानविरूपाक्षक्षीरकलशसहस्रस्नपनम् अजिरोप-विष्टैश्च अनासादितस्वामिदर्शनदूयमानमानसैः (६१) अभ्यन्त-रनिष्पतितनिकटवर्त्तिपरिजननिवेद्यमानवार्त्तैः वार्त्तीभूतस्नान-

---

दूर्वापल्लवाः यस्मिन् तत् । उक्तञ्च षट्कर्मदीपिकायाम् आयुष्कामो घृततिलैः दूर्वाभिः आम्रपर्णकैः ज्वरं सद्यो विनाशयेदिति ।

(५८) पठ्यमानेति । पठ्यमाना उच्चार्य्यमाणा महामायूरी बौद्धविद्याविशेषः शैवमन्त्रविशेषो यत्र तत् । प्रवर्त्त्यमानेति प्रवर्त्त्यमाना :सम्पाद्यमाना गृहशान्तिः गृहदोषसंशुद्धिरिति यावत् यत्र तत् ।

(५९) निर्वर्त्त्यमानेति । निर्वर्त्त्यमानं सम्पाद्यमानं भूतेभ्यः रक्षार्थं बलि-विधानं माषभक्तादिबलिप्रदानं यस्मिन् तत् । तत्प्रदानमन्त्राश्च उक्ताः यथा ओं भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले । ते गृह्णन्तु मया दत्तं बलिमेतं प्रसा-धितम् । अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञयेति । प्रयतेति प्रयतैः संयमशालिभिः विशुद्धचित्तैः इति यावत् विप्रैः द्विजैः प्रस्तुतः प्रारब्धः संहिताजपः वेदपाठः यस्मिन् तत् ।

(६०) जप्यमानेति । जप्यमानया पठ्यमानया रुद्रैकादश्या नमस्ते रुद्रमन्यव इत्यादि यजुर्वेदोक्तरुद्राध्यायस्तुतिरूपया शब्दायमानं निनद्यमानं शिवगृहं यस्मिन् तत् । अतिशुचीति अतिशुचिना अतिपूतेन शैवेन शिवोपासकेन सम्पाद्यमानम् अनुष्ठीयमानं विरूपाक्षस्य शिवस्य क्षीरकलशानां सहस्रेण स्नपनम् अभिषेचनं यस्मिन् तत् । अजिरोपविष्टैः चत्वरासीनैः । अनासादितेति अनासादितेन अप्राप्तेन स्वामिदर्शनेन स्वामिदर्शनालाभेन इत्यर्थः दूयमानं तप्यमानं मानसं येषां तैः ।

(६१) अभ्यन्तरेति अभ्यन्तरात् अन्तःपुरात् निष्पतितेन निर्गतेन निकटवर्त्तिना परिजनेन निवेद्यमाना वार्त्ता राजवृत्तान्तः येभ्यः तैः । वार्त्तीभूतेति वार्त्तीभूतानि

भोजनशयनैः (६२) उज्झितात्मसंस्कारमलिनवेशैः लिखितैः इव निश्चलैः नरपतिभिः नीयमाननक्तन्दिनं (६३) दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेन उपांशुव्याहृतैः केनचित् चिकित्सकदोषान् उद्भावयता केनचित् (६४) असाध्यव्याधिलक्षणपदानि पठता केनचित् दुःस्वप्नान् आवेदयता केनचित् पिशाचवार्त्तां विवृण्वता केनचित् (६५) कार्त्तान्तिकादेशान् प्रकाशयता केनचित् उपलिङ्गानि गायता अन्येन अनित्यतां भावयता संसारञ्च अपवदता कलिकालविलसितानि च निन्दता दैवञ्च उपालभमानेन अपरेण

---

वार्त्तात आगतानि कथाशेषाणीति भावः स्नानानि भोजनानि शयनानि च येषां तैः दुःखादिति भावः ।

(६२) उज्झितेति । उज्झितेन परित्यक्तेन आत्मसंस्कारेण केशशरीरमार्ज्जनादिरूपेण प्रसाधनकर्म्मणा इति भावः मलिनाः वेशाः येषां तैः । लिखितैरिव चित्रार्पितैरिव । नीयमानेति नीयमानम् अतिक्रम्यमाणं नक्तन्दिनं रात्रिन्दिनं यस्मिन् तत् ।

(६३) दुःखेति । दुःखेन दीनं म्लानं वदनं यस्य तेन । प्रघणेषु वहिर्द्वारप्रकोष्ठविशेषेषु बद्धमण्डलेन मण्डलाकारोपविष्टेन उपांशुव्याहृतैः अनुच्चभाषितैः चिकित्सकदोषान् चिकित्सका रोगमेतं न निर्णेतुं शक्नुवन्ति औषधानि नैतेषां समीचीनानीत्येवं दोषान् उद्भावयता प्रकटयता ।

(६४) असाध्येति । असाध्यस्य दुश्चिकित्स्यस्य व्याधेः लक्षणपदानि लक्षणप्रकाशकवाक्यानि पठता कीर्त्तयता । दुःस्वप्नान् अमङ्गलसूचकस्वप्नदर्शनानि आवेदयता ज्ञापयता । पिशाचवार्त्तां पिशाचः अधमदेवयोनिविशेषः तस्य वार्त्ता वृत्तान्तः तां पिशाचाविष्टो वा राजा यदस्य तथा चेष्टितं दृश्यते इत्येवंरूपवचनमित्यर्थः विवृण्वता प्रकटयता ।

(६५) कार्त्तान्तिकादेशान् ज्योतिर्विदादेशान् ज्योतिर्विदः राज्ञ एवमेवमशुभं निर्णीतवन्त इत्येवं रूपान् । उपलिङ्गानि उत्पातविशेषान् अमङ्गलसूचकरक्तवृष्ट्यादिरूपान् । अनित्यतां क्षणभङ्गुरतां देहस्येति भावः भावयता चिन्तयता ।

धर्माय कुप्यता राजकुलदेवताश्च अधिक्षिपता अपरेण (६६) क्लिष्टकुलपुत्रकभाग्यानि गर्हयता वाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश ।

(६७) अविरलवाष्पपयःपरिप्लुतलोचनेन पितृपरिजनेन वीक्ष्यमाणो विविधौषधिद्रव्यद्रवगन्धगर्भमुत्क्वथतां क्वाथानां सर्पिषां तैलानाञ्च पच्यमानानां गन्धम् आजिघ्रन् अवाप तृतीयं कक्ष्यान्तरम् ।

(६८) तत्र च अतिनिःशब्दे गृहावग्रहणीग्राहिबहुवेत्रिणि त्रिगुणतिरस्करणीतिरोहितसुवीथीपथे (६९) पिहित-

---

अपवदता निन्दता । कलिलालविलसितानि कलिकालस्य दुश्चेष्टितानि कलिकाले ईदृशो धर्मपरायणो राजा कथं जीवेत् इत्यादिरूपाणीति भावः । उपालभमानेन तिरस्कुर्वता अधिक्षिपता निर्भर्त्सयता ।

(६६) क्लिष्टानां क्लेशपतितानां कुलपुत्राणां सत्कुलजातकुमाराणां पित्रादिविहीनतया निराश्रयाणां राज्ञा पाल्यमानानामिति भावः भाग्यानि दुरदृष्टानि गर्हयता निन्दता वाह्यपरिजनेन वहिःसञ्चरता भृत्येन कथ्यमानेति कथ्यमाना कष्टा दारुणा पार्थिवस्य राज्ञः अवस्था यस्मिन् तत् ।

(६७) अविरलेति । अविरलैः अविच्छिन्नैरिति यावत् वाष्पपयोभिः नेत्रजलैः परिप्लुतानि व्याप्तानि लोचनानि यस्य तेन । विविधेति विविधानां नानाप्रकाराणां ओषधिद्रव्याणां द्रवस्य गन्धः गर्भे यत्र तद्यथा तथा उत्क्वथतां पच्यमानानां क्वाथानां रसविशेषाणां सर्पिषां घृतानाम् । अवाप प्रविवेश कक्ष्यान्तरं प्रकोष्ठान्तरम् ।

(६८) तत्रेत्यादि । तत्र च एवंविधे धवलगृहे स्थितं पितरमद्राक्षीदिति सम्बन्धः । गृहेति गृहावग्रहणी देहली द्वारारम्भप्रदेश इत्यर्थः गृहावग्रहणी देहलीत्यमरः । तद्ग्राहिणः तद्वारिणः बहवः वेत्रिणः वेत्रपाणयः पुरुषा यस्मिन् तथोक्ते । त्रिगुणेति त्रिगुणाभिः त्रिरावृत्ताभिः तिरस्करिणीभिः जवनिकाभिः तिरोहिताः सुवीथिनाम् अभ्यन्तरगृहाणां पन्थानः अभ्यन्तरमार्गा इत्यर्थः यस्मिन् तथोक्ते ।

पक्षद्वारके परिहृतकवाटरटिते घटितगवाक्षरक्षितमरुति दूयमानपरिचारके (७०) चरणताड़नस्वनत्सोपानप्रकुपितप्रतीहारे निभृतसंज्ञानिर्दिश्यमानसकलकर्मणि नातिनिकटोपविष्टकञ्चुकिनि (७१) कोणस्थिताह्वानचकिताचमनकवाहिनि चन्द्रशालिकालीनमूकमौललोके महाधिविधुरबान्धवाङ्गनावर्गगृहीतप्रच्छन्नप्रग्रीवके (७२) सञ्जवनपुञ्जितोद्विग्नपरिजने प्रविष्टकतिपयप्रणयिनि गम्भीरज्वरारम्भभीत-

---

(६९) पिहितेति। पिहितम् आवृतं पक्षद्वारं प्रच्छन्नमन्तर्द्वारं यत् पक्षद्वारं तदुच्यते इति कोषः यस्य तादृशे। परिहृतेति परिहृतं परित्यक्तं कवाटानां रटितं शब्दः यस्मिन् तथोक्ते निःशब्दे इति भावः। घटितेति घटितैः बद्धैः गवाक्षैर्वातायनैः रक्षिताः मरुतः वायवः यस्मिन् तथोक्ते। निवारितदूषितवायाविति भावः दूयमानाः तप्यमानाः परिचारकाः भृत्या यस्मिन् तथोक्ते।

(७०) चरणेति। चरणस्य पदस्य ताड़नेन क्षेपणेन स्वनत् नदत् यत् सोपानं तेन प्रकुपिताः प्रतीहाराः द्वारपाला यस्मिन् तादृशे निःशब्दपदसञ्चारे इति भावः। निभृतेति निभृतया शब्दरहितया संज्ञया हस्तादीनाम् इङ्गितेन निर्दिश्यमानानि प्रदर्श्यमानानि सकलानि कर्माणि यस्मिन् तथाविधे। नातीति नातिनिकटे नातिसन्निधौ उपविष्टाः कञ्चुकिनः वर्मभृतः यस्य तथोक्ते तेषामवयवसञ्चालनेन वर्मणः मर्मरशब्दा जायन्ते इति तत्परिहारायेति भावः।

(७१) कोणेति कोणेषु स्थिताः आह्वानकेन आकारणमात्रेण चकिताः व्यग्रा इत्यर्थः आचमनकवाहिनः आचमनार्थं पानीयहारिणः यत्र तादृशे। चन्द्रेति चन्द्रशालिकायां शिरोगृहे प्रासादोपरिवर्त्तिनि गृहविशेषे इत्यर्थः चन्द्रशाला शिरोगृहमित्यमरः लीनाः निस्तब्धाः मूकाः अवाचः मौलाः कुलक्रमपालिताः लोकाः प्रकृतिविशेषाः यस्मिन् तथोक्ते। महेति महद्भिराधिभिः मानसव्यथाभिः पुंस्याधिर्मानसी व्यथेत्यमरः। विधुराणां व्याकुलानां बान्धवाङ्गनानां बन्धुस्त्रीणां वर्गैः समूहैः गृहीतम् अधिष्ठितं प्रच्छन्नं निर्जनं गुप्तमित्यर्थः प्रग्रीवं कक्ष्याविशेषः वातायनं वा यस्मिन् यस्य वा तथोक्ते।

(७२) सञ्जवनेति। सञ्जवने चतुःशालायां पुञ्जिताः समवेताः उद्विग्नाः

भिषजि दुर्मनायमानमन्त्रिणि (७३) मन्दायमानपुरोधसि सीदत्सुहृदि निद्राणविपश्चिति सन्तप्तामसामन्ते (७४) विचित्तचामरग्राहिणि दुःखक्षामशिरोरक्षिणि क्षीयमाणप्रसादवित्तमनोरथसम्पदि (७५) स्वामिभक्तिपरित्यक्ताहारक्षीयमानबलविकलवल्लभभूभृति (७६) क्षितितलपतितसकलरजनीजागरूकराजपुत्त्रकुमारके (७७) कुलक्रमागतकुल-

---

परिजनाः यस्मिन् तथोक्ते। प्रविष्टेति प्रविष्टाः कतिपये अल्पा इत्यर्थः प्रणयिनः सुहृदः यत्र तादृशे। गम्भीरेति गम्भीरस्य कठिनस्य ज्वरस्य आरम्भात् भीताः शङ्किताः भिषजः चिकित्सकाः यस्मिन् तथाविधे भिषग् वैद्यौ चिकित्सके इत्यमरः। दुर्मनानायमानेति दुर्मनायमाना व्यथितमनसः मन्त्रिणः सचिवाः यस्मिन् तादृशे।

(७३) मन्देति। मन्दायमानः विषादं गच्छन्नित्यर्थः पुरोधाः पुरोहितो यस्मिन् तथोक्ते। सीददिति सीदन्तः अवसादं गच्छन्तः क्लिश्यन्त इत्यर्थः सुहृदो बान्धवाः यस्मिन् तथोक्ते। निद्राणविपश्चिति निद्राणाः समस्तरात्रिजागरणादिति भावः स्वपन्तः विपश्चितः उपाध्यायाः यस्मिन् तथोक्ते। सन्तप्तेति सन्तप्ताः आमाः विह्वलाः सामन्ताः राजानः यत्र तादृशे।

(७४) विचित्तेति। विचित्ताः विचेतनाः चामरग्राहिणः यत्र तथोक्ते। दुःखेति दुःखेन क्षामः क्षीणः शिरोरक्षी शीर्षरक्षकः यस्मिन् तथाविधे। क्षीयमाणेति क्षीयमाणा क्षयमापद्यमाना प्रसादेन वित्तानां प्रसादख्यातानां प्रसादेन प्रतिपालितानामित्यर्थः यद्वा प्रसादः राजानुग्रह एव वित्तं धनं येषां तथोक्तानां मनोरथसम्पद् अभिलाषसमृद्धिः यस्मिन् तादृशे।

(७५) स्वामीति स्वामिनि भक्तिः अनुरागातिशयः तया परित्यक्तः आहारः भोजनं तेन क्षीयमानं क्षीयमाणं बलं सामर्थ्यं तेन विकलाः अपटवः वल्लभाः प्रियाः भूपतयः राजानः यस्मिन् तथोक्ते।

(७६) क्षितीति। क्षितितलेषु भूतलेषु पतिताः सकलाः रजनीषु जागरूकाः जागरणशीलाः स्वामिपरिचर्य्यार्थमिति भावः राजपुत्रा एव कुमारा यत्र तथाभूते।

(७७) कुलेति। कुलक्रमेण वंशपरम्परया आगतानां प्रतिपालितानामिति

पुत्रनिवहोह्यमानशुचि शोकसङ्कुचितकञ्चुकिनि निरानन्दवन्दिनि निश्वसन्निराशासन्नसेवके विस्मृतताम्बूलधूसराधरवारयोषिति (७८) विलक्षवैद्योपदिश्यमानपथ्याहरणावहितपौरोगवे अनुजीविपीयमानोच्चषकधारावारिविनोद्यमानास्यशोषरुजि राजाभिलाषभोज्यमानबहुभुजि (७९) भेषजसामग्रीसम्पादनव्यग्रसमग्रव्यवहारिणि मुहुर्मुहुः आहूयमा-

---

भावः। कुलपुत्राणां कुलीनसन्तानानां निवहैः समूहैः उह्यमाना धार्य्यमाणा शुक् शोकः यत्र तथोक्ते। शोकेति शोकेन सङ्कुचिताः कुण्ठिताः उद्विग्ना इत्यर्थः कञ्चुकिनः अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तरूपाः पुरुषाः यस्मिन् तथोक्ते। निरानन्दाः निरुत्साहा इति भावः वन्दिनः स्तुतिपाठकाः यस्मिन् तादृशे। निश्वसदिति निश्वसन्तः दीर्घम् इति शेषः निराशाः आशाशून्याः राजजीवने स्वभाग्ये च इति भावः। आसन्नसेवकाः अन्तिकचरभृत्या यस्मिन् तथोक्ते। विस्मृतेति। विस्मृतताम्बूलाः परित्यक्तताम्बूला: अतएव धूसराधराः शोकात् ताम्बूलपरित्यागेन पांशुलाधरा इत्यर्थः वारयोषितः वाराङ्गनाः परिचारिण्य इति भावः यत्र तथोक्ते।

(७८) विलक्षेति विलक्षेण लज्जितेन रोगापनयनाक्षमत्वात् कुण्ठितेन इति यावत् वैद्येन भिषजा उपदिश्यमानस्य पथ्यस्य राजभोग्यस्य रोगोपशमनोपयोगिनो भक्ष्यद्रव्यस्य इति यावत् आहरणे आयोजने अवहितः अभिनिविष्टः पौरोगवः पाकाध्यक्षः यस्मिन् तथोक्ते। अनुजीवीति अनुजीविभिः सेवकैः सेवकास्तु अनुजीविन इत्यमरः पीयमानेन उच्चषकधारावारिणा विनोद्यमाना शाम्यमाना आस्यस्य मुखस्य शोषरुक् शोषाख्यव्याधिः यस्मिन् तथोक्ते। रोगिणो जलपाननिषेधात् तत्समीपे बान्धवैः उद्धृतजलपात्रात् धारावारि पीयमानं दृष्ट्वापि मुखशोषनिवृत्तिः जायते इति भावः। राजेति राज्ञः अभिलाषेण इच्छया भोज्यमानाः आहारं कार्य्यमाणाः बहुभुजः प्रभूतभोजनक्षमाः पुरुषा यत्र तथोक्ते स्वयं भोक्तुमशक्तस्य अन्यभोजनदर्शनेनापि तृप्तिः स्यात् इति भावः।

(७९) भेषजेति। भेषजस्य औषधस्य सामग्र्यः द्रव्याणि तेषां सम्पादने समाहरणे व्यग्राः व्यापृताः समग्राः व्यवहारिणः व्यवहाराभिज्ञाः द्रव्यगुणविज्ञाजिन

नतोयकर्मान्तिकानुमितघोरातुरतृषि तुषारपरिकरितकरक-शिशिरीक्रियमाणोदश्विति श्वेतार्द्रकर्पटार्पितकर्पूरपराग-शीतलीकृतशलाके (८०) नाश्यानपङ्कलिप्यमाननवभाण्डगत-गण्डूषग्रहणमस्तुनि तिम्यत्कोमल-कमलिनीपलाशप्रावृतमृदु-मृणालके सनालनीलोत्पलपूलीसनाथसलिलपानभाजनभुवि धारानिपातनिर्वाप्यमाणक्वथिताम्भसि (८१) पटुपाटलशर्करा-मोदमुचि मञ्चकाश्रितसिक्ततिलककरीविश्रान्तातुरचक्षुषि

---

इति भावः यत्र तादृशे। आहूयमानेति आहूयमानेन आकार्य्यमाणेन तोयकर्मान्तिकेन तोयदानकर्मणि निरतेन अनुमिता घोरा दारुणा आतुरस्य रोगिणः तृषा पिपासा यस्मिन् तादृशे। तुषारेति तुषारेण नीहारेण परिकरितं संयुक्तं यत् करकं जलसङ्घातविशेषः [वरफ् इति भाषा] तेन शिशिरीक्रियमाणं शीतलीक्रियमाणम् उदश्वित् तक्रं यस्मिन् तथोक्ते। श्वेतेति श्वेते शुभ्रे धौते इत्यर्थः आर्द्रे जलसिक्ते इत्यर्थः। कर्पटे जीर्णवस्त्रखण्डे अर्पितैः कर्पूराणां परागैः रजोभिः शीतलीकृताः शलाकाः शिलाकणिकाः अङ्गेषु यत् स्पर्शनादीषद्विनोद इति भावः यत्र तथोक्ते।

(८०) नाश्यानेति। नाश्यानेन अघनेन तरलेन इत्यर्थः पङ्केन लिप्यमानं यत् नवं भाण्डं तद्गतं गण्डूषग्रहणाय मुखपूरणाय इत्यर्थः मस्तु दध्न उपरिभागात् निःसृतं जलं यत्र तादृशे मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पय इत्यमरः। तिम्यदिति तिम्यता जलार्द्रेण इत्यर्थः कोमलेन मृदुना कमलिनीपलाशेन पद्मिनीपत्रेण प्रावृतानि आच्छादितानि मृदूनि कोमलानि मृणालानि यस्मिन् तथोक्ते। एतत् स्पर्शादङ्गदाहस्य कथञ्चिदुपशमः स्यादिति भावः। सनालेति सनालानां नालसहितानां नीलोत्पलानां पूलीभिः समूहैः सनाथा युक्ता आच्छादितेति यावत् सलिलपानभाजनानां जलपानपात्राणां भूः स्थानं यस्मिन् तथोक्ते। धारेति धाराणां जलस्येति भावः निपातेन निर्वाप्यमाणानि शीतलीक्रियमाणानि क्वथितानि सिद्धानि अम्भांसि जलानि यस्मिन् तादृशे।

(८१) पटुरिति। पटु प्रचण्डं यथा तथा पाटलायाः श्वेतरक्तवर्णायाः शर्करायाः आमोदं सौरभं मुञ्चति त्यजतीति तस्मिन्। मञ्चकेति मञ्चकम् आधारविशेषः तत्

(८२) सजलशैवलवलयितगलद्गोलयन्त्रके गल्वर्कशालाजिरोल्ला-सितलाजसक्तुनि पीतमसारपारीपरिगृहीतकर्कशर्करे (८३) शिशिरौषधरसचूर्णावकीर्णस्फटिकशुक्तिशङ्खसञ्चये सञ्चितप्रचुर-प्राचीनामलकमातुलुङ्गद्राक्षादाड़िमादिफले (८४) प्रतिग्रा-हितविप्रविप्रकीर्य्यमाणशान्त्युदकविप्रुषि प्रेष्यापिष्यमाणललाट-लेपोपदिग्धषट्पदि धवलगृहे स्थितं (८५) परलोकविजयाय

---

आश्रिता अधिष्ठिता सिकतिला सैकतयुक्ता प्रायशो वालुकाचितेति भाव: या कर्करी वारिधानी जलपात्रविशेष: कर्कर्य्यालुर्गलन्तिकेत्यमर:। तस्यां विश्रान्ति प्रायश: स्थिते इति यावत् अतितृष्णार्त्तत्वादिति भाव:। आतुरस्य पीड़ितस्य राज्ञ: चक्षुषी यत्र। विश्रान्तान्तरचक्षुषि इति पाठे आन्तरे अन्तर्निलीने रोगातिरेकात् कोटरं गते इति भाव: चक्षुषी राज्ञ इति भाव: यस्मिन् यस्य वा तथोक्ते।

(८२) सरलेति। सजलै: जलसहितै: शैवलै: शैवालै: वलयितं वेष्टितं गलत् स्यन्दमानं गोलयन्त्रकं बहुच्छिद्रं जलपात्रं सहस्रधारेति प्रसिद्धं यस्मिन् तथोक्ते। गल्वर्केति गल्वर्को मणिविशेष: तस्य शालाजिर: शराव: गल्वर्कनिर्मित इति यावत् स्याच्छरावस्तु मार्त्तिक: शालाजिर इति त्रिकाण्डशेष:। तत्र उल्लासिता उद्भा-सिता लाजसक्तव: भृष्टधान्यचूर्णानि यत्र तथोक्ते कदाचित् पथ्यार्थमिति भाव:। पीतेति पीत: पीतवर्ण: यो मसार: मणिविशेष: तस्य पारी शरावविशेष: पारी-पात्रशरावयोरिति विश्व:। तत्र परिगृहीता: स्थापिता: कर्कशर्करा: शर्करा-विशेषा यत्र तादृशे।

(८३) शिशिरेति। शिशिरौषधानां शैत्यकारकाणाम् औषधानां रसै: चूर्णैश्च अवकीर्णा: आकीर्णा: स्फटिकानां शुक्तीनां शङ्खानाञ्च सञ्चया: समूहा: यस्मिन् तथोक्ते। सञ्चितेति। सञ्चितानि संगृहीतानि औषधार्थमिति भाव: प्रचुराणां प्रभूतानां प्राचीनानां पुरातनानाम् आमलकानां मातुलुङ्गानां द्राक्षाणां दाड़ि-मादीनाञ्च फलानि यत्र तादृशे।

(८४) प्रतिग्राहितेति। प्रतिग्राहिता: प्रतिग्रहं ग्राहिता: दत्तदक्षिणा इति यावत् विप्रा ब्राह्मणा: तै: विप्रकीर्य्यमाणा: समन्तात् विक्षिप्यमाणा: शान्त्यु-दकानां शान्तिजलानां विप्रुष: विन्दव: यस्मिन् तथोक्ते। प्रेष्येति प्रेष्याभि: दासीभि: पिष्यमाणेन चूर्ण्यमानेन ललाटलेपेन भाललेपनद्रव्येण उपदिग्धा: संलिप्ता:

नीराज्यमानमिव ज्वरज्वलनेन अनवरतपरिवर्त्तनैः तरङ्गिणि शयनीये शेषमिव विशेषशेषा क्षीरोदन्वति विचेष्टमानं (८६) मुक्ताफलवालुकाधूलिधवलितं जलधिमिव क्षयकाले शुष्यन्तं (८७) कालेन कैलासमिव दशाननेन उद्ध्रियमाणम् अविरतचन्दनचर्चापराणां परिचारकाणाम् अत्युष्णावयवस्पर्शभस्मीभूतोदरैः इव धवलैः करैः स्पृश्यमानं लोकान्तरप्रस्थितं स्थास्नुना स्वयशसा एव चन्दनानुलेपनच्छलेन आपृच्छ्यमानम् (८८) अविच्छिन्नदीयमानकमलकुमुदेन्दीवरदलं कालकटा-

---

दृषदः शिला यस्मिन् तथोक्ते धवलगृहे स्फटिकशिलानिर्मिते सुधाक्षालिते वा भवने ।

(८५) परलोकेति । परलोकस्य स्वर्गस्य विजयाय आत्मसात्करणाय ज्वरज्वलनेन ज्वराग्निना । नीराज्यमानमिव निर्मञ्छ्यमानमिव विजयप्रवृत्तस्य जिगीषोः नीराजना क्रियते इति प्रसिद्धिः । अनवरतपरिवर्त्तनैः शय्यायां लुठनैः तरङ्गिणि तरङ्गवति सङ्कोचशालिनि इत्यर्थः शयनीये शय्यातले शेषमिव अनन्तनागमिव विशेषशेषा विशेषतापेन क्षीरोदन्वति क्षीरसागरे विचेष्टमानं लुठन्तम् ।

(८६) मुक्तेति । मुक्ताफलानां मौक्तिकानां वालुका एव धूलयः चूर्णानि ताभिः धवलितः शुभ्रीकृतः तापशान्तये तच्चूर्णलेपनादिति भावः अन्यत्र मुक्ताफलानामिव वालुकानां धूलयः सैकतानीति यावत् ताभिः धवलितस्तं क्षयकाले कल्पान्ते शुष्यन्तं शोषं गच्छन्तम् ।

(८७) कालेनेति । कालेन यमेन कृष्णवर्णेन च दशाननेन रावणेन उद्ध्रियमाणम् उत्क्षिप्यमाणं स्वमावासं नीयमानमिति यावत् । अविरतेति अविरतम् अविच्छिन्नं यथा तथा चन्दनचर्चायां चन्दनरसलेपने पराणां नियुक्तानामित्यर्थः परिचारकाणां भृत्यानाम् । अत्युष्णानाम् अवयवानां स्पर्शेन भस्मीभूतानि उदराणि अन्तराणि येषां तथाभूतैरिव धवलैः श्वेतैः चन्दनलेपनादिति भावः । करैः हस्तैः स्पृश्यमानं संवाह्यमानम् । लोकान्तरप्रस्थितं लोकान्तरप्रस्थानाय उद्यतमित्यर्थः स्थास्नुना स्थितिशीलेन स्वयशसैव निजकीर्त्यैव आपृच्छ्यमानम् आमन्त्र्यमाणम् ।

(८८) अविच्छिन्नेति । अविच्छिन्नम् अनवरतं दीयमानानि निधीयमानानि

न्मपतनशवलमिव शरीरम् उद्वहन्तं (८९) निविड़दुकूलपट्टनिपीड़ितकेशान्तकथ्यमानकष्टवेदनानुबन्धं मूर्द्धानं धारयन्तं (९०) दुर्द्धरवेदनोन्नमन्नीलशिराजालककरालेन च कालकराङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससंख्यानेन इव ललाटफलकेन भयमुपजनयन्तम् (९१) आसन्नयमदर्शनोद्वेगादिव च किञ्चित् अन्तःप्रविष्टतारकं शुष्यद्दशनपङ्क्तिप्रसृतधूसरदीधितितरङ्गिणीं मृगतृष्णिकामिव उष्णां निश्वासपरम्पराम् उद्वहन्तम् (९२) अत्युष्णनिश्वासदग्धया इव श्यामायमानया रसनया निवेद्यमानदारुणसन्निपातारम्भम्

---

कमलानां कुमुदानाम् इन्दीवराणां नीलोत्पलानाञ्च दलानि यस्मिन् तथोक्तम् अतएव कालस्य यमस्य कटाक्षाणां कमलादिसदृशानामिति भावः पतनेन शवलमिव चित्रितमिव शरीरं कलेवरम्।

(८९) निविड़ेति। निविड़ेन दृढ़ेन दुकूलपट्टेन वस्त्रफलकेन निपीड़ितः दृढ़निबद्ध इत्यर्थः यः केशान्तः केशपाशः तेन कथ्यमानः सूच्यमानः कष्टः वेदनानुबन्धः व्यथानैरन्तर्य्यं यस्य तथाभूतं मूर्द्धानं शिरः।

(९०) दुर्द्धरेति। दुर्द्धरया दुःसह्यया वेदनया उन्नमत् उद्गच्छत् नीलं कृष्णं शिराणां जालकं समूहः तेन करालं दन्तुरं व्याप्तं वा तेन। कालेति कालस्य अन्तकस्य कराङ्गुलिभिः लिख्यमानया लेखया ख्यातं प्रकाशितं मरणस्य अवधिदिवसानां संख्यानं गणना यस्मिन् तेनैव।

(९१) आसन्नेति। आसन्नम् उपस्थितं यमस्य दर्शनं तेन उद्वेगः भीतिः तस्मादिव किञ्चित् ईषत् अन्तःप्रविष्टा कोटरं गता तारका कनीनिका यस्य तम्। शुष्यदिति शुष्यन्त्या दशनानां पङ्क्त्याः प्रसृता निःसृता धूसराः पांशुला दीधितयः मयूखाः तासां तरङ्गाः ऊर्मयः सन्ति अस्यामिति तथोक्तां मृगतृष्णिकामिव मरीचिकामिव उष्णां तप्तां निःश्वासपरम्परां निःश्वासततिम्।

(९२) अत्युष्णेति। अत्युष्णैः अतितप्तैः निःश्वासैः दग्धा तया इव। श्यामायमानया श्यामतामापद्यमानया रसनया जिह्वया सान्निपातिके ज्वरे रसना कृष्णा भवति

(८३)उरःस्थलस्थापितमणिमौक्तिकहारचन्दनचन्द्रकान्तं क्षतान्तदूतदर्शनयोग्यमिव आत्मानं कुर्वाणम् (८४)अङ्गभङ्गवलनोत्क्षिप्तभुजयुगलम् पर्य्यस्तहस्तनखमयूखैः धारागृहमिव तापशान्तये रचयन्तं (८५) नेदिष्ठसलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्रतिविम्बैरपि सन्तापातिशयमिव कथयन्तं स्पृशन्तीं प्रणयिनीमिव विश्वासभूमिं मूर्च्छां बहु मन्यमानम् (८६)अन्तकाह्वानाक्षरैः इव सभयभिषग्दृष्टैः अरिष्टैः आविष्टम् महा-

---

इति प्रसिद्धिः। निवेद्यमानः कथ्यमानः प्रकाश्यमानः दारुणः भीषणः सन्निपातस्य दोषत्रयसम्भूतस्य ज्वरस्य आरम्भः उपक्रमः यस्य तथोक्तम्।

(८३) उरःस्थलेति। उरःस्थले वक्षसि स्थापिता निहिताः तापशान्तये इति भावः मणीनां रत्नानां मौक्तिकानाञ्च हाराः चन्दनानि चन्द्रकान्ताश्च तदाख्यमणिभेदाश्च यस्य तम् अतएव क्षतान्तेति क्षतान्तोऽन्तकः राजेति भावः तस्य दूतेन दर्शनं साक्षात्कारः तस्य योग्यः अनुरूपः तमिव राजदूतानां सन्निधौ स्वस्याधिकैश्वर्य्यप्रदर्शनाय राजभिः सुसज्जितैर्भूयते इति भावः।

(८४) अङ्गेति। अङ्गानाम् अवयवानां भङ्गः गामोड़ेति भाषा तस्मै वलनं सञ्चालनं तेन उत्क्षिप्तम् उन्नमितं भुजयुगलं बाहुद्वयं येन तथोक्तम् अतएव पर्य्यस्ताः समन्तात् प्रसृताः हस्तयोः नखानां मयूखाः किरणाः तैः। रचयन्तं कल्पयन्तम्।

(८५) नेदिष्ठेति। नेदिष्ठेषु सन्निहितेषु सलिलेषु जलेषु मणिकुट्टिमाना मणिमयगृहतलानाम् आदर्शानां दर्पणानाञ्च उदरेषु अभ्यन्तरेषु निपतद्भिः प्रतिफलद्भिः प्रतिविम्बैरपि प्रतिक्कतिभिरपि। प्रणयिनीमिव प्रेयसीमिव, स्पृशन्तीं शरीरं संवाहयन्तीं जायमानाञ्च विश्वासभूमिम् अतिविश्वस्तां विशिष्टानाम् आयतानामिति भावः श्वासानां निःश्वासानां भूमिः स्थानं तां हेतुभूतामिति भावः मूर्च्छायां निःश्वासानाम् आयतत्वं प्रसिद्धम्। बहु मन्यमानम् अतिशयेन आद्रियमाणं तदवस्थायां सन्तापाननुभवादिति भावः।

(८६) अन्तकेति। अन्तकस्य यमस्य आह्वानम् आकारणं तस्य अक्षराणि आयच्छ राजन्! मदालयमिति एवं रूपाणीति भावः तैरिव। सभयेति सभयैः

प्रस्थानकाले स्वसन्तापसन्तानम् आप्तहृदयेषु सञ्चारयन्तम् अर-तिपरिगृहीतम् ईर्ष्यया इव छायया मुच्यमानम् उद्योगमिव उपद्रवाणां सर्वास्त्रमोक्षमिव क्षामतायाः हस्तीकृतं विहस्त-तया विषयीकृतं (९७) वैषम्येण चेतनीकृतं क्षयेण गोचरी-कृतं ग्लान्या दष्टं दुःखासिकया आत्मीकृतम् अस्वास्थ्येन विधे-यीकृतं व्याधिना क्रोडीकृतं कालेन लक्ष्यीकृतं दक्षिणाशया पीतमिव पीड़ाभिः जग्धमिव जागरेण निगीर्णमिव वैवर्ण्येन ग्रासीकृतं (९८) गात्रभङ्गेन क्रियमाणमिव विपद्भिः वण्टा-

---

विध्यद्भिः इत्यर्थः भिषग्भिः चिकित्सकैः दृष्टानि तैः । अरिष्टैः दुर्लक्षणैः मृत्यु-चिह्नैरिति भावः आविष्टं युक्तम् । महेति महत् प्रस्थानम् अपुनरावृत्तये गमन-मित्यर्थः तस्य कालः समयः तस्मिन् । स्वसन्तापानां निजव्यथानां सन्तानः समूहः तम् । आप्तहृदयेषु स्वजनमनःसु सञ्चारयन्तं संक्रामयन्तं स्वजनान् नितरां सन्ताप-यन्तमिति यावत् । अरतिपरिगृहीतम् अरतिः एकत्र अनवस्थितिः वस्तुवैराग्यं वा नारीति भावः तया परिगृहीतः आश्रितः तम् अतएव ईर्ष्ययेव द्वेषेणेव छायया कान्त्या अपरया कान्तयेति भावः मुच्यमानं परित्यज्यमानम् । उद्योगमिव उपक्रममिव उपद्रवातिशययुक्तमिति भावः । सर्वास्त्रमोक्षमिव सर्वेषाम् अस्त्राणां मोक्षः प्रक्षेपः तमिव क्षामतायाः क्षीणतायाः क्षीणतया सर्वथा आक्रान्तमिति भावः । विहस्ततया व्याकुलीभावेन विहस्तव्याकुलौ समौ इत्यमरः । हस्तीकृतम् आयत्तीकृतमित्यर्थः ।

(९७) वैषम्येण विषमावस्थया दारुणावस्थयेत्यर्थः । विषयीकृतं स्वगोचरी-कृतं हस्ते कृतमित्यर्थः । क्षयेण गोचरीकृतं विषयीकृतं कवलितमित्यर्थः ग्लान्या वेदनाविशेषेण दष्टं ग्रस्तम् । दुःखासिकया कष्टावस्थानेन आत्मीकृतम् आयत्ततां नीतम् । अस्वास्थ्येन रोगजनितेन क्लेशेन विधेयीकृतं विषयीकृतम् । क्रोड़ीकृतम् उत्सङ्गं नीतमित्यर्थः लक्ष्यीकृतम् आघ्रातम् । दक्षिणाशया दक्षिणया दिशा यमपालितयेति भावः पीतमिव ग्रस्तमिव जग्धमिव भक्षितमिव निगीर्णमिव कव-लितमिव वैवर्ण्येन मालिन्येन ।

(९८) गात्रभङ्गेन गा मोड़ इति भाषा प्रसिद्धेन क्रियमाणमिव चौर्यमाणमिव ।

मानम् इव वेदनाभिः लुण्ठ्यमानमिव दुःखैः आदित्सितं दैवेन निरूपितं नियत्या घ्रातम् अनित्यत्वेन अभिभूयमानम् अभावेन परिकलितं परासुतया दत्तावकाशं क्लेशस्य निवासं वैमनस्यस्य समीपे कालस्य अन्तिकेऽन्त्योच्छ्वासस्य मुखे महाप्रयासस्य द्वारि दीर्घनिद्राया जिह्वाग्रे जीवितेशस्य वर्त्तमानम् विरलं वाचि चलितं चेतसि विह्वलं वपुषि क्षीणमायुषि प्रचुरं प्रलापे सन्ततं श्वसिते जितं जृम्भिकाभिः पराधीनम् आधिभिः (९९) अनुबद्धम् अनुबन्धिकाभिः पार्श्वोपविष्टया अनवरतरोदनोच्छूननयनया गृहीतचामरिकयापि निश्वसितैः एव वीजयन्त्या विविधौषधिधूलिधूसरितशरीरया मुहुर्मुहुः आर्य्यपुत्त्र ! स्वपिषि इति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरम् अद्राक्षीत् ।

---

वण्ठ्यमानमिव विभज्यमानमिव । आदित्सितमिव गृहीतुमिष्टमिव निरूपितं निर्धारितं ग्रहणायेति भावः नियत्या भाग्येन घ्रातमिव स्पृष्टमिव अनित्यत्वेन अस्थायित्वेन अभिभूयमानम् आक्रम्यमाणम् अभावेन अविद्यमानतया परिकलितं कवलितं परासुतया गतप्राणतया । दत्तः अवकाशः स्थानं यस्मै तं प्रायेण निधनं गतमिति भावः । निवासम् आश्रयं वैमनस्यस्य विकृतमनस्कतायाः समीपे स्थितमिति शेषः अन्तिके सन्निधौ । अन्त्योच्छ्वासस्य चरमनिःश्वासस्य मुखे वदने पतितमिति शेषः । महाप्रयासस्य महतः क्लेशस्य द्वारि स्थितमिति शेषः । दीर्घनिद्रायाः मृत्योरित्यर्थः । जिह्वाग्रे रसनाग्रे स्थितमिति शेषः । जीवितेशस्य यमस्य । विरलम् अल्पं वाचि शक्यकथने वाक्यं कथयितुमशक्तमिति भावः । चलितं भ्रष्टं चेतसि चित्ते विगतचित्तमित्यर्थः । विह्वलं विवशम् । क्षीणं क्षयं गतम् । प्रचुरं प्रभूतं प्रलापे अनवरतं प्रलपन्तमिति भावः । सन्ततं श्वसिते पुनः पुनः अतिशयेन निःश्वसन्तमित्यर्थः । जृम्भिकाभिः आलस्यप्रकटनक्रियाभिः हिक्काभिरिति वा जितम् अभिभूतम् ।

(९९) अनुबन्धिकाभिः गात्रसन्धिपीडाभिः अनुबद्धम् अविच्छिन्नम् । पार्श्वोप-

(१००) दृष्ट्वा च प्रथमदु:खसम्पातमथ्यमानमति: आशङ्कित इव भागधेयेभ्य: समभवत्। अन्तकपुरवर्त्तिनमिव च पितरम् अमन्यत। निराकृत इव च अन्त:करणेन क्षणम् आसीत्। अवधूतश्च धैर्य्येण चर्वीकृत: क्षोभेण रिक्तीकृतो रत्या विषयीकृतो विषादेन पावकमयमिव हृदयम् उद्वहन् विषमविषदूषितानीव मुह्यन्ति इन्द्रियाणि बिभ्राण: तमसा रसातलमपि विशेषयन् शून्यत्वेन आकाशमपि अतिशयानो न अविन्दत कर्त्तव्यम्। पस्पर्श च हृदयेन भियम् उत्तमाङ्गेन च गाम्।

अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयं (१) तदवस्थोऽपि निर्भरस्नेहावर्जित: प्रधावमानो मनसा प्रसार्य्य

---

विष्टया पार्श्वे आसीनया। अनवरतेति अनवरतेन अविरतेन रोदनेन उच्छूने स्फीते नयने यस्या: तथाभूतया गृहीतचामरिकया चामरेण वीजयन्त्येति यावत्। विविधेति विविधानाम् ओषधीनां धूलिभि: चूर्णै: धूसरितं शरीरं यस्या: तथाभूतया। व्याहरन्त्या जल्पन्त्या।

(१००) प्रथमेति। प्रथमेन दु:खानां सम्पातेन मथ्यमाना विलोड्यमाना मति: यस्य तथाभूत:। भागधेयेभ्य: दुर्भाग्येभ्य: पितृविनाशहेतुभ्य इति भाव:। आशङ्कित इव जाताशङ्क इव। समभवत् पितृविनाशं शङ्कितवानित्यर्थ:। अन्तकपुरवर्त्तिनमिव यमपुरगतमिव। निराकृत इव भंशित इव। अवधूत: विचलित:। चर्वीकृत: विषयीकृत: क्षोभेण दु:खेन। रिक्तीकृत: विरहित: रत्या सन्तोषेण। विषयीकृत: गोचरीकृत:। पावकमयमिव अग्निमयमिव ज्वलितमिव इति भाव:। विषमेति विषमेण दारुणेन विषेण हलाहलेन दूषितानीव मुह्यन्ति मोहं गच्छन्ति विमूढ़ानीति यावत् व्यापाररहितानीति भाव:। इन्द्रियाणि चक्षुरादीनि। तमसा अन्धकारेण मोहेन च रसातलं पातालमपि विशेषयन् अतिशयान: पातालादधिकमपि तम: आश्रयन् इत्यर्थ: आकाशमपि गगनमपि अतिशयान: अभिभवन्। कर्त्तव्यं कार्य्यं न अविन्दत न अवबुबुधे। भियं भीतिम् उत्तमाङ्गेन शिरसा गां भूमिं पस्पर्श भूमिपतित: पितरं प्रणनामेत्यर्थ:।

(१) तदवस्थोऽपि तथा अवस्थोऽपीत्यर्थ:। निर्भरेति निर्भरेण निरतिशयेन

...शरीराङ्गेन शयनात् उदगात्।
...मुजो ...
...भूनम् उपसृतं च एनं विनयावनम्रम् उन्नमय्य बलात्
उरसि निवेश्य विशन्निव प्रेम्णा निशाकरमण्डलमध्यं मज्जन्
इव अमृतमये महासरसि स्नान् इव महति (२) हरिचन्दनरस-
प्रस्रवणे अभिषिच्यमान इव तुषाराद्रिद्रवेण पीड़यन् अङ्गैः
अङ्गानि कपोलेन कपोलम् अवघट्टयन् निमीलयन् पक्ष्माग्र-
ग्रथिताजस्रास्रविस्राविणी विलोचने विस्मृतज्वरसंज्वरः सुचि-
रम् आलिलिङ्ग कथं कथमपि चिरात् (३) विमुक्तम् उपसृत्य
कृतनमस्कारं प्रणतजननीकम् उपागतम् आसीनञ्च शयना-
न्तिके पिबन् इव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत्।
पस्पर्श च पुनःपुनः वेपथुमता पाणितलेन क्षयक्षामकण्ठस्य
कृच्छ्रात् इव अवादीत् वत्स! कृशोऽसीति। भण्डिस्तु अकथ-
यत् देव! तृतीयमहः कृताहारस्य अस्य अद्य इति।

...र्हेन आवर्जितः अधीनीकृतः। उदगात् उत्तस्थौ। उपसृतम् उपगतं प्रेम्णा
...र्हेन। निशाकरमण्डलमध्यं चन्द्रमण्डलान्तरम्। स्नान् इव स्नानं कुर्वन्निव।

(२) हरिचन्दनेति। हरिचन्दनस्य रसः द्रव एव प्रस्रवणं निर्झरः तस्मिन्। तुषाराद्रिद्रवेण हिमाद्रिस्रावेण। अवघट्टयन् सङ्घर्षयन्। निमीलयन् मुद्रयन्। पक्ष्माणां नेत्रलोम्नाम् अग्रेषु ग्रथितानि सङ्गतानि अजस्राणि अविच्छिन्नानि अस्राणि वाष्पाणि विस्रवत इति तथोक्ते विलोचने नेत्रे। विस्मृतः अननुभूत इत्यर्थः ज्वरस्य संज्वरः सन्तापः येन तथाभूतः।

(३) विमुक्तं त्यक्तम्। प्रणतेति प्रणता वन्दिता जननी येन तथाभूतम् आसीन-मुपविष्टं शयनान्तिके शय्यासन्निधौ। विगतेति विगतः निमेषः यस्य तथाभूतम् अतएव निश्चलं तेन। वेपथुमता कम्पमानेन। क्षयेति क्षयेण क्षीणतया क्षामः अवरुद्धः कण्ठः यस्य तथाभूतः। भण्डिः हर्षस्य मातुलात्मजः। तृतीयम् अहः ...दिनं कृताहारस्य कृतभोजनस्य दिनद्वयं पथि नासौ आहारं कृतवान् इत्यर्थः।

(४) तत् श्रुत्वा वाष्पवेगरुद्ध्यमानाक्षरं कथं कथमपि आयतं निश्वस्य उवाच वत्स! जानामि त्वां पितृप्रियम् अतिमृदुहृदयम्। ईदृशेषु विधुरयति धीमतोऽपि धियम्। अतिदुर्धरो बान्धवस्नेह: सर्वप्रमाथी। अतो न अर्हसि आत्मानं शुचे दातुम्। (५) उद्दामदाहज्वरदग्धोऽपि दह्ये खलु अहम् अधिकतरम् अनेन आयुष्मदाधिना। निशितमिव शस्त्रं तक्ष्णोति मां त्वदीय: तनिमा। सुखञ्च राज्यञ्च वंशश्च प्राणाश्च त्वयि मे स्थिता:। यथा मम तथा सर्वासां प्रजानाम्। त्वद्विधानां पीड़ा: पीड़यन्ति सकलमेव भुवनतलम्। न हि अल्पपुण्यभाजां वंशम् अलङ्कुर्वन्ति भवादृशा:। (६) फलमस्य अनेकजन्मान्तरोपार्जितस्य अकलुषस्य कर्मण:। करतलगतमिव कथयन्ति चतुर्णाम् अपि अर्णवानाम् आधिपत्यं ते लक्ष-

---

(४) तत् दिनद्वयाभोजनमित्यर्थ:। वाष्पेति वाष्पवेगेन रुद्ध्यमाणानि अवरुध्यमानानि अक्षराणि यस्मिन् तद्यथा तथा। आयतं दीर्घम्। अतिमृदुहृदयम् अतिकोमलान्त:करणम् अल्पेनैव मद्दु:खेन त्वम् अतिविधुरतां व्रजसीति भाव:। ईदृशेषु मद्दत्सु दुर्योगेष्विति भाव: विधुरयति व्याकुलयति धीमतोऽपि बुद्धिमतोऽपि अतिधीरस्यापीत्यर्थ: धियं मतिं सर्वप्रमाथी सर्वजनव्यथाकर: अतिदुर्धर: अतिदु:खेन ध्रियते इति तथोक्त: अतिदु:खेनापि त्यक्तुमशक्य इति भाव:। शुचे शोकाय दातुं शोकाधीनं कर्तुमित्यर्थ:।

(५) उद्दामेति। उद्दामेन अत्युत्कटेन दाहज्वरेण ज्वरसन्तापेन दग्धोऽपि दह्ये भस्मीक्रिये (आयुष्मदाधिना आयुष्मत: वत्सस्य आधिना मन:पीड़या मन्निमित्तयेति यावत्।) तक्ष्णोति निकृन्तति कृशीकरोति वा तनिमा तन्वीभाव: तनिमा कृशत्वम्।

(६) अनेकेति। अनेकै: बहुभिर्जन्मान्तरै: उपार्जितम् अनुष्ठितं तस्य अकलुषस्य अनघस्य कर्मण: सुकृतरूपस्य। करतलगतमिव हस्ततलस्थितमिव लक्षणानि शुभचिह्नानि। त्वज्जन्मनैव तव उत्पत्तिमात्रेणैव कृतार्थ: चरितार्थ: सिद्ध-

[illegible] एव कृतार्थोऽस्मि निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाययति माम् औषधम्। (७) अपिच सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थम् उत्प-द्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धुमन्तो राजानः न ज्ञातिभिः। तत् उत्तिष्ठ कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयम् उपयोक्ष्ये पथ्यम्।

(८) इति एवमभिहितस्य च अस्य धक्ष्यन्निव हृदयमति-तरां शोकानलः सन्दुधुक्षे। क्षणमात्रञ्च स्थित्वा पित्रा पुनः आहारार्थम् आदिश्यमानो धवलगृहात् अवततार चकार च चेतसि अकाण्डे खलु अयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः। सामान्योऽपि तावत् शोकः सोच्छ्वासं मर-

---

काम इत्यर्थः निरभिलाषः निस्पृहः जीवितव्ये प्राणधारणे। तव जननेनैव प्राण-धारणफलं प्राप्तम् अतोऽन्यफलाकाङ्क्षाभावात् निरर्थकं प्राणधारणमिति भावः। तत् कथमौषधं सेव्यते इत्यत आह भिषगिति भिषजां चिकित्सकानाम् अनुरोधः निर्बन्धः आग्रह इति यावत् माम् औषधं पाययति न तु जीवितार्थीति भावः।

(७) अपिचेति सर्वेति सर्वासां प्रजानां पुण्यैः सुकृतैः न केवलं ममेति भावः सकलभुवनपरिपालनार्थं समस्तभूमण्डलरक्षणार्थं उत्पत्स्यमानानां जनिष्यमाणानां भवादृशां भवद्विधानां जन्मग्रहणस्य उत्पत्तिलाभस्य उपायः निमित्तभूतावित्यर्थः। उक्तञ्च वशिष्ठेन शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तक इति। प्रजाभिः भूतलवासिभिर्जनैः बन्धुमन्तः राजानः प्रजा एव राज्ञां बन्धवः न ज्ञातयस्तदन्वय-व्यतिरेकादिति भावः। सर्वाः क्रियाः स्नानाहारादिरूपाः। उपयोक्ष्ये खादिष्ये।

(८) धक्ष्यन्निव भस्मीकरिष्यन्निव सन्दुधुक्षे सन्दिदीपे। आदिश्यमानः आज्ञाप्यमानः अनुरुध्यमान इति यावत्। अकाण्डे सहसा। व्यभ्रः निरभ्रः निर्मेघ इत्यर्थः सामान्यः अल्पः शोकः प्रियजनविच्छेदजं दुःखमित्यर्थः सोच्छ्वासं

णम् (९) अनुपदिष्टौषधो महाव्याधिः अभस्मीकरणोऽग्निप्रवेशः अनुपरतस्य एव नरकवासः निर्ज्योतिः अङ्गारवर्षम् अशकलीकरणं क्रकचदारणम् (१०) अव्रणो वज्रसूचीपातः किमुत विशेषाश्रितः किमत्र करवाणीति।

(११) राजपुरुषेण अधिष्ठितश्च गत्वा स्वधाम धूममयान् इव कृताश्रुपातान् अग्निमयान् इव जनितहृदयदाहान् विषमयान् इव दत्तमूर्च्छावेगान् (१२) महापातकमयान्

---

सनिश्वासं मरणं मृत्युः मरणे निश्वासापगमः स्यात् शोकरूपे मरणे तु तत्सद्भाव इति भावः।

(९) अनुपदिष्टेति न उपदिष्टम् औषधं यस्य तथाभूतः शास्त्रोक्तभेषजरहित इत्यर्थः महाव्याधिः महान् रोगः महती व्याधिः शास्त्रीयौषधेन प्रतीकारः स्यात् शोकस्य तु न तथेति भावः। अभस्मीकरणः अदहन इत्यर्थः अग्निप्रवेशेऽङ्गदाहः स्यात् शोके तु न तथा किन्तु केवलं ज्वलनमिति भावः। अनुपरतस्य अमृतस्य नरकवासः नरके निरवच्छिन्नदुःखनिलये स्थानविशेषे वासः अवस्थानं मृतस्यैव पापातिरेकात् नरकेऽवस्थानं शोकार्तस्य तु तदभावेऽपि इति भावः। निर्ज्योतिः निष्प्रभम् अङ्गारवर्षं ज्वलदग्निस्फुलिङ्गवृष्टिः तादृशाङ्गारवर्षणे उद्योतो दृश्यते शोकरूपे तु निष्प्रभता एव भवतीति भावः। अशकलीकरणम् अखण्डीकरणं क्रकचदारणं करपत्रविदारणं करपत्रच्छेदने वस्तुनः खण्डनं भवति शोकेतु न तथा परं तादृशः क्लेश एवेति भावः।

(१०) अव्रणः अक्षतकरणः वज्रसूचीपातः कुलिशशलाकापतनं वज्रसूचीपाते शरीरं क्षतं स्यात् शोकपाते तु न तथा किन्तु तत्पतनक्लेश इति भावः। विशेषाश्रितः विशेषम् आश्रितः असामान्य इत्यर्थः पितृवियोगज इति भावः।

(११) राजपुरुषेण राजलोकेन अधिष्ठितः अनुसृतः। स्वधाम स्वभावासम्। कवलान् अग्रहीत् इत्यन्वयः। ताम् विशिनष्टि धूमेति कृतः अश्रूणां वाष्पाणां पातः येषु तान् अतएव धूममयानिव धूमाकृतीनिव धूमाच्छन्नानिव वा दृष्टेरवरोधकादिति भावः। जनितः उत्पादितः हृदयस्य दाहो ज्वलनं यैः तान् अतएव अग्निमयानिव अनलसन्निभानिति यावत्। दत्तेति दत्तः जनित इत्यर्थः मूर्च्छाया आवेगः यैः तान् अतएव विषमयानिव विषस्य मोहजनकत्वादिति भावः।

इव उत्पादितघृणान् चारमयान् इव आनीतवेदनान् कतिचित् कवलान् अग्रहीत्। (१३) आचमंश्च चामरग्राहिणम् आदिदेश विज्ञाय आगच्छ कथम् आस्ते तात इति। गत्वा च प्रतिनिवृत्य च देव! तथैवेति विज्ञापितः तेन अगृहीतताम्बूल एव उत्ताम्यता मनसा अस्ताभिलाषिणि सवितरि सर्वान् आहूय उपह्वरे वैद्याः! किमस्मिन्नेवंविधे विधेयमधुनेति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन् देव! धैर्यमवलम्बस्व कतिपयैः एव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं श्रोष्यसि पितरमिति।

तेषान्तु भिषजां मध्ये (१४) पौनर्वसवो युवा अष्टादशवर्षदेशीयः तस्मिन्नेव राजकुले कुलक्रमागतो गतः पारम् (१५) अष्टाङ्गस्य आयुर्वेदस्य भूभुजा सुतनिर्विशेषं लालितः

---

(१२) उत्पादितेति। उत्पादिता जनिता घृणा जुगुप्सा यैः तान् अतएव महापातकमयानिव ब्रह्महत्या सुरापानं स्तेयी गुर्वङ्गनागमः। महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चममित्युक्तानि पञ्चविधानि महान्ति घोराणि पातकानि पातित्यजननानि पापानि यथा लोकैः जुगुप्स्यन्ते तथा तदानीं कवलेषु घृणा अभूदिति भावः। चारेति आनीतवेदनान् जनितक्लेशान् अतएव चारमयान् इव लवणमयान् इव यथा समधिकलवणमयव्यञ्जनादिभक्षणे क्लेशः स्यात् तथा तत्कवलग्रहणेऽस्य जात इति भावः। कवलान् अन्नग्रासान्।

(१३) आचमंश्च आचमनं कुर्वंश्च। उत्ताम्यता क्लाम्यता। अस्ताभिलाषिणि अस्ताचलं गन्तुमभिलषति। उपह्वरे विजने। वैद्या इति सम्बोधनम्। विधेयं कर्त्तव्यम्। वासरैः दिवसैः। आपन्नं प्राप्तम्।

(१४) पौनर्वसवः पुनर्वसुनक्षत्रे जातः पुनर्वसोः अपत्यं पुमान् पौनर्वसव इति यद्वा पुनर्वसुना मुनिना प्रोक्तम् आयुर्वेदं वेत्ति अधीते वेति पौनर्वसवः। अष्टादशवर्षदेशीयः प्रायेण अष्टादशवर्षवयस्कः।

(१५) अष्टाङ्गस्येति। अष्टौ अङ्गानि यस्य तथोक्तस्य तथाचोक्तम्। काय-

प्रकृत्यैव अतिपटीयस्या प्रज्ञया यथावत् विज्ञाता व्याधिस्वरूपाणां रसायनो नाम वैद्यकुमारकः सास्रः तूष्णीम् अधोमुखोऽभूत्। पृष्टश्च राजसूनुना सखे! रसायन! कथय तथ्यं यदि असाधु इव पश्यसीति। सोऽब्रवीत् देव! श्वः प्रभाते यथावस्थितम् आवेदयितास्मीति।

(१६) अत्रैव च अन्तरे भवनकमलिनीपालः कोकम् आश्वासयन् अपरवक्त्रमुच्चैः अपठत्

विहग! कुरु दृढ़ं मनः स्वयं त्यज शुचमास्स्व विवेकवर्त्मनि।
सह कमलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः॥१७॥

---

बालग्रहोऽर्द्धाङ्गमूर्ध्वदंष्ट्राजराविषान्। अष्टावङ्गानि तस्याहुः चिकित्सा तेषु संस्थितेति। ततोऽल्पायुष्ट्वम् अल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान् शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्या अगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति सुश्रुतसंहिता। आयुर्वेदस्य आयुर्विद्यते लभ्यते येन तत् आयुर्वेदं वैद्यकशास्त्रमित्यर्थः तस्य। भूभुजा राज्ञा। प्रकृत्यैव स्वभावेन एव अतिपटीयस्या अतिचतुरया प्रज्ञया बुद्ध्या यथावत् यथायथं विज्ञाता वेत्ता। राजसूनुना हर्षेण।

(१६) अन्तरे अवसरे। भवनेति भवनकमलिनीपालः गृहसरसीरक्षकः कोकं चक्रवाकं कोकश्चक्रश्चक्रवाक इत्यमरः भाविविच्छेदविधुरमिति भावः। आश्वासयन् प्रबोधयन् सान्त्वयन् वा अपरवक्त्रं छन्दोविशेषम् अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ इत्युक्तलक्षणं तन्निबद्धश्लोकमिति यावत्।

(१७) विहगेति। हे विहग! पक्षिन्! त्वं स्वयं मनः दृढं धीरमिति यावत् कुरु, शुचं शोकं भावि प्रियावियोगजमिति भावः त्यज मुञ्च विवेकवर्त्मनि ज्ञानमार्गे संसारसुखस्य क्षणभङ्गुरत्वबोधके इति भावः आस्स्व तिष्ठ विचरेत्यर्थः। विरोचनः सूर्यः कमलसरोजिनीश्रिया कमलयुक्ता सरोजिनी पद्मिनी पद्मलतेत्यर्थः तस्याः श्रीः शोभा तया सह सुमेरोः कनकाचलस्य शिरः शृङ्गं श्रयति अस्तमेतीति भावः विधातुर्नियोगोऽयं यत् प्रतिदिनं सूर्यस्य उदयास्तमयौ स्याताम् उदये युष्माकं सम्मेलनात् सुखम् अस्तमये च वियोगदुःखं तदत्र वृथा शोकं परिहृत्य

(१८) तच्च आकर्ण्य वाङ्निमित्तज्ञः पितरि सुतरां जीविताशां शिथिलीचकार। गतेषु च भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपम् एव पुनः आरुरोह धवलं गृहम्। तत्र च दाहो महान् आहर हारान् हरिणि! मणिदर्पणान् मे देहि देहि वैदेहि! हिमलवैर्लिम्प ललाटं लीलावति! (१९) घनसारक्षोदधूलीर्निधेहि धवलाक्षि! निक्षिप चक्षुषि चन्द्रकान्तं कान्तिमति! कपोले कलय कुवलयं कलावति! चन्दनचर्चां रचय चारुमते! पाटय पटमारुतं पाटलिके! मन्दय दाहम् इन्दुमति! अरविन्दैः जनय जलार्द्रया मुदं मदिरावति! समुपानय मृणालानि मालति! तरलय तालवृन्तम् आवन्तिके! (२०) मूर्द्धानं धावमानं बधान बन्धुमति! कन्धरां धारय धारणिके! उरसि सशीकरं करं कुरु कुरङ्गवति! संवाहय बाहू बलाहिके!

---

धैर्यमवलम्ब्यतामिति निष्कर्षः। राज्ञः प्रभाकरवर्द्धनस्य सूर्यतुल्यस्य राजमहिष्या-सह सुमेरुशिरोरूपस्वर्गप्राप्तिः अचिरभाविनी इति धैर्यावलम्बनमेवात्र कर्त्तव्यमिति हर्षं प्रति भङ्ग्या ध्वन्यते।

(१८) वाङ्निमित्तज्ञः वाचो निमित्तं शुभाशुभलक्षणं जानातीति तथोक्तः शिथिलीचकार मन्दीचकार। क्षतधृतिः विच्युतधैर्य्यः क्षपामुखे रजनीमुखे क्षितिपालसमीपं राजान्तिकम्। तत्र क्षितिपालसमीपे। आहर अर्पय अङ्गेषु इति शेषः योज्यं हरिणि! तदाख्यायाः परिचारिण्याः सम्बोधनम् एवमुत्तरत्र। लिम्प खिप्तम् कुरु।

(१९) घनेति। घनसारस्य चन्दनस्य क्षोदाः चूर्णान्येव धूलयः ताः निधेहि अर्पय। कलय निधेहि कुवलयं नीलोत्पलम्। चन्दनचर्चां चन्दनलेपम्। पाटय सञ्चालय पटमारुतं वस्त्रव्यजनम्। मन्दय ह्रासय। जलार्द्रया जलयुक्ततालवृन्तेन। समुपानय समाहर। तरलय सञ्चालय।

(२०) मूर्द्धानं मस्तकं धावमानं यातनातिशयात् चलन्तं बधान स्थगय।

पीड़य पादौ पद्मावति! गृहाण गाढ़मङ्गम् अनङ्गसेने! का वेला विलासवति! नैति निद्रा कथाः कथय कुमुद्वति! इत्येवंप्रायान् पितुरालापान् अनवरतम् आकर्णयन् दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशाम् अनैषीत्।

(२१) उषसि च अवतीर्य्य राजद्वारदेशोपसर्पिणा परिवर्धकेन उपस्थापितेऽपि तुरङ्गे चरणाभ्यामेव आजगाम स्वमन्दिरम्। तत्र च त्वरमाणो (२२) भ्रातुः आगमनार्थम् उपर्य्युपरि क्षिप्रपातिनो दीर्घाध्वगान् प्रजविनश्च उष्ट्रपालान् प्राहिणोत्। प्रक्षालितवदनश्च परिजनोपनीतमपि प्रतिकर्म न अग्रहीत्। (२३) अग्रतः स्थितानां राजपुत्त्रयूनां विमनसां रसायनो रसायन इति जल्पितम् अव्यक्तम् अश्रौषीत्। पर्य्यपृच्छत् च तान् भद्राः! किं रसायन इति। पृष्टाश्च ते सर्वे समम् एव तूष्णीबभूवुः। भूयोभूयश्च (२४) अनुबध्यमाना दुःखेन कथंकथमपि आचचक्षिरे देव! पावकं प्रविष्ट इति। तच्च श्रुत्वा

---

कन्धरां ग्रीवाम्। उरसि वक्षसि सशीकरं साम्बुकणं संवाहय परामृश। पीड़य संवाहय। एति आगच्छति। आकर्णयन् शृण्वन् दूयमानहृदयः तप्यमानचित्तः।

(२१) उषसि प्रभाते। राजेति। राज्ञः द्वारदेशे उपसर्पति उपतिष्ठते इति तथोक्तेन परिवर्द्धकेन अश्वपालेन।

(२२) भ्रातुः राज्यवर्द्धनस्य क्षिप्रपातिनः द्रुतगामिनः। दीर्घाध्वगान् दीर्घं बहुविस्तृतम् अध्वानं मार्गं गच्छन्ति गन्तुं शक्नुवन्तीत्यर्थः तथोक्तान् प्रजविनः प्रकृष्टवेगशालिनः प्राहिणोत् प्रेषयामास। प्रतिकर्म प्रसाधनम्।

(२३) अग्रतः पुरतः स्थितानां दण्डायमानानां राजपुत्रयूनां तरुणानां राजसुतानां विमनसां विकृतचेतसां दुःखातिशयादिति भावः। जल्पितं भाषितम् अव्यक्तम् अस्पष्टम्।

(२४) अनुबध्यमानाः अनुरुध्यमानाः। आचचक्षिरे ऊचुः। पावकम् अग्निं प्रविष्टः रसायन इति शेषः।

(२५) मुष्ट इव अन्तस्तापेन सद्यो विवर्णताम् अगात्। उत्पाद्यमानमिव च न शशाक शोकान्धं धारयितुं हृदयम्। आसीच्च अस्य चेतसि कामं स्वयं न भवति न तु श्रावयति अप्रियं वचनम् अरतिकरम् इतर इव अभिजातो जनः। कृच्छ्रे च यथा अनेन अनुष्ठितम् उज्ज्वलीकृतम् अधिकतरं (२६) ज्वलनप्रवेशेन कल्याणप्रकृति कार्तस्वरमिव कौलपुत्त्रमस्येति। पुनश्च अचिन्तयत् समुचितम् एव अथवा स्नेहस्य इदम्। किमस्य तातो न तातः किंवा अम्बा न जननी वयं न भ्रातरः। (२७) अन्यस्मिन्नपि तावत् स्वामिनि दुर्लभीभवति भवन्ति असवो ध्रियमाणा ह्रीहेतवो लोके किमुत अमृतमयेऽनुजीविनां निर्व्याजबान्धवे अवन्ध्यप्रसादे सुगृहीतनाम्नि ताते। सम्प्रति साम्प्रतम् आचरितमनेन आत्मानं दहता। (२८) किं वा अस्य आकल्पम् अवस्थितस्य स्थेयसो यशोमयस्य

---

(२५) मुष्टः दग्धः। उत्पाद्यमानमिव उच्छिद्यमानमिव। न भवति न जीवति, अरतिकरम् असन्तोषकरम्। इतर इव नीच इव। अभिजातः सत्कुलजातः।

(२६) ज्वलनप्रवेशेन अग्निप्रवेशेन कल्याणप्रकृति सौम्यस्वभावं मृदुस्वभावञ्च कार्तस्वरमिव सुवर्णमिव कौलपुत्रं कुलपुत्रः कुलीनतनयः तस्य भावः कौलपुत्त्रम्। समुचितं सुसदृशम्।

(२७) अन्यस्मिन् मत्पितुरिति शेषः दुर्लभीभवति दुष्प्रापे सति असव प्राणाः ह्रीहेतवः लज्जाकराः। अमृतमये सुधामये निर्व्याजबान्धवे अकपटसुहृदि अवन्ध्यप्रसादे सफलानुग्रहे। साम्प्रतं युक्तम् आचरितम् अनुष्ठितम् अनेन रसायनेन आत्मानं देहम्।

(२८) आकल्पं प्रलयकालपर्यन्तं स्थेयसः स्थितिशीलस्य यशोमयस्य पूर्णयशसः यशोरूपस्य देहस्य वा।

दह्यते। (२९) पतित: स केवलं दहने दग्धास्तु वयम्। धन्य: खलु असौ अग्रणी: पुण्यभाजाम्। अपुण्यभाक् तु इदमेव राजकुलं कुलपुत्त्रेण यत् तादृशा वियुक्तम्। अपिच ममापि क: खलु एतेषां प्राणानां (३०) कार्य्यातिभार: कृत्यशेषो वा का वा व्यापृतता येन न अद्यापि निष्ठुरा: प्राणा: प्रतिष्ठन्ते। को वा अन्तरायो हृदयस्य येन सहस्रधा न दलतीति॥ दु:खार्त्तश्च न जगाम राजसद्म। समुत्ससर्ज च सर्वकार्य्याणि। (३१) शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गम् आत्मानम् अवगुण्ठ्य अतिष्ठत्।

(३२) इत्यम्भूते च देवे हर्षे राजनि च तदवस्थे सर्वस्य लोकस्य कपोलेषु कीलिता इव करा: लोचनेषु (३३) लेप्यमय्य इव अश्रुस्रुतय: नासाग्रेषु ग्रथिता इव दृष्टय: कर्णेषु (३४) उत्कीर्णा इव रुदितध्वनय: जिह्वासु (३५) सहजानि

---

(२९) स रसायन:। दहने अग्नौ। असौ रसायन: अग्रणी: अग्रगण्य:। तादृशा तथाविधेन कुलपुत्रेण सत्कुलजातेन वियुक्तं विरहितम्।

(३०) कार्य्यातिभार: कार्य्यगौरवं कृत्यशेष: करणीयावशेष: अस्ति इति शेष: व्यापृतता कार्य्यनियोग: अन्तराय: विघ्न:। समुत्ससर्ज परितत्याज।

(६१) शयनीये शय्यायाम् उत्तरीयवाससा उत्तरीयवसनेन सोत्तमाङ्गम् सशिरस्कमित्यर्थ: अवगुण्ठ्य आच्छाद्य।

(६२) इत्यम्भूते ईदृगवस्थे। कपोलेषु गण्डदेशेषु करा हस्ता: कीलिता इव कीलग्रथिता इव सर्वे लोका: कपोलनिहितकरा: सततं चिन्तामग्ना जाता इति भाव:।

(३३) लेपमय्य इव लिप्ता इवेत्यर्थ: अविच्छिन्ना इति भाव: अश्रुस्रुतय: अश्रुपाता:। ग्रथिता इव निबद्धा इव।

(३४) उत्कीर्णा इव सततसन्निहिता इति भाव: अनवरतं रोदनध्वनि: श्रूयते इति भाव:।

इव हाकष्टानि लपनेषु पल्लवितानि इव श्वसितानि अधरेषु (३६) लिखितानि इव परिदेवितपदानि हृदयेषु निधानीकृतानि इव दुःखानि अभवन्। (३७) उष्णाम्बुदाहभीता इव न अभजत नेत्रोदराणि निद्रा। (३८) निश्वासवातविधुता इव व्यलीयन्त हासाः। (३९) निरवशेषदग्धा इव च सन्लापेन न प्रावर्त्तत वाणी। कथासु अपि न अश्रूयन्त परिहासाः। क्व अगमन्निति न अज्ञायन्त गीतगोष्ठ्यः। (४०) जन्मान्तरानीतानि इव न असमर्थ्यन्त लास्यानि। स्वप्नेऽपि न अदृश्यन्त (४१) प्रसाधनानि। वार्त्तापि न अलभ्यत उपभोगानाम्। नामापि न अकीर्त्यत आहारस्य। (४२) खपुष्पप्रतिमानि आसन् आपानमण्डलानि। लोकान्तरम् इव

---

(३५) सहजानि इव स्वभाविकानि इव हा कष्टानि हा कष्ट' किमेतदित्येवंवचनानीत्यर्थः। लपनेषु मुखेषु पल्लवितानीव सञ्जातपल्लवानीव विस्तारं गतानीत्यर्थः श्वसितानि निश्वासाः।

(३६) लिखितानि इव चित्रितानि इव परिदेवितपदानि विलापाक्षराणि। निधानीकृतानि इव निहितानि इव।

(३७) उष्णेति। उष्णैरश्रुभिः दाहात् भीता इव त्रस्ता इव नेत्रोदराणि नयनान्तराणि न अभजत न सिषेवे।

(३८) निश्वासेति निश्वासवातेन विधुता इव सञ्चालिता इव निरस्ता इ व्यलीयन्त विलयं गता इत्यर्थः।

(३९) निरवशेषदग्धा इव निःशेषदग्धा इव प्रावर्त्तत उदचरत् वाणी वाक्। परिहासाः नर्महसितानि। गीतगोष्ठ्यः सङ्गीतालापाः।

(४०) जन्मान्तरानीतानि इव जन्मान्तरगतानि इव लास्यानि नर्त्तनानि।

(४१) प्रसाधनानि अलङ्काराः। वार्त्तापि प्रवृत्तिरपि उपभोगानां सम्भोगानाम्।

(४२) खपुष्पप्रतिमानि आकाशकुसुमनिभानि अलीकानि इत्यर्थः आपान-

अनीयन्त वन्दिवाचः। युगान्तर इव अवर्त्तन्त निर्वृतयः। पुनरपि अदह्यत शोकाग्निना (४३) मकरकेतुः। दिवापि न अमुच्यन्त शयनानि। शनैः शनैश्च (४४) महापुरुषविनिपातपिशुनाः समं समन्तात् समुदभवन् भुवने भूयांसो भूपतेः अभावाय भयम् उत्पादयन्तो (४५) भूतानां महोत्पाताः।

तथाहि (४६) दोलायमानसकलकुलाचलचक्रवाला

---

मण्डलानि पानगोष्ठ्यः। वन्दिवाचः वैतालिकस्तुतयः। अवर्त्तन्त अतिष्ठन्। निर्वृतयः सुखानि।

(४३) मकरकेतुः कामः पुनरपि अदह्यत दग्धोऽभूत् हरकोपाग्निना प्राक् दग्धोऽपीति भावः। अमुच्यन्त त्यक्तानि।

(४४) महापुरुषेति। महापुरुषस्य विनिपातः विध्वंसनं तस्य पिशुनाः सूचकाः। समं युगपत् समन्तात् चतुर्दिक्षु समुदभवन् समुद्भूताः भूयांसः बहवः उत्पादयन्तः जनयन्तः।

(४५) भूतानां प्राणिनां महोत्पाताः महान्तः उत्पाताः प्रकृतिविपर्य्यासरूपाः भूकम्पादयः तदुक्तं नारदसंहितायाम्। उत्पाता विविधा लोके दिव्यभौमान्तरीक्षजाः। दैवतौघाः प्रनृत्यन्ति पतन्ति प्रज्वलन्ति च। मुहुर्गायन्ति रोदन्ति प्रस्विद्यन्ति हसन्ति वा। वमन्त्यग्निं तथा धूमं स्नेहं रक्तं पयोजलम्। अधोमुखं प्रतिष्ठन्ति स्थानात्स्थानं व्रजन्ति वा। एवमाद्याश्च दृश्यन्ते विकाराः प्रतिमादिषु। गन्धर्वनगरञ्चैव दिवा नक्षत्रदर्शनम्। महोल्कापातनं काष्ठं तृणां रक्तप्रवर्षणम्। गान्धर्वदाहो दिग्दाहो भूमिकम्पो दिवानिशि। अनग्नौ च स्फुलिङ्गाः स्युर्ज्वलनञ्च विनेन्धनम्। निशीन्द्रचापमण्डूकशिखरं श्वेतवायसम्। प्रतिसूर्य्याश्वतस्रषु सुदिक्षु युगपद्रवैः। जम्बूको ग्रामसञ्चारः केतूनाञ्च प्रदर्शनम्। काकानामाकुलं रात्रौ कपोतानां दिवा यदीति।

(४६) दोलायमानेति दोलायमानं कम्पमानं सकलानां कुलाचलानां महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वता इत्युक्तानां चक्रवालं मण्डलं यस्यां तथाभूता पृथ्वी प्रभाकरवर्द्धनेन राज्ञेति भावः

पत्या सार्द्धं गन्तुकामा इव प्रथमम् अचलत् धरित्री। (४७) धान्वन्तरेः इव अन्तरे तस्मिन् स्मरन्तः परस्परास्फालनवाचालवीचयो विजुघूर्णिरेऽर्णवाः। (४८) भूभृदभावभीतानां विततशिखाकलापविकटकुटिलाः केशपाशा इव ऊर्द्धीबभूवुः धूमकेतवः ककुभाम्। (४९) धूमकेतुकरालितदिङ्मुखं दिक्पालारब्धायुष्कामहोमधूमधूम्रमिव अभवत् भुवनम्। (५०) भ्रष्टभासि तप्तकालायसकुम्भबभ्रुणि भानुमण्डले भयङ्करकबन्धकाय-

---

अचलत् अकम्पत। चक्रवालन्तु मण्डलमित्यमरः। भूमिकम्पः प्रादुरासीदिति भावः।

(४७) धान्वन्तरेः धन्वन्तरिरेव धान्वन्तरिः स्ववैंद्यविशेषः तस्य कर्मणि षष्ठी धन्वन्तरित्यर्थः धन्वन्तरेरिति पाठोऽपि। स्मरन्तः यदि इदानीं धन्वन्तरिरस्मदाश्रयेऽस्थास्यत् तदा राजानमरोगिणम् अकरिष्यदित्येवं चिन्तयन्त इति यावत्। तस्मिन् अन्तरे अवसरे। परस्परेति परस्परस्य आस्फालनेन वाचालाः नदन्त्य इत्यर्थः वीचयः तरङ्गाः येषां ते अर्णवाः समुद्राः विजुघूर्णिरे चुक्षुभुः। पुरा धन्वन्तरेः समुद्रगर्भस्थितिः पश्चात् तदुत्थानञ्च पुराणेषु प्रसिद्धं तथा च। अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः। उदतिष्ठत् महाराज! पुरुषः परमाद्भुतः। अमृतापूर्णकलसं बिभ्रद् वलयभूषितः। धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभागिति।

(४८) भूभृदिति भूभृतः राज्ञः अभावात् भाविविनाशात् भीताः तासां पतिवियोगार्त्तानामिति भावः ककुभां दिशां केशपाशा इव केशनिचया इव। विततेति विततेन विस्तृतेन शिखाकलापेन ज्वालानिचयेन विकटाः उत्कटाः कुटिलाः भङ्गिभूत इत्यर्थः धूमकेतवः खेचरविशेषाः अग्नयश्च ऊर्द्धीबभूवुः उत्तस्थुः उक्तञ्च कालिदासेन। उपप्लवाय लोकानां धूमकेतुरिवोत्थित इति।

(४९) धूमकेत्विति। धूमकेतुभिः करालितानि व्यस्तानि दिशां मुखानि यस्य तथोक्तम् अतएव दिक्पालेति दिक्पालैः इन्द्रादिभिः आरब्धस्य उत्पातशान्तये प्रस्तुतस्य आयुष्कामस्य राज्ञः आयुर्वर्द्धनार्थमभिलषितस्य होमस्य धूमैः धूम्रमिव धूमलमिव। कृष्णलोहितमिव।

(५०) भ्रष्टेति भ्रष्टा च्युता भासो दीप्तयः यस्य तथोक्ते निष्प्रभे इत्यर्थः। तप्तेति

व्याजेन कोऽपि पार्थिवप्राणितार्थी पुरुषोपहारमिव उपजहार। (५१) ज्वलितपरिवेशमण्डलाभोगभास्वरो जिघृक्षाजृम्भमाणस्वर्भानुभयात् उपचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानु:। (५२) अवनिपतिप्रतापप्रसाधिता: प्रथमतरकृतपावकप्रवेशा इव अदह्यन्त अनुरक्ता दिश:। (५३) स्रुतशोणितशीकरासारारुणिततनु: अनुमरणाय प्रावृतपाटलांशुकपटेव अदृश्यत वसुधावधू:। (५४) नराधिपविनाशसम्भ्रमभीते:

---

तप्तम् अत्युत्तापेन ज्वलितमित्यर्थ: यत् कालायसं कृष्णवर्णलौहविशेष: तस्य कुम्भ: तन्निर्मितकलस इत्यर्थ: तद्वत् बभ्रु पिङ्गलं तस्मिन्। भानुमण्डले सूर्य्यविम्बे। भयङ्कर: भयजनक: कबन्धकाय: छिन्नशिर: शरीरं कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवर इत्यमर: तस्य व्याजेन मिषेण कोऽपि जन इति शेष:। पार्थिवेति पार्थिवस्य राज्ञ: प्राणितं जीवितं तस्य अर्थी तत्काम इत्यर्थ: पुरुषोपहारमिव नरबलिमिव उपजहार उपहृतवान् पुरुषोपहारेण सूर्य्यदेवम् आराधितवान् इव इत्यर्थ:।

(५१) ज्वलितेति ज्वलितेन प्रदीप्तेन परिवेशमण्डलस्य परिधिमण्डलस्य आभोगेन वेष्टनेन भास्वर: दीप्यमान:। जिघृक्षेति जिघृक्षया ग्रहीतुमिच्छया ग्रासेच्छयेति यावत् जृम्भमाण: मुखं व्याददान: स्वर्भानु: राहु: तस्मात् भयं तस्मात्। उपचितेति उपरचित: वेष्टनाकारेण कल्पित: राहुप्रवेशनिवारणार्थमिति भाव: अग्निप्राकार: अग्निमयो वरण इत्यर्थ: प्राकारो वरण: साल इत्यमर: येन तथाविध इव श्वेतभानु: चन्द्र: प्रत्यदृश्यत अलक्ष्यत।

(५२) अवनीति। अवनिपते: राज्ञ: प्रभाकरवर्द्धनस्य प्रतापेन तेजसा कोषदण्डजेनेति यावत्। प्रसाधिता आवर्जिता अलङ्कृताश्च। प्रथमेति प्रथमतरम् अतिपूर्वमित्यर्थ: अवनिपते: निधनादिति भाव: कृत: पावके अग्नौ प्रवेश: याभि: तथाभूता इव अदह्यन्त दग्धा अभवन् दिग्दाहोऽभूदिति भाव:।

(५३) स्रुतेति। स्रुतानां दृष्टानामित्यर्थ:। शोणितानां रक्तानां शीकरासारेण बिन्दुधारया अरुणिता रञ्जिता तनु: कलेवरं यस्या: तथाभूता वसुधा एव वधू: राजपत्नीति भाव:। अनुमरणाय मृतस्य पत्युर्मरणात् परं मरणाय। प्रावृतेति प्रावृत: आच्छादित: परिहित इति यावत् पाटल: रक्त: अंशुकपट: वस्त्ररूपमावरणं यया तथाभूता इव। रक्तवृष्टि: आसीदिति भाव:।

लोकपालैः इव कालायसकवाटपुटैः अकालकालमेघपटलैः अरुध्यन्त दिग्द्वाराणि। (५५) प्रेतपतिप्रयाणप्रहता: पटवः पटहा इव आरटन्तो हृदयस्फोटनाः पस्फायिरे निर्घातानां घोरा निर्घोषाः। (५६) निकटीभवद्यममहिषखुरपुटोद्धूता इव द्युमणिधाम धूसरीचक्रुः क्रमेलककचकपिलाः पांशुवृष्टयः। (५७) विरसविराविणीनाम् उन्मुखीनां शिखिनो ज्वालाः

---

(५४) नराधिपेति। नराधिपस्य राज्ञः विनाशेन भाविना इति भावः सम्भ्रमः आवेगः तस्मात् भीताः तैः लोकपालैः इन्द्रादिभिरिव। कालेति कालायसं कृष्णवर्णलोहविशेषः तस्य कवाटानां पुटानि आवरणानि तैः कृष्णलौहनिर्मितकवाटपरम्पराभिरिति यावत्। अकाले ये कालमेघाः नीलजलदाः तेषां पटलानि वृन्दानि तैः दिग्द्वाराणि दिशां द्वारदेशाः अरुध्यन्त आच्छाद्यन्त राज्ञः प्रतापेन लोकपाला निष्कण्टकं स्वं स्वमधिकारं पालयन्ति स्म इदानीं तन्निधनात् असुराणां प्रादुर्भावात् पुनः स्वाधिकाराणाम् उपद्रवो भविता इति आशङ्कया कवाटावरणेन स्वाधिकारसंरोधनमिति भावः। अकालमेघोत्थानरूपा उत्पाताः प्रादुरासन् इति निष्कर्षः।

(५५) प्रेतेति। प्रेतपतेः अन्तकस्य प्रयाणे यात्रायां प्रहताः ताड़िताः पटवः गम्भीररवा इत्यर्थः पटहा इव वादित्रभेदा इव आरटन्तः नदन्तः हृदयस्फोटनाः हृदयविदारिण इत्यर्थः। निर्घातानां वायुविशेषाणां यदन्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भव इत्युक्तलक्षणानां घोरा दारुणाः निर्घोषाः शब्दाः पस्फायिरे वर्द्धिरे उदभवन् इत्यर्थः।

(५६) निकटीभवदिति। निकटीभवन् यमस्य राज्ञः प्राणानादास्यन्निति भावः। यो महिषः वाहनमित्यर्थः तस्य खुराणां पुटैः युगलैः उद्धूता इव उत्क्षिप्ता इव क्रमेलकस्य उष्ट्रस्य कचा इव लोमानि इव कपिलाः धूसराः पांशुवृष्टयः रजोवर्षणानि द्युमणेः सूर्यस्य धाम अन्तरीक्षमित्यर्थः धूसरीचक्रुः छादयामासुः इति भावः। पांशुवृष्टिरूपोत्पातः प्रादुरभवदिति निष्कर्षः।

(५७) विरसेति। विरसं कठोरं विरुवन्तीति तथोक्तानां कठोरनादिनीनाम् इत्यर्थः। उन्मुखीनाम् ऊर्द्ध्वमुखीनां शिवानां राजयः शृगालवृन्दानि शिखिनः

प्रतीच्छन्त्य इव पतन्तीः उल्का नभसो ववाशिरे शिवानां राजयः। (५८) राजधामनि धूमायमानकवरीविभागविभावितविकाराः प्रकीर्णकेशपाशप्रकाशितशोका इव प्राकाशन्त प्रतिमाः कुलदेवतानाम्। (५९) उपसिंहासनमाकुलं कालरात्रिविधूयमानवृजिनवेणीबन्धविभ्रमं बिभ्राणं बभ्राम भ्रामरं पटलम्। (६०) अटताम् अन्तःपुरस्य उपरि क्षणमपि न शशाम व्याक्रोशी वायसानाम्। (६१) श्वेतातपत्रमण्डलमध्यात् जीवितमिव राज्यस्य सरसपिशितपिण्डलो-

---

अग्नेः ज्वालाः शिखाः प्रतीच्छन्त्य इव गृह्णन्त्य इव जिघृक्षव इव इति यावत् नभस आकाशात् पतन्तीः उल्काः तेजोविशेषान् बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता इत्युक्तलक्षणान् इत्यर्थः ववाशिरे आह्वयन्ति स्म। तदानीं उल्कामुख्यः वदनेभ्य अग्निशिखा उद्गीर्य्य कठोरं न्यनदन् उल्कापाताश्च अभवन् इति वाक्यार्थः।

(५८) राजधामनि राजमन्दिरे। धूमेति धूमायमानेन धूम इव आचरतीति धूमायमानः तेन। कवरीविभागेन केशनिचयेन विभावितः प्रकटितः विकारः विकृतिभावः यासां ताः अतएव प्रकीर्णेति प्रकीर्णेन प्रस्खलितेन इति यावत् केशपाशेन प्रकाशितः शोकः याभिः ता इव। प्राकाशन्त द्वाराजन्त। शोकार्त्ता इव अलक्ष्यन्त इति भावः।

(५९) उपसिंहासनं सिंहासनस्य समीपे आकुलं चञ्चलं भ्रामरं पटलं भ्रमरवृन्दम्। कालेति कालरात्रेः संहाररजन्याः मृत्युदेव्या इति भावः। विधूयमानः विस्तार्य्यमाणः वृजिनः कुटिलः यः वेणीबन्धः केशपाशः तस्य विभ्रमः विलासः तम्। बिभ्राणं दधानं बभ्राम भ्रमति स्म। अत्र अन्यस्य विभ्रमं कथमन्यो बिभर्तु इति वेणीबन्धस्य विभ्रममिव विभ्रममिति विम्बानुविम्बप्रतीतेः निदर्शनालङ्कारः। तदुक्तं दर्पणे। सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति।

(६०) अटतामिति। अन्तःपुरस्य उपरि अटतां सञ्चरतां वायसानां काकानां व्याक्रोशी विकृतशब्दविशेषः क्षणमपि न शशाम न निवृत्त इत्यर्थः।

हितं चञ्चच्चञ्चुः उच्चैः उच्चखान खण्डं माणिक्यस्य कूजन् जरद्गृध्रः। मह्योत्पातदूयमानस्य कथमपि निनाय निशाम्।

(६२) अन्यस्मिन् अहनि समीपमस्य राजकुलात् द्रुतगतिवशविशीर्य्यमाणालङ्कारझाङ्कारिणी विजयघोषणेव विषादस्य (६३) आकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिः उद्ग्रीवाभिः किं किमिति पृच्छ्यमानेव दूरादेव भवनहंसीभिः (६४) स्खलितविशालश्रोणिशिञ्जानरशनानुराविणीभिश्च वाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिः (६५) अट्टष्टकवाटपट्टसंघट्टस्फुटितललाटपट्टरुधिर-

---

(६१) श्वेतातपत्रमध्यात् श्वेतच्छत्रमध्यात्। सरसेति सरसम् आर्द्रं तरलम् इति भावः। पिशितपिण्डं मांसपिण्डं तद्वत् लोहितं रक्तं चञ्चन्ती आमिषलोभेन स्फुरन्ती चञ्चुः यस्य तथाभूतः उच्चखान उत्खातवान् उत्पाटितवान् इत्यर्थः। कूजन् विरसं नदन् जरद्गृध्रः स्थविरगृध्रः। महेति महद्भिः अतिभयजनकैः इति भावः। उत्पातैः अशुभैः अशुभसूचकैः भूकम्पादिभिः दूयमानः सन्तप्यमानः।

(६२) वेला इति नाम्ना यशोवत्याः प्रतीहारी अन्तःपुरद्वाररक्षिणी आजगाम इति सम्बन्धः तां विशिनष्टि द्रुतेति। द्रुतगतिवशेन शीघ्रगमनवेगेन विशीर्य्यमाणैः स्खलद्भिः अलङ्कारैः झाङ्कारिणी झङ्कारशब्दवती अतएव विषादस्य दुःखस्य विजयघोषणा इव विजयख्यापनी वीर्य्यरटना इव इत्यर्थः।

(६३) आकुलेति। आकुलयोः समविषमस्थानानवबोधेन विचिन्नयोरिति भावः चरणयोः चलन्त्योः तुलाकोट्योः नूपुरयोः क्वणितेन रणितेन वाचालिताः मुखरीकृताः ताभिः उद्ग्रीवाभिः उन्नमितग्रीवाभिः भवनकलहंसीभिः गृहराजहंसीभिः पृच्छ्यमाना अनुयुज्यमाना।

(६४) स्खलितां शिथिलितां विशालायां बृहत्यां श्रोण्यां नितम्बे शिञ्जानां स्वनन्तीं रशनां काञ्चीम् अनुरुवन्तीति तथोक्ताभिः गृहसारसीभिः समुपदिश्यमानः प्रदर्श्यमानः मार्गः यस्याः यस्यै वा तथोक्ता वाष्पान्धा अश्रुजलपूरितनेत्रा इति यावत्।

पटलेन पटान्तेन इव रक्तांशुकस्य मुखम् आच्छाद्य प्ररुदती (६६) सन्तापबलविलीनकनकवलयरसधारामिव वेतलताम् उत्सृजन्ती (६७) मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं फणिनी इव निर्मोकमञ्जरीम् आकर्षन्ती नम्रांसस्रंसिना अनिलविलोलेन नीलतमेन तमालचीरचीवरेणेव शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसञ्चयेन चञ्चता प्रावृतकुचा (६८) कुचताड़नपीड़या समुच्छूनाताम्रश्यामतलं मुहुर्मुहुः अत्युष्णाश्रुप्रमार्जनप्रदग्धम् इव करकिसलयं धुनाना चक्षुर्निर्झरे (६९) शौर्य्यमिति स्नपयन्ती इव शोकाग्निप्रवेशाय

---

(६५) अदृष्टेति । अदृष्टस्य अलक्षितस्य व्यक्ततयेति भावः । कवाटपट्टस्य कवाटफलकस्य संघट्टेन सङ्घर्षेण स्फुटितात् चतात् ललाटपट्टात् भालफलकात् रुधिरपटलं रक्तनिचयः निःसृत इति भावः । तेन रक्तांशुकस्य रक्तवस्त्रस्य पटान्तेन इव अञ्चलेन इव मुखमाच्छाद्य अवगुण्ठ्य ।

(६६) सन्तापेति । सन्तापस्य बलेन वेगेन विलीनस्य गलितस्य कनकवलयस्य रसधारामिव द्रवपरम्परामिव वेतलताम् उत्सृजन्ती पातयन्ती ।

(६७) मुखेति । मुखमरुता मुखवायुना श्वासरूपेण इति भावः । तरङ्गिता सञ्जाततरङ्गा तां कुञ्चितामिति भावः उत्तरीयांशुकपटीम् उत्तरासङ्गवसनं स्फुरन्तीं प्रेङ्खन्तीं फणिनीव भुजङ्गीव निर्मोकमञ्जरीं कञ्चुकवल्लरीम् आकर्षन्ती निरुन्धाना इत्यर्थः नम्रांसस्रंसिना नम्रात् आनतात् अंसात् स्कन्धदेशात् स्रंसते लम्बते इति तथोक्तेन अनिलविलोलेन मरुत्तरलेन नीलतमेन अतिनीलेन तमालस्य वृक्षभेदस्य चीरचीवरेण सूक्ष्मत्वग्रूपेण वसनेनेव शोकोचितेन शोकसमययोग्येन धम्मिल्लरचनारहितेन बन्धनरहितेनेत्यर्थः । शिरोरुहसञ्चयेन केशनिचयेन चञ्चता स्फुरता प्रावृतकुचा आच्छादितस्तनी ।

(६८) कुचेति कुचयोः स्तनयोः ताड़नम् आघातः तेन वा पीड़ा तया समुच्छूनं सम्यक् स्फीतम् आताम्रम् आरक्तं श्यामञ्च तलं यस्य तथाभूतम् । अत्युष्णेति अत्युष्णानाम् अश्रूणां नेत्रजलानां प्रमार्जनेन प्रमोचनेन प्रदग्धं प्लुष्टमिव करकिसलयं हस्तपल्लवं धुनाना कम्पयन्ती सञ्चालयन्ती इत्यर्थः ।

स्वकपोलतलप्रतिविम्बितम् आसन्नलोकं (७०) लोललोचनप्रवृत्तैः तरलैः तारकांशुभिः श्यामायमानम् आत्मदुःखेन दिवसमपि दहन्ती इव क्व कुमारः क्व कुमारः इति पुरुषं पृच्छन्ती वेलेति नाम्ना यशोवत्याः प्रतीहारी आजगाम। (७१) विषण्णलोकलोचनप्रत्युद्गता च उपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चन्ती इव शुष्यन्तं दशनदीधितिधाराभिः आधूसरम् अधरम् अधोमुखी विज्ञापितवती देव ! परित्रायस्व परित्रायस्व जीवत्येव भर्त्तरि किमपि अध्यवसितं देव्या इति।

(७२) ततस्तत् अपरम् आकर्ण्य च्युत इव सत्त्वेन द्रुत इव दुःखेन आचान्त इव चिन्तया तुलित इव तापेन अङ्कीकृत इव आतङ्केन अप्रतिपत्तिः आसीत्। (७३) आसीच्च अस्य

---

(६९) शीर्य्येति प्रसरति चक्षुर्निर्झरे नेत्रवारिनिस्रवणे स्नपयन्ती इव स्नानं कुर्वतीव। स्वेति स्वस्य आत्मनः कपोलतले गण्डभागे प्रतिविम्बितम् आसन्नलोकं पार्श्ववर्त्तिनं जनमित्यर्थः।

(७०) लोलेति लोलात् चञ्चलात् लोचनात् नयनात् प्रवृत्ताः निःसृताः तैः। तरलैः स्फुरद्भिरित्यर्थः तारकायाः कनीनिकायाः अंशुभिः मयूखैः श्यामायमानं मलिनायमानम्।

(७१) विषण्णेति विषण्णानां विषादयुक्तानां लोकानां लोचनैः नयनैः प्रत्युद्गता अभिवीक्षितेति भावः कुट्टिमन्यस्तहस्तपल्लवा कुट्टिमे गृहाभ्यन्तरतले न्यस्तौ निहितौ हस्तपल्लवौ करकिसलयौ यया तथाभूता भूतलस्पृष्टकरेति यावत् गलन्तीभिः स्रवन्तीभिः दशनदीधितिधाराभिः दन्तकिरणपरम्पराभिः शुष्यन्तं शोषमापद्यमानम् अतएव आधूसरम् अधरं सिञ्चन्तीव क्षालयन्तीव अधोमुखी अवनतवदना। अध्यवसितम् उद्युक्तम्।

(७२) अपरम् अन्यत् अशुभमित्यर्थः शोककारणमिति भावः च्युत इव भ्रष्ट इव सत्त्वेन बलेन। द्रुत इव गलित इव आचान्त इव निपीत इव तुलित इव लघुतां नीत इव तापेन आधिना। अङ्कीकृतः क्रोडनिहित इत्यर्थः आतङ्केन उद्वेगेन अप्रतिपत्तिः इतिकर्त्तव्यविमूढः मूर्च्छित इत्यर्थः।

चेतसि प्रतिपन्नसंज्ञस्य बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन् अश्मनीव लोहप्रहारः कठिने हुतभुजम् उत्थापयति न तु भस्मसात्करोति मे निरनुक्रोशस्य कायमिति। उत्थाय च त्वरमाणोऽन्तःपुरम् अगात्। तत्र च मर्त्तुमुद्यतानां राजमहिषीणाम् अशृणोत् दूरादेव (७४) तात! चूत! चिन्तय आत्मानं प्रवसति ते जननी वत्स! जातीगुच्छ! गच्छामि आपृच्छस्व मां मया विना अद्य अनाथा भवसि भगिनि! भवनदाड़िमलते! रक्ताशोक! मर्षणीयाः पादप्रहाराः कर्णपूरपल्लवभङ्गापराधाश्च (७५) पुत्रक! अन्तःपुरबालवकुलक! वारुणीगण्डूषग्रहणदुर्ललित! दृष्टोऽसि वत्से! प्रियङ्गुलतिके! गाढ़म् आलिङ्ग मां दुर्लभा भवामि ते भद्र! भवनद्वारसहकारक! दातव्यो निवापतोयाञ्जलिः अपत्यमसि भ्रातः! पञ्जरशुक!

---

(७३) प्रतिपन्नसंज्ञस्य लब्धचैतन्यस्य दुःखाभिषङ्गः दुःखाभिघातः। अश्मनीव प्रस्तर इव निरनुक्रोशस्य निर्दयस्य निष्ठुरस्येति यावत्।

(७४) तात! वत्स! चूत! आम्र! आत्मानं स्वं चिन्तय स्वस्य योगक्षेमं स्वयमेव सम्पादयेति यावत् प्रवसति दूरं गच्छति जननी उत्पादिका या त्वामुत्पादितवती इयन्तं कालं पालितवती च सा इदानीं परलोकं गच्छतीति भावः। जातीगुच्छ! जातीस्तवक! माम् आपृच्छस्व सम्भाषस्व। अनाथा निराश्रया। रक्ताशोक! विकसिताशोक! मर्षणीयाः सोढव्याः पादप्रहाराः चरणताड़नानि पादाहतः प्रमदया विकसत्यशोक इति कविसमयसिद्धः। कर्णेति कर्णपूरार्थं कर्णभूषणार्थं पल्लवानां किसलयानां भङ्गा एव अपराधाः दोषाः।

(७५) अन्तःपुरबालवकुलक! अन्तःपुरस्थवकुलकशावक! वारुणीति वारुणी मदिरा तस्या गण्डूषं मुखपूरणं मुखपूरितमदिरारस इत्यर्थः तस्य ग्रहणेन लाभेन मत्सकाशादिति भावः। दुर्ललितः दुर्विनीत! अन्यानपेक्ष्य बहादृत इति भावः। शोकं जहाति वकुलो मुखसीधुसिक्त इति कविसमयसिद्धः। दातव्यः देयः त्वया

यथा न विस्मरसि मां किं (७६) व्याहरसि दूरीभूतास्मि ते शारिके ! स्वप्ने नः समागमः पुनर्भूयात् मातः ! मार्गलग्नं कस्य समर्पयामि गृहमयूरकम् अम्ब ! सुतवल्लालनीयमिदं हंसमिथुनं (७७) मन्दपुण्यया मया न सम्भावितोऽस्य चक्रवाकयुगलस्य विवाहोत्सवः मातृवत्सले ! (७८) निवर्त्तस्व गृहहरिणिके ! समुपनय सौविदल्ल ! वल्लभवल्लकीं परिष्वजे तावत् एनां चन्द्रसेने ! सुदृष्टः क्रियतामयं जनः विन्दुमति ! इयं ते (७९) अन्त्या वन्दना चेटि ! मुञ्च चरणौ आर्य्ये ! कात्यायनिके ! किं रोदिषि नीतास्मि दैवेन तात ! कञ्चुकिन् ! किं माम् अलक्षणां प्रदक्षिणीकरोषि धात्रेयि ! धारय आत्मानं किं पादयोः पतसि भगिनि ! गृहाण (८०) माम् अपश्चिमां कण्ठे कष्टं न दृष्टा प्रियसखी मलयवती कुरङ्गवति ! अयम् आमन्त्रणाञ्जलिः सानुमति ! अयमन्त्यः प्रणामः कुवलयवति ! एष ते अवसानपरिष्वङ्गः सख्यः ! क्षन्तव्याः प्रणयकलहाः इत्येवंप्रायान् आलापान् ।

---

इति शेषः । निवापतीयाञ्जलिः निवापतीयं तर्पणसलिलं तस्य अञ्जलिः । अपत्यमसि पुत्रोऽसि । यथा मां न विस्मरसि तथा कार्य्यमिति शेषः ।

(७६) व्याहरसि ब्रवीषि मार्गलग्नं मार्गे पथि लग्नः संसक्तः तं मार्गरोधकम् इति भावः । सुतवत् पुत्रवत् लालनीयं यत्नेन पालनीयम् ।

(७७) मन्दपुण्यया अपुण्ययेत्यर्थः अधन्ययेति यावत् सम्भावितः सम्पादितः ।

(७८) निवर्त्तस्व प्रतिनिवृत्ता भव । समुपनय समुपस्थापय सौविदल्ल ! कञ्चुकिन् सौविदल्लाः कञ्चुकिन इत्यमरः । वल्लभवल्लकीं प्रियवीणाम् । परिष्वजे आलिङ्गामि ।

(७९) अन्त्या चरमा । मुञ्च त्यज । अलक्षणां दुर्लक्षणाम् । धात्रेयि ! उपमातृतनये ! आत्मानं धारय धैर्य्यमवलम्बस्व इत्यर्थः ।

(८०) अपश्चिमाम् अपुनः प्रत्यागामिनीमित्यर्थः । आमन्त्रणाञ्जलिः विदाया

(८१) दह्यमानश्रवणश्च तैः प्रविशन्नेव निर्यान्तीं दत्तसर्वस्वापतेयां (८२) गृहीतमरणप्रसाधनां जानकीमिव जातवेदसं पत्युः पुरः प्रविविक्षन्तीं प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रात् उत्थितां कुसुम्भवभ्रुणी वाससी दिवमिव तेजसी सान्ध्ये दधानां (८४) ताम्बूलदिग्धरागान्धकाराधरप्रभापटलपाटलं पट्टांशुकमिव विधवामरणचिह्नम् अङ्ग-

---

ञ्जलिः। अन्त्यः चरमः। अवसानपरिष्वङ्गः शेषालिङ्गनम्। वन्तव्याः मर्षयितव्याः।

(८१) दह्यमानश्रवणः तैः इति तैः आलापैः प्रागुक्तैरिति यावत् दह्यमानं श्रवणं श्रोत्रेन्द्रियं यस्य तथाभूतः। मातरं ददर्शेति सम्बन्धः। तां विशिनष्टि निर्यान्तीमित्यादि। निर्यान्तीं निर्गच्छन्तीम् अन्तःपुरादिति शेषः। दत्तेति दत्तानि सर्वाणि स्वपतौ हितानि स्वापतेयानि धनानि स्वाधिकृतानि यौतकादिद्रव्याणि यया ताम् अर्थिसात् कृतसर्वधनामित्यर्थः।

(८२) गृहीतेति। गृहीतानि मरणाय मरणस्य वा प्रसाधनानि अलङ्काराः रक्तवसनादय इत्यर्थः यया तथोक्ताम्। जानकीमिव जनकदुहितरमिव सीतामिव इत्यर्थः जातवेदसम् अग्निम्। पुरः अग्रतः। प्रत्यग्रेति प्रत्यग्रेण नवेन अचिरकृतेन इति यावत् स्नानेन आर्द्रः देहः यस्याः तस्या भावः तत्ता तया हेतुना अग्निप्रवेशात् पूर्वं कृतस्नानेन भूयते इति प्रसिद्धिः। श्रियमिव लक्ष्मीमिव।

(८३) कुसुम्भेति। कुसुम्भवत् वभ्रुणी पिञ्जरे वाससी वसने परिधानमुत्तरीयञ्च इति भावः। दिवमिव आकाशमिव सान्ध्ये सन्ध्याकालीने तेजसी सूर्याचन्द्रमसौ इत्यर्थः।

(८४) ताम्बूलेति। ताम्बूलानां पुनः पुनः चर्वितानामिति भावः दिग्धो लिप्तः घनीभूत इति भावः राग एव लौहित्यमेव अन्धकारः लक्षणया आवरणभूतः यस्य तादृशः योऽधरः तस्य प्रभापटलेन प्रभापुञ्जेन पाटलम् अरुणं पट्टांशुकमिव रक्तपट्टवसनमिव। विधवेति विधवानां पत्युपरमानन्तरं सहमरणप्रवृत्तानामिति भावः मरणचिह्नं सहगमनचिह्नं रक्तपरिच्छदमिति शेषः। अङ्ग-

लग्नम् उद्वहन्तीं (८५) रक्तकण्ठसूत्रेण कुचान्तरावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वतीं (८६) तिर्य्यक्-कुटिलकुण्डलकोटिकण्टकाक्कष्टतन्तुना हारेण वलितेन सितांशुकपाशेन इव कण्ठम् उत्पीड़यन्तीं (८७) सरसकुङ्कुमाङ्गरागतया कवलितामिव दिधक्षता चितार्च्चिष्मता चितानलार्च्चनाकुसुमैः इव धवलधवलैः अश्रुविन्दुभिः अंशुकोत्सङ्गम् आपूरयन्तीं (८८) गृहदेवतामन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीम् आप्रपदीनां कण्ठे गुणकुसुम-

---

लग्नम् अङ्गासक्तम् । ताम्बूलदिग्धरागान्धकारप्रभापटलं पाटलमिति पाठः समीचीनतया प्रतिभाति ।

(८५) रक्तेति । रक्तं कण्ठसूत्रं तेन कुचान्तरावलम्बिना स्तनान्तरविलम्बमानेन स्फुटितेति स्फुटितात् विदीर्णात् भर्तृशोकेन इति भावः । हृदयात् विगलितानि रुधिराणि तेषां धाराशङ्कां प्रवाहसंशयं कुर्वतीं जनयन्तीं लोकानां दृष्टणामिति भावः ।

(८६) तिर्य्यगिति । तिर्य्यक् कुटिलेन भङ्गिमता कुण्डलकोटिकण्टकेन कुण्डलाग्रसूच्या आकृष्टः आक्रान्तः तन्तुः सूत्रं यस्य तेन वलितेन वेष्टनकारिणा हारेण सितांशुकपाशेनेव श्वेतवसनरूपेण पाशेन रज्ज्वा इत्यर्थः । उत्पीड़यन्तीम् उद्बध्नतीम् इव लक्ष्यमाणमित्यर्थः ।

(८७) सरसेति । सरसैः आर्द्रैः कुङ्कुमैः अङ्गरागो यस्याः तस्याः भावः तत्ता तया हेतुना कवलितामिव ग्रस्तामिव दिधक्षता दग्धुमिच्छता चितार्च्चिष्मता चितानलेन । चितेति चितानलस्य अर्चनाकुसुमानि तैरिव धवलधवलैः अतिस्वच्छैः अश्रुविन्दुभिः नयनजलविन्दुभिः अंशुकोत्सङ्गं वसनमध्यभागम् आपूरयन्तीं परिपूर्णं कुर्वतीं स्त्रीणामयं स्वभावः यद् वसनाञ्चलेन पूजार्थकुसुमानि उच्चिन्वन्ति इति भावः ।

(८८) पदे पदे प्रतिपादक्षेपं विगलद्भिः भ्रश्यद्भिः शोककार्श्याद्धि इस्तानाम् इति भावः वलयैः गृहदेवतानाम् आमन्त्रणाय सम्भाषणाय बलिमिव उपहार-

मालां यमदोलाम् इव आरूढ़ाम् (८६) अन्तर्गुञ्जन्मधुकरमुखरेण आमन्त्रमाणलोचनोत्पलामिव कर्णोत्पलेन प्रदक्षिणीक्रियमाणामिव मणिनूपुरबन्धुभिर्वद्धमण्डलं भ्रमद्भिर्भवनहंसै: (९०) सन्निहितप्राणसमं मरणाय चित्तमिव चित्रफलकमविचलं धारयन्तीम् (९१) अर्चाबद्धोद्धूयमानधवलपुष्पदामकां पतिव्रतापताकामिव पतिप्रासयष्टिमिष्टामुपगूह्यमानां बन्धोरिव निजचारित्रधवलस्य नृपातपत्रस्य पुरो नेत्रोदकमुत्सृजन्तीं (९२) पत्यु: पादपतनसमुद्गमदभ्यधिकवा-

---

मिव विकिरन्तीं विक्षिपन्तीम् अर्पयन्तीमिति यावत्। आप्रपदीनां पादाग्रं प्रपदमित्यमर: प्रपदात् आ आप्रपदं पादाग्रपर्य्यन्तमित्यर्थ: लम्बमाना आप्रपदीना तां गुणकुसुममालां तन्तुगुम्फितपुष्पस्रजं यमदोलामिव यमस्य प्राणिविशेषानयनार्थं दोलायन्त्रमिव आरूढ़ाम्।

(८६) अन्तरभ्यन्तरे गुञ्जद्भि: मधुकरै: भृङ्गै: मुखरं वाचालितं तेन कर्णोत्पलेन आमन्त्रमाणं सम्भाष्यमाणं लोचनं नयनम् उत्पलमिव यस्या: तामिव। प्रदक्षिणीक्रियमाणामिव अप्रदक्षिणा प्रदक्षिणा क्रियमाणा प्रदक्षिणीक्रियमाणा तामिव मणिनूपुरयो: रत्नमञ्जीरयो: बन्धुभि: सुहृद्भि: मणिनूपुरसदृशस्वनैरिति भाव:।

(९०) सन्निहितेति। सन्निहित: स्थित इति यावत् प्राणसम: पतिरिति भाव: यत्र तादृशम् अविचलं निश्चलम् एकाग्रञ्च चित्रफलकं धारयन्तीं दधानाम्।

(९१) अर्चेति अर्चा पूजा तस्यै बद्धं संयमितम् उद्धूयमानं कम्पमानं धवलं श्वेतं पुष्पदाम पुष्पमाल्यं यत्र तथोक्तां पतिव्रतापताकामिव पातिव्रत्यसूचनीं वैजयन्तीमिव पत्यु: प्रासयष्टिम् अस्त्रविशेषमिव इष्टां प्रियां भर्त्तुरिति शेष: उपगूह्यमानाम् आश्लिष्यन्तीम्। बन्धोरिव सुहृद इव निजं चारित्रं विशुद्धं चरितमिव धवलं तस्य नृपातपत्रस्य राजच्छत्रस्य पुरोऽग्रत: नेत्रोदकं वाष्पम् उत्सृजन्तीं मुञ्चन्तीम्।

(९२) पत्यु: स्वामिन: पादपतने चरणप्रणिपातकाले समुद्गमसा समुच्छलताम्

ष्पाम्भ:प्रवाहप्रतिरुद्धदृश: कथमपि प्रतिपन्नादेशान् सचिवान् सन्दिशन्तीम् (९३) अनुनयनिवर्त्तितविधुरवृद्धबन्धुवर्गवर्द्धमानध्वनिभि: गृहाक्रन्दै: आक्रृष्यमाणश्रवणां (९४) भर्त्तृभाषितनिभै: पञ्जरसिंहबृंहितैर्क्रियमाणहृदयां धात्र्या भर्त्तृभक्त्या च निजया प्रसाधितां जरत्या मूर्च्छया च संस्तुतया धार्य्यमाणां सख्या पीड़या च व्यसनसङ्गतया समालिङ्गितां परिजनेन सन्तापेन च (९५) गृहीतसर्वावयवेन परीतां कुलपुत्रोच्छ्वसितैश्च महत्तरै: अधिष्ठितां (९६) कञ्चुकिभि:

---

अभ्यधिकानाम् अधिकाधिकानां वाष्पाम्भसाम् अश्रुजलानां प्रवाहेण स्रोतसा प्रतिरुद्धा आहता दृश: नेत्राणि येषां तान् प्रतिपन्नादेशान् आज्ञाकारिण इत्यर्थ: सचिवान् अमात्यान् सन्दिशन्तीम् एवमेवं युष्माभि: वर्त्तितव्यमित्यादिशन्तीम् ।

(९३) अनुनयेति अनुनयेन सान्त्वनेन मद्वियोगदु:खं मा कुरुतेति एवं प्रबोधवाक्येन इति भाव: निवर्त्तितानां स्थिरीकृतानां विधुराणां वियोगार्त्तानां वृद्धानां बन्धुवर्गाणां वर्द्धमाना: ध्वनय: विलापाक्षराणीत्यर्थ: येषु तादृशै: गृहाक्रन्दै: गृहरुदितरवै: आकृष्यमाणं बधिरीक्रियमाणमिति भाव: श्रवणं श्रोत्रेन्द्रियं यस्या: ताम् ।

(९४) भर्तृभाषितेति । भर्त्तु: स्वामिन: भाषितं वचनं तन्निभानि तत्सदृशानि तै: पञ्जरसिंहबृंहितै: पञ्जरबद्धसिंहगर्जनै: क्रियमाणहृदयाम् आकृष्यमाणचित्ताम् । धात्र्या उपमात्रा भर्तृभक्त्या च पतिभक्त्या च प्रसाधितां प्रकर्षेण निवर्त्तनाय चेष्टिताम् अलङ्कृताञ्च । जरत्या वृद्धया कयाचिदिति शेष: मूर्च्छया च मोहेन च संस्तुतया परिचितया धार्य्यमाणां गृह्यमाणाम् । सख्या सङ्गिन्या व्यसनसङ्गतया सहायभूतया समुपस्थितया च समालिङ्गितां समाश्लिष्टाम् आक्रान्ताञ्च ।

(९५) गृहीतेति । गृहीता: सर्वे अवयवा अङ्गानि येन तथोक्तेन परीतां युक्ताम् । कुलपुत्रेति कुलपुत्राणां सत्कुलजातानाम् उच्छ्वसितै: दीर्घनि:श्वासै: महत्तरै: अतिमहद्भि: कुलपुत्रा: कुलीनतनया: उच्छ्वसिता: ऊर्द्ध्वश्वासाश्च तै: महत्तरै: महामहिमशालिभि: पुरुषैश्च अधिष्ठितां परिवृताम् ।

दुःखैश्च अतिवृद्धैः अनुगतां भूपालवल्लभान् कौलेयकान् अपि सास्रमालोकयन्तीं सपत्नीनामपि पादयोः पतन्तीं चित्र-पुत्त्रिका अपि (९७) आमन्त्रयमाणां गृहपतत्त्रिणामपि अञ्जलिं पुरस्तात् उपरचयन्तीं पशूनपि आपृच्छमानां भवन-पादपानपि परिष्वजमानां मातरं ददर्श।

दूरादेव च (९८) वाष्पायमाणदृष्टिः अभ्यधात् अम्ब! त्वमपि मां मन्दपुण्यं त्यजसि प्रसीद निवर्त्तस्व इत्यभिदधान एव च सस्नेहमिव (९९) नूपुरमणिमरीचिभिः चुम्ब्यमान-चूडः चरणयोः न्यपतत्। देवी तु यशोवती (१००) तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये गुरुणा गिरिणा इव उद्वेगवेगेन अवष्टभ्यमाना मूर्च्छान्धतमसं रसातलमिव प्रविशन्ती (१) वाष्पप्रवाहेण इव चिरनिरोध-सम्पिण्डितेन स्नेहसम्भारेण निर्भराविर्भूतेन अभिभूयमाना

---

(९६) कञ्चुकिभिः प्रागुक्तैः गृहान्तरचारिभिः द्विजविशेषैः अतिवृद्धैः अति-स्थविरैः महद्भिश्च अनुगताम् अनुसृताम्। भूपालवल्लभान् राजप्रियान् कौलेय-कान् कुक्कुरान् सास्रं सवाष्पम्।

(९७) आमन्त्रयमाणां सम्भाषमाणाम्। गृहपतत्त्रिणां गृहपालितपक्षिणाम्। उपरचयन्तीं कुर्वतीम्। पशून् गवादीन् आपृच्छमानां सम्भाषमाणाम्। भवन-पादपान् गृहवृक्षकान् परिष्वजमानाम् आलिङ्गन्तीम्।

(९८) वाष्पायमाणदृष्टिः अश्रुपूर्णनयनः।

(९९) नूपुरेति। नूपुरयोः ये मणयः रत्नानि तेषां मरीचिभिः किरणैः चुम्ब्यमाना स्पृश्यमाना चूड़ा यस्य तथाभूतः।

(१००) तथा तेन प्रकारेण तदवस्थायामित्यर्थः कनीयसि कनिष्ठे प्रेयसि अतिप्रियतमे। गिरिणा इव पर्वतेन इव उद्वेगवेगेन दुःखातिरेकेण अवष्टभ्यमाना आक्रम्यमाणा मूर्च्छा एव अन्धतमसं गाढ़ान्धकारम्।

(१) वाष्पप्रवाहेण अश्रुस्रोतसा। चिरनिरोधसम्पिण्डितेन चिरं निरोधः अव-

कृतप्रयत्नापि निवारयितुं न शशाक वाष्पोत्पतनम्। (२) उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकूता च गद्गदिकागृह्यमाणगलविकला निःसामान्यमन्युतरलीक्रियमाणाधरोद्देशा (३) पुनरुक्तस्फुरणनिपीडितनासापुटा निमील्य नयने नयनाम्भःसेकप्लवेन प्लावयन्ती विमलौ कपोलौ संछाद्य (४) करनखमयूखमालाखचितदशान्तेन तनुना तन्वन्तरनिर्गच्छदच्छास्रस्रोतसा इव अंशुकपटान्तेन किञ्चित् उत्तानितं वदनेन्दुं दूयमानमानसा (५) स्मरन्ती प्रस्नुतस्तनी प्रसवदिवसात् आरभ्य सकलम् अङ्कशायिनः शैशवम् अस्य (६) ज्ञातिगृहगतहृदया

---

रोधः तेन सम्पिण्डितः समवेतः तेन। स्नेहसम्भारेण स्नेहातिशयेन। निर्भराविर्भूतेन नितरामुच्छलितेन इत्यर्थः। अभिभूयमाना बाध्यमाना। वाष्पोत्पतनम् अश्रुप्रवाहम्।

(२) उत्कटेति। उत्कटेन अत्यन्तेन कुचयोः स्तनयोः उत्कम्पेन प्रकटितः प्रकाशितः असह्यः दुःषहः शोकाकूतः शोकाभिषङ्गः यया तथाभूता गद्गदिकेति। गद्गदिकया गद्गदस्वरेण गृह्यमाणः अभिभूयमानः गलः कण्ठः तेन विकला विह्वला। निःसामान्येति निःसामान्येन असाधारणेन मन्युना शोकेन तरलीक्रियमाणः स्फूर्यमाणः अधरोद्देशः अधरभागः यस्याः तथाभूता।

(३) पुनरुक्तेन पुनः पुनः प्रवृत्तेन स्फुरणेन निपीडितं विचलितं नासापुटं यस्याः तथोक्ता। नयनाम्भःसेकप्लवेन अश्रुजलाभिषेकप्रसरेण प्लावयन्ती आपूरयन्ती।

(४) करेति। करनखानां हस्तनखानां मयूखमालाभिः किरणराजिभिः खचितः व्याप्तः दशान्तः दशाप्रान्तो यस्य तथोक्तेन। तनुना सूक्ष्मेण तन्वन्तरेति तन्वन्तरात् अवयवमध्यात् निर्गच्छत् निःसरत् अच्छं निर्मलम् अस्रस्रोतः अश्रुप्रवाहः यस्य तथाभूतेन। अंशुकपटान्तेन वसनाञ्चलेन उत्तानितम् उन्नमितं वदनेन्दुं मुखचन्द्रम्। दूयमानमानसा सन्तप्यमानचित्ता।

(५) स्मरन्ती ध्यायन्ती अङ्कशायिनः उत्सङ्गवर्त्तिनः अस्य हर्षस्य।

अम्ब ! तात ! न पश्यतं पापां परलोकप्रस्थितां माम् एव अति-दुःखिताम् इति मुहुर्मुहुः आक्रन्दन्ती पितरौ, हा वत्स ! विश्रान्त-भागधेयया न दृष्टोऽसि इति (७) प्रेष्ठं ज्येष्ठं तनयम् असन्निहितं क्रोशन्ती अनाथा जातेति श्वशुरकुलवर्त्तिनीं दुहितरम् अनु-शोचन्ती निष्करुण ! किम् अपराद्धं तव अमुना जनेन इति दैवम् उपालभमाना नास्ति मत्समा सीमन्तिनी दुःखभागिनी इति निन्दन्ती बहुविधम् आत्मानं (८) मुषितास्मि नृशंस ! त्वया इति अकाण्डे कृतान्तं गर्हमाणा मुक्तकण्ठम् अतिचिरं प्राकृतप्रमदा इव प्रारोदीत्।

(९) प्रशान्ते च मन्युवेगे सस्नेहम् उत्थापयामास सुतम्। हस्तेन च अस्य प्ररुदितस्य (१०) पक्ष्मपालीपुञ्जमाननख-किरणनिवहां द्रुताम् इव अधिकतरं चरन्तीं दृष्टिम् उन्म-मार्ज। (११) स्वयमपि कठोररागपरिपीयमानेन धवलिम्ना

---

(६) शातीति। ज्ञातिगृहं गतं हृदयं यस्याः तथोक्ता मृतपितृकुलेति भावः। परलोकप्रस्थितां परलोकं प्रस्थातुमुद्यताम्। विश्रान्तभागधेयया अभाग्यया इत्यर्थः।

(७) प्रेष्ठम् अतिप्रियम् ज्येष्ठं राज्यवर्द्धनम् असन्निहितं दूरस्थमिति यावत् क्रोशन्ती उद्दिश्य रुदतीत्यर्थः। दुहितरं राज्यश्रियम्। उपालभमाना तिरस्कुर्वती। सीमन्तिनी नारी।

(८) मुषिता विप्रलब्धा हृतसर्वस्वा इति यावत्। नृशंस ! निष्ठुर ! अकाण्डे सहसा कृतान्तम् अन्तकम्। गर्हमाणा निन्दन्ती। मुक्तकण्ठम् उच्चैरिति यावत्। प्राकृतप्रमदा इव सामान्या नारी इव।

(९) प्रशान्ते निवृत्ते मन्युवेगे शोकप्रसरे। सुतं हर्षम्।

(१०) पक्ष्मेति। पक्ष्मणां नेत्रलोम्नां पालीषु श्रेणीषु पुञ्जमानः सङ्क्रममाणः नखकिरणानां निवहः यस्यां तां द्रुतामिव द्रवीभूतामिव चरन्तीं स्रवन्तीम्।

(११) कठोरेति। कठोरेण घनेन रागेण लौहित्येन परिपीयमानः निरस्य-

मुच्यमानोदरे (१२) क्वथदस्रश्वयत्पर्य्यन्ते शुक्लशीकरतारकितपक्ष्मणी (१३) सूक्ष्मतराश्रुविन्दुपरिपाटीपतनानुबन्धविधुरे लोचने पुनः पुनः आपूर्य्यमाणे प्रमृज्य (१४) वाष्पार्द्रगण्डगृहीतां च श्रवणशिखरम् आरोप्य शोकलम्बाम् अलकलताम् (१५) अधःस्रस्तविलोलवालिकाव्याकुलिताञ्च समुत्सार्य्य तिरश्चीं चिकुरसटाम् (१६) अश्रुप्रवाहपूरितम् आर्द्रञ्च किञ्चित् च्युतमुत्क्षिप्य हस्तेन स्तनोत्तरीयं तरङ्गितमिव नखांशुपटलेन (१७) मग्नांशुकपटान्ततनुताम्रलेखालाञ्छितलावण्यकूणिका-

---

मान इत्यर्थः तेन। धवलिम्ना धावल्येन मुच्यमानं चीयमाणम् उदरम् अभ्यन्तरं ययोः तथाभूते अनवरतरोदनेन आताम्रे इत्यर्थः।

(१२) क्वथदिति क्वथता उष्णतां गच्छता अस्रेण नयनवारिणा श्वयन् स्फीततां गच्छन् पर्य्यन्तः प्रान्तभागः ययोः तादृशे। शुक्लेति शुक्लेन धवलेन शीकरेण वाष्पकणेन तारम् अत्यन्तं तारकितानि सञ्जाततारागि पक्ष्माणि लोमानि ययोः तथाविधे।

(१३) सूक्ष्मेति सूक्ष्मतराणाम् अतिसूक्ष्माणाम् अश्रुविन्दूनां परिपाट्याः परम्परायाः पतनानुबन्धेन पतनसातत्येन अविच्छिन्नपतनेन इत्यर्थः विधुरे कातरे। आपूर्य्यमाणे भ्रियमाणे अश्रुभिरिति शेषः।

(१४) वाष्पेति वाष्पेण आर्द्रः गण्डः कपोलः तेन गृहीता तां वाष्पार्द्रकपोलपतितामिति यावत्। श्रवणेति श्रवणशिखरं कर्णाग्रं कर्णोपरीत्यर्थः आरोप्य स्थापयित्वा शोकलम्बां शोकेन लम्बते इति तथोक्ताम्।

(१५) अध इति अधः स्रस्ता बन्धनशैथिल्यात् अधः पतिता विलोला विशीर्य्यन्ती वालिकया कयाचित् व्याकुलिता विपर्य्यासेन धृता तां तिरश्चीं वक्रां भङ्गिमतीमिति भावः चिकुरसटां केशराजिम्।

(१६) अश्रुप्रवाहेति अश्रूणां प्रवाहेण पूरितं सिक्तमित्यर्थः। च्युतं स्खलितं स्वस्थानादिति भावः।

(१७) मग्नेति मग्नस्य अश्रुलुतयोः कपोलयोः संसक्तस्य अंशुकपटान्तस्य उत्त-

वर्जितराजतराजहंसास्यभृङ्गारकास्यसमुद्गीर्णेन पयसा प्रक्षाल्य मुखकमलं (१८) कलमूकलोककरविधृते धौतवासःशकले शुचिनि समुन्मृज्य पाणी (१९) सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनः आयतं निश्वस्य अवादीत् ।

वत्स ! नासि नप्रियो निर्गुणो वा परित्यागार्हो वा । स्तन्येन एव सह त्वया पीतं मे हृदयम् । अस्मिंश्च समये (२०) प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः । अपिच पुत्रक ! (२१) पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणाकरुणा वा न अस्मि लक्ष्मीः (२२) क्षमा वा । कुलकलत्रम् अस्मि चारित्रधना धर्मधवले कुले जाता । किं विस्मृतोऽसि मां (२३) समरशतशौण्डस्य पुरुषप्रकाण्डस्य केशरिण इव केश-

---

रौप्यवसनाञ्चलस्य तनूनाम् अवयवानां तन्तूनामिति भावः ताम्रलेखाभिः रक्तरेखाभिः लाञ्छितं विलक्षणीकृतं लावण्यं कान्तिः यस्याः तथाभूता या कुब्जिका भग्नपृष्ठपरिचारिकाविशेषः तया आवर्जितस्य आनीतस्य राजतस्य रौप्यमयस्य राजहंसास्यभृङ्गारकस्य राजहंसमुखाकाररचितभृङ्गारस्य इत्यर्थः । आस्यं मुखं तस्मात् समुद्गीर्णेन निर्गतेन पयसा जलेन ।

(१८) कलेति । कलमूकः जन्ममूकः लोकः तेषां करेण विधृतं तस्मिन् । धौतवासःशकले धौतवसनखण्डे शुचिनि धवले पवित्रे वा पाणी हस्तौ समुन्मृज्य निर्जलीकृत्येत्यर्थः ।

(१९) सुतेति । सुतस्य हर्षस्य वदने विनिहितम् अर्पितं निभृतं निश्चलं नयनयुगलं यया तथाभूता ।

(२०) प्रभूतेति । प्रभूतेन समधिकेन प्रभुप्रसादेन स्वामिभक्त्या अन्तरिता आच्छादिता ।

(२१) पुरुषान्तरेति । पुरुषान्तरस्य अपरपुरुषस्य विलोकने व्यसनिनी सक्ता । राज्योपकरणेति । राज्यस्य उपकरणे उपकारक्रियायाम् अकरुणा निर्दया ।

(२२) क्षमा पृथिवी । कुलकलत्रं कुलाङ्गना । चारित्रधना विशुद्धचरित्रधना । धर्मधवले धर्मोज्ज्वले ।

(२३) समरशतशौण्डस्य शतशतसंग्रामविजयिनः । पुरुषप्रकाण्डस्य पुरुष-

रिणीं गृहिणीम्। वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्य्यात्। एवंविधेन पित्रा ते भरतभगीरथनाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः। (२४) आसेवितः सेवासम्भ्रान्तानन्तसामन्तसीमन्तिनीसमावर्जितजाम्बूनदघटाभिषेकः शिरसा। (२५) लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन। आपीतौ युष्मद्विधैः पुत्रैः (२६) अमित्रकलत्रवन्दीवृन्दविधूयमानचामरमरुच्चलचीनांशुकधरौ पयोधरौ। सपत्नीनां शिरःसु निहितं (२७) नमन्निखिलकटककुटुम्बिनीकिरीटमाणिक्यमालार्च्चितं चरणयुगलकम्। (२८) एवं कृतार्थसर्वावयवा

---

श्रेष्ठस्य। केशरिणः सिंहस्य केशरिणीं सिंहीम्। वीरजा वीरप्रसूता वीरकन्या इत्यर्थः। वीरजाया वीरपत्नी वीरजननी वीरपुत्रा। पराक्रमक्रीता वीर्य्यशुल्का। नरेन्द्रवृन्दारकेण नरेन्द्रश्रेष्ठेन।

(२४) आसेवितः लब्धः। सेवेति सेवायै सम्भ्रान्ताः व्यापृता अनन्ताः बहव इत्यर्थः सामन्तानाम् अधीश्वराणां सीमन्तिन्यः नार्य्यः ताभिः समावर्जितैः समाहृतैः गृहीतैर्वा जाम्बूनदघटैः काञ्चनकलसैः अभिषेकः स्नानमित्यर्थः।

(२५) लब्धः प्राप्तः। मनोरथैर्दुर्लभः दुष्प्रापः महादेवी राज्ञः प्रधानमहिषी तस्याः यः पट्टबन्धः शिरोभूषणभूतः किरीटबन्धनं तेन सत्कारलाभः पूजालाभः सम्मानातिशय इत्यर्थः। ललाटेन भालदेशेन। एतेन सर्वोच्चपदप्राप्त्या आशास्यान्तरं मे नास्ति येन अतः परं जीव्यते इति व्यज्यते।

(२६) अमित्रेति। अमित्राणां शत्रूणां कलत्राणि नार्य्य एव वन्द्यः विजयहृताः स्त्रियः तासां वृन्दानि समूहाः तैः विधूयमानानां सञ्चाल्यमानानां चामराणां मरुता चलतः स्फुरतः चीनांशुकस्य सूक्ष्मवसनस्य धरौ धारकौ पयोधरौ स्तनौ।

(२७) नमदिति। नमन्तीनां प्रणिपतन्तीनां निखिलानां समस्तानां कटककुटुम्बिनीनां सैनिकरमणीनां किरीटेषु या माणिक्यमालाः ताभिः अर्चितं अञ्चितमित्यर्थः।

किमपरम् अपेक्षे क्षीणपुण्या । (२९) मर्त्तुम् अविधवैव वाञ्छामि । न च शक्नोमि (३०) दग्धस्य भर्त्तुः आर्य्यपुत्त्रविरहिता रतिः इव निरर्थकान् प्रलापान् कर्त्तुम् । पितुश्च ते पादधूलिः इव प्रथमं (३१) गगनगमनम् आवेदयन्ती बहुमता भविष्यामि शूरानुरागिणीनां सुराङ्गनानाम् । (३२) प्रत्यग्रदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः । मरणाच्च मे जीवितम् एव अस्मिन् समये साहसम् । अतिशीतलः (३३) पतिविरहशोकानलात् अक्षयस्नेहेन्धनात् अस्मात् अनलः । (३४)

---

(२८) एवम् इत्थम् । कृतार्थेति कृतार्थाः सिद्धकामाः सर्वे अवयवा यस्याः तथाभूता अपरम् अन्यत् अपेक्षे आशां करोमि इत्यर्थः । यतः क्षीणपुण्या पुण्यक्षयवती पूर्वोक्तभोगेन इति भावः पुण्यान्तरसद्भावेतु भर्त्तुरीदृशी दशा न स्यादिति भावः ।

(२९) अविधवा अननुभूतवैधव्येति यावत् सधवेति भावः ।

(३०) दग्धस्य श्मशानानलेन हरकोपेन च प्लुष्टस्य भर्त्तुः स्वामिनः सम्बन्धविवक्षया षष्ठी । निरर्थकान् निष्प्रयोजनान् ।

(३१) गगनगमनं स्वर्गगमनम् आकाशगमनञ्च आवेदयन्ती निवेदयन्ती बहुमता बहुसत्कृता शूरेषु वीरेषु अनुरागिण्यः तासां सुराङ्गनानां देवमहिलानाम् । पदधूलिः प्रागागता यथा कस्यापि आगमनं ज्ञापयति तथा अहं तव पितुर्वीरस्य आगमनं तासाम् अग्रतो निवेद्य बहु सम्मानं ताभ्यः लप्स्ये इति भावः ।

(३२) प्रत्यग्रेति प्रत्यग्रम् अभिनवम् अननुभूतपूर्वमिति यावत् दृष्टम् अनुभूतं यत् दारुणं दुःखं भर्तृपीड़ाजनितमिति भावः तेन दग्धायाः भस्मीभूताया मे । प्रत्यक्षदृष्टेत्यादि पाठान्तरम् । धक्ष्यति भस्मीकरिष्यति धूमध्वजः अग्निः । साहसं सहसा बलेन कृतम् । मरणस्य अक्लेशहेतुत्वात् जीवनस्य तु क्लेशहेतुत्वादिति भावः ।

(३३) पतिविरहशोकानलात् भर्तृमरणशोकाग्नेः । अक्षयेति अक्षयम् अविनाशि स्नेह एव इन्धनं काष्ठं यस्य तथाभूतात् । अनलः लौकिकः अग्निरित्यर्थः अतिशीतलः क्षयशीलेन्धनत्वादिति भावः ।

कैलासकल्पे प्रवसति जीवितेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते। अपिच जीवन्तीम् अपि मां (३५) नरपतिमरणावधीरणमहापातकिनीं न स्पृश्यन्ति पुत्र ! पुत्रराज्यसुखानि। दुःखदग्धायाश्च हृदि भूतिः अमङ्गला च अप्रशस्ता च निरुपयोगा च भवति। वत्स ! (३६) विश्वस्तानां स्थास्नुना यशसा स्थातुम् इच्छामि लोके न वपुषा। तत् अहमेव त्वां तावत् तात ! प्रसादयामि न पुनः (३७) मनोरथप्रातिकूल्येन कदर्थनीया अस्मि। इत्युक्त्वा पादयोः अपतत्।

(३८) स तु ससम्भ्रमम् अपनीय चरणयुगलम् अवनमिततनुः उभयकरविधृतवपुषम् (३९) अवनिगतशिरसम् उदनमयत् मातरम्। दुर्निवारताञ्च शुचः समवधार्य्य (४०) कुल-

---

(३४) कैलासकल्पे कैलासपर्वतनिभे अतिनिर्मलाशये इति ध्वनिः जीवितेश्वरे प्राणनाथे प्रवसति परलोकं जिगमिषति इत्यर्थः। जरती या तृणकणिका तृणलेशः तद्वत् लघीयसि अतिलघुनि जीविते लोभः स्पृहेत्यर्थः। इति क्व कुत्र घटते ?-युज्यते ? न कुत्रापीत्यर्थः जीवितेश्वरापगमे जीवितस्य स्थितिः न कथमपि सङ्गच्छतेऽन्वयव्यतिरेकाभ्यामिति भावः।

(३५) नरपतीति नरपतेः मरणं तस्य अवधीरणम् अवज्ञानं स्वजीवनरक्षणकामनया उपेक्षणं तेन यत् महत् पातकं तत् विद्यतेऽस्या इति तथाभूतां स्वामिमरणेऽपि जिजीविषुमिति भावः न स्पृश्यन्ति महापातकिस्पर्शनिषेधादिति भावः। भूतिः स्थितिरित्यर्थः निरुपयोगा निष्प्रयोजना।

(३६) विश्वस्तानां विधवानां विश्वस्ता विधवे समे इत्यमरः। स्थास्नुना स्थिरतरेण यशसा भर्त्तुः सहगमनजनितया इति भावः।

(३७) मनोरथप्रातिकूल्येन अभीष्टव्याहत्या कदर्थनीया क्लेशनीया।

(३८) अपनीय अपसार्य्य अवनमिततनुः प्रणमितकायः। उभयेति उभाभ्यां कराभ्यां विधृतं गृहीतं वपुः शरीरं यस्याः तथोक्ताम्।

(३९) अवनिगतशिरसं भूतलपतितमस्तकाम् उदनमयत् उत्थापयामास।

योषिदुचिताञ्च तामेव श्रेयसीं मन्यमानः क्रियां कृतनिश्चयाञ्च तां ज्ञात्वा तूष्णीम् अधोमुखोऽभवत्।

अभिनन्दति हि स्नेहकातरापि (४१) कुलीनता देशकालानुरूपम्। देवी अपि यशोवती परिष्वज्य समाघ्राय च तं शिरसि निर्गत्य चरणाभ्यामेव च अन्तःपुरात् (४२) पौराक्रन्दनिर्भराभिः उपरुध्यमाना इव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैः दृष्टिपातैः (४३) प्रविकसितरक्तपङ्कजपुञ्जैः इव अर्च्चयित्वा भगवन्तं भानुमन्तमिव मूर्त्तिः ऐन्दवी चित्रभानुं प्राविशत्। (४४) इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात् अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्यमानतारकं तारकराजमिव अस्तम् अभिलषन्तं जनयितारम्। (४५) असह्यशोकोद्रेकाभिद्रुतश्च त्याजितः पितृस्नेहेन

---

(४०) कुलयोषिदुचितां कुलाङ्गनोचितां तां क्रियाम् अग्निप्रवेशरूपाम् इत्यर्थः।

(४१) कुलीनता सत्कुलजातता। तं हर्षम्।

(४२) पौरेति पौराणां पुरवासिनाम् आक्रन्देन निर्भराः आपूरिता इत्यर्थः ताभिः। उपरुध्यमाना इव निरुध्यमाना इव।

(४३) प्रविकसितेति प्रकर्षेण विकसितानां रक्तपङ्कजानां रक्तपद्मानां पुञ्जैः राशिभिः इव भानुमन्तमिव सूर्य्यमिव भानुमन्तं दीप्तिमन्तञ्च ऐन्दवी इन्दुश्चन्द्रः तत्सम्बन्धिनी अमावस्यायाम् ऐन्दवी कला सूर्य्यं प्रविशतीति शास्त्रात्। चित्रभानुम् अग्निम्।

(४४) इतरः हर्षः। स्वल्पेति स्वल्पः अवशेषो यस्य तथाभूता प्राणवृत्तिर्यस्य तथोक्तम्। परिवर्त्यमानतारकं परिवर्त्यमाने विलीयमाने विकृतिं नीयमाने इत्यर्थः तारके कनीनिके यस्य तथाभूतं परिवर्त्यमानाः पश्चिमाशायां लम्ब्यमानाः तारका नक्षत्राणि यस्य तथाभूतञ्च। तारकराजमिव चन्द्रमिव अस्तं नाशम् अस्ताचलञ्च। जनयितारं पितरम्।

धैर्य्यम् आश्लिष्य अस्य (४६) सकलदुर्मदमहीपालमौलिमाला- लालितौ पादपद्मौ (४७) अन्तस्तापात् मुखचन्द्रमिव द्रवी- भवन्तं दहनज्योत्स्नाजालमिव द्रवतामापद्यमानम् अचि- लावण्यमिव विलीयमानं मुखचन्द्रसुधारसमिव (४८) स्यन्- मानम् अच्छाच्छम् अश्रुस्रोतसां सन्तानं महामेघमयविलोच- इव वर्षन् (४९) निरन्तरविमुक्तारावः चिरं रुरोद।

राजा तु तम् उपरुध्यमानदृष्टिः अपि अविरतरुदितशब्दा- श्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैः अवादीत् पुत्र ! न अर्हसि एवं भवितुम्। भवद्विधा न हि अमहासत्त्वाः। (५०) महास- त्त्वता हि प्रथमम् अवलम्बनं लोकस्य पश्चात् राजबीजिता।

---

(४५) असह्येति। असह्यस्य दुःसहस्य शोकस्य उद्रेकेण आवेगेन अभिद्रुतः अभिभूत इत्यर्थः पितृस्नेहेन धैर्य्यं त्याजितः त्यक्तधैर्य्य इत्यर्थः। अस्य पितुः पादपद्मौ आश्लिष्य आलिङ्ग्य वचसि स्थापयित्वा इत्यर्थः।

(४६) पादपद्मौ विशिनष्टि सकलेति सकलैः सर्वैः दुर्मदैः दुरन्तैः पराजितैः इति भावः महीपालैः मौलिमालया किरीटश्रेणिभिः लालितौ सेवितौ।

(४७) अन्तस्तापात् आभ्यन्तरसन्तापात् मुखचन्द्रमिव द्रवीभवन्तं गलन्तं दहन- ज्योत्स्नाजालमिव दहनकिरणनिचयमिव द्रवताम् आपद्यमानं जलरूपेण परिणमदिव। विलीयमानं विलयमापद्यमानम्।

(४८) स्यन्दमानं स्रवन्तम् अच्छाच्छम् अत्यच्छम् अश्रुस्रोतसां वाष्पवारिप्रवा- हाणां सन्तानं समूहम्।

(४९) निरन्तरविमुक्तारावः अविरतविमुक्तनादः सशब्द इति भावः।

(५०) उपरुध्यमानदृष्टिः उपरुध्यमाना आव्रियमाणा दृष्टिः यस्य तथाभूतः। अविरतेति अविरतम् अविच्छिन्नं रुदितशब्दम् आश्रितं श्रवणं यस्य तथाभूतः प्रत्यभिज्ञाय पुत्रोऽयमिति विज्ञाय इत्यर्थः। एवम् अधीर इति भावः। अमहासत्त्वाः अमहानुभावाः नहि महानुभावसम्पन्ना एवेत्यर्थः।

(५१) सत्त्ववताञ्च अग्रणी: सर्वातिशयाश्रित: क्व भवान् ? क्व वैक्लव्यम् ?। कुलप्रदीपोऽसीति (५२) दिवसकरसदृशतेजसस्ते लघूकरणमिव। पुरुषसिंहोऽसीति (५३) शौर्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव। क्षिति: इयं तव इति (५४) लक्षणाख्यातचक्रवर्त्तिपदस्य पुनरुक्तम् इव। गृह्यतां श्रीरिति स्वयमेव (५५) श्रिया गृहीतस्य विपरीतमिव। (५६) अध्यास्यताम् अयं लोक इति उभयलोकविजिगीषो: अपुष्कलमिव।

---

(५१) महासत्त्वता महानुभावत्वम् अवलम्बनम् आश्रय: प्रथमं मुख्यम् आद्यं वा। राजवीजिता राजा वीजी वीजपुरुष: यस्य तस्य भाव: राजपुत्रत्वमित्यर्थ: पश्चात् द्वितीयमवलम्बनमित्यर्थ:। केवलेन राजवंशजेन लोकस्थिति: कर्त्तुं न शक्यते तेन तु महानुभावेन शक्यन्ते एव इति भाव:। सत्त्ववतां सत्त्वसम्पन्नानाम् अग्रणी: अग्रगण्य: सर्वेभ्य: अतिशय: अतिरिक्तो गुणराशिरित्यर्थ: तम् आश्रित: भवान् क्व ? वैक्लव्यं व्याकुलत्वञ्च क्व ? नैतयो: सङ्गति: युज्यते इति भाव:। कुलप्रदीप: वंशोज्ज्वलकर इत्यर्थ:। इति उक्तमिति शेष: एवमुत्तरत्र।

(५२) दिवसकरसदृशतेजस: सूर्य्यसमतेजस: ते तव लघूकरणमिव कुलप्रदीपोऽसि इति उक्तौ तव लाघवं प्रतिभाति तस्मात् प्रदीपाधिकतेजा: त्वमिति भाव:।

(५३) शौर्य्येति। शौर्य्येण पट्वी या प्रज्ञा बुद्धि: शौर्य्यातिशयशालिनी मति: इत्यर्थ: तया उपबृंहित: वर्द्धित: पराक्रम: यस्य तथाभूतस्य ते इति शेष: निन्दा इव निन्दाकरणमिव इतोऽपि अधिकोक्ति: त्वयि सङ्गच्छते इति भाव:।

(५४) लक्षणेति। लक्षणेन ध्वजादिचिह्नेन आख्यातं कथितं चक्रवर्त्तिपदं साम्राज्यं यस्य तथाभूतस्य ते इति शेष:। पुनरुक्तमिव लक्षणेनैव प्रागुक्तत्वात् आम्रेडितमिव।

(५५) श्रिया लक्ष्म्या। विपरीतमिव असदृशमिव इत्यर्थ:।

(५६) अध्यास्यताम् अधिष्ठीयताम् अयं लोक: मर्त्त्यलोक: राजसिंहासनमिति भाव: उभयलोकविजिगीषो: मर्त्त्यस्वर्गयो: जयाभिलाषिण:। अपुष्कलमिव अपूर्णम् इव।

(५७) स्वीक्रियतां कोष इति शशिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव। (५८) आत्मीक्रियतां राजकमिति गुणगणात्मीकृतजगतो गतार्थमिव। उह्यतां राज्यभार इति भुवनत्रयभारोचितस्य (५९) अनुचितनियोग इव। प्रजाः परिरक्ष्यन्तामिति (६०) दीर्घदोर्दण्डार्गलितदिङ्मुखस्य अनुवाद इव। परिजनः परिपाल्यतामिति (६१) लोकपालोपमस्य आनुषङ्गिकमिव। शस्त्राभ्यासः कार्य्य इति (६२) धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य किम् आदिश्यते। (६३) निगृह्यतां चापलमिति नूतनतरवयसि निगृहीतेन्द्रियस्य निरवकाशा इव मे वाणी। (६४) निरवशेषतां शत्रवो

---

(५७) स्वीक्रियतां गृह्यतां कोषः धनभाण्डागारम्। शशीति शशिनः चन्द्रस्य करनिकरः मयूखनिचयः तद्वत् निर्मलानां यशसां सञ्चये एकः केवलः अभिनिवेशः विद्यते यस्य तथाभूतस्य ते इति शेषः। निरुपयोगमिव निष्प्रयोजनमिव।

(५८) आत्मीक्रियताम् आयत्तीक्रियतां राजकं राजसमूहः। गुणेति गुणानां दयादाक्षिण्यादीनां गणैः आत्मीकृतम् अधीनीकृतं जगत् येन तथाभूतस्य ते इति शेषः गतार्थमिव व्यर्थमिव निष्प्रयोजनमिव।

(५९) अनुचितनियोगः अयुक्तादेश इव।

(६०) दीर्घेति। दीर्घेण दोर्दण्डेन भुजदण्डेन अर्गलितं निरुद्धमिति यावत् दिङ्मुखं येन तथोक्तस्य ते इति शेषः। अनुवाद इव भाषानुकरणमिव।

(६१) आनुषङ्गिकमिव अनुषङ्गादागतमिव अवान्तरकार्य्यस्य उपदेश इव नित्यत्वादनादेशेऽपि तत्कार्य्यस्य सिद्धत्वादिति भावः।

(६२) धनुर्गुणेति। धनुषो गुणाः मौर्व्यः ताभिः किण एव कलङ्कः चिह्नं तेन कालीकृतः श्यामीकृतः प्रकोष्ठः करनिमणिबन्धयोः अभ्यन्तरभागः यस्य तथाभूतस्य।

(६३) निगृह्यतां निवर्त्यतां चापलं चाञ्चल्यम्। नूतनतरवयसि नूतनतरम् अतिशयेन नूतनं वयो यस्य तादृशे नवयौवने इत्यर्थः। निगृहीतेन्द्रियस्य वशीकृतेन्द्रियस्य निरवकाशा इव अनवसरा इव।

नेया इति सहजस्य तेजस एव इयं चिन्ता। इत्येवं वदन्नेव (६५) अपुनरुन्मीलनाय निमिमील राजकुलसिंहो लोचने।

अस्मिन्नेवान्तरे पूषा (६६) अपि आयुषा इव तेजसा व्ययुज्यत। ततश्च लज्जमान इव (६७) नरपतिजीवितापहरणजनितात् आत्मापराधात् अधोमुखः समभवत्। (६८) भूपालाभावशोकशिखिना इव अन्तस्ताप्यमानः ताम्रतां प्रपेदे। मन्दं मन्दम् (६९) अप्रियप्रश्नोत्तरपरिहारार्थमिव स्थितिमनुवर्त्तमानो लौकिकीम् अवातरद्दिवः। दिवसुरिव (७०) जनेशाय जलाञ्जलिम् अपरजलनिधिसमीपमुपससर्प। (७१) सद्योदत्तजलाञ्जलिः दुःखदहनदग्धमिव करसहस्रम् आलोहितम् अधत्त।

---

(६४) निरवशेषतां निःशेषताम्। सहजस्य स्वाभाविकस्य तेजसः प्रतापविशेषस्य चिन्ता भावना।

(६५) अपुनरुन्मीलनाय पुनरुन्मीलननिवृत्तये इत्यर्थः। राजकुलसिंहः प्रभाकरवर्द्धन इति यावत्।

(६६) पूषा सूर्य्यः व्ययुज्यत व्यहीयत।

(६७) नरपतेरिति। नरपतेः राज्ञः जीवितस्य अपहरणं तेन जनितः तस्मात् आत्मापराधात् निजकृतात् दोषात् अधोमुखः अवनतवदनः अस्ताचलगमनोन्मुख इत्यर्थः।

(६८) भूपालेति। भूपालस्य राज्ञः अभावेन निधनेन यः शोकः स एव शिखी अग्निः तेनेव। ताम्रतां रक्तवर्णताम्।

(६९) अप्रियेति। अप्रियप्रश्नस्य राजविनाशप्रश्नस्य उत्तरपरिहारार्थमिव कथं राजा मृतः केन रोगेण वा इत्यादिजिज्ञासाया उत्तरपरिजिहीर्षया इव लौकिकीं लोकसम्बन्धिनीं स्थितिं मर्य्यादां व्यवहारमिति यावत्। अनुवर्त्तमानः अनुसरन् यथा आत्मीयलोकाः कस्यापि विनाशमुपश्रुत्य तद्बन्धुसमीपे तद्विशेषप्रश्नार्थमागच्छन्ति तद्वदिति भावः। दिवः अन्तरीक्षात् अवातरत् अवारोहत्।

(७०) जनेशाय नरपतये प्रभाकरवर्द्धनाय। जलाञ्जलिं तर्पणजलपूर्णमञ्जलिम् उपससर्प उपजगाम।

(७१) सद्य इति। सद्यः तत्क्षणं दत्तः जलाञ्जलिः येन तथाभूतः। कर-

एवञ्च (७२) महानराधिपनिधननिधीयमानविपुलवैराग्ये इव शान्तवपुषि विशति गिरिगुहागह्वरं गभस्तिमालिनि (७३) समुपोह्यमानमहाजनाश्रुदुर्दिनार्द्रीकृते इव निर्वाति आतपे (७४) रोदनताम्रसकललोकलोचनरुचा इव लोहितायति जगति (७५) उष्णायमानानेकनरनिश्वाससन्तापप्लुष्टे इव च नीलायमाने दिवसे (७६) नृपानुगमनप्रचलितया इव लक्ष्म्या मुच्यमानासु कमलिनीषु पतिशुचा इव (७७) परिवृत्तच्छायायां श्यामायमानायां भुवि कुलपुत्त्रेषु इव परित्यक्तनिजकलत्रेषु कृतकरुणप्रलापेषु वनान्तान् आश्रयत्सु दुःखितेषु

---

सहस्रं कराणां किरणानां हस्तानाञ्च सहस्रम् आलोहितम् आरक्तम् अधत्त दधार।

(७२) महेति। महानराधिपस्य महाराजस्य निधनेन मरणेन निधीयमानं जन्यमानं विपुलं महत् वैराग्यं संसारेषु वीतस्पृहत्वमित्यर्थः यस्य तथाभूते इव। शान्तवपुषि सौम्यकलेवरे निस्तेजसीति भावः। गिरिगुहागह्वरं गिरेः अस्ताचलस्य गुहा एव गह्वरं विवरम्। गभस्तिमालिनि अंशुमालिनि सूर्य्ये इत्यर्थः।

(७३) समुपोह्येति। समुपोह्यमानैः संरुह्यमाणैः शरीरेषु पतनात् धार्य्यमाणैरिति भावः महाजनानां साधुजनानाम् अश्रुदुर्दिनैः नेत्रवारिवर्षणैः आर्द्रीकृते इव आर्द्रतां नीते इव। निर्वाति निर्वाणं गच्छति आतपे सूर्य्यालोके।

(७४) रोदनेति। रोदनेन ताम्राणि रक्तानि सकलानां लोकानां लोचनानि नेत्राणि तेषां रुक् प्रभा तया इव। लोहितायति लोहित इव आचरति।

(७५) उष्णेति। उष्णायमानैः उष्णैरिव आचरद्भिः अनेकेषां नराणां निःश्वासैः सन्तापः सम्यक् तपनं तेन प्लुष्टे इव दग्धे इव नीलायमाने कृष्णायमाने अन्धकारागमादिति भावः।

(७६) नृपेति। नृपस्य राज्ञः अनुगमनं तस्मै प्रचलिता प्रस्थिता तया इव लक्ष्म्या राजपत्न्येति भावः मुच्यमानासु विहीयमानासु। पतिशुचा इव पतिमरणशोकेन इव।

(७७) परिवृत्तच्छायायां परिवृत्ता विपरीता छाया आतपप्रतिपक्षजातिः

चक्रवाकेषु (७८) छत्त्रभङ्गभीतेषु इव निगूढ़कोशेषु कुशेशयेषु स्फुटितदिग्वधूहृदयरुधिरप्लवे इव गलिते रक्तातपे क्रमेण च (७९) लोकान्तरम् उपगतवति अनुरागशेषे जाते तेजसाम् अधीशे गगनतलवितन्यमानबहलरागपाटलायां प्रेतपताकायाम् इव प्रवृत्तायां सन्ध्यायां (८०) शवशिविकालङ्कारकृष्णचामर-मालासु इव स्फुरन्तीषु दर्शनप्रतिकूलासु तिमिरलेखासु (८१) असितागुरुकालकाष्ठायां केनापि चितायाम् इव रचितायां रजन्यां ( ८२ ) दन्तामलपत्त्रप्रसाधितकर्णिकासु केसर-

---

कान्तिश्च यस्याः तथाभूतायां श्यामायमानायां श्यामतामापद्यमानायामित्यर्थः भुवि पृथिव्याम्। कुलपुत्रेषु इव सत्कुलजातेषु इव परित्यक्तानि रागमरण-दुःखात् विधिनियोगाच्च निजकलत्राणि निजस्त्रियः यैः तथोक्तेषु कृतकरुणप्रलापेषु करुणं विलपत्सु इत्यर्थः। वनान्तान् जलान्तदेशान् काननान्तांश्च।

(७८) छत्त्रेति। छत्त्रभङ्गः राजविनाशज उपद्रवः छत्त्राकारपत्त्रसङ्कोचश्च तेन भीतेषु इव। निगूढ़ेति निगूढ़ः गोपितः सम्पुटितश्च कोषः कर्णिका धनसञ्चयश्च यैः तथोक्तेषु कुशेशयेषु कमलेषु। स्फुटितेति स्फुटितानि पतिशोकात् विदीर्णानि दिशो वध्व इव तासां हृदयानि तेषां रुधिरप्लवे इव रक्तप्रवाहे इव गलिते निःसृते रक्तातपे रक्तवर्णसौरालोके।

(७९) लोकान्तरम् उपगतवति प्राप्तवति अनुरागशेषे रक्तवर्णमात्रावशिष्टे लोकानुरागमात्रावशेषे च जाते भूते तेजसामधीशे सूर्ये राज्ञि च। गगनेति गगनतले वितन्यमानेन विस्तीर्यमाणेन बहलेन प्रभूतेन रागेण लौहित्येन पाटला श्वेतरक्ता तस्यां प्रेतपताकायामिव प्रेतवैजयन्त्यामिव प्रवृत्तायाम् उपस्थितायाम्।

(८०) शवस्य मृतस्य शिविका वाहनविशेषः तस्याः अलङ्काराः कृष्णाः चामर-मालाः चामरश्रेणयः तासु इव स्फुरन्तीषु द्योतमानासु दर्शनप्रतिकूलासु दृष्टि-रोधिनीषु तिमिरलेखासु अन्धकारश्रेणिषु।

(८१) असितेति। असितानि कृष्णानि अगुरूणि इव कालानि कृष्णवर्णानि काष्ठानि इन्धनानि काष्ठा दिशश्च यस्यां यस्या वा तथाभूतायाम्।

मालाकल्पितमुण्डमालिकासु अनुमर्त्तुमिव उद्यतासु प्रहसितमुखीषु कुमुदलक्ष्मीषु (८३) अनवरतत्रिदशविमानकिङ्किणी-क्वणिते इव श्रूयमाणे (८४) शाखिशिखरकुलायनिलीयमान-शकुनिकुलकलकूजिते (८५) नाकपथप्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्र इव पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि नरेन्द्रः स्वयं-समर्पितस्कन्धैः गृहीत्वा शवशिविकां शिविसमः सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपति-समुचितायां चितायां हुताशनसत्क्रियया यशःशेषताम् अनी-यत।

---

(८२) दन्तामलपत्रवत् गजदन्तनिर्मितस्वच्छपत्रवत् प्रसाधिताः अलङ्कृताः शोभिता इति यावत्। कर्णिकाः वीजकोषाः यासां तासु। केसरेति केसराणां किञ्जल्कानां मालया श्रेण्या कल्पिता रचिता मुण्डमाला हारविशेषः याभिः तथाभूतासु। उद्यतासु प्रवृत्तासु पतिशोकादिति भावः। प्रहसितमुखीषु हसन्मुखीषु कुमुदलक्ष्मीषु उत्पलश्रीषु राजमहिषीषु इति भावः।

(८३) अनवरतेति। अनवरतम् अविच्छिन्नं त्रिदशविमानस्य देवविमानस्य राज्ञः स्वर्गगमनार्थम् आगतस्येति भावः किङ्किणीनां क्षुद्रघण्टिकानां क्वणिते इव निस्वने इव।

(८४) शाखीति। शाखिनां वृक्षाणां शिखरेषु अग्रेषु ये कुलायाः नीड़ानि कुलायो नीड़मस्त्रियामित्यमरः तेषु निलीयमानानां प्रविशतामित्यर्थः शकुनिनां पक्षिणां कुलस्य वृन्दस्य कलकूजितं तस्मिन्।

(८५) नाकपथेति। नाकपथं स्वर्गपथं प्रस्थितः प्रचलितः यः पार्थिवः राजा तस्मै प्रत्युद्गतः अभिनन्दनार्थम् उपस्थितः पुरुहूत इन्द्रः तस्य आतपत्रमिव छत्रमिव तस्मिन्। नरेन्द्रः प्रभाकरवर्द्धनः समर्पितस्कन्धैः दत्तस्कन्धैः सामन्तैः अधीश्वरैः। शवशिविकां शववाहनीमित्यर्थः। शिबिसमः शिविर्नामनृपतिविशेषः तत्समः। नरपतिसमुचितायां राजयोग्यायां चन्दनकाष्ठादिरचितायामिति भावः। हुताशनसत्क्रियया अग्निसत्कारेण यशःशेषतां कीर्तिमात्रावशेषताम् अनीयत प्रापित इत्यर्थः दग्धदेहः कृत इति भावः।

देवोऽपि हर्षः (८६) पुञ्जीभूतेन सकलेनेव जीवलोकेन लोकेन राजकुलसम्बद्धेनाशेषेण शोकमूकेन परिजनेन च परिवृतः अन्तर्वर्त्तिनापि पितृशोकानलतप्तेन स्नेहद्रवेण वह्निरिव सिच्यमानो निर्व्यवधानायां धरण्याम् उपविष्ट एव तां निशीथिनीं भीमरथीभीमाम् अखिलां सराजको जजागार । अजनि च अस्य चेतसि (८७) ताते दूरीभूते अनाथीभूतः सम्प्रति एतावान् खलु जीवलोको तथाहि लोकस्य भग्नाः पन्थानो मनोरथानां खिलीभूतानि भूरिस्थानानि स्थगितानि आनन्दस्य द्वाराणि सुप्ता सत्यवादिता लुप्ता लोकयात्रा (८८) विलीना बाहुशालिता प्रलीना प्रियालापिता प्रोषिताः (८९) पुरुष-

---

(८६) पुञ्जीभूतेन समवेतेन राजकुलसम्बन्धेन राजकुलसंक्रान्तेन अशेषेण समस्तेन शोकमूकेन शोकनिस्तब्धेन इत्यर्थः । अन्तर्वर्त्तिना अन्तःस्थितेन । निर्व्यवधानायां निरासनायामिति यावत् । निशीथिनीं रजनीं भीमरथीभीमां भीमरथी नरकनदी कालरात्रिः वा तद्वत् तां केचित्तु सप्तसप्तत्या वर्षैः तत्सङ्ख्यकमासैः दिनैश्च तावद्भिः गतैः एकारात्रिर्भवति सा भीमरथीत्युच्यते तामतिक्रान्तो वर्षशतजीवी नरो भवति इति आचक्षते । अखिलां सर्वां सराजकः राजभिः परिवृतः ।

(८७) दूरीभूते परलोकं गते सति सम्प्रति जीवलोकः संसारः अनाथीभूतः प्रभुशून्यः एतावान् खलु एतत् पर्य्यन्त एव इतःपरं संसारसुखस्य अपगमाल्लोकानामिति भावः । लोकस्य पन्थानः स्थितयः भग्नाः विपर्य्यस्ताः । मनोरथानाम् अभिलाषाणां भूरिस्थानानि प्रभूता विषयाः खिलीभूतानि अप्रहतीभूतानि रुद्धीभूतानि इति यावत् । आनन्दस्य प्रमोदस्य द्वाराणि कपाटानि इति यावत् स्थगितानि निरुद्धानि इति यावत् । सत्यवादिता सुप्ता निद्रिता लोकयात्रा संसारयात्रा सुखेन संसारस्थितिः इति यावत् ।

(८८) बाहुशालिता बाहुवीर्य्यमिति भावः । विलीना विलयं गताः । प्रियालापिता मधुरालापाः प्रलीनाः विध्वस्ताः ।

कारविहारविकाराः समाप्ता समरशौण्डता ध्वस्ता (९०) परगुणप्रीतिः विश्रान्ता विश्वासभूमयः अपदानि अवदानानि निरुपयोगानि शास्त्राणि निरवलम्बना (९१) विक्रमैकरसता कथावशेषा विशेषज्ञता ददातु जनो (९२) जलाञ्जलिमौर्जित्याय प्रतिपद्यतां प्रव्रज्यां प्रजापालता बध्नातु (९३) वैधव्यवेणीं वरमनुष्यता समाश्रयतु राजश्रीः आश्रमपदं परिधत्तां (९४) धवले वाससी वसुमती वहतु वल्कले विलासिता तपस्यतु तपोवनेषु तेजस्विता (९५) प्राप्नोतु चीवरे वीरता

---

(८९) पुरुषेति । पुरुषकारस्य विहारः विलसितं तस्य विकाराः विविधरूपता इत्यर्थः । प्रोषिताः दूरं गता इति भावः । समरशौण्डता संग्रामवीरता समाप्ता समाप्तिं गता ।

(९०) परगुणप्रीतिः परगुणाभिनन्दनमिति यावत् ध्वस्ता नाशं गता । विश्वासभूमयः विश्वासस्थानानि विश्रान्ताः विश्रान्तिं गताः । अवदानानि यशस्कराणि कर्माणि इत्यर्थः । अवदानं कर्मवृत्तमित्यमरः । अपदानि निराश्रयाणि । शास्त्राणि निरुपयोगानि निष्प्रयोजनानि ।

(९१) विक्रमेति । विक्रमे एव एकः मुख्यः रसः रागो येषां तस्य भावः निरवलम्बना निराश्रया । विशेषज्ञता विशिष्टं ज्ञानं कथावशेषा कथामात्रशेषा विनष्टा इत्यर्थः ।

(९२) और्जित्याय तेजस्वितायै जलाञ्जलिं तर्पणसलिलं ददातु । जनः लोकः । और्जित्यं विलुप्तमिति भावः । प्रजापालता प्रजापालनकर्म प्रव्रज्यां सन्यासधर्मं प्रतिपद्यताम् आश्रयतु ।

(९३) वरमनुष्यता मनुष्यश्रेष्ठता वैधव्यवेणीं विधवाधार्यं वेणीबन्धमित्यर्थः बध्नातु गृह्णातु । राजश्रीः राजलक्ष्मीः आश्रमपदं तपोवनमित्यर्थः समाश्रयतु गच्छतु ।

(९४) वसुमती पृथ्वी धवले शुभ्रे न तु रक्ते वाससी वसने परिधत्तां धारयतु वैधव्यादिति भावः । विलासिता विलसनशीलता वल्कले तरुत्वचौ वहतु धारयतु तपस्यां करोतु इति भावः । तेजस्विता प्रतापशालित्वं तपोवनेषु तपस्यतु तपश्चरतु ।

क्व गम्यतां पुनस्तस्य कृते कृतघ्नतया ? (८६) क्व पुनः प्राप्स्यति तादृशान् महापुरुषनिर्माणपरमाणून् परमेष्ठी ? शून्याः संवृत्ता दश दिशो गुणानां जगत् जातम् अन्धकारं धर्मस्य निष्फलम् अधुना जन्म शस्त्रोपजीविनाम्। तातेन विना (८७) कुतस्त्या दिवसम् असमसमररससमारब्धकलहकथा-कण्टकितसुभटकपोलभित्तयो वीरगोष्ठ्यः ? अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनः तन्मुखसरोजम् ? जन्मान्तरेऽपि पुनः (८८) परिष्वज्येत तत् लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलम् ? लोकान्तरेऽपि पुत्र ! पुत्र ! इति आलपतः श्रूयेत सा सुधा-रसमुद्गिरन्ती (८९) मथ्यमानक्षीरसागरोद्गारगम्भीरा भारती

---

(८५) प्रावृणोतु आच्छादयतु चीवरं वसनखण्डं कौपीनं तदुचितमुत्तरीयञ्च इति भावः। वीरता वीरधर्मः कृतघ्नतया तस्य देवस्य पितुरिति भावः कृते निमित्तं तन्मरणादेव कारणादित्यर्थः पुनः क्व गम्यताम् ? न कुत्रापि इति भावः।

(८६) परमेष्ठी विधाता तादृशान् तथाभूतान् महापुरुषनिर्माणस्य परमाणून् अतिक्षुद्रान् भूतांशनिवहान् इत्यर्थः। क्व कुत्र पुनः प्राप्स्यति ? न कुत्रापि इति भावः। गुणानां दयादाक्षिण्यादीनां दश दिशः शून्याः संवृत्ताः जाताः, धर्मस्य जगत् अन्धकारं तमोमयमिति यावत् जातम्। अधुना शस्त्रोपजीविनां शस्त्रव्यव-सायिनां जन्म निष्फलं निरर्थकं तन्निकषरूपस्य सज्जनस्य अपायात् तद्गुणपरीक्षाया अयोगादिति भावः।

(८७) कुतस्त्याः कुत आगताः न कुतोऽपि आगमिष्यन्तीति यावत् न पुनः भविष्यन्तीति भावः। दिवसं समस्तं दिनं व्याप्येत्यर्थः अत्यन्तसंयोगे द्वितीया। असमेति असमेन अतुल्येन समररसेन संग्रामानुरागेण समारब्धा या कलहकथा विरोधवाक्यं वीरवचनमिति भावः तया कण्टकिताः हर्षितलोमानः सुभटानां योद्धॄणां कपोलभित्तयः गण्डतटाः यासु ताः वीरगोष्ठ्यः वीरसभाः।

(८८) परिष्वज्येत आलिङ्ग्येत लोहेति लोहस्तम्भात् अभ्यधिकः गरिमा गौरवं गर्भे यस्य तथाभूतं भुजयुगलं बाहुद्वयम्। उद्गिरन्ती वर्षन्ती।

इति। एतानि च अन्यानि च चिन्तयत एव अस्य कथमपि सा क्षयम् इयाय यामिनी।

ततः शुचेव मुक्तकण्ठम् (१००) आरटत्सु कृकवाकुकुलेषु गृहगिरितरुशिखरेभ्यः पातयत्सु आत्मानं मन्दिरमयूरेषु परित्यक्तनिजनिवासेषु च वनाय प्रस्थितेषु पत्ररथकुलेषु सद्यस्तनूभूते ताम्यति तमसि (१) मन्दीभूतात्मस्नेहेषु अभावम् अभिलषत्सु प्रदीपेषु (२) स्फुरदरुणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि (३) प्रभातसमयेन समुच्चीयमानासु पार्थिवास्थिशकलकलासु इव कलविङ्ककन्धराधूसरासु तारकासु

---

(९९) मथ्यमानेति मथ्यमानस्य विलोड्यमानस्य क्षीरसागरस्य उन्नादवत् निनादवत् गम्भीरा भारती वाणी।

(१००) आरटत्सु ध्वनत्सु कृकवाकुकुलेषु ताम्रचूड़वृन्देषु। गृहेति गृहगिरितरूणां शिखराणि अग्राणि तेभ्यः आत्मानं पातयत्सु अवरोहत्स्विति भावः मन्दिरमयूरेषु गृहमयूरेषु। परित्यक्तनिजनिवासेषु परित्यक्तनीड़ेषु वनाय कर्मणि चतुर्थी प्रस्थितेषु चलितेषु पत्ररथकुलेषु पक्षिवृन्देषु। सद्यः तत्क्षणं तनूभूते विरलीभूते ताम्यति अवसादं गच्छतीत्यर्थः तमसि अन्धकारे ॥ १ ॥

(१) मन्दीभूतेति। मन्दीभूतः ह्रासं गतः आत्मनः स्वस्य स्नेहः तैलं ममता च येषां तेषु अभावं नाशम् अभिलषत्सु वाञ्छत्सु निर्वाणोन्मुखेषु इति भावः।

(२) स्फुरदिति स्फुरन् उद्गच्छन् अरुणः वल्कलमिव तेन प्रावृतम् आच्छादितं वपुर्यस्य तथाभूते प्रव्रज्यामिव सन्न्यासधर्ममिव प्रतिपन्ने प्राप्ते नभसि आकाशे।

(३) प्रभातसमयेन प्रातःकालेन समुच्चीयमानासु एकैकशः सञ्चीयमानासु विलयं नीयमानास्विति भावः पार्थिवस्य राज्ञः अस्थ्नां शकला कला इव चन्द्रकला इव तास्विव कलविङ्कस्य ग्रामचटकस्य कन्धरा इव धूसराः तासु तारकासु नक्षत्रेषु। दाहात् परमस्थिसञ्चयनकृत्यमुक्तं कात्यायनेन। अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनं स्मृतम्। ततो यज्ञीय वृक्षोत्थां शाखामादाय वाग्यतः। प्रतस्थास्थीनि गृह्णाति प्रधानाङ्गोद्भवानितीति।

(४) भूभृद्धातुगर्भकुम्भधारिषु (५) विविधसरःसरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु (६) शावशुचिसिक्थपटलपाण्डुरे पिण्डे इवापरपयोनिधिपुलिनपरिसरे पात्यमाने शशिनि क्रमेण (७) नृपचितानलधूमविसरधूसरीकृततेजसि इव नरपतिशोकपावकदाहकिणकलङ्ककालीकृतचेतसि इव (८) प्रोषितसमस्तान्तःपुरपुरन्ध्रिमुखचन्द्रद्वन्द्वोद्वेगविद्राणवपुषि इव (९) प्रथमास्तमितरोहिणीरणरणकविमनसि इव च

---

(४) भूभृदिति भूभृतः पर्वतस्य धातवो गैरिकादयः गर्भे मध्ये ययोः तादृशौ कुम्भौ कपोलपिण्डौ धरन्तीति तथोक्तेषु अन्यच भूभृतः राज्ञः धातवः पूर्वोक्ताग्निसञ्चितानि अस्थीनि गर्भे येषां तादृशान् कुम्भान् कलसान् धारयन्तीति तथाविधेषु जलेष्विति भावः मृतास्थीनां कुम्भमध्ये रक्षणमुक्तं निर्णयसिन्धौ । अस्थिप्रक्षये भाण्डे नवे साच्छादने शुभे । गृहीत्वास्थीनि तन्नद्यां नीत्वा तोये विसर्जयेदिति ।

(५) विविधेति विविधानि सरांसि सरितः नद्यः तीर्थानि पुण्यक्षेत्रसलिलानि तेषाम् अभिमुखाः तेषु वनकरिकुलेषु वन्यगजवन्देषु ।

(६) शावेति शावं धूसरं शुचि शुद्धं सिक्थं मधूच्छिष्टं तस्य पटलं सङ्घः तद्वत् पाण्डुरं शुभ्रं तस्मिन् अन्यत्र शावः शवसम्बन्धी शुचिः शुद्धः यः सिक्थः भक्तग्रासः पाण्डुरः गौरः यत्र तथाभूतः तस्मिन् पिण्डे इव प्रेतदेयान्नमुष्टौ इव अपरपयोनिधिपुलिनपरिसरे पश्चिमसमुद्रसैकतदेशायतने पात्यमाने क्षिप्यमाणे दीयमाने च । शशिनि चन्द्रमसि ।

(७) नृपेति । नृपस्य राज्ञः चितानलस्य धूमविसरेण धूमनिचयेन धूसरीकृतं तेजः यस्य तथाभूते इव । नरपतीति नरपतेः शोकः पावक इव अग्निरिव तस्य दाहेन यः किणकलङ्कः किणचिह्नं तेन कालीकृतं मलिनीकृतं चेतः यस्य तथाभूते इव ।

(८) प्रोषितेति प्रोषितानां पतिशोकात् परलोकं प्रस्थितानां समस्तानाम् अन्तःपुरपुरन्ध्रीणाम् अन्तःपुरमहिलानां मुखानि चन्द्रा इव तेभ्यः उद्वेगः त्रासः तेन विद्राणं पलायमानं वपुः शरीरं यस्य तथाभूते ।

अस्तमुपगते रजनिकरे राजतीव देवे दिवम् आरूढे सवितरि परिवृत्ते राज्ये इव रजनीप्रबन्धे (१०) प्रबुद्धराजहंसमण्डल-प्रबोध्यमानः पङ्कजाकर इव चचाल देवो हर्षः। ततश्च (११) नूपुररवविराममूकमन्दमन्दिरहंसेषु शोकाकुलकति-पयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु (१२) पतितयूथपे इव वन-गजचये कक्ष्यान्तरवर्त्तिनि पितृपरिजने विषादिनि उपरि-रुदन्निषादिनि च स्तम्भनिषन्ने निष्पन्दमन्दे राजकुञ्जरे (१३) मन्दुरापालकाक्रन्दव्यथिते च अजिरभाजि राजवा-जिनि (१४) विश्रान्तजयशब्दकलकले च शून्ये च महा-

---

(९) प्रथमेति प्रथमं प्राक् अस्तमिता अस्तं गता या रोहिणी स्वप्रेयसीति यावत् तस्यां रणरणकेन उत्कण्ठया विक्लवं मनो यस्य तथाभूते इव रजनिकरे चन्द्रे। राजतीव विराजमाने इव सवितरि सूर्य्ये जनके च। परिवृत्तिर्विनिमयः तत्प्राप्ते विपर्य्यस्ते इत्यर्थः रजनीप्रबन्धे निशागमे।

(१०) प्रबुद्धेति। प्रबुद्धानां जागरितानां प्रागितिशेषः राज्ञां हंसानामिव मण्डलानि समूहाः तैः प्रबोध्यमानः जागर्य्यमाणः पङ्कजाकर इव कासार इव चचाल उत्तस्थौ।

(११) नूपुराणां रवस्य विरामेण अपगमेन मूकाः निःशब्दाः मन्दाः अपटवः मन्दिरहंसाः गृहमराला येषु तथोक्तेषु। शोकेति शोकेन आकुलाः कतिपये कञ्चु-किमात्राः कञ्चुकिन एव अवशिष्यन्ते इति अवशेषाः येषु तथाविधेषु शुद्धान्तेषु अन्तःपुरेषु।

(१२) पतितेति। पतितः विनष्ट इत्यर्थः यूथपः यूथपतिः यस्य तादृशे इव वनगजचये आरण्यगजवृन्दे। कक्ष्यान्तरवर्त्तिनि प्रकोष्ठान्तरस्थिते पितृपरिजने पितुः परिचारकवर्गे। विषादिनि विषादं गते उपरीति उपरि पृष्ठभागे रुदन् निषादी हस्तिपालो यस्य तथोक्ते स्तम्भनिषन्ने स्तम्भमालानमाश्रित्य स्थिते निष्पन्द-मन्दे निस्तब्धे इति यावत् राजकुञ्जरे राजहस्तिनि।

(१३) मन्दुरेति। मन्दुरा अश्वशाला वाजिशाला तु मन्दुरेत्यमरः तां पाल-

स्थानमण्डपे दह्यमानदृष्टिः निर्जगाम राजकुलात्। अगाच्च सरस्वतीतीरं तस्यां स्नात्वा पित्रे (१५) ददौ उदकम्। अपस्नातश्च अनिष्पीड़ितमौलिरेव परिधाय (१६) उद्गमनीयदुकूलवाससी निश्वासपरो निश्चामरः निरातपत्रो निरुत्सारणः समुपनीतेऽपि सप्तौ चरणाभ्यामेव (१७) नासाग्रासक्तेन रक्तातामरसताम्रेण चक्षुषा हृदयावशेषस्य अपि पितुर्दाहशङ्कया शोकाग्निमिव उद्गिरन् अताम्बूलस्यापि सुचिरप्रक्षालितस्य कल्पतरुकिशलयस्य इव स्वभावपाटलस्य अधरस्य अधरपल्लवस्य प्रभया मांसरुधिरकवलान् इव हृदयाभिघातात् उद्वमन् उष्णनिश्वासमोचैः भवनम् आजगाम।

---

यन्तीति ते मन्दुरापालकाः तेषाम् आक्रन्देन रोदननिनादेन व्यथिते सन्तप्ते अजिरभाजि अङ्गनवर्त्तिनि राजवाजिनि राजघोटके।

(१४) विश्रान्तेति विश्रान्तः विरतः जयशब्दः जयध्वनिरेव कलकलः मधुरकोलाहलः यस्मिन् तथोक्ते महास्थानमण्डपे महासभागृहे।

(१५) इति उदकं तर्पणसलिलाञ्जलिं ददौ। अपस्नातः भवनमाजगामेति सम्बन्धः अपस्नातः प्रेतकार्य्यमुद्दिश्य कृतस्नानः अनिष्पीड़ितमौलिः न निष्पीड़ितः मौलिः केशचयः येन तथोक्तः चूड़ा किरीटं केशाश्च संयता मौलयस्त्रय इत्यमरः।

(१६) उद्गमनीये धौते दुकूले सितांशुके एव वाससी वस्त्रे परिधाय परिहिते कृत्वा तत्स्यादुद्गमनीयं यत् धौतयोर्वस्त्रयोर्युगमित्यमरः दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके इति शब्दार्णवः। निश्वासपरः पुनःपुनरायतं निश्वसन् इत्यर्थः। निश्चामरः चामरव्यजनरहितः। निरातपत्रः आतपत्रवर्जितः निरुत्सारणः उत्सारणा लोकानामपसारणं तद्रहित। इत्यर्थः। समुपनीते समुपस्थापिते सप्तौ अश्वे।

(१७) नासाग्रासक्तेन नासिकाग्रलग्नेन। रक्तातामरसताम्रेण रक्तकमललोहितेन। हृदयावशेषस्य हृदयमात्रस्थितस्य। अताम्बूलस्य वर्जितताम्बूलस्य कल्पतरुकिसलयस्य इव कल्पतरुपल्लवस्य इव स्वभावपाटलस्य सहजरक्तस्य अधरः हीनः पल्लवः

(१८) राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन् एव अहनि निर्गत्य प्रियं पुत्त्रदारम् उत्सृज्य उद्बाष्पैः बन्धुभिः वार्य्यमाणा अपि (१९) बहुनृपगुणगणहृतहृदयाः केचित् आत्मानं भृगुषु बबन्धुः केचित् तत्रैव तीर्थेषु तस्थुः केचित् अनशनैः (२०) आस्तीर्णतृणकुशा व्यथमानमानसाः शुचम् असमाम् अशमयन् केचित् शलभा इव वैश्वानरं शोकावेग-विवशा विविशुः (२१) केचित् दारुणदुःखदहनदह्यमान-हृदया गृहीतवाचः तुषारशिखरिणं शरणं ययुः केचित् (२२) विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्य-मानतनवः पल्लवशयनशायिनः सन्तापम् अशमयन् केचित्

---

यस्मात् तथोक्तस्य अधरस्य ओष्ठस्य। मांसरुधिरकवलान् इव मांसरक्तग्रासान् इव। उष्णनिःश्वासमोचैः उष्णनिःश्वासपातैः।

(१८) राजवल्लभाः राजप्रियाः पुत्रदारं पुत्रकलत्रम् उद्बाष्पैः उच्छ्वसन्नयन-वारिभिः।

(१९) बह्विति। बहुभिः नृपस्य राज्ञः गुणगणैः हृतम् आकृष्टं हृदयं येषां तथाभूताः। भृगुषु प्रपातेषु प्रपातस्तु अतटो भृगुरित्यमरः आत्मानं बबन्धुः तेभ्यः पतनाय कृतहस्तादिबन्धनाः तस्थुरित्यर्थः। बभञ्जुरिति पाठे तेभ्यः पतनेन आत्मानं चूर्णयामासुरित्यर्थः। तीर्थेषु पुण्यक्षेत्रेषु।

(२०) अनशनैः अभोजनैः। आस्तीर्णतृणकुशाः तृणकुशास्तीर्णभूमौ स्थिता इत्यर्थः। असमाम् अतुल्यां शुचं शोकम् अशमयन् शमयामासुः। शलभा इव पतङ्गविशेषा इव। वैश्वानरम् अग्निम्।

(२१) दारुणेति। दारुणेन उत्कटेन दुःखदहनेन शोकाग्निना दह्यमानं सन्तप्यमानं हृदयं येषां तथाभूताः। गृहीतवाचः मौनव्रतधारिणः। तुषारशिख-रिणं हिमाद्रिं शरणं ययुः आश्रितवन्तः।

(२२) विन्ध्येति। विन्ध्यस्य गिरेः उपत्यकासु आसन्नभूमिषु उपत्यकाद्रेः आसन्ना भूमिरूर्द्ध्वमधित्यकेत्यमरः। वनेति वनकरिकुलानां वन्यगजवृन्दानां कराः शुण्डाः तेषां शीकरासारैः अम्बुकणधाराभिः सिच्यमाना तनुः शरीरं येषां तथा-

(२३)सन्निहितान् अपि विषयान् उत्सृज्य सेवाविमुखा: परिच्छिन्नै: पिण्डकै: अटवीभुव: शून्या जगृहु: केचित् पवनाशना धर्मधना धमन्तमनयो मुनयो बभूवु: केचित् गृहीतकाषाया: कापिलं मतम् अधिजगिरे गिरिषु (२४) केचित् आचोटितचूडामणिषु शिर:सु शरणीकृतधूर्जटयो जटा जघटिरे अपरे (२५) परिपाटलप्रलम्बचीवराम्बरसंवीता: स्वाम्यनुरागम् उज्ज्वलं चक्रु: अन्ये (२६) तपोवनहरिणजिह्वाञ्चलोल्लिह्यमानमूर्त्तयो जरां ययु: अपरे पुन: (२७) पाणिपल्लव-

---

भूता: पल्लवशयनशायिन: पल्लवशय्याशायिन: सन्तापं शोकजमिति भाव: अशमयन् निर्वापयामासु: ।

(२३) सन्निहितान् करस्थितानिति भाव: विषयान् भोग्यवस्तूनि उत्सृज्य त्यक्त्वा सेवाविमुखा: भोगपराङ्मुखा: परिच्छिन्नै: परिमितै: पिण्डकै: भक्तग्रासै: तदुपलक्षिता इत्यर्थ: अटवीभुव: वनभूमी: जगृहु: आश्रिता: । पवनाशना: वायुभोजिन: धर्मधना धर्ममात्रधनकामा इत्यर्थ: । धमन्तमनय: धमन्य: कार्श्यात् ताम्यन्त्य: धमन्य: शिराजालानि येषां तथाभूता: । गृहीतकाषाया: गृहीतं काषायं कषायेण रक्तं वस्त्रं यै: तथाभूता: कापिलं कपिलसम्मतं साङ्ख्यशास्त्रम् अधिजगिरे अधीतवन्त: ।

(२४) आचोटितेति । आचोटित: छेदित: अपसारित इति भाव: चूडामणि: चूडारत्नं येभ्य: तथाभूतेषु त्यक्तचूडारत्नालङ्कारेषु इति यावत् । शिर:सु मूर्द्धसु । शरणीकृतधूर्जटय: शरणीकृत: आश्रित इत्यर्थ: धूर्जटि: हर: यै: तथाभूता: गृहीतपाशुपतव्रता इत्यर्थ: जघटिरे बबन्धु: ।

(२५) परिपाटलेति । परिपाटलेन परितो रक्तेन प्रलम्बेन आयतेन इत्यर्थ: चीवराम्बरेण वसनखण्डेन संवीता: प्रावृता: आच्छादितदेहा इत्यर्थ: कृतमुनिवेशा इति भाव: । स्वाम्यनुरागं प्रभुभक्तिम् ।

(२६) तपोवनेति । तपोवनहरिणानाम् आश्रममृगाणां जिह्वाञ्चलै: रसनाप्रान्तै: उल्लिह्यमाना उल्लिख्यमाना मूर्त्तय: शरीराणि येषां तथाभूता: तापसा इत्यर्थ: । जरां वार्द्धकम् ।

प्रमृष्टै: आताम्रराग: नयनपुटै: कमण्डलुभिश्च वारि वहन्तो गृहीतव्रता मुण्डा विचेरु: ।

(२८) देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इति महीं महापातकमिति राज्यं रोग इति भोगान् भुजङ्गा इति (२९) निलयं निरय इति बन्धुं बन्धनमिति जीवितम् अयश इति देहं द्रोह इति कल्यतां कलङ्क इति आयु: अपुण्यफलमिति आहारं विषमिति विषममृतमिति चन्दनं दहन इति कामं क्रकच इति हृदयस्फोटनम् अभ्युदय इति च मन्यमानं सर्वासु क्रियासु विमुखं (३०) पितृपितामहपरिग्रहागता: चिरन्तना: कुलपुत्रा वंशक्रमाहितगौरवाश्च आप्तगिरो गुरव: श्रुतिस्मृतीतिहासविशारदाश्च (३१) जरद्द्विजातय: श्रुताभिजनशीलशालिनो मूर्द्धाभिषि-

---

(२७) पाणीति । पाणि: पल्लव इव तेन प्रमृष्टा: प्रमार्जनं नीता: गृहीताश्च तै: आताम्रराग: आरक्तप्रभै: शोकावेगजनितरोदनात् स्वभावाच्च । नयनपुटै: नेत्रविवरै: । कमण्डलुभि: जलपात्रविशेषै: । वारि अश्रुजलं तीर्थजलञ्च । गृहीतव्रता व्रतधारिण: मुण्डा: उन्नशिरस: विचेरु: भ्रमन्ति स्म ।

(२८) कुलपुत्रादय: देवं हर्षं पर्य्यवारयन् इति सम्बन्ध: । तं विशिनष्टि तदवस्थमित्यादि । श्रियं राजलक्ष्मीं शाप: अभिसम्पात: दु:खाकर इति भाव: मन्यमानमित्यनेन सम्बन्ध: । एवमुत्तरत्र । महीं पृथ्वीं महापातकं महत् पापं तदधिकारस्य केवलपापबहुलत्वादिति भाव: । रोग: व्याधि: क्लेशबहुलत्वादिति भाव: ।

(२९) निलयं गृहं निरय: नरकम् । बन्धुं स्वजनं बन्धनं बन्धनहेतुभूतम् । कल्यताम् आरोग्यम् । क्रकच: करपत्रम् । हृदयस्फोटनं हृदयविदारणम् अभ्युदय: मङ्गलम् । विमुखं पराङ्मुखं विरतमित्यर्थ: ।

(३०) पित्रिति । पिता च पितामहश्च तयो: परिग्रहेण आश्रयदानेन आगता: पालिता: । वंशेति वंशस्य क्रमेण आहितम् अर्पितं गौरवं येषां ते आप्तगिर: ग्राह्यवाच: उपदेष्टार इत्यर्थ: ।

(३१) जरद्द्विजातय: स्थविरा ब्राह्मणा: । श्रुतेति श्रुतं शास्त्रज्ञानम् अभिजन:

ज्ञाश्च अमात्या राजानो यथावत् अधिगतात्मतत्त्वाश्च संस्तुता मस्करिणः समदुःखसुखाश्च मुनयः संसारासारत्वकथनकुशला ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः पर्य्यवारयन्।

(३२) अस्वतन्त्रीकृतश्च तैः मनसापि न अलभत शोकम् अनुप्रचरितुम्। अनुनीयमानश्च कथं कथमपि आहारादिकासु क्रियासु आभिमुख्यम् अभजत। आत्मगतहृदयश्च अचिन्तयत् अपि नाम तातस्य मरणं महाप्रलयसदृशम् इदमुपश्रुत्य आर्य्यो वाष्पजलस्नातो न गृह्णीयात् वल्कले? न आश्रयेद्वा राजर्षिः आश्रमपदम्? न विशेद्वा पुरुषसिंहो गिरिगुहाम्? (३३) अस्रसलिलनिर्भरभरितनयननलिनयुगलो वा न पश्येत् अनाथां पृथिवीम्? (३४) प्रथमव्यसनविषमविषविह्वलः न स्मरेत् आत्मानं वा पुरुषोत्तमः? (३५) अनित्यतया जनितवैराग्यो वा न निराकुर्य्यात् उपसर्पन्तीं राज्य-लक्ष्मीम्? (३६) दारुणदुःखदहनप्रज्वलितदेहो वा न प्रति-

---

कुलं शीलं चारित्रं तैः शालन्ते शोभन्ते इति तथोक्ताः मूर्द्धाभिषिक्ताः मूर्द्धसु कृताभिषेकाः राज्यप्रतिष्ठिता इत्यर्थः। यथावत् यथाविधि अधिगतं विदितम् आत्मतत्त्वम् आत्मज्ञानमित्यर्थः यैः तथोक्ताः। संस्तुताः परिचिताः मस्करिणः सन्न्यासिनः।

(३२) अस्वतन्त्रीकृतः क्षणमपि अमुक्त इत्यर्थः अनुप्रचरितुम् अनुशीलितुम्। आभिमुख्यं प्रवृत्तिम्। आर्य्यः राज्यवर्द्धनः वाष्पजलस्नातः अश्रुजलसिक्तः। आश्रमपदं तपोवनम्।

(३२) अस्रेति। अस्रजलेन वाष्पवारिणा निर्भरं यथा तथा भरितं पूरितं नयननलिनयुगलं नेत्रपद्मद्वयं यस्य तथाभूतः। अनाथां निराश्रयाम्।

(३४) प्रथमेति। प्रथमम् आद्यम् अपूर्वमिति भावः व्यसनं विपदेव विषमं दारुणं विषं तेन विह्वलः विमुग्धः। आत्मानं वा न स्मरेत् आत्मघाती भवेदिति भावः।

(३५) अनित्यतया क्षणिकतया उपसर्पन्तीम् उपगच्छन्तीं निराकुर्य्यात् त्यजेदित्यर्थः।

पद्येत अभिषेकम्? इहागतो वा राजभिः (३७) अभिधीयमानो न पराचीनताम् आचरेत्? (३८) अतिपितृपक्षपाती खलु आर्य्यः। सर्वदा तातश्लाघया माम् अभिधत्ते तात! हर्ष! कस्यचित् अभूत् भविष्यति वा पुनः (३९) काञ्चनतालतरुप्रांशु कायप्रमाणम् इदम्? ईदृक् च दिवसकरप्रीत्या दिवसम् उन्मुखविकसितं मुखमहाकमलम्? एतौ च (४०) वज्रस्तम्भभास्वरौ भुजकाण्डौ? एते च (४१) हसितमदालसहलधरविभ्रमा विलासाः? कोऽन्यो मानी विक्रान्तो वदान्यो वा? इति। एतानि च अन्यानि च चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुः आगमनम् उदीक्षमाणः कथं कथमपि अतिष्ठत् इति।

इति श्रीवाणभट्टकृते हर्षचरिते प्रभाकरवर्द्धनमरणं नाम पञ्चमः उच्छ्वासः।

---

(३६) दारुणेति। दारुणेन उत्कटेन दुःखदहनेन शोकाग्निना प्रज्वलितः सन्तप्तः देहः यस्य तथाभूतः अभिषेकं राज्याभिषेकमित्यर्थः न प्रतिपद्येत वा न स्वीकुर्य्यादा।

(३७) अभिधीयमानः कथ्यमानः अनुरुध्यमान इति यावत् पराचीनतां पराङ्मुखताम्।

(३८) अतिपितृपक्षपाती अतिशयेन पितृवत्सल इत्यर्थः। तातश्लाघया ताते पितरि या श्लाघा आदरः तया। अभिधत्ते वक्ति। तात! वत्स!।

(३९) काञ्चनेति। काञ्चनतालतरुः सौवर्णतालवृक्षः तद्वत् प्रांशु उन्नतं कायप्रमाणं देहपरिमाणम् ईदृक् एवम्प्रकारं मत्पितुः सदृशमिति भावः। दिवसकरप्रीत्या सूर्य्यभक्त्या दिवसं व्याप्य इत्यर्थः अत्यन्तसंयोगे द्वितीया। मुखमहाकमलं मुखमेव महत् पद्मम्।

(४१) हसितेति। हसितेन हासेन मदालसस्य मदविह्वलस्य हलधरस्य बलदेवस्य विभ्रमा इव विभ्रमा विचेष्टितानि येषु तथाविधाः। अन्यः पितुरिति शेषः मानी मानोन्नतः विक्रान्तः शूरः वदान्यः दानशौण्डः। उदीक्षमाणः प्रतीक्षमाणः।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता हर्षचरितस्य पञ्चमोच्छ्वासव्याख्या समाप्ता।

# षष्ठः उच्छ्वासः ।



उच्चित्योच्चित्य भुवि प्रहितनिगूढ़ात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां संग्रहं कुरुते ॥ १ ॥
विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः ।
नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ २ ॥

(२) अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि गतेषु उद्दे-

---

उच्चित्येति । कृतान्तः अन्तकः विजिगीषुः इव विजयार्थी नृप इव भुवि पृथिव्याम् उच्चित्य उच्चित्य अन्विष्य अन्विष्य प्रहिताः प्रेषिताः निगूढाः कपटचारिणः इति यावत् आत्मनः दूताः किङ्कराः तैः नीताः वशं प्रापिताः तेषां शूराणां बलवतां वीराणां मानवानां संग्रहम् आयत्ततां कुरुते स्वालयं नयति स्ववशान् करोति च । एतेन कृतान्तः कृतः अन्तः नाशः प्रतिवीराणामिति भावः येन तथाभूतः शशाङ्कनामा गौड़ाधिपतिः शूराणां प्रभाकरवर्द्धनानुगतानां प्रधानराजपुत्राणां निजदूतैः अन्विष्य अन्विष्य संग्रहं कृत्वा दूतमुखेन कन्याप्रदानप्रलोभितं राज्यवर्द्धनं स्वगेहानीतं विस्रब्धं भुञ्जानं छद्मना व्यापादितवानिति षष्ठोच्छ्वासार्थः सूचितः ॥ १ ॥

विस्रब्धेति । खलस्य दुर्जनस्य विस्रब्धघातदोषः विश्वासितवधापराधः वीरस्य वीर्य्यवतः सत्पुरुषस्य कोपं क्रोधं करोति जनयतीति तथाभूतः अतएव हरेः सिंहस्य निद्रायाः तस्करः चौरः निद्राभङ्गकारीत्यर्थः करिणः हस्तिनः नवः अपूर्वः तरोः वृक्षस्य भङ्गध्वनिरिव भञ्जनरव इव स्ववधाय निजनाशाय भवतीति शेषः । यथा निद्रोत्थितः सिंहः तरुभञ्जनेन निद्राभङ्गकारिणं करिणं निपातयति तथा विश्वस्तं भ्रातरं राज्यवर्द्धनं स्वालयं नीत्वा छद्मना विनाशकारिणं शशाङ्कं नाम गौड़ाधिपं वीरो हर्षो व्यापादितवानिति सूचितम् ॥ २ ॥

(३) अथेति प्रथमम् आद्यं प्रेतपिण्डं भुङ्क्ते इति तथाभूते द्विजन्मनि ब्राह्मणे अग्रदानीये इति भावः भुक्ते भुक्तमस्यास्तीति भुक्तं तस्मिन् भुक्तवतीत्यर्थः । उद्दे-

जनीयेषु अशौचदिवसेषु (४) चक्षुर्दाहदायिनि दीयमाने द्विजेभ्यः (५) शयनासनचामरातपत्रवस्त्रपत्रशस्त्रादिके (६) नृपनिकटोपकरणकलापे नीतेषु तीर्थस्थानानि सह जनहृदयैः कीकसेषु (७) कल्पितशोकशल्ये सुधानिचयचिते चिताचैत्यचिह्ने वनाय विसर्जिते च (८) महाजिजिति राजगजेन्द्रे क्रमेण मन्देषु आक्रन्देषु विरलीभवत्सु च विलापेषु विश्राम्यति (९) अश्रुणि शिथिलीभवत्सु श्वसितेषु अविस्पष्टेषु हाकष्टाक्षरेषु उल्लाप्यमानासु च (१०) व्यसन-

---

जनीयेषु उद्वेगजननेषु अशौचदिवसेषु द्वादशाहेषु इत्यर्थः शुद्धेत् विप्रो दशाहेन द्वादशाहेन भूमिपः इति स्मरणात् ।

(४) चक्षुर्दाहेति । चक्षुषो दाहः ज्वलनमित्यर्थः तं ददाति जनयतीति तथोक्ते दर्शनेन अतीव व्यथाजनके इति भावः ।

(५) शयनेति । शयनं शय्या आसनं चामरं आतपत्रं छत्रम् वस्त्राणि वसनानि पत्राणि वाहनानि शस्त्राणि तरवारादयः एतानि आदीनि यस्य तथोक्ते ।

(६) नृपेति । नृपस्य राज्ञः निकटानि सततसन्निहितानि उपकरणानि परिच्छदाः तेषां कलापः समूहः तस्मिन् । द्विजेभ्यः ब्राह्मणेभ्यः दीयमाने समर्प्यमाणे । कीकसेषु अस्थिषु जनानां हृदयैः सह तीर्थस्थानानि गङ्गादीनि नीतेषु प्रापितेषु ।

(७) कल्पितेति । कल्पितं जनितं शोकशल्यं येन तादृशे दर्शनमात्रेण शोकोद्दीपके इति यावत् चिताचैत्यचिह्ने चितायाश्चैत्यस्य दाहस्य चिह्नं भस्मादिकमित्यर्थः तस्मिन् सुधानिचयेन चूर्णद्रवसमूहेन चिते व्याप्ते लिप्ते इत्यर्थः । निश्चिह्ने कृते इति भावः ।

(८) महाजिजिति महासंग्रामजयिनि राजगजेन्द्रे वनाय विसर्जिते प्रेषिते शोकजनकत्वेन द्रष्टुमशक्यत्वादिति भावः । आक्रन्देषु रोदनेषु मन्देषु शिथिलितेषु विलापेषु खेदवचःसु विरलीभवत्सु ह्रासं गच्छत्सु ।

(९) अश्रुणि वाष्पवारिणि विश्राम्यति विरमति । श्वसितेषु दीर्घनिश्वासेषु शिथिलीभवत्सु मन्दीभवत्सु । अविस्पष्टेषु अनुच्चेषु प्रायेण अश्रुतेषु इत्यर्थः ।

शय्यासु उपदेशश्रवणक्षमेषु श्रोत्रेषु अनुरोधावधानयोग्येषु (११) हृदयेषु गणनीयेषु नृपगुणेषु प्रदेशवृत्तिताम् आश्रयति शोके कृतेषु (१२) कविरुदितकेषु जाते च स्वप्नावशेषदर्शने हृदयावशेषस्थाने चित्रावशेषाकृतौ काव्यावशेषनाम्नि नरनाथे देवो हर्षः कदाचित् (१३) उत्सृष्टव्यापारः पुञ्जीभूतवृद्धबन्धुवर्गाग्रेसरेण अवनतमूकमुखेन महाजनेन मौलेन अकाले आत्मानं वेष्ट्यमानम् अद्राक्षीत्।

दृष्ट्वा च अकरोत् मनसि किमन्यत् (१४) आर्य्यम् आगतम् आवेदयति अयं शोकपराभूतो (१५) लोकाकार इति (१६) वेप-

---

(१०) व्यसनशय्यासु मृतशय्यासु मरणान्तरमशौचकालीनशय्यासु कम्बलादिषु इति वा उत्सार्य्यमाणासु अपसार्य्यमाणासु। श्रोत्रेषु श्रवणेन्द्रियेषु उपदेशश्रवणक्षमेषु उपदेशग्रहणयोग्येषु इत्यर्थः।

(११) हृदयेषु अनुरोधेन निर्बन्धेन अवधानं तस्य योग्यानि तेषु। नृपगुणेषु राजगुणेषु गणनीयेषु संख्येयेषु मरणानन्तरमत्यधिकशोकावेगेन मृतस्य गुणानामगण्यता प्रतीयते क्रमेण शोकह्रासे गण्यता इति भावः। शोके प्रदेशवृत्तितां देशविशेषनिष्ठताम् आश्रयति क्वचित् किमपि दृष्ट्वा श्रुत्वा वा मृतस्य स्मरणात् शोकोत्पत्तिरिति भावः।

(१२) कविरुदितकेषु कवेः काव्यरचयितुः इव रुदितकानि रोदनानि रोदनवर्णनानि इति भावः तेषु कृतेषु जनैरिति शेषः। स्वप्नावशेषदर्शने कदाचित् स्वप्नावस्थामात्रदर्शनीये हृदयावशेषस्थाने केवलं हृदयमात्रवासिनि इत्यर्थः चित्रावशेषाकृतौ आलेख्यमात्रस्थितावयवे काव्यावशेषनाम्नि काव्यमात्रस्थितनामधेये नरनाथे राज्ञि जाते वृत्ते सति।

(१३) उत्सृष्टव्यापारः सन्त्यक्तराजकार्य्यः इत्यर्थः पुञ्जीभूतः समवेतः वृद्धो बन्धुवर्गः तस्य अग्रसरः अग्रवर्त्ती तेन। अवनतमूकमुखेन अधोमुखनिस्तब्धवदनेन मौलेन मूलायातेन वंशपरम्परागतेन सम्भ्रान्तजनगणेन वेष्ट्यमानं परिवार्य्यमाणम् आत्मानम् देवो हर्षः। अद्राक्षीदिति सम्बन्धः।

(१४) आर्य्यं ज्येष्ठं भ्रातरम्। आवेदयति निवेदयति। शोकपराभूतः शोकेन विह्वलितः।

(१५) लोकाकारः लोकसमूहः। लोकोत्कार इति पाठेऽपि स एवार्थः।

मानहृदयश्च पप्रच्छ प्रविशन्तम् अधिकतरप्रचारम् अन्यतमं पुरुषम् अङ्ग! कथय किमार्य्यः प्राप्त? इति। स मन्दम् अब्रवीत् देव! यथादिशसि द्वारि इति श्रुत्वा च (१७) सोदर्य्यस्नेहनिहितनिरतिशयमन्युमृदूकृतमनाः कथमपि न ववाम वाष्पवारिप्रवाहोत्पीड़ेन सह जीवितम्।

(१८) अनन्तरञ्च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेन इव आक्रन्देन कथ्यमानं (१९) दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नच्छत्रधारेण लम्बिताम्बरवाहिना (२०) भ्रष्टभृङ्गारग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन

(१६) वेपमानहृदयः कम्पमानहृदयः। अधिकतरप्रचारम् अधिकतरः अतित्वरित इत्यर्थः प्रचारः गतिर्यस्य तथाभूतम्। अङ्ग इति सम्बोधनम्।

(१७) सोदर्य्येति सोदरस्य सहोदरस्य अयं सोदर्य्यः यः स्नेहः प्रणयातिशयः तेन निहितः जनितः निरतिशयः अत्यन्तः मन्युः शोकः पितृमरणज इति भावः स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते इति कुमारसम्भवे कालिदासः। तेन मृदूकृतं मन्दीकृतं मनः यस्य तथाभूतः अतिविरसचित्त इत्यर्थः न ववाम न उज्जगार कथमपि जीवनं दधारेति भावः।

(१८) अनन्तरं ज्येष्ठं भ्रातरमपश्यदिति सम्बन्धः। तं विशिनष्टि द्वारेत्यादि। द्वारपालैः दौवारिकैः मुक्तेन उच्चारितेन व्यक्तमार्गेणेति यावत् आक्रन्देन रोदनध्वनिना कथ्यमानम् आगतो राज्यवर्द्धन इति निवेद्यमानम्।

(१९) दूरेति दूरात् द्रुतागमनेन शीघ्रागमनेन मुषितं विप्रलब्धं व्यक्तमिति यावत् बाहुल्यं समवायः येन बहुसङ्गत्यागिना इत्यर्थः विच्छिन्नच्छत्रधारेण अतिक्रान्तच्छत्रधारिपुरुषेण लम्बिताम्बरवाहिना लम्बितं वेगागमनात् स्रस्तमित्यर्थः अम्बरं वसनं वहति यत्त इति तथोक्तेन।

(२०) भ्रष्टेति। भ्रष्टः दूरपतितः भृङ्गारग्राही यस्य तेन। च्युतेति च्युतः पथि स्थितः आचमनग्राही आचमनार्थजलग्राही यस्य तेन ताम्यत्ताम्बूलिकेन ताम्यन् वेगगत्या क्लिश्यन् ताम्बूलिकः ताम्बूलदायी ताम्बूलग्राही वा यस्य तेन।

(२१) खञ्जत्खञ्जग्राहिणा कतिपयप्रकाशदासेरकप्रायेण (२२) बहुवासरान्तरितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम् (२३) अविरलमार्गधूलिधूसरितशरीरतया शरणीकृतमिव अशरणया क्रमागतया वसुन्धरया (२४) हूणनिर्जयसमरशरव्रणबद्धपट्टकैः दीर्घधवलैः समासन्नराज्यलक्ष्मीकटाक्षपातैः इव शवलीकृतकायम् (२५) अवनिपतिप्राणपरित्राणार्थमिव च शोकहुतभुजि हुतमांसैः अतिकृशैः अवयवैः आवेद्यमानदुःखभारम् (२६) अपगतचूड़ामणिनि

---

(२१) खञ्जदिति । खञ्जन् हुतचलनेन विकलचरणः खञ्जग्राही यत्र तेन । कतिपयेति कतिपये प्रकाशाः अत्युन्नतत्वात् दृश्यमाना इत्यर्थः दासेरका उष्ट्राः प्रायेण यस्मिन् तेन ।

(२२) बह्विति बहुभ्यः वासरेभ्यः दिवसेभ्यः अन्तरितेन व्यवहितेन स्नानेन भोजनेन शयनेन च श्यामं मलिनं क्षामं क्षीणं वपुः शरीरं यस्य तेन । परिजनेन पार्श्वचरेण जनेन परिवृतं परिवेष्टितम् ।

(२३) अविरलेति अविरलाभिः सान्द्राभिः मार्गधूलिभिः अध्वरजोभिः धूसरितं शरीरं यस्य तस्य भावः तत्ता तया हेतुना अशरणया अनाश्रयया क्रमागतया वंशपरम्परागतया वसुन्धरया पृथ्व्या शरणीकृतमिव अशरणं शरणं कृतमिव आश्रितमिवेत्यर्थः ।

(२४) हूणेति । हूणानां तज्जातीयानां क्षत्रियाणां निर्जयाय यः समरः संग्रामः तस्मिन् शरैः शरप्रहारैः इत्यर्थः यानि व्रणानि क्षतानि तेषु बद्धानि पट्टकानि पटी इति भाषा प्रसिद्धानि तैः दीर्घधवलैः आयतैः श्वेतैश्च । समासन्नेति समासन्ना समुपस्थिता या राज्यलक्ष्मी तस्याः कटाक्षपाताः तैरिव शवलीकृतकायं चित्रितशरीरम् ।

(२५) अवनीति । अवनिपतेः राज्ञः पितुरिति भावः प्राणानां परित्राणार्थम् इव परिरक्षणार्थम् इव शोकहुतभुजि शोकाग्नौ हुतानि मांसानि येषां तैः अतएव अतिकृशैः अवयवैः अङ्गैः आवेद्यमानः ज्ञाप्यमानः दुःखभारः येन तम् ।

मलिनाकुलकुन्तले शेखरशून्ये शिरसि शुचम् आरूढ़ां मूर्त्तिमतीम् इव दधानम् (२७) आतपगलितखेदराजिना रुदता इव पितृपादपतनोत्कण्ठितेन ललाटपट्टेन लक्ष्यमाणं (२८) प्रथीयसा वाष्पपयःप्रवाहेण अभिमतपतिमरणमूर्च्छितामिव महीम् अनवरतं सिञ्चन्तम् (२९) अनन्तसन्तताश्रुप्रवाहनिपतननिम्नीकृतौ इव दुःखक्षामौ कपोलौ उद्वहन्तम् (३०) अत्युष्णमुखमारुतमार्गगतेन द्रवता इव गलितताम्बूलरागेण अधरविम्बेन उपलक्षितं (३१) पवित्रिकामात्रावशेषेन्द्रनीलिकांशुश्यामायमानम् अचिरश्रुतपितृमरणमहाशोकाग्निदग्ध-

---

(२६) अपगतेति । अपगतः अपनीतः चूड़ामणिः शिरोरत्नं यस्मात् तथाभूते । मलिनाकुलकुन्तले मलिनाः आकुलाः विस्रस्ताः कुन्तलाः केशाः यस्य तादृशे । शेखरशून्ये उष्णीषवर्जिते । शुचं शोकम् आरूढ़ां दधानं धारयन्तम् ।

(२७) आतपेति । आतपेन सूर्य्यमयूखेन गलितः निःसृतः खेदराजिः यस्मात् तथोक्तेन रुदता इव क्रन्दता इव पितुः पादपतनार्थम् उत्कण्ठितेन ललाटपट्टेन भालतटेन लक्ष्यमाणं दृश्यमानम् ।

(२८) प्रथीयसा अतिविस्तृतेन वाष्पपयःप्रवाहेण अश्रुवारिस्रोतसा । अभिमतेति अभिमतस्य पत्युः मरणेन मूर्च्छितामिव सञ्जातमूर्च्छामिव महीं पृथिवीम् अनवरतम् अविच्छिन्नं यथा तथा सिञ्चन्तं वर्षन्तम् ।

(२९) अनन्तेति । अनन्तेन प्रभूतेन इत्यर्थः सन्ततेन विस्तृतेन अश्रुतप्रवाहनिपतनेन निम्नीकृतौ इव निम्नतां नीतौ इव दुःखक्षामौ दुःखेन क्षीणौ कपोलौ गण्डदेशौ उद्वहन्तं धारयन्तम् ।

(३०) अत्युष्णेति । अत्युष्णस्य मुखमारुतस्य प्रश्वासस्य मार्गं पन्थानं गतः प्रचलितः तेन द्रवता इव द्रवीभूतेन इव गलितताम्बूलरागेण गलितः प्रसृतः ताम्बूलस्य रागः शोणिमा यस्मात् तथाभूतेन । अधरविम्बेन ओष्ठरूपविम्बफलेन उपलक्षितं युक्तम् ।

(३१) पवित्रिकेति । पवित्रिकामात्रं विशुद्धवामात्रमुज्ज्वलतामात्रमित्यर्थः अवशेषः यस्याः तथाभूता या इन्द्रनीलिका नीलकान्तमणिविशेषः तस्या अंशुभिः

मिव श्रवणपाशम् उद्वहन्तम् (२२) अस्फुटाभिव्यक्तव्यञ्जनेन अपि अधोमुख-स्तिमित-नयन-नील-तारक-मयूख-माला-खचितेन शोकप्ररूढश्मश्रुश्यामलेन इव मुखशशिना लक्ष्यमाणं (२३) केशरिणम् इव महाभूभृद्विनिपातविह्वलनिरवलम्बनं दिवसमिव तेजःपतिपतनपरिम्लानश्रियं श्यामीभूतं नन्दनम् इव भग्नकल्पपादपं विच्छायं दिग्भागमिव (२४) प्रोषितदिक्कुञ्जरशून्यं गिरिम् इव गुरुवज्रपातदारितं कम्पमानं क्रीतमिव कार्श्येन किङ्करीकृतमिव कारुण्येन दासीकृतमिव दौर्मनस्येन शिष्यीकृतमिव (२५) शोचितव्येन

---

किरणैः दुःखातिरेकात् इन्द्रनीलमणिनिर्मितकुण्डलापनयनेऽपि लग्नैरिति भावः श्यामायमानं श्याममिव आचरन्तम् अतएव अचिरम् तस्य पितृमरणस्य शोकाग्निना दग्धमिव भस्मीकृतमिव श्रवणपाशं कर्णपाशम् उद्वहन्तं दधानम्।

(२२) अस्फुटेति। अस्फुटम् अस्पष्टम् अभिव्यक्तं व्यञ्जनं लक्षणं शोकचिह्नम् इति यावत् यत्र तथाभूतेनापि अधोमुखयोः अवनतयोः स्तिमितयोः निश्चलयोः नयनयोः नीलानां तारकमयूखानां तारांशूनां मालया परम्परया खचितः व्याप्तः तेन। अतएव शोकेन प्ररूढं सञ्जातं यत् श्मश्रु क्षौरकर्माभावादिति भावः तेन श्यामलः सकलङ्क इति यावत् तेन। मुखशशिना वदनचन्द्रेण लक्ष्यमाणं दृश्यमानं विशेषणे तृतीया।

(२३) केशरिणमिव सिंहमिव। महेति महान् भूभृत् राजा गिरिश्च तस्य विनिपातेन विध्वंसेन विह्वलं व्याकुलं निरवलम्बनं निराश्रयञ्च। दिवसमिव वासरमिव तेजःपतेः प्रतापवतो राज्ञः सूर्य्यस्य च पतनेन नाशेन अस्तगमनेन च परिम्लाना मलिना श्रीः शोभा यस्य तम् अतएव श्यामीभूतं मलिनकायम्। नन्दनमिव देवोद्यानमिव भग्नकल्पपादपं भग्नकल्पतरुं विच्छायं विगतप्रभं छायाशून्यञ्च।

(२४) प्रोषितेति। प्रोषितः विनष्टः दिक्कुञ्जरः दिग्गजः तेन शून्यः तम्। गुर्विति गुरुणा महता वज्रपातेन दारितं पाटितं कम्पमानं वेपमानं क्रशिम्ना कार्श्येन क्रीतमिव अधीनीकृतमिव कारुण्येन शोकेन किङ्करीकृतमिव दासीकृतम् इव। दौर्मनस्येन दुःखितमनस्कतया। शिष्यीकृतमिव अन्तेवासितां नीतमिव।

आत्मीकृतमिव आधिना मूकीकृतमिव मौनेन पिष्टमिव पीड़या खिन्नमिव सन्तापेन उच्चितमिव चिन्तया लुप्तमिव विलापेन हृतमिव वैराग्येण प्रत्याख्यातमिव प्रतिसंख्यानेन अवज्ञातमिव प्रज्ञया दूरीकृतमिव (३६) दुरभिभवत्वेन अबोध्येन वृद्धबुद्धीनाम् असाध्येन साधुभाषितानाम् अगम्येन गुरुगिराम् अशक्येन शास्त्रशक्तीनाम् अपथेन प्रज्ञाप्रयत्नानाम् अगोचरेण सुहृदनुरोधानाम् अविषयेण विषयोपभोगानाम् अभूमिभूतेन (३७) कालक्रमोपचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरम् अपश्यत्। (३८) आवेगोद्गतकृत्स्नखेदोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुद्गात्।

---

(३५) शोचितव्येन शोकेन आत्मीकृतमिव आयत्तीकृतमिव। आधिना मनःसन्तापेन मूकीकृतमिव निर्वचनीकृतमिव मौनेन तूष्णीम्भावेन पिष्टमिव पेषणं नीतमिव खिन्नमिव द्रवीभूतमिव। उच्चितमिव गृहीतमिव। प्रत्याख्यातमिव निराकृतमिव। प्रतिसंख्यानेन विवेकिन्या मत्या।

(३६) दुरभिभवत्वेन दुरपनेयत्वेन हेतुना वृद्धबुद्धीनां स्थविरमतीनां बहुदर्शिनीनामिति भावः। अबोध्येन प्रबोधयितुमशक्येन इत्यर्थः। साधुभाषितानां सज्जनवचनानाम् असाध्येन अनपनेयेन गुरुगिरां गुरुजनवचसाम् अगम्येन अविषयेण अस्थानेन इति यावत्। शास्त्रशक्तीनां शास्त्रज्ञानानामिति यावत् अशक्येन असाध्येन शास्त्रतत्त्वज्ञानसद्भावेऽपि धैर्यच्युतिं कुर्वतेति भावः। अपथेन अविषयेण। अगोचरेण अचिन्त्येन।

(३७) कालक्रमेति। कालक्रमेण उपचयाः वृद्धयः तेषाम् अभूमिभूतेन अनास्पदेन कालापगमे चयमाप्नुवतेति भावः। कवलीकृतं ग्रस्तम्।

(३८) आवेगेति। आवेगेन सम्भ्रमेण उद्गतः उद्भूतः कृत्स्नः समग्रः खेदः तेन य उत्कलिकाकलापः उत्कण्ठातिशयः तेन उत्क्षिप्यमाणः कायः यस्य तथाभूत इव परवशः विह्वलः समुद्गात् समुत्तस्थौ।

(३८) अथ दूरादेव दृष्ट्वा देवो राज्यवर्द्धनः चिरकालकलितं वाष्पवेगं मुमुक्षुः सुदूरप्रसारितेन सङ्कल्पयन् इव सर्वदुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्ताकण्ठं पुनः पतितक्षौमे क्षामे वक्षसि पुनः कण्ठे पुनः स्कन्धभागे पुनः कपोलोदरे निधाय तथा तथा रुरोद यथा सवन्धनानि इव उदपाट्यन्त हृदयानि। (४०) मृतनृपतिना राजवल्लभेनापि प्रतिशब्दनिभेन निर्भरमिव अरुद्यत। सुचिराच्च कथं कथमपि निर्वृष्टनयनजलः पर्जन्य इव शरदि स्वयमेव उपशशाम। उपविष्टश्च परिजनोपनीतेन तोयेन (४१) तत्करनखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि (४२) पक्ष्माग्रसंगलद्बिन्दुवृन्दमन्दोन्मेषमुषित-

---

(३८) चिरकालेति। चिरकालकलितं चिरधृतं चिरनिरुद्धमिति यावत् वाष्पवेगम् अश्रुवेगं मुमुक्षुः त्यक्तुमिच्छुः सुदूरात् प्रसारितेन विस्तारितेन दीर्घेण महता दोर्दण्डद्वयेन बाहुदण्डयुगलेन। सङ्कल्पयन्निव चिन्तयन्निव। मुक्ताकण्ठम् उच्चैरित्यर्थः। पतितक्षौमे पतितं स्खलितं क्षौमं पट्टोत्तरीयं यस्मात् तथाभूते। क्षामे क्षीणे। सवन्धनानि इव ससन्धिवन्धनानि इव सन्धिबन्धनसहितानि इव उदपाट्यन्त उच्छेदं प्रापितानि इत्यर्थः।

(४०) मृतेति। मृतः नृपतिः येन तथाभूतेन नृपतिं स्मरतेत्यर्थः। प्रतिशब्दनिभेन प्रतिध्वनिच्छलेन निर्भरमिव अतीव। निर्वृष्टनयनजलः निःशेषं यथा तथा वृष्टानि नयनजलानि येन तथाभूतः। पर्जन्य इव मेघ इव इन्द्र इव वा पर्जन्यौरसदभेन्द्रौ इति शेषः। उपशशाम शान्तिं लेभे। तोयेन जलेन।

(४१) तदिति। तस्य करनखानां हस्तनखानां मयूखपुञ्जं किरणराजिः लग्नमिति भावः यस्मिन् तथाभूतं तस्य भावः तत्ता तया हेतुना। महाजलप्लवे जलराशौ प्लवेन सन्तरणेन जायमाना फेनलेखा फेनराजिः यस्मिन् तथोक्तमिव प्रमृष्टमपि प्रमार्जनं नीतमपि।

(४२) पक्ष्मेति। पक्ष्मणां लोम्नाम् अग्रेभ्यः सङ्गलन्तः निःसरन्तः ये विन्दवः

दर्शनं कथं कथम् अपि चक्षुरचालयत् । (४३) ताम्बूलिकोपस्थापितेन च वाससा चन्द्रातपशकलेनेव उष्णवाष्पदग्धं वदनम् उन्ममार्ज । तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिम् अगात् । तस्याञ्च स्थित्वा विभूषं (४४) वित्रस्तव्यस्तकुन्तलं मौलिम् अनादरात् निष्पीड्य सावशेषमन्युस्फुरितेन जिजीविषता इव (४५) जलधौतसुभगम् आत्मानमपि चुचुम्बिषता इव अधरेण क्षालितस्य चक्षुषः श्वेतिम्ना च (४६) शारदशशिकरविकसितविषदकुमुदवनदलावलिबलिविक्षेपैः इव दिग्देवतार्चनकर्म कुर्वाणः चतुःशालवितर्दिकायां (४७) नीचापाश्रयविनिहितैकोपवर्हायां पर्यङ्किकायां निपत्य जोषम् अस्थात् ।

---

तेषां वृन्दैः समूहैः मन्दः अल्प उन्मेषः तेन मुषितं हृतं दर्शनम् अवलोकनव्यापारः यस्य तत् ।

(४३) ताम्बूलिकेन ताम्बूलवाहिना उपस्थापितेन उपनीतेन वाससा वस्त्रेण । चन्द्रातपशकलेनेव चन्द्रमयूखखण्डेनेव उष्णेन वाष्पेण दग्धम् उत्तप्तं वदनं मुखम् उन्ममार्ज प्रमृष्टवान् । विभूषं भूषारहितम् ।

(४४) वित्रस्तेति । वित्रस्ता ऊर्द्धं क्षिप्ताः व्यस्ताः विस्रस्ताः कुन्तलाः केशाः यस्य तथोक्तम् । मौलिं शिरः अनादरात् अयत्नात् निष्पीड्य निष्पीड़ितं कृत्वा । सावशेषमन्युस्फुरितेन सावशेषेण अवशिष्टेन मन्युना शोकेन स्फुरितः तेन । जिजीविषता इव जीवितुमिच्छता इव ।

(४५) जलेति । जलेन धौतः क्षालितः अतएव सुभगः सुन्दरः तम् । आत्मानं स्वदेहं चुचुम्बिषता इव चुम्बितुमिच्छता इव । श्वेतिम्ना धावल्येन ।

(४६) शारदेति । शारदः शरत्कालीनः शशिकरश्चन्द्रकरः तद्वत् विकसितानि विषदानि स्वच्छानि कुमुदानि उत्पलानि तेषां वनानि समूहाः तेषां दलावलयः पत्रराजय एव बलिविक्षेपाः पूजोपहारप्रक्षेपाः तैः इव दिग्देवतार्चनकर्म दिगधिष्ठात्रीणां देवतानाम् अर्चनकर्म पूजनम् । चतुःशालवितर्दिकायां चतुःशाले चतुर्दिगवस्थितगृहमण्डल्यां या वितर्दिका वेदिका तस्याम् ।

देवोऽपि हर्षस्तथैव स्नात्वा (४८) धरणितलनिहितकुथा-प्रसारितमूर्त्तिः अदूरे एव अस्य तूष्णीमेव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसम् अग्रजन्मानं समस्फुटदिव अस्य सह-सधा हृदयम्। (४९) औरसदर्शनं हि यौवनं शोकस्य। लोकस्य तु नरपतिमरणदिवसादपि दारुणः स बभूव दिवसः। सर्वस्मिन् एव नगरे न केनचित् (५०) अपाचि न केनचित् अस्नायि न अभोजि सर्वत्र सर्वेण अरोदि। केवलम् अनेन क्रमेण अतिचक्राम दिवसः। स च (५१) प्रत्यग्रत्वष्टृटङ्कतष्टतनुः इव वहद्बहलरुधिररसमांसच्छविः अपरपारावारपयसि ममज्ज मञ्जिष्ठारुणोऽरुणसारथिः।

---

(४७) नीचेति। नीचेषु निम्नेषु तलस्थितेष्विति यावत् अपाश्रयेषु अन्तरालेषु निहितः स्थापितः एकः उपबर्हः उपधानं यस्याः तथोक्तायाम्। जोषं तूष्णीम् अस्थात् स्थितः।

(४८) धरणीति। धरणितले भूतले निहितायाम् अर्पितायां कुथायां कम्बलविशेषे प्रसारिता विस्तारिता मूर्त्तिर्येन तथाभूतः अदूरे निकटे। अग्र-जन्मानं ज्येष्ठम्। समस्फुटदिव विदीर्णमभवदिव।

(४९) औरसदर्शनं सहोदरदर्शनं यौवनम् अत्युद्दीपकमिति भावः शोकस्य पितृमरणजस्य। स दिवसः राज्यवर्द्धनागमनदिनम् इत्यर्थः।

(५०) अपाचि रन्धनं कृतम्। अस्नायि स्नातम्। अभोजि भुक्तम्। अरोदि रुदितम्। क्रमेण रूपेण प्रकारेणेत्यर्थः अतिचक्राम गतः।

(५१) प्रत्यग्रेति प्रत्यग्रम् अभिनवं सद्य इत्यर्थः त्वष्टुर्विश्वकर्मणः टङ्केन पाषाण-दारणास्त्रविशेषेण टङ्कः पाषाणदारण इत्यमरः। तष्टा छृष्टा तनुः शरीरं यस्य तथाभूत इव निस्तेजा इवेत्यर्थः। पुरा विश्वकर्मणः सुता संज्ञा सूर्य्यगृहिणी पत्युस्तेजोऽतिरेकम् असहमाना पितरम् उपेत्य न्यवेदयत्। स तु कन्यायाः क्लेशपरिजिहीर्षया सूर्य्यं जामातरं शाणयन्त्रेण उल्लिख्य सह्यतेजसम् अकरोत् इति पुराण-वार्त्ता अत्र अनुसन्धेया। वहदिति वहन् वहलः बहुलः रुधिररसः यस्मात् तादृशं

(५२) मुकुलायमानकमलिनीकोषविकलं चकार चञ्चरीककुलं कमलसरसि । (५३) सविधविरहव्याधिविधुरवधूबाध्यमानं बबन्ध बन्धौ इव विबुद्धबन्धूकभासि भास्वति सास्रां दृशं चक्रवाकचक्रवालम् । (५४) सञ्चरन्त्याः समधुकररवं कैरवाकरं कलहंसरमणीरमणीयं माणिक्यकाञ्चीकिङ्किणीजालमिव आचकार श्रियः । प्रकटकलङ्कम् उदयमानं (५५) विसङ्कटविषाणोत्कीर्ण-पङ्कसङ्करशङ्करशकुरशक्करककुद-कूटसङ्काशम् अकाशत आकाशे शशाङ्कमण्डलम् ।

---

यत् मांसं तस्येव छविः कान्तिर्यस्य तथोक्तः अतीच्चाकर इति भावः अपरपारावारपयसि पश्चिमसागरसलिले । मञ्जिष्ठारुणः मञ्जिष्ठा रक्तवर्णद्रव्यभेदः तद्वत् अरुणः रक्तः । अरुणसारथिः सूर्यः । ममज्ज अस्तम् अगमत् इत्यर्थः ।

(५२) मुकुलेति मुकुलायमाने मुकुलीभावमापन्ने इत्यर्थः कमलिनीकोषे पद्मिनीवीजकोषे विकलं विवशं बद्धमिति भावः । चकार जुगुञ्ज चञ्चरीककुलं भ्रमरवृन्दम् । कमलसरसि पद्मसरोवरे ।

(५३) सविधेति सविधेन सन्निहितेन उपस्थितेन इत्यर्थः विरहव्याधिना विच्छेदपीड़या विधुरया कातरया वध्वा चक्रवाक्या बाध्यमानम् असुच्यमानमिति भावः चक्रवाकचक्रवालं चक्रवाकमण्डलं बन्धौ इव सुहृदि इव । विबुद्धेति विबुद्धं विकसितं यद्बन्धूकं तदाख्यपुष्पविशेषः तद्वत् भासः दीप्तयः यस्य तथाभूते । भास्वति रवौ सास्रां सवाष्पां दृशं बबन्ध निदधे । अन्योऽपि विपदि बन्धुमुखं निरीक्षते इति भावः ।

(५४) समधुकररवं मधुकराणां भ्रमराणां रवैः सह वर्त्तमानं कैरवाकरं कुमुदनिवहः कलहंसैः हंसविशेषैः रमणीयं मनोज्ञं सञ्चरन्त्याः सञ्चरन्त्याः श्रियः लक्ष्म्याः शोभाया इति भावः माणिक्यस्य रत्नविशेषस्य काञ्ची रसना तस्याः किङ्किणीजालमिव क्षुद्रघण्टिकानिचय इव आचकार रराज । प्रकटकलङ्कम् उज्ज्वललाञ्छनम् उदयमानम् उद्गच्छत् ।

(५५) विसङ्कटेति विसङ्कटं विशालं विषाणं शृङ्गं तेन उत्कीर्णः उद्धृतः यः पङ्कः कर्दमः तेन सङ्करः सङ्गः यस्य तथाभूतं शङ्करस्य हरस्य शक्करशक्करस्य

अस्याञ्च (५६) वेलायाम् अनतिक्रमणीयवचनैः उपहृत्य प्रधानसामन्तैः विज्ञाप्यमानः कथं कथमपि अभुङ्क्त। प्रभातायाञ्च (५७) शर्वर्य्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवम् उवाच तात! भूमिरसि गुरुनियोगानाम्। (५८) शैशव एव अग्राहि गुणवत्पताका इव भवता तातस्य चित्तवृत्तिः। यतो भवन्तमेवंविधं (५९) विधेयं विधिविधानोपनतनैर्घृण्यम् इदं किमपि विभणिषति मे हृदयम्। (६०) न अवलम्बनीया बालभावसुलभा प्रेमविलोमा वामता। (६१) वैधेय इव मा कृथाः प्रत्यूहम् ईहितेऽस्मिन्। न खलु न जानासि लोकवृत्तम्। (६२) लोकत्रयत्रातरि मान्धातरि मृते किं कृतं

---

दान्तवृषभस्य यत् ककुदकूटं ककुदपिण्डं तत्सङ्काशं तत्सदृशं शशाङ्कमण्डलम् आकाशे अकाशत व्यद्योतत।

(५६) वेलायां समये अनतिक्रमणीयवचनैः अलङ्घ्यवाग्भिः विज्ञाप्यमानः अनुरुध्यमानः। कथं कथमपि अतिकृच्छ्रेण इत्यर्थः।

(५७) शर्वर्य्यां रजन्याम्। तात वत्स! भूमिः पात्रम्। गुरुनियोगानां गुरुजनादेशवचनानाम्।

(५८) शैशवे बाल्ये अग्राहि गृहीता विदितेति यावत्। गुणवत्पाताका इव गुणशालिनी वैजयन्ती इव चित्तवृत्तिः मनोऽभिप्रायः।

(५९) विधेयं वचनस्थितं विधेयो विनयग्राही वचनस्थित आश्रव इत्यमरः। विधीति विधिर्दैवस्य विधानेन विलसितेन उपनतम् उपस्थितं नैर्घृण्यं वैराग्यं यस्य तथाभूतम् इदम् मे हृदयं किमपि विभणिषति भणितुमिच्छति।

(६०) बालभावसुलभा शैशवसहजा प्रेमविलोमा प्रेम्णः मातृवात्सल्यस्येति भावः विलोमा विरोधिनी वामता प्रतिकूलता अवाध्यतेत्यर्थः न अवलम्बनीया न ग्रहणीया।

(६१) वैधेय इव मूर्ख इव अस्मिन् ईहिते चेष्टिते प्रत्यूहं विघ्नम्। लोकवृत्तं लोकाचारम्।

पुरुकुत्सेन ? (६३) भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा ? (६४) महासुरसमरमध्याध्यासितविदशरथे दशरथे वा रामेण ? (६५) गोष्पदीकृतचतुरुदन्वदन्ते दुष्मन्ते वा भरतेन ?। तिष्ठन्तु तावदेते तातेनैव (६६) शतसमधिकाध्वरधूमविसरधूसरितवासववयसि (६७) सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं न अकारि राज्यम् ?। यश्च किल शोकः समभिभवति तं (६८) कापुरुषम् आचक्षते शास्त्रविदः। स्त्रियो हि विषयः शुचाम्। तथापि किं करोमि स्वभावस्य सेयं

---

(६२) लोकत्रयत्रातरि त्रिलोकीत्राणक्षमे इति भावः पुरुकुत्सेन तत्पुत्रेण इत्यर्थः किं कृतम् ? राज्यमेव गृहीतं न तु वनमाश्रितमिति भावः।

(६३) भ्रूलतेति। भ्रूलतया भ्रूभङ्गीति भावः आदिष्टानि आज्ञप्तानि अष्टादशद्वीपानि येन तथाभूते अष्टादशद्वीपाधिपतौ इति भावः। दिलीपे मृते इति शेषः रघुणा तत्पुत्रेण किं कृतम् ? इति पूर्वेणान्वयः।

(६४) महासुरेति। महासुराणां समरमध्यम् अध्यासितः स्थापितः विदशरथः देवरथः यस्य तथाभूते इन्द्रसाहाय्यार्थम् असुरान् हन्तुम् अध्यासि[illegible] इति भावः दशरथे मृते इति शेषः रामेण तत्पुत्रेण किं कृतम् ? इति पूर्वेणान्वयः।

(६५) गोष्पदीति। गोष्पदीकृताः चत्वारः उदन्वन्तः समुद्राः तैः अन्तः रम्यः समुज्ज्वल इति यावत्। तस्मिन् दुष्मन्ते मृते सति भरतेन तत्पुत्रेण किं कृतम् ? इति पूर्वेणान्वयः। एते मान्धातादयः। तातेन पित्रा प्रभाकरवर्द्धनेन इति भावः।

(६६) शतेति। शतात् समधिका अतिरिक्ता अध्वराः यज्ञाः अश्वमेधादयः तेषां धूमविसरैः धूसरितः वासव .इन्द्र एव वयः पक्षी येन तथाभूते धूमोद्गमेन ह्यन्यस्याः पक्षिणः धूसरीक्रियन्ते अस्य तु यज्ञानां तथा धूमोद्गतिः जाता यथा स्वर्गाधिपतिरपि धूसरताम् अयासीत् इति भावः।

(६७) सुगृहीतनाम्नि सुष्ठु गृहीतं नाम येन तथाभूते तत्रभवति पूज्ये पितरि परासुतां पञ्चत्वं गते सति राज्यं किं न अकारि ? न कृतं किम् ?।

कापुरुषता वा (६९) स्त्रैणं वा यदेवम् आस्पदं पितृशोक-हुतभुजो जातोऽस्मि । मम हि (७०) भूभृति पर्य्यस्ते निरव-शेषत: प्रस्रवणानि इव स्रुतानि अश्रूणि अस्तमिते (७१) महति तेजसि अन्धकारीभूतदशाशस्य प्रनष्ट: (७२) प्रज्ञालोक: प्रज्वलितं हृदयम् आलयदाहभीत इव स्वप्नेऽपि न उपसर्पति विवेक: बलीयसा सन्तापेन (७३) जातुषमिव विलीनम् अखिलं धैर्य्यम् पदे पदे (७४) दिग्धशरोपाहता इव हरिणी मुह्यति मति: पुरुषद्वेषिणी इव दूरत एव भ्रमन्ती परि-हरति स्मृति: अम्बा इव तातेनैव सह गता धृति: (७५) वार्द्धु-षिकप्रयुक्तानि इव वित्तानि प्रतिदिवसं वर्द्धन्ते दु:खानि (७६) शोकानलधूमसम्भारसम्भृताम्भोधरभरितमिव वर्षति

---

(६८) कापुरुषं पुरुषाधमम् । कापुरुषता नीचता ।

(६९) स्त्रैणं स्त्रीत्वम् । आस्पदं पात्रं स्थानमित्यर्थ: पितृशोकहुतभुज: पितृ-शोकानलस्य ।

भूभृति राज्ञि पर्वते च पर्य्यस्ते विध्वस्ते निरवशेषत: कार्त्स्न्येन प्रस्रवणानि इव निर्झरा इव स्रुतानि गलितानि ।

(७१) महति तेजसि पितरि सूर्य्ये च अन्धकारीभूतदशाशस्य अन्धकारीभूता दश आशा दिशो यस्य तादृशस्य दशापि दिशोऽन्धकारिता इव पश्यत इत्यर्थ: ।

(७२) प्रज्ञा एव आलोक: उद्योत: ।

(७३) जातुषमिव लाक्षानिर्मितमिव विलीनं विलयं गतम् ।

(७४) दिग्धेति दिग्धेन विषाक्तेन शरेण इषुणा शरे इषु: द्वयोरित्यमर: । आहतेव विद्धेव । पुरुषद्वेषिणी इव पुरुषं दृष्ट्वा पलायनपरा कामिनी इव इत्यर्थ: । अम्बा इव माता इव । धृति: सन्तोष: ।

(७५) वार्द्धुषिकेति । वृद्ध्या जीवतीति वार्द्धुषिको वणिक् तेन प्रयुक्तानि कस्मिंश्चित् कार्य्ये नियुक्तानि इव वित्तानि धनानि वर्द्धन्ते वृद्धिं गच्छन्ति ।

(७६) शोकेति । शोकानलस्य शोकाग्ने: धूमसम्भारेण धूमनिवहेन सम्भृत:

नयनवारिधाराविसरं शरीरम्। (७७) सर्वः पञ्चजनः पञ्चत्वमुपरतः प्रयाति वितथमेतद्वदति बालो लोकः। तातो (७८) हुताशनतामिव केवलमापन्नो येनैवं दहति माम्। इदमसाम्परायिकमिव हृदयमवष्टभ्य व्युत्थितः शोको दुर्निवारः वाड़व इव वारिराशिं पविरिव पर्वतं क्षय इव क्षपाकरं राहुरिव रविं दहति दारयति तनूकरोति कवलयति। न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य महापुरुषस्य विनिपातम् अश्रुभिरेव केवलैः अतिवाहयितुम्। (७९) राज्ये विषे इव चकोरस्य मे विरक्तं चक्षुः। (८०) बहुमृतपटावगुण्ठनां रञ्जितरङ्गां जनङ्गमानामिव वंशवाह्याम् अनाथां

---

सञ्जातः योऽम्भोधरः मेघः धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः इति कालिदासः तेन भरितमिव आपूरितमिव शरीरं गगनमिति च नयनवारिधाराविसरं वाष्पधारासन्तानं वर्षति मुञ्चति।

(७७) पञ्चजनः पञ्चभूतनिर्मितो मानवः स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा इत्यमरः। उपरतः मृतः सन् पञ्चत्वं पञ्चसु पृथिव्यादिषु विलयरूपतां प्रयाति गच्छति। वितथम् असत्यमेतत्।

(७८) हुताशनताम् अग्नित्वमेव न तु पृथिव्यादित्वमित्येवकारार्थः। असाम्परायिकमिव अयुक्तमिव असात्मिकं वा। हृदयम् अवष्टभ्य आक्रम्य व्युत्थितः विशेषेण उत्थितः शोकः दुर्निवारः अनिवार्य्यः। वाड़व इव वड़वानल इव वारिराशिं समुद्रम्। पविरिव वज्रमिव कुलिशं भिदुरं पविरित्यमरः। क्षय इव राजयक्ष्म इव क्षपाकरं चन्द्रम्। कवलयति ग्रसति।

(७९) विष इव गरल इव चकोरस्य पक्षिविशेषस्य विषे दृष्टे चकोरस्य अक्षिणी विरज्येते इति प्रसिद्धिः।

(८०) बह्विति। बहवः मृतस्य शवस्य पटा वस्त्राणि अवगुण्ठनानि शिरोवेष्टनानि यस्याः तां रञ्जितः रङ्गः समाजः यया तथोक्तां जनङ्गमानामिव चाण्डालानामिव चण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमा इत्यमरः। वंशवाह्यां वंशानुक्रमेण वहनीयां कौलीन्यवहिष्कृताञ्च।

श्रियं त्यक्तुमभिलषति मे मन:। (८१) क्षणमपि दग्धगृहे शकुनिरिव न पारयामि स्थातुम्। सोऽहमिच्छामि मनसि वाससीव सुलग्नं स्नेहमलमिदम् अमलै: (८२) शिखरिशिखरप्रस्रवणस्वच्छस्रोतोऽम्बुभि: क्षालयितुम् आश्रमपदे। (८३) अतस्त्वम् अन्तरितयौवनसुखाम् अनभिमतामपि जरामिव पुरु: आज्ञया गुरोर्गृहाण मे राज्यचिन्ताम्। (८४) त्यक्तसकलबालक्रीड़ेन हरिणा इव दीयताम् उरो लक्ष्म्यै। परित्यक्तं मया शस्त्रम्। इति एवमभिधाय खड्गग्राहिणो हस्तात् आदाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम्।

अथ तच्छ्रुत्वा (८५) निशितशिखेन शूलेन इव आहत:

---

(८१) शकुनिरिव गृहचटकिकेव गृहपालितपक्षीव। वाससि इव वसने इव सुलग्नं संसक्तं स्नेह: संसारेषु अनुराग: मलमिव स्नेहमलम्। अमलै: निर्मलै:।

(८२) शिखरीति। शिखरिण: पर्वतस्य शिखरेषु शृङ्गेषु यानि प्रस्रवणानि निर्झराणि तेषां स्वच्छानि विशदानि स्रोतांसि प्रवाहा: तेषाम् अम्बूनि जलानि तै:। आश्रमपदे तपोवने।

(८२) अन्तरितेति। अन्तरितं व्यवहितं यौवनसुखं यस्यां तथाविधां वर्जित-यौवनोचितविषयसम्भोगसुखामित्यर्थ: अतएव अनभिमताम् अनभिलषिताम्। पुरुर्ययातिनृपते: कनीयान् सुत: स इव गुरो: ज्येष्ठस्य भ्रातु: पितुश्च। राज्यचिन्तां राज्यभारं पुरा ययाति: शुक्राचार्य्यसुतां देवयानीम् अवमन्य तस्या दासीभूतां वृषपर्वणोऽसुरराजकन्यां शर्मिष्ठां कामयमानो दुहितृनिवेदितेन शुक्रेण त्वं जरां प्राप्स्यसीति शप्त: ज्येष्ठान् सुतान् यदुप्रभृतीन् मदीयां जरां गृह्णीत इत्युक्तोऽपि तै: अवमत: कनीयसे पुत्राय पुरवे जरां दत्तवान् स तु पुरु: पितुराज्ञया तां जरां प्रतिपेदे इति भारती वार्त्ता।

(८४) त्यक्तेति। त्यक्ता सकला बालक्रीड़ा येन तथाभूतेन बाल्यभावं परित्यजत इत्यर्थ:। हरिणेव विष्णुनेव लक्ष्म्यै: राजश्रियै कमलायै च उर: वक्ष:स्थलं दीयतां समर्प्यताम्। निस्त्रिंशम् असिम्। उत्ससर्ज परितत्याज।

(८५) निशितशिखेन तीक्ष्णाग्रेण। माम् अन्तरेण विना मयि असन्निहिते इत्यर्थ:

प्रविदीर्णहृदयो देवो हर्षः समचिन्तयत् किं नु खलु माम् अन्तरेण आर्य्यः केनचित् असहिष्णुना किञ्चिद्ग्राहितः कुपितः स्यात्? उत अनया दिशा परीक्षितुकामो माम्? उत (८६) शोकजन्मा चेतसः समाक्षेपोऽयमस्य?। आहोस्वित् आर्य्य एव अयं न भवति? किं वार्य्येण अन्यदेवाभिहितम् अन्यदेव अश्रावि मया (८७) शोकशून्येन श्रवणेन्द्रियेण?। आर्य्यस्य वा अन्यदेव विवक्षितम् अन्यदेव आपतितं मुखेन?। अथवा सकलवंशविनाशाय विनिपातनोपायोऽयं विधिः? मम वा (८८) निखिलपुण्यपरिक्षयोपक्षेपः कर्मणाम् (८९) अननुकूलसमग्रग्रहचक्रवालविलसितं वा?। अथवा (९०) तातविनाशनिःशङ्ककलिकालक्रीड़ितम्? येन अयं यः कश्चित् इव यत्किञ्चनकारिणं माम् अपुष्पभूतिवंशसम्भूतमिव अतात-

---

असहिष्णुना आवयोः सौभ्रात्रं सोढुमशक्नुवता इत्यर्थः ग्राहितः अवबोधितः किञ्चित् मद्दुश्चेष्टितमिति भावः। उत अथवा अनया दिशा नयेन इत्यर्थः। परीक्षितुकामः परीक्षार्थी।

(८६) शोकजन्मा शोकप्रभवः समाक्षेपः समाकर्षणं समाकुलता वा आहोस्वित् अथवा।

(८७) शोकशून्येन शोकेन शून्यं स्वव्यापारहीनमित्यर्थः तेन विवक्षितं वक्तुम् इष्टम्। आपतितम् उपस्थितं निर्गतं वा।

(८८) निखिलेति। निखिलानां समग्राणां परिक्षयः प्रणाशः तस्य उपक्षेपः प्रसङ्गः।

(८९) अननुकूलेति। अननुकूलाः प्रतिकूलाः समग्राः ग्रहाः तेषां चक्रवालस्य समूहस्य विलसितं विजृम्भितं विचेष्टितमिति यावत्।

(९०) तातेति। तातस्य पितुः विनाशेन उपरमेण निःशङ्कः निर्भयः यः कलिकालः तस्य क्रीड़ितं विलसितम्। अयम् आर्य्यः। यः कश्चिदिव साधारणजन इव यत्किञ्चनकारिणं यथेच्छचारिणम् अपुष्पभूतिवंशसम्भूतमिव पुष्पभूतिः

तनयमिव (८१) अनात्मानुजमिव अभक्तमिव दृष्टदोषमिव (८२) श्रोत्रियमिव सुरापाने सद्भृत्यमिव स्वामिद्रोहे सज्जनमिव नीचोपसर्पणे सुकलत्रमिव व्यभिचारे अतिदुष्करे कर्मणि समादिष्टवान् ?। तदेतत् तावत् अनुरूपं यत् (८३) शौर्योन्मादमदिरोन्मत्त-समस्तसामन्तमण्डलसमुद्रमथन-मन्दरे तादृशि पितरि मृते तपोवनं वा गम्यते वल्कलानि वा गृह्यन्ते तपांसि वा सेव्यन्ते ?। या तु मयि (८४) राज्याज्ञा सा दग्धेऽपि दाहकारिणी मयि अवग्रहग्लपिते धन्वनि इव अङ्गारवृष्टि:। तत् असदृशम् इदम् आर्यस्य। यद्यपि च (८५) विभु: अनभिमान: द्विजाति: अनेषण: मुनि: अरो-

---

नाम आदिराज: तस्य वंशे असम्भूतमिव अनुत्पन्नमिव अताततनयमिव अतातस्य तातभिन्नस्य अन्यस्य तनयमिव।

(८१) अनात्मानुजमिव अनात्मन: आत्मभिन्नस्य अनुजमिव।

(८२) श्रोत्रियमिव वेदपारगमिव श्रोत्रियच्छान्दसौ समौ इत्यमर: सुरापाने मद्यपाने सुरापायी श्रोत्रियो यथा लोकै: परिहीयते तथाभूतमिव स्वामिद्रोहे सद्भृत्यमिव प्रभुद्रोहिणम् अथच सुजनं भृत्यमिव नीचोपसर्पणे सज्जनमिव नीचसेवापरं साधुजनमिव व्यभिचारे परपुरुषप्रसक्तौ सुकलत्रमिव परपुरुषासक्तां सुन्दरीं स्त्रियम् इव। अतिदुष्करे अतिदुर्वहे कर्मणि राज्यचिन्तायामिति भाव:। अनुरूपं युक्तम्।

(८३) शौर्य्येति। शौर्य्योन्मादेन शौर्य्यजनितौद्धत्येन मदिरोन्मत्ता इव सुरापानमत्ता इव ये समस्ता: सामन्ता अधीश्वरा: तेषां मण्डलं चक्रवालम् एव समुद्र: तस्य मथने विलोड़ने मन्दर: मन्दराख्यो गिरि: तस्मिन्। समुद्धतराजन्यगणविजेतरि इत्यर्थ: सेव्यन्ते चर्य्यन्ते।

(८४) राज्याज्ञा राजकार्य्यादेश:। दग्धे पितृशोकेन वनाग्निना च। अवग्रहग्लपिते अवग्रह: वृष्टिप्रतिबन्ध: तेन ग्लपिते ग्लानिं नीते विशुष्के इति भाव: धन्वनि इव मरौ इव अङ्गारवृष्टि: अग्निस्फुलिङ्गवर्षणम्। असदृशम् अयुक्तम्।

(८५) विभु: प्रभु: निरभिमान: निरहङ्कार:। द्विजाति: ब्राह्मण: अनेषण:

षण: कपि: अचपल: पण्डित: (९६) अमत्सर: वणिक् अतस्कर: रम्यजानि: अकुहन: साधु: अदरिद्र: (९७) द्रविणवान् अखल: कीनाशोऽनच्चिगत: मृगयु: अहिंस्र: (९८) पाराशरी ब्राह्मण: सेवक: सुखी कितव: कृतज्ञ: (९९) परिव्राट् बुभुक्षु: नृशंस: प्रियवाक् अमात्य: सत्यवादी (१००) राजसूनु: अदुर्विनीतश्च जगति दुर्लभ: तथापि मम आर्य्य एव आचार्य्य:। को हि नाम (१) तद्विधे निपतिते राजगन्धकुञ्जरे जनयितरि ईदृशे च (२) विफलीकृतविशालशिलास्तम्भोरुभुजे भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि

---

निरभिलाष: अयाचक इत्यर्थ: अरोषण: अक्रोधन:। अचपल: अचञ्चल: धीर इत्यर्थ:।

(९६) अमत्सर: अन्यद्वेषरहित:। वणिक् व्यवसायी अतस्कर: अचौर:। प्रियजानि: रम्या जाया भार्य्या यस्य तथोक्त: अकुहन: नास्ति कुहना ईर्ष्या शङ्का वा यस्य तथाभूत: परपुरुषभयवर्जित इति भाव:।

(९७) द्रविणवान् धनी अखल: अदुर्जन: भद्र इत्यर्थ:। कीनाश: कृतान्त: नीचश्च कृतान्ते पुंसि कीनाश: क्षुद्रकार्षिकयोस्त्रिषु इति कोष: अनच्चिगत: अद्वेष्य: प्रिय इति यावत्। मृगयुर्व्याध: अहिंस्र: हिंसावर्जित इत्यर्थ:।

(९८) पाराशरी भिक्षु: ब्राह्मण: ब्रह्मानुष्ठानरत:। सेवक: भृत्य:। कितव: धूर्त्त: द्युतकृदित्यर्थ:। कृतज्ञ: कृतोपकारवित्।

(९९) परिव्राट् यति: बुभुक्षु: भोजनार्थी। नृशंस: निष्ठुर: प्रियवाक् मधुरभाषी। अमात्य: राजकर्मचारी सत्यवादी सत्यभाषणशील:।

(१००) राजसूनु: राजतनय: अदुर्विनीत: सुशील इत्यर्थ:। राजपुत्रं मां दुर्विनीतं मत्वा यद्येतदुक्तवान् ममार्य्य इति भाव:। आचार्य्य: गुरु: उपदेष्टा। आर्य्य: यथा माम् आदिशति तथैव मे प्रवर्त्तितव्यमिति भाव:।

(१) तद्विधे तादृशे निरुपमप्रतापशालिनि इति भाव: राजा एव गन्धकुञ्जर: गन्धद्विप: तस्मिन्। जनयितरि पितरि। ईदृशे एवम्भूते।

(२) विफलीकृतेति विफलीकृतौ .व्यर्थीकृतौ इति यावत् विशालौ शिला-

तपोवनं गच्छति (३) सकललोकलोचनजलपाताप्लाविते म्लेच्छलोके वसुधाभिधाने (४) धनमदखेलनिखिलखलमुखविकारलक्षणाख्यायमाननीचाचरणां (५) सुभटकुटुम्बकर्मकुम्भदासीं श्रीसंज्ञिकां चण्डाल: कामयेत। कथमिव सम्भावितम् अत्यन्तम् अनुचितम् इदम् आर्य्येण?। किम् (६) उपलक्षितम् अनवदातम् इदं मयि?। किं वा अस्य चेतस: च्युत: सौमित्रि: विस्मृता वा वृकोदरप्रभृतय: ?। (७) अनपेक्षितभक्तजना स्वार्थैकनिष्पादननिष्ठुरा न आसीत् इयमार्य्यस्य ईदृशी प्रभविष्णुता?। अपिच आर्य्ये तपोवनं गते

---

समौ याभ्यां तादृशौ ऊरू महान्तौ भुजौ यस्य तथाभूते भूभुजि भूपतौ ज्यायसि अग्रजे।

(३) सकलेति। सकलानां लोकानां लोचनजलस्य वाष्पवारिण: पातेन आप्लाविते पङ्किले म्लेच्छलोके म्लेच्छखण्डे वसुधाभिधाने पृथिव्याख्यायाम्।

(४) धनमदेति। धनमदेन ऐश्वर्य्यमदेन खेला क्रीड़ा येषां तथाभूता ये निखिला: समग्रा: खला: दुर्जना: तेषां मुखविकाराणां मुखभङ्गीनां लक्षणेन चिह्नेन आख्यायमानं कथ्यमानं सूच्यमानमिति यावत् नीचाचरणं निकृष्टव्यवहार: यस्या: ताम्।

(५) सुभटेति। सुभटानां सुवीराणां शूराणामिति यावत् कुटुम्बस्य परिवारस्य कर्म सेवारूपं कार्य्यं तत्र कुम्भदासी जलवाहिनी किङ्करी तां श्रीसंज्ञिकां लक्ष्मीनाम्नीम्। कामयेत अभिलषेत्। त्वयि तपोवनं गते न अहं राज्यलक्ष्मीम् अभिलषामि इति समग्रवाक्यार्थ: यदि अहं राज्यलक्ष्मीकामुक: तदा मां चण्डालं जानीहि इति भाव:।

(६) उपलक्षितम् अनुभूतम् अनवदातम् अयशस्करम्। चेतस: मनस: च्युत: प्रभ्रष्ट: सौमित्रिर्लक्ष्मण:। वृकोदरप्रभृतय: भीमसेनादय:। यथा रामस्य अनुजो लक्ष्मण: यथा वा युधिष्ठिरस्य अनुजा भीमादय: ज्येष्ठानुगामिन आसन् तथा अहमपि ज्येष्ठमेव ताम् अनुवर्त्ते इति भाव:।

(७) अनपेक्षितेति। न अपेक्षित: अनुरुद्ध: भक्तजनो यया तथाभूता।

जिजीविषुः को हि नाम मृगीं मनसापि ध्यायेत् ?। (८) कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गोत्तमाङ्गमदच्छटाच्छुरितचारुकेसरभारभास्वरमुखे केशरिणि वनविहाराय विनिर्गते (९) निवासं गिरिगुहां कः पाति पृष्ठतः ?। प्रतापसहाया हि सत्त्ववन्तः। (१०) कः चपलां लक्ष्मीं प्रति अनुरोधोऽयम् आर्य्यस्य ? यत् इयमपि चीरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगी इव न नीयते जराजालिनी ? किंवा मम अनेन वृथा बहुधा (११) विकल्पितेन ? तूष्णीमेव आर्य्यम् अनुगमि-

---

स्वार्थैति स्वार्थस्य स्वकार्य्यस्य एकं केवलं निष्पादनं तेन निष्ठुरा नृशंसा। प्रभविष्णुता प्रभुता।

(८) कुलिशेति। कुलिशस्येव वज्रस्येव शिखरम् अग्रं यस्य तथाभूतः यः खरनखराणां तीक्ष्णनखाणां प्रचयः समूहः तेन प्रचण्डः यश्चपेटः तेन आपाटितः निपातितः यो मत्तमातङ्गः मत्तहस्ती तस्य उत्तमाङ्गे शिरसि या मदच्छटाः मदधाराः ताभिः छुरितेन रञ्जितेन चारुणा मनोहरेण केसरभारेण जटाजालेन भास्वरं दीप्तं मुखं यस्य तथाभूते। केशरिणि सिंहे। वनविहाराय काननपर्य्यटनाय तपोवननिवासायेति ध्वनिः।

(९) निवासं वासभूमिं पृष्ठतः पश्चात् स्थितामिति भावः। पाति रक्षति इत्यर्थः। सत्त्ववन्तः महानुभावाः प्रतापः कोषदण्डजतेज एव सहायो येषां तथोक्ताः।

(१०) चपलाम् अस्थिरां लक्ष्मीं प्रति आर्य्यस्य अनुरोधः उपरोधः आग्रहः। यत् यस्मात्। इयं लक्ष्मीः चीरान्तरितकुचा चीरं वल्कलं जीर्णवसनखण्डं वा तेन अन्तरितौ आवृतौ कुचौ स्तनौ यस्याः तथाभूता। कुशाः कुसुमानि पुष्पाणि समिधः काष्ठानि पलाशाः पत्राणि तेषां पूलिका समूहः तां वहन्ती दधाना जराजालिनी जराणां जालं केशशुक्लतादिकम् अस्या अस्ति इति तथाभूता। मया दुर्वहा लक्ष्मीः तपोवने यदि न आर्य्यमनुसरति तस्यास्तु तया प्रकृतेः अभावात् तदा तस्याः पालने कोऽयम् आग्रहः भवतः इति भावः।

थ्यामि। गुरुवचनातिक्रमकृतञ्च किल्बिषम् एतत् तपोवने तप एव अपास्यति। इति अवधार्य्य मनसा प्रथमतरं गतस्तपोवनम् अधोमुखः तूष्णीम् अवातिष्ठत।

अत्रान्तरे (१२) पूर्वादिष्टेन एव रुदता वल्कलकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु (१३) निर्दयकरतलताड़नभिया इव क्वापि गतहृदये रटति राजस्त्रैणे (१४) तारम् अब्रह्मण्यम् ऊर्द्धदोष्णि विरुदति विप्रजने पादप्रणतिपरे (१५) फूत्कुर्वति पौरवृन्दे विद्राति विद्रुतचेतसि चिरन्तने परिजने परिजनावलम्बिते वेपमानवपुषि पर्य्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतमनसि वर्षीयसि विशति बन्धुवर्गे निराशेषु (१६) नखलिखितमणिकुट्टिमेषु अवाङ्मुखेषु

---

(११) विकल्पितेन पर्य्यालोचितेन अनुशोचनेन इति यावत्। गुर्विति गुरोः ज्येष्ठस्य वचनातिक्रमेण कृतं जनितं किल्बिषं पापम्। तपः चान्द्रायणादिकं व्रतम् अपास्यति खण्डयिष्यति अपनेष्यति इत्यर्थः। प्रथमतरं ज्येष्ठस्य गमनात् अतिपूर्वमित्यर्थः।

(१२) पूर्वादिष्टेन पूर्वमाज्ञप्तेन वल्कलकर्मान्तिकेन परिच्छदाधिकारिणा।

(१३) निर्दयेति। निर्दयं यथा तथा करतलेन ताड़नम् आघातः तस्मात् भीर्भयं तया इव गतं चलितं हृदयं यस्य तथाभूते राजस्त्रैणे राजान्तःपुरिकाजने।

(१४) तारम् उच्चैः यथा तथा ऊर्द्धदोष्णि उत्क्षिप्तबाहौ अब्रह्मण्यम् अवध्योक्तिविशेषः अब्रह्मण्यम् अवध्योक्तौ इत्यमरः तत् क्रियाविशेषणं नपुंसकद्वितीयान्तम्। मा अस्मान् परित्यागेन जहीत्येवं रूपं वचनपूर्वकमित्यर्थः विरुदति विशेषेण रुदति।

(१५) फूत्कुर्वति। चीत्कारं कुर्वति इत्यर्थः पौरवृन्दे पुरवासिवर्गे। विद्राति धावति विद्रुतचेतसि विचलितमनसि। वर्षीयसि अतिस्थविरे। निराशेषु हताशेषु।

(१६) नखेति। नखैः लिखितानि मणिकुट्टिमानि मणिरचितगृहाभ्यन्तर-

निश्वसत्सु सामन्तेषु सबालहद्धासु तपोवनाय प्रस्थितासु सर्वासु प्रजासु सहसा एव प्रविश्य शोकविक्लवः प्रच्चरित-नयनसलिलो राज्यश्रियः परिचारकः संवादको नाम (१७) प्रज्ञाततमो विमुक्ताक्रन्दः सदसि आत्मानम् अपातयत् ।

अथ सम्भ्रान्तो भ्रात्रा सह स्वयं देवो राज्यवर्द्धनः तं पर्य्यपृच्छत् भद्र ! भण भण किम् (१८) अस्मद्व्यसनव्यवसाय-वर्द्धनवद्धधृतिः (१९) अवनिपतिमरणमुदितमतिः अधृति-करम् अपरम् अधिकतरम् इतः समुपनयति विधिः ? इति । स कथं कथमपि अकथयत् देव ! पिशाचानामिव नीचा-त्मनां चरितानि (२०) छिद्रप्रहारीणि प्रायशो भवन्ति । यतो यस्मिन् अहनि अवनिपतिः उपरत इति अभूत् वार्त्ता तस्मिन्नेव देवो ग्रहवर्म्मा दुरात्मना मालवराजेन जीवलोकम् आत्मनः सुकृतेन सह त्याजितः । भर्त्तृदारिकापि राज्यश्रीः

---

तत्वानि यैः तथोक्तेषु । अवाङ्मुखेषु अधोमुखेषु । निःश्वसत्सु आयतमिति शेषः सामन्तेषु राजसु । प्रस्थितासु प्रस्थातुमुद्यतासु इत्यर्थः । राजश्रियः तदाख्याया राजवर्द्धनभगिन्याः ।

(१७) प्रज्ञाततमः अतिपरिचित इत्यर्थः । विमुक्ताक्रन्दः रुदन्नित्यर्थः । सदसि सभायाम् ।

(१८) अस्मदिति । अस्माकं व्यसनानि विपदः एव व्यवसायाः वाणिज्यानि तेषां वर्द्धने अभ्युन्नतिकरणे वद्धा धृतिः धैर्य्यं सन्तोषः वा येन तथाभूतः अस्मद्विपद्-वर्द्धनैकपर इत्यर्थः ।

(१९) अवनीति । अवनिपतेः राज्ञः प्रभाकरवर्द्धनस्य मरणेन मुदिता प्रहृष्टा मतिः यस्य तथाविधः । तत्सद्भावे स्वप्रभावं प्रकटयितुमक्षम इति भावः । अधृतिकरम् असन्तोषकरम् अधैर्य्यकरञ्च । इतः अस्मात् पित्रोः व्यसनादिति भावः । समुपनयति समुपस्थापयति । विधिः दैवम् ।

(२०) छिद्रप्रहारीणि छिद्रेषु रन्ध्रेषु प्राप्तेषु इति भावः प्रहरन्तीति तथा-विधानि ।

(२१) कालायसनिगड़युगलचुम्बितचरणा चौराङ्गना इव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च यथा किल अनायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिः एतामपि भुवम् आजिगमिषति इति विज्ञापिते प्रभुः प्रभवतीति।

ततश्च तादृशम् (२२) अनुपेक्षणीयम् असम्भावितम् आकस्मिकम् अपरं व्यतिकरम् आकर्ण्य अश्रुतपूर्वत्वात् परिभवस्य परपरिभवासहिष्णुतया च स्वभावस्य दर्पबहुलतया च नवयौवनस्य (२३) वीरक्षेत्रसम्भवत्वाच्च जन्मनः कृपाभूमिभूतायाश्च स्वसुः स्नेहात् स तादृशोऽपि बद्धमूलोऽपि अत्यन्तगुरुः एकपद एव अस्य ननाश शोकावेगः। विवेश च सहसा केशरीव गिरिगुहागृहं गम्भीरं हृदयं भयङ्करः कोपावेगः। (२४) केशिनिसूदनशङ्काकुलकालियकुलभङ्गुरभ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्वसा इव प्रथीयसि ललाट-

---

(२१) कालेति। कालायसनिगड़युगलेन कृष्णलौहनिर्मितपादबन्धनशृङ्खलाद्वयेन चुम्बितौ वेष्टितौ चरणौ यस्याः तथाभूता चौराङ्गना इव तस्करनारीव। कारायां बन्धनागारे। अनायकम् अराजकं साधनं सैन्यम्। जिघृक्षुः आचक्रमिषुः एतामपि भुवं राज्यं श्रीकण्ठजनपदम्।

(२२) अनुपेक्षणीयम् अकर्त्तव्योपेक्षमित्यर्थः आकस्मिकं सहसा उपस्थितं व्यतिकरं घटनाम्। परिभवस्य शत्रुकृतस्य अवमानस्य इत्यर्थः। अश्रुतपूर्वत्वात् पूर्वं कदापि अश्रुतत्वादित्यर्थः।

(२३) वीरेति। वीरक्षेत्रात् सम्भवः समुत्पत्तिः यस्य तथाभूतः तस्य भावः तस्मात्। कृपाभूमिभूताया दयार्द्रायाः इत्यर्थः स्वसुः भगिन्याः राज्यश्रियः इत्यर्थः। ननाश नाशं गतः।

(२४) केशिर्नाम अश्वाकारः कश्चिदसुरविशेषः तस्य निसूदनः कृष्णः तस्मात् शङ्का भयं तेन आकुलं कालियस्य तदाख्यस्य नागविशेषस्य यमुनावासिन इति

पट्टे भीषणा भ्रुकुटिः उदभिद्यत। दर्पात् परामृशन् (२५) नखकिरणसलिलनिर्झरैः समरभारसम्भावनाभिषेकमिव चकार दिङ्नागकुम्भकूटविकटस्य बाहुशिखरकोषस्य वामः पाणिपल्लवः। (२६) सङ्खलत्स्वेदसलिलपूरितोदरो निर्मूलं मालवोन्मूलनाय गृहीतकेश इव दुर्मदश्रीकचग्रहोत्कण्ठया इव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिः अपरः। (२७) शस्त्रग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्टवृद्धिविधुतसिन्दूरधूलिः इव कपिलः कपोलयोः अदृश्यत रोषरागः। (२८) समासन्नसकलमहीपालचूडामणिचक्रा-

---

भावः कुलं वंशः सर्पराजीत्यर्थः तद्वत् भङ्गुराः कुटिलाः ये भ्रूभङ्गाः तेषां तरङ्गाः ऊर्मयः सन्ति अस्यामिति तथाभूता। श्यामायमाना कृष्णकाया इत्यर्थः यमस्वसा इव यमुना इव प्रथीयसि अतिविस्तीर्णे। भीषणा भयङ्करी उदभिद्यत उद्भेदं गता इत्यर्थः कर्मकर्त्तरि प्रयोगः। दर्पात् अहङ्कारात्।

(२५) परामृशन् स्पृशन्। नखेति। नखानां किरणा एव सलिलानि तेषां निर्झरैः प्रवाहैः प्रवाहो निर्झरो झर इत्यमरः। समरेति समरभारः संग्रामभारः तस्य सम्भावनं ग्रहणं तस्मिन् अभिषेकः स्नानं तमिव। दिङ्नागेति दिङ्नागस्य ऐरावतस्य कुम्भ एव कूटः शृङ्गं तद्वत् विकटः भीषणस्तस्य। बाहुशिखरमिव स्कन्धपरिभाग एव कोषः तस्य। पाणिपल्लवः करकिसलयः।

(२६) सङ्खलदिति। सङ्खलता निःसरता स्वेदसलिलेन घर्मोदकेन पूरितम् उदरं तलभागः यस्य तथोक्तः। गृहीतकेश इव केशेषु गृहीत इव। दुर्मदेति दुर्मदया मदोद्धतया श्रिया राज्यलक्ष्म्या यः कचग्रहः मां विहाय क्व यास्यसि इति कृत्वा केशाकर्षणं तेन या उत्कण्ठा तया इव। समुत्ससर्प उपजगाम ग्रहीतुम् इति शेषः। अपरः दक्षिणः।

(२७) शस्त्रेति। शस्त्रस्य असेः इत्यर्थः ग्रहणेन मुदिता हृष्टा या राजलक्ष्मीः तया क्रियमाणा या दिष्टवृद्धिः आनन्दोत्सवः तया विधुतः विक्षिप्तः सिन्दूरधूलिः सिन्दूरपरागः यत्र तथाभूत इव। कपिलः पाटलः रोषरागः कोपजनितशोणिमा।

क्रमणजाताहङ्कार इव च समारुरोह वामम् ऊरुदण्डम् उत्तानितः चरणो दक्षिणः। (२९) निष्ठुराङ्गुष्ठकषणनिष्ठ्युत-धूमलेखो निर्वीरोर्वीकरणाय विमुक्तशिख इव लिलेख मणिकुट्टिमम् इतरः पादपद्मः। (३०) दर्पस्फुटितसरसव्रणो-च्छलितरुधिरच्छटावसेकैः शोकविषप्रसुप्तं प्रबोधयन् इव पराक्रमम् अनुजमवादीत् आयुष्मन्! इदं राजकुलम् अमी बान्धवाः परिजनोऽयम् इयं भूमिः (३१) भूपतिभुजपरिघ-पालिताश्च एताः प्रजाः गतोऽहमद्यैव मालवराजकुलप्रल-याय। इदमेव तावत् वल्कलग्रहणम् इदमेव तपः शोकाप-

---

(२८) समासन्नेति। समासन्नानां समुपस्थितानां सकलानां महीपालानां चूडामणयः शिरोरत्नानि तेषां चक्रेण समूहेन आक्रमणं ग्रहणं प्रणिपातावसरे इति भावः तेन जातः उत्पन्नः अहङ्कारो यस्य तथाभूत इव। उत्तानितः उत्तो-लित इत्यर्थः। दक्षिणः चरणः वामम् ऊरुदण्डं समारुरोह आचक्राम आश्रितवान् इत्यर्थः वामोरौ दक्षिणं चरणमवस्थाप्य आसाञ्चक्रे राज्यवर्द्धन इति भावः।

(२९) निष्ठुरेति। निष्ठुरं दृढं यथा तथा अङ्गुष्ठस्य कषणं घर्षणं तेन निष्ठ्यूता निर्गता धूमलेखा धूमराजिः रजोनिकर इति भावः यस्मात् तथाभूतः। निर्वीरो-र्वीकरणाय पृथिवीं निर्वीरां कर्त्तुमित्यर्थः। विमुक्तशिखः विमुक्ता शिखा ज्वाला येन यस्य वा तथोक्तः। इतरः वाम इत्यर्थः पादपद्मः अग्निरिति भावः वा पुंसि पद्मम् इत्यमरः अनुशासनात् पद्मशब्दोऽत्र पुंलिङ्गः। लिलेख सञ्चघर्ष।

(३०) दर्पेति। दर्पेण क्रोधवेगजनितेन इति भावः स्फुटितेभ्यः स्फोटनं प्राप्तेभ्यः अतएव सरसेभ्यः आर्द्रेभ्यः व्रणेभ्यः क्षतेभ्यः पूर्वसंग्रामे प्रतिवीरप्रहितशस्त्रा-घातजनितेभ्य इति भावः उच्छलितानां वेगेन निर्गलितानां रुधिराणां छटाभिः धाराभिः अवसेकाः अभिषेकाः तैः। शोकेति शोक एव विषं तेन प्रसुप्तः विमोहं गतः तम्। पराक्रमं प्रबोधयन्निव जागरयन्निव अपनीतमोहं कुर्वन्निव इत्यर्थः।

(३१) भूपतीति भूपतेः राज्ञः भुजः बाहुरेव परिघः मुद्गरविशेषः तेन पालिता रक्षिताः।

गमोपायश्च अयमेव (२२) यत् अत्यन्ताविनीतारिनिग्रहः। सोऽयं कुरङ्गकैः कचग्रहः केशरिणः भेकैः करपातः कालसर्पस्य वत्सकैः वन्दिग्रहो व्याघ्रस्य अलगर्दैः गलग्रहो गरुड़स्य (२३) दारुभिः दाहादेशो दहनस्य तिमिरैः तिरस्कारो रवेः यो मालवैः परिभवः पुष्पभूतिवंशस्य। (२४) अन्तरितः तापो मे महीयसा मन्युना। तिष्ठन्तु सर्वे एव राजानः करिणश्च त्वया एव सार्द्धम्। अयमेको भण्डिः (२५) अयुतमात्रेण तुरङ्गमाणाम् अनुयातु माम्। इति अभिधाय च अनन्तरमेव (२६) प्रयाणपटहम् आदिदेश।

तच्च तथा (२७) समादिशन्तम् आकर्ण्य जामिजामातृ-

---

(२२) अत्यन्तेति। अत्यन्तम् अविनीतस्य दुर्विनीतस्य अरेः शत्रोः निग्रहः व्यापादनम्। केशरिणः सिंहस्य कुरङ्गकैः मृगैः। कचग्रहः केशाकर्षणम्। भेकैः दर्दुरैः करपातः हस्तक्षेपः कालसर्पस्य मुखे अङ्गेवेति शेषः। करपातश्चपेटाघात इति केचित्। वत्सकैः गोशिशुभिः व्याघ्रस्य वन्दिग्रहः कारावन्धनमित्यर्थः। अलगर्दैः जलव्यालैः जलसर्पैरित्यर्थः अलगर्दो जलव्याल इत्यमरः गलग्रहः गले ग्रहणं कण्ठवेष्टनमित्यर्थः।

(२३) दारुभिः काष्ठैः दाहादेशः दाहस्य आज्ञादानं दहनस्य अग्नेः। तिमिरैः अन्धकारैः तिरस्कारः निर्भर्त्सनम् आच्छादनञ्च रवेः सूर्यस्य। मालवैः मालववंशीयैः राजभिरित्यर्थः।

(२४) अन्तरितः व्यवहितः आच्छादित इत्यर्थः। महीयसा अतिमहता मन्युना क्रोधेन तापः शोकज्वलनम्।

(२५) अयुतमात्रेण दशसहस्रसंख्यामात्रेण दशसहस्राश्वारोहिसैन्यसमेतो भण्डिरित्यर्थः।

(२६) प्रयाणपटहं युद्धयात्रावाद्यविशेषम्।

(२७) समादिशन्तम् आज्ञापयन्तम्। जामीति जामिः स्वसा जामाता तत्पतिः

वृत्तान्तविज्ञानप्रकोपाधानदूयमाने मनसि (३८) निवर्त्तनादेशेन दूरप्ररूढ़प्रणयपीड़ इव प्रोवाच देवो हर्ष: कमिव दोषं पश्यति आर्य्यो मम अनुगमनेन। (३९) यदि बाल इति नितरां तर्हि न त्याज्योऽस्मि (४०) रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम् (४१) अशक्त इति क्व परीक्षितोऽस्मि संवर्द्धनीय इति वियोग: तनूकरोति (४२) अक्लेशसह इति स्त्रीपक्षे निक्षिप्तोऽस्मि सुखम् अनुभवतु इति त्वया एव सह तत्प्रयाति महान् अध्वन: क्लेश इति विरहोऽविषह्यतर:

---

तयोर्वृत्तान्तस्य कारावासोपरमरूपस्य विज्ञानेन य: प्रकोप: तस्य आधानेन आवेशेन दूयमानं सन्तप्यमानं तस्मिन्।

(३८) निवर्त्तनादेशेन निवर्त्तनम् अनुगमननिवृत्ति: तस्य आदेशेन आज्ञया दूरम् अत्यन्तं यथा तथा प्ररूढ़ा जाता प्रणयपीड़ा प्रार्थनाभङ्ग: यस्य तथाभूत:।

(३९) यदि बाल: शिशुरिति धिया अनुगमने निवर्त्तयति आर्य्य इति शेष: तर्हि तदा बालत्वे इति भाव: सुतराम् अतिशयेन कथमपीति भाव: न त्याज्योऽस्मि बालकं मां परित्यज्य भवता क्वापि न गन्तव्यमिति भाव:।

(४०) रक्षणीय: पालनीय इति धियेति चेदिति शेष: तदपि न वक्तव्यमिति भाव: यत: भवतो भुजपञ्जरं रक्षास्थानं भवद्भुजपञ्जरे स्थितिरेव मम औचित्यमिति भाव:।

(४१) अशक्त: अक्षम इति धियेति चेत्। तत्र उत्तरं क्व कुत्र विषये इति शेष: परीक्षितोऽस्मि न कुत्रापि विषये मामशक्तं परीक्षितवान् आर्य्य इति भाव:। वर्द्धनीय: स्थूलदेह: करणीय इति धियेति चेत्। वियोग: भवद्विच्छेद इत्यर्थ: तनूकरोति कृशीकरोति मामिति शेष: तत्कृतो वर्द्धनमिति भाव:।

(४२) अक्लेशसह: न क्लेशसहनशील इति धियेति चेत्। तत्रोत्तरम्। स्त्रीपक्षे निक्षिप्तोऽस्मि नारीस्थाने पातितोऽस्मि। नारीमिव मां क्लेशसहनासहामवगच्छति आर्य्य इति भाव:। सुखम् अनुभवतु भुनक्तु इति धियेति चेत्। तत्रोत्तरम्। तत् सुखम्। अध्वन: पथ:। विरह: तव विच्छेद: अविषह्यतर: अतिशयेन सोढुमशक्य इत्यर्थ:।

( ४३ ) कलत्रं रक्षतु इति श्रीस्ते निस्त्रिंशेऽधिवसति पृष्ठतः तिष्ठतु इति तिष्ठति एव प्रतापः (४४) राजकम् अनधिष्ठितमिति तत् सुबद्धम् आर्य्यगुणैः न वाह्यः सहायो महत इति व्यतिरिक्तमिव मां गणयति प्रलघुपरिकरः प्रयामि इति पादरजसि कोऽतिभारः (४५) द्वयोः गमनम् असाम्प्रतमिति माम् अनुगृहाण गमनाज्ञया कातरो भ्रातृस्नेह इति सदृशो दोषः । का श्रेयम् (४६) आत्मम्भरिता भुजस्य ते यत् एकाकी क्षीरोदफेनपटलपाण्डुरम् अमृतमिव यशः पिपासति ? । ( ४७ ) अवञ्चितपूर्वोऽस्मि प्रसादेषु ।

---

(४३) कलत्रं स्त्रियं स्त्रीलोकमित्यर्थः । श्रीः लक्ष्मीः स्त्रीति भावः निस्त्रिंशे तलवारे । पृष्ठतः पृष्ठशत्रुनिवारणायेति भावः । प्रतापः कोषदण्डजं तेजः तवैतिशेषः येन पृष्ठशत्रवः दूरात् निरस्यन्ते इति भावः ।

(४४) राजकं राजन्यवर्गः अनधिष्ठितम् अनाश्रितं त्वया मदनुगामिना इति शेषः अन्यमाश्रयिष्यतीति भावः । तत्रोत्तरम् । तत् राजकम् आर्य्यगुणैः आर्य्यस्य गुणाः शौर्य्यदाक्षिण्यादयः तैः सुबद्धम् अतिशयेन अधीनीकृतमिति यावत् । वाह्यः वहिः स्थितः । महतः महानुभावस्य सहायः न उपयुज्यते इति शेषः स्वेनैव सर्वार्थसाधकत्वादिति भावः । इति चेत् तत्रोत्तरम् । व्यतिरिक्तमिव भिन्नमिव मां गणयति विचारयति आर्य्य इति शेषः नाहम् आर्य्यभिन्न इति भावः । प्रलघुपरिकरः स्वल्पपरिच्छदः प्रयामि गच्छामि । पादरजसि चरणधूलौ तत्सदृशे मयि इति भावः ।

(४५) द्वयोः भ्रात्रोरिति भावः । असाम्प्रतम् अयुक्तम् । सदृशः तुल्यस्य सोदरस्य वा ।

(४६) आत्मम्भरिता स्वार्थैकपरतेति भावः । क्षीरोदेति क्षीरोदस्य क्षीरसागरस्य फेनपटलं फेनराशिः तद्वत् पाण्डुरं शुभ्रं पिपासति पातुमिच्छति ।

(४७) अवञ्चितपूर्वः अप्रतारितपूर्वः कदापि न प्रतारित इत्यर्थः । प्रसादेषु अनुग्रहेषु ।

तत्प्रसीदतु आर्य्यः नयतु माम् अपि इति अभिधाय च्छितितलविनिहितमौलिः पादयोः अपतत्।

तम् उत्थाय पुनः अग्रजो जगाद (४८) तात! किमेवम् अतिमहारम्भपरिग्रहणेन गरिमाणम् आरोप्यते बलात् अतिलघीयानपि अहितः। (४९) हरिणार्थम् अतिक्षेपणः सिंहसम्भारः। तृणानाम् उपरि कति कवचयन्ति आशुशुक्षणयः। अपिच तव (५०) अष्टादशद्वीपाष्टमङ्गलकमालिनी मेदिनी अस्ति एव विक्रमस्य विषयः। न हि कुलशैल-निवहवाहिनो वायवः सन्नह्यन्ति अतितरले तूलराशौ। (५१) न सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्ति अणीयसि वल्मीके। ग्रहीष्यसि (५२) सकलपृथ्वीपतिप्रलयो-

---

(४८) तात! वत्स!। अतीति अतिमहान् आरम्भः उद्योगः तस्य परिग्रहणम् आश्रयणम् तेन। अतिलघीयानपि अतिक्षुद्रोऽपि अहितः शत्रुः बलात् गरिमाणं गौरवम् आरोप्यते नीयते।

(४९) हरिणार्थं मृगवधार्थमित्यर्थः अतिक्षेपणः अतिलज्जाकरः सिंहसम्भारः सिंहस्य सम्भारः विशिष्टप्रयास इत्यर्थः। आशुशुक्षणयः अग्नयः कवचयन्ति सन्नह्यन्ति।

(५०) अष्टादशेति! अष्टादशद्वीपान्येव अष्टौ मङ्गलकानि कङ्कणानि स्त्रीणां माङ्गल्यालङ्कारः कङ्कणमेव इति भावः तेषां माला विद्यतेऽस्याः तथाभूता। विषयः स्थानम्। कुलेति कुलशैलानां महेन्द्रादीनां प्रागुक्तानां निवहान् समूहानीति यावत्। वहन्ति स्थानात् स्थानान्तरं नयन्तीति तथाभूताः। अतितरले अतिचपले।

(५१) सुमेर्विति। सुमेरोः काञ्चनाद्रेः वप्रेषु तटेषु यः प्रणयः समासक्तिः तत्र वप्रक्रीडायामिति भावः तेन प्रगल्भाः धृष्टाः दुर्लङ्घिता इति भावः दिक्करिणः दिग्गजाः। अणीयसि अतिलघुनि वल्मीके वल्मीकाख्यकीटनिर्मिते मृत्पिण्डे इत्यर्थः न परिणमन्ति न वप्रक्रीडामाचरन्तीत्यर्थः।

त्पातमहाधूमकेतुं मान्धाता इव चारुचामीकरपत्रलतालङ्काराङ्ककायं कार्मुकं ककुभां विजये। मम तु (५३) दुर्निवारायाम् अस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षम्यताम् अयम् एकाकिनः कोपकवल एकः। तिष्ठतु भवान्। इति अभिधाय च तस्मिन् एव वासरे निर्जगाम अभ्यमित्रम्।

अथ तथा गते भ्रातरि उपरते च पितरि (५४) प्रोषितजीविते च भगिनीपतौ मृतायाञ्च मातरि संयतायाञ्च स्वसरि स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमपि एकाकी कालं तम् अनैषीत्। अतिक्रान्तेषु बहुषु वासरेषु कदाचित् तथैव (५५) भ्रातृगमनदुःखासिकया दत्तप्रजागरः त्रिभागशेषायां त्रियामायां यामिकेण गीयमानाम् इमाम् आर्यां शुश्राव।

---

(५२) सकलेति। सकलानां पृथ्वीपतीनां प्रलये संहारे यः उत्पातः उपद्रवव्यञ्जक इति यावत् महान् धूमकेतुः उपग्रहविशेषः तं तन्निभमिति भावः। मान्धाता इव युवनाश्वतनयः प्रवीरः क्षत्रियविशेष इव। चार्विति चारुभिः मनोज्ञैः चामीकरपत्रलतालङ्कारैः सौवर्णपत्रभङ्गिरचितभूषाभिः अङ्कः चिह्नं यस्य तादृशः कायः अवयवो यस्य तथाभूतं कार्मुकं धनुः ककुभां दिशां विजये विजयकाले इत्यर्थः गृहीष्यसि इत्यन्वयः।

(५३) दुर्निवारायां निवारयितुमशक्यायां विपक्षक्षपणक्षुधि शत्रुध्वंसनरूपायां क्षुधायां क्षुभितायाम् उद्दृप्तायाम्। क्षम्यतां सह्यताम् एकाकिनः मम इति शेषः कोपकवलः क्रोधग्रासः। अभ्यमित्रम् अभिशत्रु शत्रुं प्रति इत्यर्थः।

(५४) प्रोषितजीविते गतासौ भगिनीपतौ ग्रहवर्मणि। संयतायां कारारुद्धायां स्वसरि भगिन्याम् राजश्रीनाम्न्याम्। स्वयूथभ्रष्ट इव निजदलच्युत इव।

(५५) भ्रातृगतदुःखासिकया भ्रातुर्गतं गमनं स्वपरित्यागेन इति भावः तेन या दुःखासिका दुःखावस्थानं तेन। यामिकेन प्रहरिणा प्रहरपालेन इति यावत्।

द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि ।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥५६॥

ताञ्च श्रुत्वा सुतराम् अनित्यताभावनया दूयमानहृदयः प्रक्षीणभूयिष्ठायां क्षपायां क्षणमिव निद्राम् अलभत स्वप्ने च अभ्रंलिहं लोहस्तम्भं भज्यमानम् अपश्यत्। उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत अचिन्तयच्च किं नु खलु माम् एवम् अमी सततम् (५८) अनुबध्नन्ति दुःस्वप्नाः ? स्फुरति च दिवानिशम् अकल्याणाख्यानविचक्षणम् अदक्षिणम् अक्षि। (५९) सुदारुणाश्च अक्षुद्रक्षितिपक्षयम् आचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः। प्रत्यहं राहुः (६०) अविकलकायबन्ध इव

(५६) द्वीपेति। विधिः दैवम् पवनः वायुः पोतमिव वहित्रमिव अर्णवयानमिव इत्यर्थः द्वीपेषु उपगीताः कीर्त्तिता गुणाः शौर्य्यदाक्षिण्यादयः अभङ्गुरत्वमनोज्ञत्वादयश्च यस्य तथाभूतमपि समुपार्जितः अरातिजयेन व्यवसायेन च लब्धः रत्नराशिः मणिसमूहः रत्नाकरस्य सारः श्रेष्ठवस्तुजातञ्च इत्यर्थः येन तथाविधमपि पुरुषम् अकाण्डे सहसा विनिपातयति विनाशयति। एतेन राज्यवर्द्धनस्य मरणं सूचितम्।

(५७) ताम् आर्य्याम्। सुतराम् अतिशयेन अनित्यताभावनया संसारोऽयम् अनित्य इति चिन्तया दूयमानहृदयः सन्ताप्यमानचित्तः प्रक्षीणभूयिष्ठायां प्रायेण क्षयं गतायामित्यर्थः क्षपायां रात्र्याम्। अभ्रंलिहम् अभ्रङ्कषम् अत्युन्नतमित्यर्थः।

(५८) अनुबध्नन्ति अनुसरन्ति। स्फुरति च स्पन्दते च। अकल्याणेति अकल्याणमशुभम् आख्यानं कथनं तत्र विचक्षणं कुशलम् अदक्षिणं वामं प्रतिकूलञ्च अक्षि चक्षुः।

(५९) सुदारुणा अतिभयङ्कराः। अक्षुद्रेति अक्षुद्रस्य महतः क्षितिपस्य राज्ञः क्षयः नाशः तम् आचक्षाणाः कथयन्तः सूचयन्त इत्यर्थः। न शाम्यन्ति न विरमन्ति। उत्पाताः उत्पतन्ति आविर्भवन्तीति तथोक्ताः अशुभनिदानभूता भूकम्पोल्कापातादयः।

(६०) अविकलेति। न विकलः विपर्य्यस्तः कायबन्धः शरीरसंयोगः यस्य

कबन्धवति अभ्रबिम्बे घटमानो विभाव्यते । (६१) तपःकरण-कालकवलितानिव धूसरितसमग्रग्रहान् उद्गिरन्ति धूमोद्गारान् सप्तर्षयः । दिने दिने दारुणा दिशां दाहा दृश्यन्ते । (६२) दिग्दाहभस्मकणनिकर इव निपतति नभस्तलात् तारा-गणः । (६३) तारापातशुचेव निष्प्रभः शशी । निशि निशि इतस्ततः (६४) प्रज्वलिताभिः उल्काभिः उग्रं ग्रहयुद्ध-मिव वियति विलोकयन्ति विलोलतारकाः ककुभः । (६५) राज्यसञ्चारसूचकः सञ्चारयति इव क्ष्मां क्वापि

---

तथाभूतः देहवानित्यर्थः शिरोमात्रस्य एव राहुत्वेऽपि इदानीं लब्धकाय इव स इति भावः । कबन्धवति छिन्नशिरसा कायेन संयुक्ते इत्यर्थः अभ्रमण्डले सूर्यबिम्बे घटमानः सङ्गच्छन् विभाव्यते लक्ष्यते ।

(६१) तपःकरणेति । तपसा ऊर्ध्वपादाधोमुखीभावेन स्थित्वा धूमपानरूपस्य व्रतस्य करणकाले अनुष्ठानसमये कवलितानिव ग्रस्तानिव । धूसरितेति धूसरिताः समग्रा ग्रहाः आकाशचारिणो ज्योतिःपदार्थाः यैः तान् धूमोद्गारान् कवलित-धूमनिवहान् उद्गिरन्ति उद्वमन्ति सप्तर्षयः सप्त च ते ऋषयः च इति तथोक्ताः मरीच्यत्र्यङ्गिरः पुलस्त्यपुलहक्रतुवशिष्ठा इत्यर्थः ।

(६२) दिगिति । दिशां दाहे ये भस्मनां कणाः बिन्दवः तेषां निकर इव समूह इव नभस्तलात् आकाशात् ।

(६३) तारेति । ताराणां नक्षत्राणां पातेन या शुक् शोकः तयेव निस्तेजाः ताराणां स्त्रीत्वेन तद्वियोगादिति भावः ।

(६४) प्रज्वलिताभिः ज्वलन्तीभिः उल्काभिः रेखाकाराभिः गगनात् पत-न्तीभिः तेजःकणिकाभिः । उग्रं दारुणं ग्रहयुद्धं ग्रहयोः ग्रहाणां रव्यादीनां वा युद्धं समागमरूपमिति भावः वियति आकाशे विलोलतारकाः विलोलाः चञ्चलाः प्रस्खलन्त्यश्च तारकाः अक्ष्णां कनीनिकाः नक्षत्राणि च यासु यासां वा ताः ककुभः दिशः ।

(६५) राज्यसञ्चारसूचकः राज्यस्य सञ्चारः संहार इत्यर्थः तस्य सूचकः व्यञ्जकः सञ्चारयतीव सम्यक् चालयतीव क्ष्मां पृथ्वीम् ।

(६६) वहद्बहलरजःपटलकलिलशर्कराशकलसूत्कारी मारुतः। न कुशलमिव पश्यामि लग्नस्य। अस्मिन् अस्मद्वंशे करिण इव (६७) करीरं कोमलमपि कलयतः कृतान्तस्य कः परिपन्थी ? सर्वथा (६८) स्वस्ति भवतु आर्य्याय। इति चिन्तयित्वा च अन्तर्भिन्नभ्रातृस्नेहकातरं द्रवत् इव हृदयं कथं कथमपि संस्तभ्य उत्थाय यथाक्रियमाणं क्रियाकलापम् अकरोत्।

(६९) आस्थानगतस्य सहसा एव प्रविशन्तम् अनुप्रविशता विशस्तवदनेन लोकेन अनुगम्यमानम् असह्यदुःखोष्णनिश्वासधूमरक्ततन्तुना इव मलिनेन पटेन प्रावृतवपुषं (७०) जीवितधारणलज्जया इव अवनतमुखं नासावंशस्य अग्रे ग्रथितदृष्टिं (७१) दुःखदूरप्ररूढलोम्ना मूकेनापि मुखेन

---

(६६) वहदिति। वहता प्रसरता बहलेन प्रभूतेन रजसां धूलीनां पटलेन समूहेन कलिलानि व्याप्तानि शर्कराशकलानि कर्करखण्डानि सुष्ठु यथा तथा उत्किरति उत्क्षिपतीति तथाभूतः मारुतो वायुः। लग्नस्य राशीनामुदयस्य।

(६७) करीरं वंशाङ्कुरं वंशाङ्कुरः करीरोऽस्त्रीत्यमरः। कोमलं मृदुलं कलयतः भक्षतः नाशयतश्च कृतान्तस्य अन्तकस्य दैवस्य वा कृतान्तौ यमदैवयोः इत्यमरः। परिपन्थी प्रतिद्वन्द्वी कः ? न कोऽपि इत्यर्थः।

(६८) स्वस्ति मङ्गलम्। अन्तरिति अन्तर्भिन्नेन अन्तर्दलितेन भ्रातृस्नेहेन कातरं व्याकुलम्। द्रवदिव गलदिव। संस्तभ्य स्थिरीकृत्य। क्रियाकलापं कार्य्यजातम्।

(६९) आस्थानगतः सभागतः। सहसा एव प्रविशन्तं कुन्तलं नाम बृहदश्ववारं महान्तमश्वारोहिसैनिकं ददर्श इति सम्बन्धः। असह्येति असह्येन सोढुमशक्येन दुःखेन उष्णनिःश्वासधूमेन रक्ताः तन्तवः सूत्राणि यस्य तेन पटेन वसनेन प्रावृतवपुषम् आच्छादितदेहम्।

(७०) जीवितेति। जीवितस्य धारणं तेन या लज्जा तया इव। नासावंशस्य अग्रे नासिकायष्टौ ग्रथितदृष्टिं निबद्धदृष्टिम्।

(७२) स्वामिव्यसनम् अविच्छिन्नैः अश्रुविन्दुभिः विज्ञापयन्तं कुन्तलं नाम बृहदश्ववारं राज्यवर्द्धनस्य प्रसादभूमिम् अभिजाततमं ददर्श। दृष्ट्वा च जाताशङ्कः चक्षुषि (७३) सलिलेन मुखशायिनि श्वसितेन हृदये हुताशेन उत्सङ्गे भुवा दारुणाप्रियश्रवणसमये सममिव सर्वेषु अङ्गेषु अवष्टब्ध लोकपालः। (७४) तस्मात् च हेलानिर्जितमालवानीकमपि गौड़ाधिपेन मिथ्योपचारोपचितविश्वासं मुक्तशस्त्रम् एकाकिनं विश्रब्धं स्वभवन एव भ्रातरं व्यापादितम् अश्रौषीत्।

श्रुत्वा च (७५) महातेजस्वी प्रचण्डकोपपावकप्रसरपरिचीयमानशोकावेगः सहसैव प्रजज्वाल। ततश्च (७६)

---

(७१) दुःखेति। दुःखेन दूरम् अत्यन्तं प्ररूढ़ानि जातानि लोमानि श्मश्रुराजयः यस्मिन् तेन। मूकेनापि वाक्यरहितेनापि।

(७२) स्वामिव्यसनं स्वामिनः प्रभोः विनाशम्। प्रसादभूमिं कृपापात्रम् अभिजाततमम् अतिकुलीनवंशसम्भूतम्।

(७३) सलिलेन जलाधिपतिना वरुणेन इत्यर्थः। श्वसितेन निःश्वासवायुना हुताशनेन अग्निना उत्सङ्गे क्रोड़े भुवा पृथिव्या। तादृग्दारुणाप्रियश्रवणसमये चक्षुः वाष्पाकुलं मुखं दीर्घनिःश्वासवाहि हृदयम् अग्निज्वलितम् उत्सङ्गदेशः देह इति भावः भूतलपतित आसीदिति भावः।

(७४) तस्मात् कुन्तलात्। हेलेति। हेलया अवज्ञया निर्जितं मालवानीकं मालवसैन्यं येन तथाभूतं गौड़ाधिपेन गौड़राजेन मिथ्या उपचारः प्रलोभनं तेन उपचितः जनितः विश्वासो यस्य तथोक्तं मुक्तशस्त्रं त्यक्तशस्त्रम् अशस्त्रमित्यर्थः। विस्रब्धं विश्वस्तम् व्यापादितं निहतम्।

(७५) महेति। प्रचण्डस्य अत्युग्रस्य कोपपावकस्य कोपाग्नेः प्रसरेण आविर्भावेन परिचीयमानः सञ्चक्षमानः शोकावेगः यस्य तथोक्तः क्रोधशोकाभ्यां समसैव अभिभूयमान इत्यर्थः।

अमर्षविधुतशिरोविशीर्य्यमाणशिखामणिशकलाङ्गारितम् इव (७७) रोषाग्निम् उद्वमन् अनवरतस्फुरितेन पिबन् इव सर्व-तेजस्विनाम् आयूंषि रोषनिर्भुग्नेन दशनच्छदेन (७८) लोहितायमानलोचनालोकविक्षेपैः दिग्दाहान् इव दर्शयन् रोषानलेन अपि (७९) असह्यसहजशौर्य्योष्मदहनदह्यमानेन इव वितन्यमानस्वेदसलिलशीकरासारदुर्दिनः (८०) स्वाव-यवैः अपि अदृष्टपूर्वप्रकोपभीतैः इव कम्पमानैः उपेतः हर इव कृतभैरवाकारः हरिरिव (८१) प्रकटितनरसिंहरूपः

---

(७६) अमर्षेति । अमर्षात् क्रोधात् विधुतस्य कम्पितस्य शिरसः विशीर्य्यमाणं स्रंसमानं शिखामणिसकलं चूड़ारत्नखण्डं तेन अङ्गारितः जाताङ्गारः तमिव ज्वलदङ्गारमिव इति भावः ।

(७७) रोषाग्निं क्रोधानलम् उद्वमन् उद्गिरन् । अनवरतस्फुरितेन अविरत-स्पन्दितेन रोषनिर्भुग्नेन क्रोधदष्टेन इत्यर्थः क्रोधवक्रीकृतेन वा दशनच्छदेन ओष्ठेन ।

(७८) लोहितायमानेति । लोहितायमानयोः रक्ततामापद्यमानयोः लोच-नयोः नयनयोः आलोकविक्षेपैः प्रभाविसरणैः । दर्शयन् प्रकटयन् ।

(७९) असह्येति । असह्यस्य सहजस्य स्वाभाविकस्य शौर्य्यस्य वीर्य्यस्य उष्मा एव दहनः अग्निः तेन दह्यमानः प्रज्वाल्यमानः तेन इव । वितन्यमानेति वित-न्यमानः विकीर्य्यमाणः स्वेदसलिलानां घर्मजलानां शीकरासारः विन्दुधारा-सम्पात एव दुर्दिनं वर्षणं येन तथाभूतः ।

(८०) स्वावयवैः निजाङ्गैः अदृष्टपूर्वात् पूर्वमदृष्टात् प्रकोपात् भीतानि इव तैः इव उपेतः युक्तः । कृतेति । कृतः भैरवः भीषणः आकारः अन्यत्र कृतः धृतः भैरवस्य स्वमूर्त्तिभेदस्य आकारः येन तथाभूतः ।

(८१) प्रकटितेति । प्रकटितं नरसिंहस्य प्रशस्तो नरः नरसिंहः तस्य तथा-चोक्तम् । स्युः उत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचका इति यद्वा नरः सिंह इव इति उपमितसमासः तस्य नृसिंहा-कारमूर्त्तिभेदस्य रूपं येन तथोक्तः ।

(८२) सूर्य्यकान्तशैल इव अपरतेजःप्रसरदर्शनप्रज्वलितः क्षयदिवस इव (८३) उदितद्वादशदिनकरदुर्निरीक्ष्यमूर्त्तिः महोत्पातमारुत इव सकलभूभृत्कम्पकारी विन्ध्य इव (८४) विवर्द्धमानविग्रहोत्सेधः महाशीविष इव दुर्नरेन्द्राभिभव-रोषितः पारीक्षित इव (८५) सर्वभोगिदहनोद्यतः (८६) वृकोदर इव रिपुरुधिरपानतृषितः सुरगज इव प्रतिपक्षवारण-प्रधावितः पूर्वागम इव (८७) पौरुषस्य उन्माद इव मदस्य

---

(८२) सूर्य्यकान्तशैल इव सूर्य्यकान्तमणिपर्वत इव। अपरेति अपरस्य विपक्षस्य इति भावः सूर्य्यस्य इव तेजसां प्रसरस्य विकासस्य दर्शनेन प्रज्वलितः प्रदीप्तः। क्षयदिवस इव कल्पान्तदिनमिव।

(८३) उदितानां द्वादशानां दिनकराणां सूर्य्याणामिव दुर्निरीक्ष्या निरी-क्षितुमशक्या मूर्त्तिः यस्य तथाभूतः। सकलेति सकलानां भूभृतां राज्ञां पर्वता-नाञ्च कम्पकारी कम्पहेतुः भयात् सञ्चालनाच्चेति भावः।

(८४) विवर्द्धमानेति। विवर्द्धमानः विवृद्धिं गच्छंश्च क्रोधेन उन्नमनेन च विग्र-हस्य संग्रामस्य देहस्य च उत्सेधः उच्छ्रायः यस्य तथाभूतः। महाशीविष इव महान् भुजङ्ग इव। दुर्नरेन्द्रेति दुर्नरेन्द्रस्य दुर्विनीतस्य राज्ञः गौड़ाधिपतेः इत्यर्थः दुष्टस्य विषवैद्यस्य च अभिभवेन भ्रातृवधरूपेण गारुड़ादिमन्त्रप्रयोग-रूपेण च रोषितः कोपितः पारीक्षित इव परीक्षितस्य अपत्यं पुमान् पारीक्षितः जनमेजयः स इव।

(८५) सर्वेति। सर्वेषां भोगिनां सुखभोगरतानां राज्ञामित्यर्थः सर्पाणाञ्च दहने भस्मीकरणे शस्त्रानलेन सर्पसत्रयज्ञेन च उद्यतः प्रवृत्तः। पुरा पितरि परी-क्षिते तक्षकेण दष्टे मृते क्रुद्धो जनमेजयः सर्पकुलजिघांसया सर्पसत्रयज्ञमन्वतिष्ठत् इति वार्त्ता भारतीया अत्र अनुसन्धेया।

(८६) वृकोदर इव भीमसेन इव रिपोः शत्रोः गौड़ाधिपस्य दुःशासनस्य च रुधिरपाने रक्तपाने तृषितः तृष्णान्वितः शत्रुवधार्थी इति यावत्। प्रतिपक्षेति प्रतिपक्षस्य शत्रोः वारणाय प्रतिपक्षगजाय च प्रधावितः चलितः।

आवेग इव (८८) अवलेपस्य तारुण्यावतार इव तेजस: सर्वोद्योग इव दर्पस्य युगागम इव (८९) यौवनोष्मण: राज्याभिषेक इव समररसस्य नीराजनदिवस इव असहिष्णुताया: परां भीषणताम् अयासीत्

(९०) अवादीच्च गौड़ाधिपम् अपहाय क: तादृशं महापुरुषं तत्क्षण एव (९१) निर्व्याजभुजवीर्य्यनिर्ज्जितसमस्तराजकं मुक्तशस्त्रं कलसयोनिमिव कृष्णवर्त्मप्रसूति: ईदृशेन (९२) सर्वलोकविगर्हितेन मृत्युना शमयेत् आर्य्यम्?

---

(८७) पौरुषस्य पुरुषकारस्य पराक्रमस्य इत्यर्थ: पूर्वागम इव प्रथमोपस्थिति: इव प्रथम: मूर्त्तिबद्ध: पराक्रम इव इत्यर्थ: मदस्य सौभाग्ययौवनादिजनिताव-लेपस्य उन्माद इव समुद्धती मद इव इत्यर्थ:।

(८८) अवलेपस्य गर्वस्य आवेग इव मूर्त्तिमान् गर्वप्रसर इव इत्यर्थ:। तेजस: प्रतापस्य तारुण्यावतार इव अभिनवोत्पन्न: मूर्त्तिबद्ध: प्रताप इव इत्यर्थ: दर्पस्य अहङ्कारस्य सर्वोद्योग इव सर्वथा समुद्धृत: मूर्त्तिबद्धो दर्प इव।

(८९) यौवनोष्मण: यौवनस्य उष्मा उष्णत्वं तस्य युगागम इव नवयुगावतार इव। समररसस्य संग्रामानुरागस्य राज्याभिषेक इव राज्येऽभिषिक्त: संग्रामरस इव मूर्त्तिमान् इत्यर्थ:। असहिष्णुताया अक्षमाया: नीराजनदिवस इव शान्ति-कर्मविशेषदिनमिव परां महतीं भीषणतां भयङ्करताम्।

(९०) गौड़ाधिपम् अपहाय परित्यज्य विना इत्यर्थ: तत्क्षण एव तदानीमेव पूर्वक्षणे एव इत्यर्थ:।

(९१) निर्व्याजेति। निर्व्याजेन अकपटेन कूटव्यवहारविमुखेन इति भाव:। भुजवीर्य्येण बाहुबलेन निर्जितं समस्तं सकलं राजकं राजन्यवर्ग: येन तथाभूतं मुक्तशस्त्रम् अशस्त्रमित्यर्थ: युद्धापगमात् पुत्रशोकाच्च इति भाव:। कलसयोनि-मिव द्रोणाचार्य्यमिव कृष्णवर्त्मप्रसूति: पापमार्गप्रवर्त्तक इत्यर्थ: द्रुपदयज्ञे होम-कुण्डाग्ने: उत्थित: धृष्टद्युम्न इत्यर्थश्च।

(९२) सर्वलोकविगर्हितेन विश्वासघातादिति भाव: मृत्युना कूटप्रयोगजनितेन इति भाव: शमयेत् निर्वापयेत्।

(९३) अनार्य्येच्च तं मुक्ता भागीरथीफेनपटलपाण्डुराः केषां मनःसु सरःसु राजहंसा इव (९४) परशुरामपराक्रमस्मृतिकृतो न कुर्य्युः आर्य्यशौर्य्यगुणाः पक्षपातम् ? कथमिव (९५) अत्युग्रस्य अस्य आर्य्यजीवितहरणे निदाघरवेरिव (९६) कमलाकरसलिलशोषणेऽनपेक्षितप्रीतयः प्रसृताः कराः ? कां नु गतिं गमिष्यति कां वा योनिं प्रवेक्ष्यति कस्मिन् वा नरके (९७) निपतिष्यति ? श्वपाकोऽपि क इदम् आचरेत् ? नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा। किं वा (९८) अङ्गीकृत्य कार्य्यम् आर्य्यः तेन क्षुद्रेण अनुप्रविश्य विगतघृणेन घुणेन इव (९९) सकलभुवनाह्लादनचतुरः चन्दनस्तम्भः क्षयम् उपनीतः ?

---

(९३) अनार्य्यम् अभद्रं नीचमित्यर्थः मुक्ता विहाय। भागीरथीति भागीरथ्याः गङ्गायाः फेनानां पटलानि पुञ्जाः तद्वत् पाण्डुराः शुभ्राः।

(९४) परशुरामेति। परशुरामस्य भार्गवस्य यः पराक्रमः तस्य स्मृतिः तं करोतीति तथोक्तस्य। पक्षपातम् अनुरागम्।

(९५) अत्युग्रस्य अतिदारुणस्य। आर्य्यस्येति। आर्य्यस्य जीवितं तस्य हरणं तस्मिन्। निदाघरवेरिव ग्रीष्मसूर्य्यस्येव।

(९६) कमलाकरसलिलशोषणे सरोवरजलशोषणे। अनपेक्षितेति न अपेक्षिता नानुरुद्धा प्रीतिर्यैः तथाभूताः करा हस्ताः कथमिव केन प्रकारेण इव प्रसृताः प्रवृत्ताः।

(९७) निपतिष्यति स इति शेषः। श्वपाकः चाण्डालः।

(९८) अङ्गीकृत्य आश्रित्य किं वा कार्य्यं कस्य कार्य्यस्य अनुरोधेन इति भावः। अनुप्रविश्य अभ्यन्तरं प्रविश्य विश्वास्य इति भावः विगतघृणेन निर्दयेन घुणेन इव घुणाख्यकीटविशेषेण इव।

(९९) सकलेति। सकलानां भुवनानाम् आह्लादने प्रीणने चतुरः प्रवणः चन्दनस्तम्भः चन्दनतरुनिर्मितं गृहावलम्बनभूतं दारु इत्यर्थः क्षयं नीतः नाशं गमितः।

(१००) नूनं न अनेन मूढ़ेन मधुरसास्वादलुब्धेन मधु इव आर्य्यजीवितम् आकर्षता भावी दृष्टः शिलीमुखसम्पातोपद्रवः। (१) निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिव अतिमलिनं केवलम् अयशः सञ्चितं गौड़ाधमेन। न तु (२) आशु इव अस्तम् उपगतवत्यपि त्रिभुवनचूड़ामणौ सवितरि (३) वेधसा आदिष्टः सत्पथशत्रोः अन्धकारस्य निग्रहाय ग्रहषण्डविहारैकहरिणाधिपः शशी? (४) विनयविधायिनि भग्नेऽपि चाङ्कुशे विद्यत एव व्यालवारणस्य विनयाय सकल-

---

(१००) नूनं निश्चितम् उत्प्रेक्षे वा भावी भविष्यन् आत्मोपरि प्रपतिष्यन् इत्यर्थः। शिलीमुखेति शिलीमुखानां शराणां भ्रमराणाञ्च सम्पातः सम्पतनमेव उपद्रवः अत्याचारः।

(१) निजगृहदूषणं स्वगृहक्षयहेतु इत्यर्थः जालमार्गप्रदीपकेन कूटवर्त्म-प्रवर्त्तकेन गवाक्षमार्गस्थितेन दीपेन इत्यर्थश्च।

(२) आशु शीघ्रम् अस्तम् अस्ताचलं नाशञ्च उपगतवति प्राप्तवति त्रिभुवन-चूड़ामणौ त्रिलोकीशिरोरत्ने सवितरि सूर्य्ये।

(३) वेधसा विधात्रा सत्पथशत्रोः सन् पन्थाः मार्गः सदाचारश्च तस्य शत्रोः अन्धकारस्य तिमिरनिग्रहाय विध्वंसनाय ग्रहषण्डेषु मङ्गलादिग्रहवृन्देषु मध्ये विहाराय विचरणाय एक एव हरिणः मृगः वाहनभूत इति भावः तस्य अधिपः तदारूढ इति यावत् शशी चन्द्रः न तु आदिष्टः? अपितु आदिष्ट एव इत्यर्थः। अत्र अप्रस्तुतात् रवेः अस्तगमनोत्तरं चन्द्रस्य तिमिरध्वंसनात् प्रस्तुतं राज्यवर्द्धन-ध्वंसनोत्तरं तत्सोदरेण हर्षेण गौड़ाधिपसंहरणरूपं वस्तु गम्यते इति समात् सम-प्रतीतिरूपाप्रस्तुतप्रशंसा तदुक्तं दर्पणे। क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्। अप्रस्तुतात् प्रस्तुतं चेद् गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यादिति। ग्रहषण्डेति विशेषणेन शशिनः स्वल्पमात्रसाधनस्यापि ग्रहगणमध्ये वैशिष्ट्योक्तिः हर्षस्य स्वल्पसाधनस्यापि अरिजयसामर्थ्यं सूच्यते।

(४) विनयविधायिनि दण्डविधानसाधने। व्यालवारणस्य दुष्टगजस्य विनयाय

मत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुर: खरतर: केसरिनखर:। (५) तादृशा: कुवैकटिका इव तेजस्विरत्नविनाशका: कस्य न वध्या:। क्व इदानीं यास्यति दुर्बुद्धि: ?।

(६) इति एतत् अभिदधत एव अस्य पितुरपि मित्रं सेनापति: समग्रविग्रहप्राग्रहरो (७) हरितालशैलावदातदेह: परिणतप्रगुणसालप्रकाण्डप्रकाश: प्रांशु: अतिशौर्य्योष्मणा इव परिपाकम् आगतो गतभूयिष्ठे वयसि वर्त्तमानो (८) बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवम् अति-

---

दण्डनाय। सकलेति सकलानां मत्तानां मातङ्गानां हस्तिनां कुम्भस्थलमेव स्थिर: कठिन: दुर्भेद्य इति भाव: य: शिरोभाग: तस्य भिदुर: विदारण: खरतर: अतितीक्ष्ण: केसरिनखर: सिंहनख:। अत्रापि पूर्ववदस्तुतप्रशंसा।

(५) कुवैकटिका इव कुत्सिता वैकटिका: प्रकृतिवैकल्यकारिण: कुत्सिता: स्वर्णकारा इव इति केचित्। तेजस्विरत्नविनाशना: तेजस्विनां रत्नानाम् उत्कृष्टवस्तूनां जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते इति शेष: विनाशना: विध्वंसकारिण इत्यर्थ:।

(६) अभिदधत: कथयत:। सेनापति: सिंहनादनामा समररसं संग्रामोत्साहम् आनयन् वर्द्धयन् विज्ञापितवान् इति सम्बन्ध:। तं विशिनष्टि। समग्रेति समग्राणां सकलानां विग्रहाणां युद्धानां तथाविधेषु युद्धे वा प्राग्रहर: अग्रसर:।

(७) हरीति। हरितालस्य शैल: पर्वत: तद्वत् अवदात: गौर: देहो यस्य तथाभूत:। परिणतेति परिणत: प्रवृद्ध: प्रगुण: शोभन: सालप्रकाण्ड: सालवृक्षस्कन्ध: इव प्रकाशते इति तथोक्त:। प्रांशु: उन्नत: अतिशौर्य्योष्मणेव अतिशौर्य्यस्य उष्मा उत्तापं तेन इव। परिपाकं परिणतिम् आगत: प्राप्त:। गतभूयिष्ठे अतीताधिकांशे वयसि वार्द्धके।

(८) बह्विति। बहव: शरा: तै: शत्रुप्रहितै: इति भाव: शयनं प्रहारार्त्ततया पतनमिति भाव: तेन सुप्त: मोहं गत इति यावत् उत्थित: तत्तत्प्रहारवेदनाम् अपनीय पुनर्युद्धार्थमुद्यतश्च इत्यर्थ:। अन्यत्र बहव: शरा एव शयनं शय्या तत्र

दीर्घेण आयुषा (९) दुरभिभवशरीरतया जरयापि भीत-भीतया इव प्रकटितप्रकम्पया परामृष्ट: कथमपि (१०) सारमयेषु शिरोरुहेषु शशिकरनिकरसितसरलशिरोरुह-सटालां सैंहीमिव (११) निष्कपटपराक्रमरसरचितां संक्रान्तो जीवन्नेव जातिम् (१२) अपरस्वामिमुखदर्शनमहापातक-परिजिहीर्षया इव भ्रूयुगलेन (१३) वलितशिथिलप्रलम्ब-चर्मणा स्थगितदृष्टि: (१४) धवलस्थूलगुञ्जापिच्छप्रच्छादित-

---

सुप्त: निद्रित: प्रबुद्धश्च। आत्मनवं भीष्मं हसन्निव परिहासास्पदं कुर्वन्निव भीष्मस्तु शरशयने स्थित एव निधनं गत: अयन्तु तस्मात् उत्थित: पुन: संग्रामाय अवातरत् इति हासकारणमिति भाव:।

(९) दुरभिभवशरीरतया दुर्जयदेहतया जरयापि वार्द्धकेनापि भीतभीतया अतिभीतयेत्यर्थ:। अतएव प्रकटित: आविष्कृत: प्रकम्प: वेपथु: यया तथोक्तया परामृष्ट: स्पृष्ट:।

(१०) सारमयेषु दृढ़ेषु इति भाव:। शिरोरुहेषु केशेषु। शशीति शशिन: चन्द्रस्य करनिकरा: किरणचया: तद्वत् सिता धवला सरला अकुटिला शिरो-रुहसटा शिरोजटा विद्यतेऽस्या इति तथोक्तां सैंहीमिव सिंहस्य इयं सैंही ताम् इव सिंहसम्बन्धिनीमिवेत्यर्थ:।

(११) निष्कपटेति। निष्कपट: कापट्यरहित: य: पराक्रम: तस्य रसेन रागेण रचिता निर्मिता तां जातिं तादृशसिंहत्वमित्यर्थ: जीवन्नेव अमृत एव इत्यर्थ: संक्रान्त: अधिगत:।

(१२) अपरेति। अपर: अन्य: प्रभाकरवर्द्धनवंश्यादिति भाव: स्वामी प्रभु: तस्य मुखदर्शनं मुखावलोकनमेव महत् पातकं पापं तस्य परिजिहीर्षयेव परि-हारेच्छया इव।

(१३) वलितेति वलितं वलियुक्तम् आकुञ्चितमिति भाव: शिथिलं श्लथीभवत् प्रलम्बं लम्बमानं चर्म यस्य तथाभूतेन। स्थगितदृष्टि: आवृतनेत्र:।

(१४) धवलेति। धवला शुभ्रा स्थूला या गुञ्जा उत्तरोष्ठोपरि रोमराजि:

कपोलभागभास्वरेण वमन् इव विक्रमकालम् अकालेऽपि (१५) विकाशिकाशकाननविशदं शरदारम्भं भीमेन मुखेन मृतमपि हृदयस्थितं स्वामिनम् इव सितचामरेण वीजयन् (१६) नाभिलम्बेन कूर्चकलापेन परिणामेऽपि धौतासि-धाराजलपानतृषितैः इव विवृतवदनैः बृहद्भिः व्रणविदरैः विषमितविशालवक्षाः (१७) निशितशस्त्रटङ्ककोटिकुट्टितबहु-बृहद्व्रणाक्षरपङ्क्तिनिरन्तरतया च (१८) सकलसमरविजय-पर्वगणनाम् इव कुर्वन् पूर्वपर्वत इव पादचारी (१९) विविधवीररसवृत्तान्तरामणीयकेन महाभारतमपि लघयन्

---

गौँप इति भाषया प्रसिद्धा इति भावः सैव पिच्छं बर्हं तेन प्रच्छादितः आवृतः यः कपोलभागः गण्डदेशः तेन भास्वरेण प्रदीप्तेन । वमन्निव उद्गिरन्निव विक्रमकालं पराक्रमसमयम् अकालेऽपि विक्रमस्येति शेषः ।

(१५) विकाशीति विकाशिना विकस्वरेण काशकाननेन काशवनेन विशदं धवलं शरदारम्भं शरत्कालागमम् । भीमेन भीषणेन । सितचामरेण श्वेत-चामरेण ।

(१६) नाभिलम्बेन नाभिदेशपर्यन्तलम्बिना कूर्चकलापेन श्मश्रुनिचयेन । परिणामेऽपि वार्द्धकेऽपि धौता क्षालिता असिधारा एव जलं तस्य पानाय तृषिताः पिपासाकुलाः तैरिव विवृतवदनैः व्यात्तमुखैः व्रणविदरैः शत्रुप्रेषित-शस्त्रक्षतस्फोटैः विषमितम् उन्नतानतं वक्षः यस्य तथाभूतः ।

(१७) निशितेति निशितानि तीक्ष्णानि शस्त्राण्येव टङ्काः पाषाणदारणास्त्र-विशेषाः तेषां कोटिभि अग्रैः कुट्टितानि दलितानि बहूनि बृहन्ति व्रणानि एव क्षतानि एव अक्षरपङ्क्तयः वर्णावलयः ताभिर्निरन्तरतया व्याप्ताङ्गतया इत्यर्थः ।

(१८) सकलेति । सकलानां समराणां संग्रामाणां विजया एव पर्वाणि उत्सवाः तेषां गणनामिव संख्यानमिव । पूर्वपर्वत इव उदयगिरिः इव पादचारी चरणसञ्चरणशीलः । तदानीमेव उदितत्वादिति भावः ।

(१९) विविधेति विविधानां वीररसानाम् उत्साहस्थायिभावानां रस-

इव (२०) प्रतिपक्षक्षपणातिनिर्बन्धेन परशुराममपि शिक्ष-यन् इव (२१) अब्भ्रमणेन अनादरश्रीसमाकर्षणविभ्रमेण मन्दरमपि मन्दयन् इव (२२) वाहिनीनायकमर्य्यादानुवर्त्त-नेन अम्भोधिमपि अभिभवन् इव (२३) स्थैर्य्यकार्कश्योन्नतिभिः अचलानपि कम्पयन् इव (२४) सहजप्रचण्डतेजःप्रसरपरि-स्फुरणेन सवितारमपि तृणीकुर्वन्निव (२५) ईश्वरभारोद्वहन-घृष्टपृष्ठतया हरवृषभमपि हसन्निव अरणिः अमर्षाग्नेः

---

विशेषाणां विविधा वीराः भीष्मद्रोणादयः तेषां रसस्य युद्धानुरागस्य च वृत्तान्तेन विवरणेन रामणीयकं रमणीयत्वं तेन हेतुना लघयन्निव लघूकुर्वन्निव।

(२०) प्रतिपक्षेति प्रतिपक्षाणां शत्रूणां क्षपणस्य संहारस्य अतिनिर्बन्धेन अत्या-ग्रहेण। परशुरामं भार्गवम्।

(२१) अब्भ्रमणेनेति अब्भ्रमणं समुद्रयात्रा इत्यर्थः जले परिवर्त्तनञ्च तेन। अना-दरेति अनादरेण अवहेलेन यत् श्रीसमाकर्षणं शत्रुभ्यः समुद्राच्च इति भावः। तत्र विभ्रमः विलसितं यस्य तेन। मन्दरं मन्दरगिरिं समुद्रमन्थनदण्डभूतमिति भावः। मन्दयन् लघयन्।

(२२) वाहिनीति वाहिनीनां सेनानां नदीनाञ्च नायकमर्य्यादा पति-सम्मानना तस्या अनुवर्त्तनेन अनुगमनेन अम्भोधिं सागरमपि अभिभवन्निव जयन्निव नदीनां परिमिततया सेनानान्तु अपरिमितत्वेति भावः।

(२३) स्थैर्य्येति स्थैर्य्यं संग्रामादचलत्वमित्यर्थः कार्कश्यं काठिन्यं अक्लेशेति भावः उन्नतिरुच्छ्रायः ताभिः अचलानपि पर्वतानपि कम्पयन्निव लज्जयन्निव स्थैर्य्यकार्कश्ययोः अनुल्लेखेन केवलाचलत्वकीर्त्तनमेव लज्जाहेतुरिति भावः।

(२४) सहजेति। सहजस्य स्वाभाविकस्य प्रचण्डस्य उग्रस्य तेजसां प्रसरस्य परिस्फुरणेन उद्योतेन तृणीकुर्वन्निव तुच्छीकुर्वन्निव सवितुः तेजसां प्रसरस्य दैनि-कत्वम् अस्य तु रात्रिन्दिवोभयकालिकत्वमिति तृणीकरणे हेतुरिति भावः।

(२५) ईश्वरेति ईश्वरस्य हरस्य स्वामिनश्च भारोद्वहनेन घृष्टं दलितं पृष्ठं यस्य तथाभूतः तस्य भावः तत्ता तया हरवृषभं शङ्करवृषं हसन्निव हरवृषभस्य

ऐश्वर्यं शौर्यस्य मदो मदस्य (२६) विसर्पो दर्पस्य हृदयं हठस्य जीवितं जिगीषुतायाः उच्छ्वसितम् उत्साहस्य अङ्कुशो दुर्मदानां नागदमनो दुष्टभोगिनां विरामो (२७) वरमनुष्यतायाः कुलगुरुः वीरगोष्ठीनां तुला शौर्यशालिनां सीमान्तदृश्वा शस्त्रग्रामस्य निर्वोढ़ा प्रौढ़वादानां (२८) संस्तम्भयिता भग्नानां पारगः प्रतिज्ञायाः मर्मज्ञो महाविग्रहाणाम् आघोषणापटहः समरार्थिनां सन्निधौ इव समुपविष्टः सिंहनादनामा स्वरेण एव दुन्दुभिघोषगम्भीरेण (२९) सुभटानां समररसम् आनयन् विज्ञापितवान् ।

(३०) देव ! न क्वचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्य-

---

भारोद्वहनेन पृष्ठस्य घृष्टत्वम् अस्य तु स्वामिभारोद्वहनेन न तथेति हासहेतुरिति भावः अमर्षाग्निः क्रोधानलस्य अरणिः मन्थनदारु ।

(२६) विसर्पः प्रसरः । हठस्य साहसस्य । उच्छ्वसितं जीवितम् । अङ्कुशः दमनकारकास्त्रविशेषः । नागदमनः गरुड़ः गजमर्दनश्च दुष्टभोगिनां दुष्टानां राज्ञां सर्पाणाञ्च ।

(२७) वरमनुष्यतायाः श्रेष्ठमानुषत्वस्य विरामः परा काष्ठेत्यर्थः । तुला उपमा । सीमान्तदृश्वा पारदर्शी । निर्वोढ़ा निर्वाहकः समुचितप्रतिकारक इत्यर्थः प्रौढ़वादानां तेजस्विवचनानां शत्रुप्रयुक्तानामिति भावः ।

(२८) संस्तम्भयिता आश्वासयिता भग्नानां शत्रुभयात् पलायितानाम् । पारगः पारगामी प्रतिज्ञायाः दृढ़प्रतिज्ञ इति भावः । मर्मज्ञः सारवित् महाविग्रहाणां महतां संग्रामाणाम् । आघोषणापटहः उत्साहवर्द्धक इति भावः । तादृशः पटहः समरोत्साहमुत्तेजयतीति भावः ।

(२९) सुभटानां सुयोद्धृणां समररसं संग्रामोत्साहम् आनयन् जनयन् ।

(३०) न क्वचिदिति न क्वचित् कृताश्रयया चापल्यात् कुत्रापि चिरस्थितिम्

मानम् आत्मानं न चेतयन्ते। (३१) श्रियो हि दोषान्धतादयः कामला विकाराः। (३२) छत्रच्छायान्तरितरवयो विस्मरन्ति अन्यं तेजस्विनं जड़धियः। किं वा करोतु वराकः येन अतिभीरुतया नित्यपराङ्मुखेन न तु दृष्टानि एव (३३) सर्वातिशायिशौर्य्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानाति एवं यथा (३४) अभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयम् उपहरन्ति मनस्विनः। जलेऽपि ज्वलन्ति ताड़िताः तेजस्विनः। (३५) सकलवीरगोष्ठीवाह्यस्य

---

अकुर्वता इत्यर्थः। कापुरुषाः नीचपुरुषाः। विप्रलभ्यमानं प्रवञ्च्यमानम्। चेतयन्ते अवबुध्यन्ते चेतिरत्र चौरादिकः।

(३१) श्रियः लक्ष्म्याः दोषान्धतादयः दोषायां रात्रौ अन्धतादयः दृष्टिहीनत्वादयः कामलाः कमलसम्बन्धिनः कमलात् आगता वा विकाराः कमलसङ्गात् कमलस्य यथा दोषायां रात्रौ अन्धतादयः सङ्कोचादयः विकारा जायन्ते तथा लक्ष्म्या अपि दोषान्धतादयः दोषा एव अन्धतादयः सत्पुरुषासत्पुरुषयोर्विचाराक्षमत्वादय इति भावः।

(३२) छत्रेति छत्रस्य आतपत्रस्य छायया अन्तरितः व्यवहितः रविर्यैः तथोक्ताः जड़धियः मूर्खाः तेजस्विनम् अन्यं पुरुषं विस्मरन्ति न पश्यन्तीति भावः वराकः तपस्वी दुर्बलप्रकृतिः इति यावत्। येन वराकेण। न तु दृष्टानि द्रष्टुं पारितानि।

(३३) सर्वेति। सर्वातिशायिना सर्वपरिभाविना शौर्य्यातिशयेन देवस्य राज्यवर्द्धनस्य इति भावः श्वयथुः वर्द्धनं येषां तथाविधाः कपिलाः आरक्ताः कपोलाः तेषां तेषु वा पुलकेन रोमहर्षेण पल्लवितः विसृतः प्रकटितो वा कोपानलः येषु तानि तेजस्विनां महातेजसाम् अस्मत्प्रभूणामिति भावः।

(३४) अभिचारा इव आथर्वणिका मारणादयो विधय इव विप्रकृताः उपद्रुताः विप्रैः कृताश्च सद्यः अचिरादेव इत्यर्थः सकलकुलप्रलयं सर्ववंशविनाशम् उपायनीकुर्वन्ति जनयन्तीति यावत्। मनस्विनः प्रशस्तमनसः महावीरा इत्यर्थः।

तस्यैव इदम् उचितम् अनुत्तारनिरयनिपातनिपुणं कर्म। (३६) मनस्विनां हि प्रधनप्रधानधने धनुषि ध्रियमाणे सति च कमलाकलहंसीकेलिकुवलयकानने कृपाणे कृपणोपायाः पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य किं पुनः ईदृशाः? येषां च (३७) धात्रा धरित्रीं त्रातुं नियुक्ताः स्वयम् असमर्था इव (३८) कुलिशकर्कशभुजपरिघप्रहरणहेतोः उद्गिरन्ति गिरयोऽपि लोहानि ते कथमिव बाहुशालिनो मनसापि विमलयशोबान्धवा ध्यायेयुः अकार्यम्? (३९)

---

(३५) सकलेति। सकलानां वीराणां गोष्ठी समाजः तस्याः बाह्यः बहिष्कृत इत्यर्थः तस्य वीरसमाजेषु अगण्यस्य इति भावः तस्य गौड़ाधिपस्य उचितं सदृशम्। अनुत्तारेति नास्ति उत्तारः उद्धारः यस्मात् तादृशे निरये नरके निपातः निपतनं तत्र तस्य वा निपुणं हितमित्यर्थः इदं विश्वस्तहननम्।

(३६) मनस्विनां वीराणाम्। प्रधनेति प्रधनस्य संग्रामस्य प्रधानं श्रेष्ठं धनं साधनमिति भावः तस्मिन्। धनुषि कार्मुके ध्रियमाणे विद्यमाने कमला लक्ष्मीरेव कलहंसी तस्याः केलिः क्रीड़ा यत्र तादृशं कुवलयकाननं नीलोत्पलवनं तस्मिन् तथाभूते इत्यर्थः कृपाणे तलवारे सति च विद्यमाने च श्रीसमुत्थानस्य लक्ष्मीसमाहरणस्य पयोधिमथनप्रभृतयोऽपि सागरविलोड़नादयः किं पुनः? दीनोपाया इति किं वक्तव्यमित्यर्थः।

(३७) धात्रा ब्रह्मणा धरित्रीं पृथिवीं त्रातुं रचितुम्। असमर्था इव अक्षमा इव असमर्था एव इति पाठान्तरम्।

(३८) कुलिशेति। कुलिशवत् कर्कशः कठिनः भुजः बाहुः परिघप्रहरणं मुद्गरास्त्रमिव तस्य हेतोः लोहानि तदाख्यधातुविशेषान् उद्गिरन्ति प्रसूयन्ते इति यावत् ते गिरय इत्यर्थः कथमिव कथञ्चिदित्यर्थः बाहुशालिनः प्रशस्तबाहव इत्यर्थः। लौहीवस्थेति भावः मनसापि अकार्य्यं दुष्कार्य्यं ध्यायेयुः चिन्तयेयुः? नैव इत्यर्थः येषां यथा कथञ्चित् बाहुबलमस्ति ते अचेतना अपि न एतादृशं गर्हितमाचरन्तीति भावः।

सर्वग्रहाभिभवभास्वराणां हि सुभटकराणाम् अग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः। (४०) महामहिषशृङ्गतरङ्गभङ्गभङ्गुरभीषणान्तराला लोकप्रवादमात्रेण दक्षिणाशा परमार्थतो भटभ्रुकुटिः अधिवासो यमस्य। चित्रञ्च यदुन्मुक्तसिंहनादानां सहसा (४१) साहसरसरोमाञ्चकण्टकनिकरेण सह न निर्य्यान्ति सटाः शूराणां रणेषु। इयमेव च (४२) चतुःसागरसम्भूतस्य भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि दारुणं वड़वामुखं वा महापुरुषहृदयं वा। (४३)

---

(३८) सर्वेति। सर्वस्य वस्तुनः ग्रहाभिभवः बलात् ग्रहणमेव अभिभवः वस्तुस्वामिनामिति भावः सर्वे ग्रहाः चन्द्रादयश्च तेषामभिभवः तेजसा न्यक्कारश्च तेन भास्वराणां दीप्यमानानां सुभटकराणां वीरबाहूनाम् अग्रतः पुरतः पतङ्गकराः सूर्य्यकिरणाः अग्निकीटविशेषस्य कराः हस्ताश्च दिग्ग्रहणे पूर्वपश्चिमायाः दिशोः ग्रहणे ज्ञाने पङ्गवः अचलाः दिग्बोधाक्षमा इत्यर्थः यदा महावीराः अस्त्राणां वृष्टिभिः गगनमाच्छादयन्ति तदा सूर्य्यः सर्वा दिशः समा एव इति मत्वा कां दिशमाश्रयेदिति चिन्ताकुलाः सूर्य्यरश्मयो भवन्तीति भावः।

(४०) महेति। महामहिषस्य यमवाहनस्य इति भावः शृङ्गयोः विषाणयोः तरङ्गभङ्गवत् भङ्गुरं भङ्गिमत् कुटिलं वा भीषणम् अन्तरालं मध्यं यस्याः सा अन्यत्र शृङ्गयोः विषाणयोः इव तरङ्ग इत्यादिसमानमिति बोध्यम्। दक्षिणाशा दक्षिणा दिक्। परमार्थतः वस्तुतः भटस्य भ्रुकुटिः भ्रूभङ्गिरित्यर्थः। अधिवासः वासभूमिः। चित्रञ्च आश्चर्य्यञ्च। उन्मुक्तसिंहनादानां सिंहनादं कुर्वतामित्यर्थः।

(४१) साहसेति। साहसरसेन साहसवेगेन ये रोमाञ्चा एव कण्टकानि तेषां निकरः समूहः तेन। सटाः केसराः सिंहानामिव इति भावः।

(४२) चतुःसागरेति। चतुर्णां सागराणां समाहारः चतुःसागरं तस्मात् तत्र वा सम्भूतस्य समुत्पन्नस्य भूतिसम्भारस्य रत्नादिसम्पत्समूहस्य भस्मनिचयस्य च भूतिः भस्मनि सम्पदीत्यमरः भाजनं स्थानं प्रतिपक्षाणां विरोधिनां शत्रूणां जलानाञ्च दाहि दाहकं दारुणं तीव्रम्। वड़वामुखम् अश्वामुखम्। महापुरुषहृदयं महानुभावचित्तम्।

तेजस्विनः सकलान् अनवाप्य पयोराशिसहजस्य कुतो निवृत्तिः उष्मणः । (४४) वृथाविततविपुलफणाभारो भुजङ्गानां भर्त्ता बिभर्त्ति यो भोगेन मृत्पिण्डमेव केवलम् । (४५) अप्रतिहतशासनाक्रान्त्युपभोगसुखरसन्तु रसाया (४६) दिक्कुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति । (४७) रविरिव उन्मुखपद्माकरगृहीतपादपल्लवः सुखेन अखण्डिततेजा दिवसान् नयति शूरः । (४८) कातरस्य तु शशिन इव हरिण-

---

(४३) तेजस्विनः पयोराशिसहजस्य पयोराशौ समुद्रे सहजः स्वत उत्पन्नः तस्य समुद्रसदृशस्य च तेजस्विनः वड़वानलस्य वीरपुरुषस्य च उष्मणः तेजसः प्रतापस्य च सकलान् शत्रूनिति शेषः अनवाप्य अनिर्जित्य इति यावत् कुतो निवृत्तिः ? नैव कथमपि निवृत्तिर्भवेदित्यर्थः ।

(४४) वृथेति । वृथा विफलं यथा तथा विततः विस्तृतः विपुलः महान् फणाभारः येन तथाभूतः भुजङ्गानां नागानां भर्त्ता प्रभुः शेषाहिः इत्यर्थः । यः भुजङ्गाधिपतिः भोगेन देहेन फणमण्डलेन वा भोगः सुखे स्यादिभृतावहेश्च फणकाययोरित्यमरः । केवलं मृत्पिण्डं मृत्तिकाराशिं बिभर्त्ति धत्ते । केवलं मृत्पिण्डवहनार्थमेतादृक् प्रयासो न तस्य उचित इति भावः ।

(४५) अप्रतिहतेति । रसायाः भुवः अप्रतिहतेन प्रतिघातवर्जितेन शासनेन या आक्रान्तिः आक्रमणं तया य उपभोगः सम्भोगः तेन यः सुखरसः सुखास्वादः तम् ।

(४६) दिक्कुञ्जरेति । दिक्कुञ्जरस्य दिग्गजस्य करभारः शुण्डाभोगः तद्वत् भास्वरः दीप्यमानः प्रकोष्ठः अरत्निमणिबन्धयोः अभ्यन्तरभागः प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोरिति शेषः येषां तथाभूता वीराणां सुभटानां बाहव एव जानन्ति अनुभवन्तीत्यर्थः ।

(४७) रविरिति । शूरः वीरपुरुषः रविः इव सूर्य्य इव अखण्डितः अप्रतिहतं तेजः प्रतापः ज्योतिः यस्य तथाभूतः अतएव उन्मुखया तत्प्रवणया सानुरागयेति भावः पद्मया लक्ष्म्या करेण हस्तेन गृहीतः सेवितः पादपल्लवः चरणकिसलयः अन्यत्र उन्मुखैः ऊर्द्धमुखैः पद्माकरैः कमलसमूहैः पद्मसरोभिः वा गृहीताः पादपल्लवाः किरणसञ्चयाः यस्य तथाभूतः । दिवसान् नयति अतिवाहयति ।

हृदयस्य पाण्डुरपृष्ठस्य कुतो हिरात्रमपि निश्चला लक्ष्मीः ? (४९) अपरिमितयशःप्रकरवर्षी विकासी वीररसः। (५०) पुरःप्रवृत्तप्रतापप्रहताः पन्थानः पौरुषस्य। (५१) शब्द-विद्रुतद्विषन्ति भवन्ति द्वाराणि दर्पस्य। (५२) शस्त्रालोक-प्रकाशिताः शून्या दिशः शौर्य्यस्य। (५३) रिपुरुधिरशीकरा-सारेण भूरिव श्रीरपि अनुरज्यते। (५४) बहुनरपतिमुकुट-

---

(४८) कातरस्य दीनस्य कापुरुषस्य इति भावः शशिन इव चन्द्रस्य इव हरिणहृदयस्य हरिणस्य इव पशोरिव इत्यर्थः हृदयं मनः यस्य तथाविधस्य दुर्बलान्तःकरणस्य इति यावत् अन्यत्र हरिणः मृगः हृदये उत्सङ्गे यस्य तथाभूतस्य मृगलाञ्छनस्येत्यर्थः। पाण्डुरपृष्ठस्य पाण्डुरं धवलं पृष्ठम् उपरिभागः यस्य तथा-भूतस्य वहिर्निर्मलावभासस्य किन्तु अन्तर्मलिनस्य इति भावः अन्यत्र शुभ्रोपरि-भागस्य लक्ष्मीः श्रीः शोभा च हिरात्रमपि निश्चला स्थायिनीत्यर्थः कुतः ? नैव इत्यर्थः यथा शशिनः केवलं पौर्णमास्यामेव एकस्यां रात्रौ शोभातिशयः न तु अन्यस्यां तिथौ तथा कातरस्य क्षणिका श्रीरिति भावः।

(४९) अपरिमितेति अपरिमितानां परिमातुमशक्यानां यशसां प्रकरं सञ्चयं वर्षतीति तथोक्तः अतएव विकासी विकासशीलः।

(५०) पुर इति पौरुषस्य पुरुषकारस्य विक्रमस्येत्यर्थः पन्थानः मार्गाः पुरः प्रवृत्तेन अग्रतस्चलितेन प्रतापेन प्रहताः क्षुण्णाः परिष्कृता इति यावत् अविहता इति भावः।

(५१) शब्देति दर्पस्य शौर्य्याभिमानस्य द्वाराणि शब्देन शौर्य्याभिमानिनः ध्वनिना इत्यर्थः विद्रुताः पलायिता द्विषन्तः येभ्यः तथाभूतानि।

(५२) शस्त्रेति शस्त्राणाम् आलोकेन उद्योतेन प्रकाशिताः उद्भासिताः दिशः शून्याः जनरहिता इत्यर्थः पलायितप्रतिपक्षत्वादिति भावः।

(५३) रिपिति रिपूणां शत्रूणां रुधिराणि तेषां शीकरासारः विन्दुधारा-सम्पातः तेन। भूरिव रणभूमिरिवेत्यर्थः। श्रीरपि लक्ष्मीरपि अनुरज्यते अनुरक्ता भवति हस्तगता भवतीति भावः।

(५४) बह्विति। बहूनां राज्ञां चरणप्रणतानामिति भावः। मुकुटेषु

मणिशिलाशाणकोणकषणेन चरणनखराजिः इव राजतापि उज्ज्वलीभवति। (५५) अनवरतशस्त्राभ्यासेन करतलानि इव रिपुमुखानि श्यामीभवन्ति। (५६) विविधव्रणबद्धपट्टकशतैः शरीरमिव यशोऽपि धवलीभवति। (५७) कवचिषु रिपूरःकवाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ति निष्ठुरा निस्त्रिंशप्रहाराः। (५८) यस्याहितहतस्वजनो मनस्विजनो द्विषद्योषिदुरस्ताड़नेन कथयति हृदयदुःखम् परुषासिलतानिपातपवनेन उच्छ्वसिति (५९) निरुच्छ्वसित-

---

किरीटेषु या मणिशिलाः रत्नानि इत्यर्थः। ताः शाणाः शाणशिला इव तेषां कोणैः अस्त्रिभिः कषणं घर्षणं तेन। चरणनखराजिरिव पादनखश्रेणिरिव राजतापि राजत्वमपि साम्राज्यमिति भावः उज्ज्वलीभवति उज्ज्वलतामापद्यते इत्यर्थः।

(५५) अनवरतेति। अनवरतेन सन्ततेन शस्त्राणामभ्यासेन सञ्चालनेन करतलानि इव हस्ततलभागा इव रिपूणां शत्रूणां मुखानि श्यामीभवन्ति सञ्जातकिणानि मलिनानि च भवन्ति इत्यर्थः।

(५६) विविधेति। विविधेषु बहुप्रकारेषु व्रणेषु संग्रामव्यापारेण शस्त्रक्षतेषु इत्यर्थः बद्धानि यानि पट्टकशतानि व्रणापनयनार्थं सभेषजपटीसमूहाः तैः।

(५७) कवचिषु वर्मावृतेषु इति यावत्। रिपूणाम् उरःकवाटेषु वक्षःस्थलरूपद्वारावरणकाष्ठफलकेषु पात्यमानाः क्षिप्यमाणाः पावकशिखामिव अग्निस्फुलिङ्गम् इव इत्यर्थः वमन्ति उद्गिरन्ति सानुरागां कुर्वन्ति च। निष्ठुराः निर्दयाः प्रगाढ़ा इत्यर्थः निस्त्रिंशप्रहाराः असिप्रहाराः।

(५८) यस्येति। अहितहतस्वजनः अहितेन शत्रुणा हतः स्वजनः बन्धुजनः यस्य तथाभूतः सन् मनस्विजनः वीरपुरुषः। द्विषतः अहितस्य तस्येति भावः योषितां नारीणाम् उरस्ताड़नेन वक्षःस्थलाघातेन 'भर्तृनिधनशोकजनितेन' इति भावः हृदयदुःखं मनोदुःखं बन्धुजननिधनजनितमिति भावः कथयति प्रकाशयति, परुषाणां निष्ठुराणाम् असिलतानां निपातः सञ्चालनं तेन यः पवनः वायुः तेन। उच्छ्वसिति श्वसिति।

शत्रुशरीरास्रुधारापातेन रोदिति (६०) विपक्षवनिताचक्षुषा ददाति जलं स श्रेयान् नेतरः। (६१) न च स्वप्नदृष्टनष्टेषु इव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः। (६२) स्थायिनि यशसि शरीरधीः वीराणाम्। (६३) अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावञ्च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशति एव तेजस्विनं शोकः। (६४) स त्वं सत्त्ववताम् अग्रणीः प्राग्रहरः प्राज्ञानां प्रथमः समर्थानां श्रेष्ठोऽभिजातानाम् अग्रेसरः तेजस्विनाम् आदिः असहिष्णूनाम्। (६५) एताश्च सततसन्निहितधूमायमान-

---

(५९) निरुच्छ्वसितेति। निरुच्छ्वसितानि उच्छ्वसरहितानि निहतानीति भावः शत्रूणां शरीराणि तेषाम् अस्रुधारापातेन।

(६०) विपक्षेति। विपक्षाणां शत्रूणां वनिताः कान्ताः तासां चक्षुषां नेत्रेण अंजलिभूतेन इति भावः जलं ददाति अहितनिहताय स्वजनाय इति भावः।

(६१) स्वप्नेति। स्वप्नेषु निद्रासु दृष्टानि अवलोकितानि नष्टानि समनन्तरम् एव अदर्शनं गतानि इत्यर्थः तेषु इव क्षणिकेषु क्षणस्थायिषु निबध्नन्ति स्थापयन्ति। प्रबुद्धाः प्रकृष्टज्ञानिनः जागरिताश्च।

(६२) स्थायिनि चिरमिति शेषः शरीरधीः शरीरबुद्धिः वीरा यशःशरीरमेव रक्षितुं यतन्ते, न पाञ्चभौतिकं क्षणिकमिति भावः।

(६३) अनवरतेति। अनवरतं सन्ततं प्रज्वलितेन तेजसां ज्योतिषां प्रतापानाञ्च प्रसरेण प्रकाशेन भास्वरः दीप्यमानः स्वभावः प्रकृतिः यस्य तथाभूतं तेजस्विनं प्रतापवन्तं सूर्यञ्च। मणिप्रदीपमिव रत्नदीपमिव। कलुषः कृष्णवर्णः।

(६४) सत्त्ववतां महाप्राणशालिनाम् अग्रणीः अग्रगण्यः, प्राज्ञानां प्रकृष्टबुद्धिशालिनां प्राग्रहरः अग्रगण्यः प्रथम आद्यः समर्थानां शक्तिमताम्। श्रेष्ठः श्रेष्ठः अभिजातानां महाकुलीनानाम्। आदिः प्रथमः मुख्य इत्यर्थः। असहिष्णूनाम् अहितविक्रमासहनशीलानामिति यावत्।

(६५) एताश्चेति। एताः स्वायत्ताः स्वस्य आत्मनस्तव इति भावः आयत्ताः अधीनाः सुभटानां सुयोद्धृणाम् उरांसि वक्षःस्थलानि एव कवाटभित्तयः कवाट-

कोपाग्नयः सुलभासिधारातोयवृत्तयो विकटबाहुवनच्छायोपगूढा धीरताया निवासशिशिरभूमयः स्वायत्ताः सुभटानाम् उरःकवाटभित्तयः। (६६) यतः किं गौड़ाधिपेन (६७) एकेन तथा कुरु यथा न अन्योऽपि कश्चिदाचरति एवं भूयः। (६८) सर्वोर्वीश्रद्धाकामुकानाम् अलीकविजिगीषूणां सञ्चारय चामराणि अन्तःपुरपुरन्ध्रिनिश्वसितैः। (६९) उच्छिन्धि रुधिरगन्धान्धगृध्रमण्डलच्छादनैः छत्रच्छायाव्यसनानि।

---

कुड्यानि। सततेति सततसंनिहिताः धूमायमानाः धूमसुद्वमन्त इत्यर्थः असम्यग्ज्वलिता इति भावः कोपाग्नयः क्रोधानलाः यासु तथोक्ताः। सुलभेति। सुलभा असिधारातोयेन शत्रुप्रेषितनिस्त्रिंशधाराजलेन वृत्तिः यासां तथाविधाः शत्रूणाम् असिप्रहारान् आकाङ्क्षन्त्य इति भावः। विकटेति विकटानि विशालानि बाहव एव वनानि तेषां छायाभिः अनातपभागैः इत्यर्थः वीर्यैरिति भावः। उपगूढाः आलिङ्गिताः सङ्गता इत्यर्थः। धीरताया धैर्यशालितायाः निवासस्य शिशिरभूमयः शीतलप्रदेशाः।

(६६) यत इत्यत्र अत इति पाठो युक्त इत्यवधेयम्।

(६७) एकेन केवलेन एके मुख्यान्यकेवला इत्यमरः। अन्योऽपि गौड़ाधिपात् अपरोऽपि एवम् अधर्ममिति भावः। भूयः पुनः।

(६८) सर्वेति। सर्वा सकला उर्वी पृथ्वी तस्याः श्रद्धा अनुरागविशेषः तां कामयितुं शीलमेषामिति तथोक्तानां साम्राज्यार्थिनामिति भावः अलीकजिगीषूणां वृथा जिगीषुम्मन्यानामिति यावत् निहतानामिति भावः। अन्तःपुरपुरन्ध्रिनिःश्वसितैः अवरोधकामिनीनां हठहृतानामिति भावः निःश्वसितैः दीर्घैरिति भावः भर्तृनिधनशोकादिति भावः। चामराणि चमरीबालव्यजनानि सञ्चारय सञ्चालय निजान्तःपुरेषु इति शेषः।

(६९) उच्छिन्धि उत्सादय नाशय इत्यर्थः। रुधिरेति रुधिराणां शोणितानां गन्धेन अन्धानि दिग्विदिग्ज्ञानरहितानि इति यावत् गृध्राणां मण्डलानि सङ्घाः तेषां छाद्यते एभिरिति छादनानि [illegible] तैः छत्राणाम् आतपत्राणां छायाः तासु व्यसनम् आसक्तिम् अवस्था[illegible]रागमिति भावः। प्रागुक्तानाम् अलीकजिगीषूणाम्

(७०) अपाकुरु कदुष्णशोणितोदकखेदैः कुलक्ष्मीकुलटाकटाक्षचक्षूरागरोगान्। (७१) उपशमय निशितशरशिरावेधैः अकार्य्यशौर्य्यश्वयथून्। (७२) उन्मूलय लोहनिगड़ापीड़मालामलमहौषधैः पादपीठदोहददुर्ललितपादपटुमान्द्यानि। (७३) क्षपय तीक्ष्णाज्ञाक्षरक्षारपातैः जयशब्दश्रवणकर्ण-

---

इति भावः। छत्रच्छायासु सततमासीनाः ते रणभूमौ पतिता शस्त्रपक्षच्छायाः सेवन्तामिति भावः।

(७०) अपाकुरु उपशमय कदुष्णानि ईषदुष्णानि अहिताङ्गेभ्यः सद्योनिर्गलितानीति भावः शोणितानि रुधिराणि एव अहितानामिति भावः उदकानि उष्णानीति भावः तैः खेदाः आसेकाः तैः। कु कुत्सिता चपलेति भावः लक्ष्मीरेव कुलटा दुश्चारिणी नारी तस्याः कटाक्षाः पुरुषान्तरं प्रति अपाङ्गप्रेक्षितानि एव चक्षूरागेण दर्शनप्रीतिं जनयता अनुरागेण रोगाः व्याधयः तान्। यथा कुलटा नारी पुरुषान्तररूपदर्शनेन जातचक्षूरागा तं प्रति कटाक्षान् निक्षिपति तथा तत्तत्पुरुषनिधनेन लक्ष्मीम् अचपलां कुर्विति भावः। चक्षुःपीड़ायाम् उष्णोदकेन खेदः क्रियते इति प्रसिद्धिः।

(७१) उपशमयेति। उपशमय शान्तिं नय। निशितेन शरेण शिराणां शत्रुसम्बन्धिनीनामिति भावः वेधाः व्यधनानि तैः। अकार्य्याः अकर्त्तव्याः शौर्य्याणि एव श्वयथवः शोथरोगविशेषाः तान् श्वयथुरोगे शिरावेधनात् रक्तादिक्ष्वेदानां निःसारणं क्रियते इति प्रसिद्धिः।

(७२) उन्मूलय अपाकुरु शान्तिं नय इत्यर्थः। लोहनिगड़ाः लौहशृङ्खलान्येव आपीड़मालाः अलङ्कारमालाः ता एव अमलानि निर्दोषाणि इति यावत् महौषधानि उत्कृष्टभेषजानि तैः। पादपीठेषु दोहदानि न्यासार्थमभिलाषाः तैः दुर्ललिता दुरभ्यस्ता दुर्विनीता वा ये पादास्तरणानि विद्विषामिति भावः तेषां पटूनि विदग्धानि मान्द्यानि आलस्यानि इत्यर्थः रोगविशेषाश्च तानि। अहितानां पादपीठोचितानि पदानि लौहशृङ्खलैः संवेष्ट्य कारासञ्चारीणि कुर्विति भावः।

(७३) क्षपय अपनय। तीक्ष्णेति तीक्ष्णानि दारुणानि आज्ञाक्षराणि आदेशवचनानि एव क्षाराः लवणविशेषाः तेषां पाताः अर्पणानि तैः जयशब्दानां श्रवणानि एव कर्णकण्डूः कर्णरोगविशेषाः ताः। निर्जितान् शत्रून् प्रति यथाज्ञा-

कण्डूः। (७४) अपनय चरणनखमरीचिचन्दनचर्चाललाट-लेपैः अनमितस्तिमितमस्तकस्तम्भविकारान्। उद्धर (७५) करदानसन्देशसन्दंशैः द्रविणदर्पोष्मायमाणदुःशीललीला-शल्यानि। (७६) भिन्धि मणिपादपीठदीधितिप्रदीपि-काभिः शुष्कसुभटाटोपभ्रुकुटिबन्धान्धकारान्। (७७) जय चरणलङ्घनलाघवगलितशिरोगौरवारोग्यैः मिथ्याभिमान-

---

चराणि प्रयुज्यन्तां यथा तेषां स्वानुजीविगणप्रोच्यमानजयशब्दश्रवणाभ्यासो विर-मतीति भावः।

(७४) अपनयेति। अपनय खण्डय चरणानां नखाः तेषां मरीचयः मयूखा एव चन्दनचर्चा चन्दनानुलेपाः ताभिः ललाटलेपाः भालतटनिहितप्रलेपा इत्यर्थः तैः। अनमितानाम् अप्रणिपातितानामिति यावत् स्तिमितानां निश्चलानां मस्त-कानां शत्रुशिरसामिति भावः। स्तम्भविकाराः अनत्या स्तम्भितभावेन अवस्थान-रूपा इति यावत् तान्। यथा शत्रवः चरणतलेषु प्रणिपतन्ति तथा कुर्विति भावः शिरःपीडायां ललाटचन्दनप्रलेपः औषधम् इति यावत्।

(७५) उद्धरेति। उद्धर उत्पाटय। करेति करस्य राजग्राह्यांशस्य दानं तस्य सन्देशाः वाचिकानि त्वया एवमस्मभ्यं करो देय इत्येवमादेशवचनानि इति यावत् एव सन्दंशाः यन्त्रविशेषाः शाड़ाशीति प्रसिद्धाः तैः। द्रविणदर्पेण धनाह-ङ्कारेण उष्मायमाना उष्णवदवभासमाना या दुःशीलानां दुर्विनीतानाम् अहिता-नामिति यावत् लीला विचेष्टितानि एव शल्यानि कीलाः तानि। निहता-शेषान् विद्विषतः करदानाज्ञाप्रेषणेन विगतदर्पान् कुर्विति भावः।

(७६) भिन्धि नाशय। मणीति मणिः मणिमयमित्यर्थः यत्पादपीठं स्व-चरणविन्यासासनं तस्य दीधितयः मयूखा एव दीपिकाः ताभिः। शुष्काः स्वनर्जिता इत्यर्थः संग्रामप्रासङ्गाभावात् अभ्यासरक्षणार्थं समये समये रचिता इति भावः सुभटानां सुयोद्धृणाम् आटोपेन क्रोधावेगेन इत्यर्थः भ्रुकुटिबन्धा भ्रूभङ्गा एव अन्धकाराः तान्। अहितानां सर्वेषामेव निपातनेन स्वसैनिकवीरान् क्रोधवर्जितान् नाममात्रेण सुभटान् कुर्विति भावः।

(७७) जय अपनय। चरणयोः लङ्घनं प्रणिपतनम् एव लाघवं लघुत्वं तेन गलितानि शिरोगौरवाणि मूर्द्धगुरुत्वानि एव आरोग्याणि अरोगाय हितानि

महासन्निपातान्। (७८) श्लथय सततसेवाञ्जलिमुकुलितकरसम्पुटोष्मभिः इष्वसनगुणकिणकार्कश्यानि। येन एव ते गतः पिता पितामहः प्रपितामहो वा तमेव (७९) मा हासीः त्रिभुवनश्लाघनीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरी इव कुरङ्गीं राजलक्ष्मीम्। देव! देवभूयं गते नरेन्द्रे (८०) दुष्टगौड़भुजङ्गजग्धजीविते च राज्यवर्द्धने वृत्तेऽस्मिन् महाप्रलये धरणीधारणाय अधुना त्वं शेषः। (८१) समाश्वासय अशरणाः प्रजाः। (८२) क्ष्मापतीनां शिरस्सु शरत्सविता इव ललाट-

---

आरोग्याणि औषधानि इत्यर्थः तैः मिथ्याभिमानाः वृथा गर्वा अहितानामिति भावः एव सन्निपाताः असाध्यरोगविशेषाः तान्। शत्रवः चरणनिपतिता निरभिमानाः क्रियन्तामिति भावः।

(७८) श्लथय शिथिलय। सततेति। सततं सेवायां यः अञ्जलिः करयोः योग इत्यर्थः द्वौ युतौ अञ्जलिः पुमानित्यमरः। तेन मुकुलितस्य मुकुलतां गतस्य संवृतस्य इत्यर्थः करसम्पुटस्य युक्तकरद्वयस्य इत्यर्थः ऊष्मभिः सन्तापैः। इषवः शरा अस्यन्ते क्षिप्यन्ते अनेन इति इष्वसनं धनुः तस्य गुणः मौर्वी तेन तदाकर्षणेन इति यावत् ये किणाः कलङ्कचिह्नानि तेषां कार्कश्यानि काठिन्यानि शत्रूणाम् इति शेषः तानि। ऊष्मस्वेदेन किणकार्कश्यमपनीयते इति प्रसिद्धिः। शत्रून् धनुर्ज्यास्फालनव्याजेन सेवकान् कुर्विति भावः।

(७९) मा हासीः मा त्याक्षीः पन्थानं मार्गं वीरोचितमिति भावः। अपहाय परित्यज्य। प्रतिपद्यस्व गृहाण। केसरीव सिंह इव कुरङ्गीं मृगीम्। देवभूयं देवत्वम्। नरेन्द्रे राजनि प्रभाकरवर्द्धने विषवैद्ये च।

(८०) दुष्टेति। दुष्टः दुर्वृत्तः विषाक्तश्च गौड़ः गौड़ाधिप एव भुजङ्गः आशीविषः तेन दग्धं कवलितं जीवितं यस्य तथाभूते। वृत्ते उपस्थिते। महाप्रलये महासङ्कटे। धरणीधारणाय पृथ्वीभारवहनाय। शेषः अवशिष्टः अनन्तनागश्च।

(८१) समाश्वासय सान्त्वय अशरणाः निराश्रयाः।

न्तपान् प्रयच्छ पादन्यासान्। (८३) अहितानाम् अभिनवसेवादीचादुःखसन्तप्तश्वासधूममण्डलैः नखम्पचैः प्रचलितचूड़ामणिचक्रवालबालातपैश्च आयाहि कल्माषपादताम्। अपिच हते पितरि एकाकी तपस्वी मृगैः सह (८४) संवर्द्धितः सहजब्राह्मण्यमार्द्दवसुकुमारमनाः कृतनिश्चयः (८५) चण्डचापवनाटनिटाङ्कारनादनिर्मदीकृतदिग्गजं (८६) गुञ्जज्ज्याजालजनितजगज्ज्वरं समग्रम् उद्यतम् एकविंशतिकृत्वः क्षत्त्रवंशम् उत्खातवान् राजन्यकं परशुरामः किं पुनः (८७) नैसर्गिककायकार्कश्यकुलिशाय-

---

(८२) क्ष्मापतीनां राज्ञां विद्विषामिति भावः शरत्सविता इव शरदः सूर्य्य इव। ललाटन्तपान् ललाटतापिनः पादन्यासान् चरणरूपन्यासवस्तूनि प्रयच्छ निधेहि।

(८३) अहितानां शत्रूणाम् अभिनवा अपूर्वा याः सेवाः चरणसंवाहनानि एव दीचा अवश्यकर्त्तव्यव्रतविशेषाः तासु यत् दुःखं क्लेशः तेन सन्तप्तानि उष्णानि श्वासधूमानां मण्डलानि समूहाः तैः। नखम्पचैः नखान् पचन्ति तपन्तीति नखम्पचाः तैः। प्रचलितानां प्रलुण्ठितानां चूड़ामणीनां शिरोरत्नानां पादपतितानाम् अहितानामिति भावः चक्रवालानि मण्डलानि तेषां बालातपाः नवोदितसूर्य्यकिरणावभासाः तैश्च कल्माषपादतां चित्रचरणत्वं तदाख्यराजर्षिप्रवरत्वञ्च। पितरि जमदग्नौ हते व्यापादिते कार्त्तवीर्य्येण इति शेषः।

(८४) संवर्द्धितः पालितः। सहजेति सहजेन स्वाभाविकेन ब्राह्मण्यस्य ब्रह्मतेजसः मार्द्दवेन मृदुत्वेन सुकुमारम् अतिकोमलं मनो यस्य तथाभूतः सौम्यप्रकृतिरिति यावत् कृतनिश्चयः पितृशत्रून् निहन्मि एवेति कृतप्रतिज्ञः।

(८५) चण्डेति। चण्डानाम् उग्रदर्शनानां चापवनानां धनुःसङ्घानाम् अटनयः शिञ्जिन्यः तासां टाङ्कारनादेन टङ्कारध्वनिना निर्मदीकृता मदशून्यीकृताः दिग्गजाः ऐरावतादयः येन तथाभूतं दिग्गजमदशोषणधनुष्टङ्कारमिति यावत्।

(८६) गुञ्जदिति। गुञ्जद्भिः नदद्भिः ज्याजालैः धनुर्मौर्वीनिचयैः जनितः उत्पादितः जगतां ज्वरो येन तथोक्तं समग्रं सकलम् उद्यतं संग्रामप्रवृत्तमित्यर्थः। क्षत्त्रवंशं क्षत्तः छिन्नः वंशः कुलं यस्मिन् तद् तथा तथा उत्खातवान् उन्मूलितवान्।

मानमानसो मानिनां मूर्द्धन्यो देवः ? तदद्य एव कृतप्रतिज्ञो गृहाण (८८) गौड़ाधमजीवितध्वस्तये जीवितसङ्कलना-कुलकालाकाण्डदण्डयात्राचिह्नध्वजं धनुः। नहि अयम् (८९) अरातिरक्तचन्दनचर्च्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानलपच्यमानदेहस्य देवस्य दुःखदाहज्वरः सुदारुणः। (९०) निकारसन्तापशान्त्युपायपरिचये हि हिड़िम्बा-चुम्बनास्वादितमिव रिपुरुधिरामृतम् अमन्दरोपायम् अपायि पवनात्मजेन। (९१) जामदग्न्येन च शाम्यन्मन्युशिखि-

---

(८७) नैसर्गिकेति। नैसर्गिकेण स्वाभाविकेन कायकार्कश्येन देहकाठिन्येन कुलिशायमानं कुलिशं वज्रं तद्वदाचरत् अतिकठिनमिति भावः मानसं यस्य तथाभूतः। मानिनां मानवतां मानधनानामिति यावत् मूर्द्धन्यः शिरःस्थित इत्यर्थः मुख्य इति यावत्।

(८८) गौड़ेति। गौड़ाधमस्य गौड़राजापसदस्य जीवितध्वस्तये जीवनध्वंसनाय। जीवितेति जीवितानां प्राणानां प्राणिनामिति शेषः सङ्कलनाय संग्रहणाय आकुलः व्यापृतः यः कालः अन्तकः यम इत्यर्थः तस्य अकाण्डे सहसा दण्डयात्रा युद्धप्रयाणं तस्य चिह्नं ध्वजं ध्वजभूतमित्यर्थः धनुः कार्मुकं गृहाण प्रतिपद्यस्व।

(८९) अरातीति अरातीनां विद्विषां रक्तानि एव चन्दनानि तेषां चर्चा प्रलेप एव शिशिरोपचारः शैत्यक्रिया तम् अन्तरेण विना। परिभवेति परिभवः मानखर्वरूप एव अनलः तेन पच्यमानः क्लिश्यमानः देहो यस्य तथाभूतस्य। सुदारुणः अतितीव्रः।

(९०) निकारेण परिभवेण निकारस्य वा सन्तापः तस्य शान्तिः उपशमः तस्य उपायः अस्य इति भावः तस्य परिचये अपगमे हिड़िम्बा नाम राक्षसी स्वप्रेयसीति भावः तस्याश्चुम्बनस्य आस्वादः जातोऽस्येति आस्वादितं तदिव रिपोः शत्रोः गौड़ाधिपस्य दुःशासनस्य च रुधिरम् अमृतमिव अमन्दरोपायं मन्दराद्रिः अमृतोद्धरणे उपाय आसीत् तद्रहितम् अपायि पीतं पवनात्मजेन भीमेन।

(९१) जामदग्न्येन परशुरामेण। शाम्यदिति शाम्यन् उपशमं गच्छन् मनु-निधनेनेति भावः यः मन्युः क्रोध एव शिखी अग्निः तस्य शिखा ज्वाला तस्याः

शिखासंज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजकर्दमेषु अस्नायि। इत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षस्तं प्रत्यवादीत् करणीयमेव इदम् अभिहितं (९२) मान्येन। इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायाददृष्टिः ईर्ष्यालोः भुजस्य। (९३) उपरि गच्छति इति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम्। अनमत्सु शैलेषु अपि कचग्रहम् अभिलषति दातुं करः। (९४) तेजोदुर्विदग्धान् अर्ककरान् अपि चामराणि ग्राहयितुमीहते हृदयम्। (९५) राजशब्दरुषा मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठीकर्त्तुम्। (९६) स्वच्छन्दलोकपालस्वेच्छागृहीतानाम्

---

संज्वराः सन्तापाः तेषु सुखायमानाः जनितसुखानुभवाः स्पर्शशीतलाश्च तेषु। क्षत्रियाणां राजन्यानां क्षतजानि रुधिराणि एव कर्दमाः स्रोतांसि तेषु अस्नायि स्नातम्।

(९२) इतरथा हि अन्यथैव मान्येन आर्य्येण करणीयोपदेशाकीर्त्तनेऽपि इति भावः गृहीतभुवि भूभारग्राहिणि इत्यर्थः भोगिनाथे शेषाहौ नरनाथे च दायाददृष्टिः दायं पैतृकं धनम् आदत्ते इति दायादः पैतृकधनांशहर इत्यर्थः तस्मिन्निव दृष्टिः विरुद्धदर्शनमिति यावत् ईर्ष्यालोः ईर्ष्या परश्रीद्वेषः अस्ति अस्येति तथोक्तस्य।

(९३) उपरीति। उपरि ऊर्द्ध्वदेशे अन्तरीक्षे इत्यर्थः गच्छति चरति ग्रहगणे ज्योतिर्गणेऽपि निग्रहाय कथं मे उपरि गच्छतीति दण्डनाय भ्रूलता चलितुम् इच्छति अभिलषति। शैलेषु पर्वतेषु अनमत्सु नतिमकुर्वत्सु इत्यर्थः करः हस्तः ममेति शेषः कचग्रहं केशाकर्षणं दातुं कर्त्तुमिति यावत्।

(९४) तेज इति। तेजोभिः ज्योतिर्भिः दुर्विदग्धान् दुःशीलानिति यावत् अर्ककरान् सूर्य्यकिरणान् ईहते चेष्टते।

(९५) राजशब्दरुषा राजेति शब्दः तत्र या रुट् तया मदन्योऽपि राजेति शब्देन इत्यर्थः मृगराजानां सिंहानाम्। पादपीठीकर्त्तुम् अपादपीठानि पादपीठानि कर्त्तुं पादपीठीकर्त्तुम्।

आक्षेपादेशाय दिशाम् अपि स्फुरति अधरः किं पुनः ईदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि नास्त्येव अवकाशः शोकक्रियाकरणस्य । अपिच (९७) हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौड़ाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा सूत्का-र्त्तुम् । (९८) अक्षतरिपुवलावलाविलोललोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम् । (९९) अदृष्टगौड़ा-धमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमपि अश्रुसलिलम् । श्रूयतां मे प्रतिज्ञा शपामि आर्य्यस्यैव पादपांशुस्पर्शेन यदि परिगणितैः एव वासरैः (१००) सकलचापचापलदुर्ललितनर-

---

(९६) स्वच्छन्देति । स्वच्छन्दैः स्वाधीनैः लोकपालैः इन्द्रादिभिः स्वेच्छया स्वाभिलाषेण गृहीतानां तासां दिशां नरीणामिति भावः आक्षेपादेशाय हरणाज्ञायै अपि अधरः स्फुरति स्पन्दते । ईदृशे एवंविधे दुर्जाते दुर्घटने भ्रातृवधपरिभवे इति भावः जाते वृत्ते जातामर्षनिर्भरे अमर्षवेगापूरिते इत्यर्थः शोकक्रियाकरणस्य शोकोचिताचरणस्य अवकाशः अवसरः ।

(९७) हृदयविषमशल्ये अन्तरिन्द्रियव्यथायाम् अतिदारुणशल्यास्वभूते मुसल्ये मुसलेन वध्यः तस्मिन् जाल्मे पापिष्ठे गौड़ाधिपाधमचाण्डाले जीवति सति जिह्रेमि लज्जे पोटेव क्लीव इव पुंलक्षणयुता स्त्रीव वा शुचा शोकेन सूत्कर्त्तुं सूत्कारम् अस्पष्टशब्दविशेषं कर्त्तुमित्यर्थः ।

(९८) अक्षतेति न क्षतं रिपुवलावलानां शत्रुसैनिकाङ्गनानां विलोलेभ्यः चञ्चलेभ्यः लोचनेभ्यः नयनेभ्यः उदकदुर्दिनं वाष्पवर्षणं येन तथाभूतस्य मे कस्य कर-युगलस्य भुजद्वयस्य कर्त्तरि षष्ठी जलाञ्जलिदानं तर्पणार्थम् उदकाञ्जलिदानं भाति इति भावः कुतः ? न कुतोऽपि जलादित्यर्थः रिपुनारीणां हतभर्त्तृकाणां नयनसलिलैरेव अञ्जलिं पूरयन् भ्रातरं तर्पयिष्यामि इति भावः ।

(९९) अदृष्टेति । न दृष्टं गौड़ाधमस्य चिताधूममण्डलं येन तथाभूतस्य चक्षुषः मे इति शेषः स्वल्पमपि किञ्चिदपीत्यर्थः अश्रुसलिलं वाष्पवारि विगलतीति शेषः नैवेत्यर्थः शपामि शपथं करोमि पादपांशुस्पर्शेन तत्स्पर्शं कृत्वेत्यर्थः । परिगणितैः स्वल्पैरित्यर्थः ।

पतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं ततः तनूनपाति पीतसर्पिषि पतङ्ग इव पातकी पातयामि आत्मानम् । इत्युक्त्वा च (१) महासन्धिविग्रहाधिकृतम् अवन्तिम् अन्तिकस्थम् आदिदेश लिख्यताम् आ रविरथचक्रचीत्कारचकितचारणमिथुनमुक्तसानोः उदयाचलात् (२) आ त्रिकूटकटककुट्टाकटङ्कलिखितकाकुत्स्थलङ्कालुण्ठनव्यतिकरात् सुवेलात् (३) आ वारुणीमदस्खलितवरुणवरनारीनूपुररवमुखरकुहरकुक्षेः अस्तगिरेः (४) आ गुह्यक-

---

(१००) सकलेति । सकलानां चापचापलेन धनुश्चाञ्चल्येन धनुर्धरा वयमित्यभिमानिनेति भावः दुर्ललितानां दुर्विनीतानां नरपतीनां चरणेषु रणरणायमानाः रणरणस्वनं कुर्वन्तः निगडाः लौहशृङ्खलानि यस्यां तथाभूतां निर्गौडां गौडाधिपवर्जिताम् । ततस्तर्हि तनूनपाति अग्नौ पीतसर्पिषि खादितहव्ये हुतप्रक्षेपेण अतिज्वलतीति भावः ।

(१) महासन्धिविग्रहाधिकृतं महान्तं सन्धौ विग्रहे च अधिकरोतीति तथोक्तम् अवन्तिं तदाख्यं पुरुषम् । आ इति अभिविधौ । रवीति रवेः सूर्य्यस्य रथचक्रस्य चीत्कारेण घर्घररवेण चकितैः भीतैः चारणमिथुनैः गन्धर्वयुग्मैः मुक्तः त्यक्तः सानुः प्रस्थदेशः यस्य तथाभूतात् उदयाचलात् पूर्वपर्वतात् आशब्दयोगे पञ्चमी ।

(२) त्रिकूटेति त्रिकूटस्य पर्वतविशेषस्य कटकाः नितम्बभागाः तेषां कुट्टाकेन कुट्टनकारिणा टङ्केन पाषाणदारणास्त्रविशेषेण लिखितः खोदितः काकुत्स्थस्य रामस्य लङ्कालुण्ठनव्यतिकरः सुवेलशिखरोपरिस्थिता लङ्का नाम रावणपुरी तस्या लुण्ठनमेव व्यतिकरः घटना यस्य तथाभूतात् सुवेलात् तदाख्यगिरेः दक्षिणाशास्थितादिति शेषः ।

(३) वारुणीति वारुणी सुरा तस्याः मदेन तत्पानजनितविकारेणेत्यर्थः स्खलिताः विपर्य्यस्तचरणा इति भावः वरुणस्य पश्चिमदिक्पालस्य वरा उत्तमा नार्य्यः तासां नूपुररवेण मुखरः सशब्दः कुहरकुक्षिः गह्वरोदरं यस्य तथाभूतात् अस्तगिरेः अस्ताचलात् ।

गेहिनीपरिमलसुगन्धिगन्धपाषाणवासितगुहागृहाद् गन्धमादनात् सर्वेषां राज्ञां (५) सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रहणाय वा गृह्यन्तां दिशः चामराणि वा नमन्तु शिरांसि धनूंषि वा कर्णपूरीक्रियन्ताम् आज्ञा मौर्व्यो वा शेखरीभवन्तु (६) पादरजांसि शिरस्त्राणि वा घटन्ताम् अञ्जलयः करिघटाबन्धा वा (७) मुच्यन्तां भूमय इषवो वा समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा (८) सुहृदः क्रिय-

---

(४) गुह्यकेति गुह्यकानां देवयोनिविशेषाणां गेहिन्यः भार्याः तासां परिमलेन सङ्गमविमर्दोत्थगन्धेन विमर्दोत्थे परिमल इत्यमरः। तेन सुगन्धयः सौरभवन्तः ये गन्धपाषाणाः शिलाजतुधातव इत्यर्थः तैर्वासितानि गुहा एव गृहाणि यस्य तथाभूतात् गन्धमादनात् उत्तरगिरेः इत्यर्थः सर्वत्र आ योगे पञ्चमी।

(५) सज्जीक्रियन्तां प्रसार्य्यन्तां करा हस्ताः करदानाय राजभागदानाय इति सन्धिप्रस्तावः शस्त्रग्रहणाय युद्धकरणायेति भावः इति विग्रहप्रस्तावः। दिशः गृह्यन्तां राज्यं विहाय पलाय्य आश्रीयन्तां चामराणि वा गृह्यन्तां धार्य्यन्तां मत्सेवार्थमिति भावः सर्वैः राजभिरिति शेषः। शिरांसि राज्ञामिति शेषः नमन्तु मच्चरणयोः प्रणिपतन्तु धनूंषि नमन्तु ज्यारोपणेन आकृष्टानि भवन्तु युद्धाय सज्जितानि भवन्तु इत्यर्थः। आज्ञा मदीयेति शेषः कर्णपूरीक्रियन्तां कर्णभूषणं यथा सततं कर्णस्थितं शोभते तथा मदीयाज्ञा सततं कर्णेन्द्रियैः सादरं श्रूयतामिति भावः मौर्व्यः शिञ्जिन्यः कर्णपूरीक्रियन्ताम् आकर्णमाकृष्यन्तां युद्धार्थम् इति भावः।

(६) पादरजांसि पदधूलयः मदीयानीति भावः शेखरीभवन्तु शिरोभूषणानि भवन्तु। शिरस्त्राणि युद्धकाले शिरोरक्षार्थं शिरोबन्धनविशेषाः शेखरीभवन्त्वित्यन्वयः। अञ्जलयः घटन्तां युज्यन्तां करिघटाबन्धा हस्तिव्यूहरचनाः।

(७) मुच्यन्तां त्यज्यन्तां भूमयः राज्यानीति यावत् इषवः शराः। समालम्ब्यन्तां गृह्यन्तां वेत्रयष्टयः वेत्रलताः मद्गृहेषु भृत्यभावाश्रयेणेति भावः। कुन्तयष्टयः कुन्ताख्यास्त्राणि।

ताम् आत्मा मच्चरणनखेषु कृपाणदर्पणेषु वा। (९) परागतोऽहम्। पङ्गोः इव मे कुतो निवृत्तिः तावत् यावन्न कृतः सर्वद्वीपान्तरसञ्चारी सकलनरपतिमुकुटमणिशिलालोकमयः पादलेपः। इति कृतनिश्चयश्च (१०) मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी सभाम् अत्याक्षीत्। उत्थाय च स्वस्थवन्निःशेषम् आह्निकम् अकार्षीत्। अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शाम्यदुष्मा दिवसः त्रिभुवनस्य।

ततश्च (११) निजाधिकारापहारभीत इव भगवति अपि क्वापि गते गततेजसि अहिमभासि तामरसवनेषु अपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु (१२) विहग-

---

(८) सुदृष्टः सुष्ठु निरीक्षितः मच्चरणनखेषु मयि प्रणिपातः क्रियतामिति भावः। कृपाणा असय एव दर्पणानि तेषु युद्धार्थमिति भावः।

(९) परागतः प्रस्थितः विजयार्थमिति शेषः। पङ्गोरिव पादविकलस्येव। सकलेति सकलानां नरपतीनां मुकुटेषु या मणिशिलाः रत्नानि इत्यर्थः तासाम् आलोकमयः मयूखमय इति यावत् पादलेपः चरणप्रलेपः। यावत् सर्वे नरपतयः मच्चरणयोः न प्रणिपतेयुः तावत् न मे अस्मात् व्यापारात् विरतिरिति भावः।

(१०) मुक्तास्थानः त्यक्तराजसभः। स्नानारम्भाकाङ्क्षी स्नानक्रियामभिलषन्। स्वस्थवत् प्रकृतिस्थ इव निःशेषं सकलम् आह्निकं दैनिकं व्यापारमिति शेषः। अगलत् अतिचक्राम दर्पप्रसर इव अहङ्कारावेग इव श्रुतप्रतिज्ञस्य प्रतिज्ञां श्रुतवत इत्यर्थः। शाम्यन् अपगच्छन् उष्मा तेजः यस्य तथाभूतः।

(११) निजेति। निजस्य अधिकारस्य जगत्प्रतपनस्य अपहारात् अपहरणकरणात् भीत इव त्रस्त इव इव गततेजसि निष्प्रभे इत्यर्थः अहिमभासि उष्णकिरणे रवौ। तामरसवनेषु रक्तोत्पलकाननेषु निगूढाः मुकुलीभावेन स्वान्तर्लीनत्वादिति भावः शिलीमुखानाम् भ्रमराणाम् आलापाः गुञ्जनानि इत्यर्थः येषु तथाभूतेषु। त्रासादिव भयादिव सङ्कुचत्सु निमीलत्सु।

गणेषु अपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भिया इव अप्रकटीभवत्सु भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिवने जने सकले (१३) स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकारवलयासु इव बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने न अतिचिरं तस्थौ। (१४) नमन्नृपलोकलोलांशुकपवनकम्पितशिखैः दीपिकाचक्रवालैः अपि प्रणम्यमान इव प्राहिणोत् लोकम् प्रतिषिद्धपरिजनप्रवेशश्च शयनगृहं प्राविशत्। उत्तानश्च मुमोच अङ्गानि शयनतले। दीपद्वितीयश्च तम् अभिसर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्श अग्रजम्। उपर्य्युपरि (१५) भ्रातृजीवितान्वेषिण इव प्रसस्रुः

---

(१२) विहगगणेषु पक्षिवृन्देषु समुपसंहृतः निजः पक्षयोः विक्षेपः यैः तथाभूतेषु भियेव अप्रकटीभवत्सु अप्रकाशतां गच्छत्सु। भुवनव्यापिनीं जगदावरणकारिणीं प्रतिज्ञामिव हर्षस्य इति भावः मानयति आद्रियमाणे नतशिरसि प्रणमतीत्यर्थः घटिताञ्जलिवने कृताञ्जलिसमूहे।

(१३) स्वपदेति। स्वस्य आत्मनः पदच्युतिरधिकारभ्रंशः तस्मात् तेन वा चकिताः शङ्किताः ये दिक्पालाः तैः दीयमानं निधीयमानम् अभ्रं लिहं गगनस्पर्शि लोहप्राकारवलयं लौहमयवरणमण्डलं यासु तथाविधासु इव बहलया प्रभूतया तिमिरमालया अन्धकारपटलेन तिरोधीयमानासु दिक्षु आशासु प्रदोषास्थाने रजनीमुखसभायाम्।

(१४) नमदिति। नमतां प्रणिपततां नृपलोकानां राजलोकानां लोलस्य चञ्चलस्य अंशुकस्य वसनस्य पवनेन वायुना कम्पिताः सञ्चलिताः शिखा येषां तैः दीपिकाचक्रवालैः दीपमण्डलैः। लोकं परिजनमिति भावः। प्राहिणोत् विससर्ज। प्रतिषिद्धः निवारितः परिजनानां प्रवेशः येन तथाभूतः। उत्तानः शिथिलिताङ्गः। दीपद्वितीयं दीपमात्रसहचरमित्यर्थः तं हर्षम्। अभिसर इव

श्वासाः। धवलांशुकपटान्तेन इव च अश्रुजलप्लवेन मुखम् आच्छाद्य निःशब्दम् अतिचिरं रुरोद चकार च चेतसि कथं नाम आकृतेः तादृश्या युक्तः परिणामोऽयम् ईदृशः। (१६) पृथुशिलासङ्घातकर्कशकायबन्धात् तातात् अचलात् इव लोहधातुः कठिनतर आसीत् आर्य्यः। कथञ्च अस्य मे हत-हृदयस्य आर्य्यविरहे (१७) सकृदपि युक्तम् उच्छ्वसितुम्? (१८) इयं सा प्रीतिर्भक्तिः अनुवृत्तिर्वा। बालिशोऽपि कः सम्भावयेत् आर्य्यमरणे मज्जीवितम्? तत् तादृशम् (१९) ऐक्यम् एकपद एव क्वापि गतम्। अयत्नेन एव हतविधिना पृथक्कृतोऽस्मि। (२०) दग्धरोषान्तरितशुचा सुचिरं

---

दस्युरिव लब्धावसरः प्राप्तावकाशः तरसा बलेन जग्राह चाचक्राम। तदानीं भ्रातृशोकः समुद्भभौ इति भावः।

(१५) भ्रातृजीवितान्वेषिण इव भ्रातुर्जीवितमन्विच्छन्त इव श्वासाः निःश्वास-मरुतः प्रसस्रुः निर्गच्छन्ति स्म। धवलांशुकपटान्तेन इव श्वेतवसनाञ्चलेन इव अश्रुजलप्लवेन वाष्पवारिप्रस्रवेण। परिणामः विपाकः अपमृत्युरित्यर्थः।

(१६) पृथ्विति। पृथुर्विशालः शिलासङ्घातः पाषाणचयः तद्वत् कर्कशः कठिनः कायबन्धः कलेवरघटनं यस्य तथाविधात् तातात् पितुः अचलादिव पर्वतादिव लोहधातुः लोहनामा खनिजः पदार्थविशेषः। कठिनतरः अतिकठिनः। पाषाणोत्पन्नमपि लौहं पाषाणादपि कठिनं भवतीति प्रत्यक्षमिति भावः।

(१७) सकृदपि एकं क्षणमपि उच्छ्वसितुं प्राणितुम्।

(१८) इयमिति। सा प्रीतिरुभयोः प्रणयः सा भक्तिः पूज्यतयानुरागः सा अनुवृत्तिः आनुगत्यम् इयम् ईदृशभावं प्राप्तेत्यर्थः।

(१९) ऐक्यम् एकीभावः अभिन्नभाव इत्यर्थः अयत्नेन यत्नं विना एव। पृथक्कृतः विच्छिन्नः कृतः।

(२०) दग्धेति। दग्धेन हतेन अतिहेयेनेति भावः रोषेण अरातिं प्रति कोपेन अन्तरिता व्यवहिता तिरोहितेति यावत् शुक् शोकः यस्य तथाभूतेन

रुदितमपि न मुक्तकण्ठं गतघृणेन मया। सर्वथा (२१) लूतातन्तुच्छटाच्छिदुरा: तुच्छा: प्रीतय: प्राणिनाम्। (२२) लोकयात्रामात्रनिबन्धना बान्धवता यतोऽहमपि नाम पर इव आर्य्ये स्वर्गस्थे स्वस्थ इव आसे। किञ्च दैवहतकेन फलम् आसादितम् ईदृशि परस्परप्रीतिबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथुने विघटिते। तथा चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य (२३) लग्नचिताग्नय इव आर्य्यस्य त एव दहन्ति गुणा:। इति एतानि च अन्यानि च हृदयेन (२४) पर्य्यदेवत। प्रभातायाञ्च शर्वर्य्यां प्रातरेव प्रतीहारम् आदिदेश अशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुम् इच्छामि इति।

(२५) अथ युगपत् प्रधावितबहुपुरुषपरम्पराहूयमान:

---

अरातिक्रोधावेशेन शोकं विस्मरतेत्यर्थ:। गतघृणेन निर्दयेन मया मुक्तकण्ठम् उच्चै: न रुदितं न क्रन्दितम्।

(२१) लूतेति। लूतातन्तुच्छटा लूता जालकार: कीटविशेष: तस्य तन्तुच्छटा सूत्रनिचय: तद्वत् छिदुरा: अक्लेशेन छेदार्हा इत्यर्थ: अतएव तुच्छा: हेया: प्रीतय: प्रणया:।

(२२) लोकयात्रामात्रनिबन्धना लोकव्यवहारमात्रफला बान्धवता बन्धुत्वम्। पर इव अन्य इव असोदर इव इत्यर्थ:। आसे तिष्ठामि। फलं लाभ:। आसादितं प्राप्तम्। ईदृशि एवम्प्रकारे परस्परं प्रीतिबन्धेन निर्वृतं हृदयं यस्य तथाभूते सुखभाजि सुखभोगनिरते विघटिते विच्छिन्ने।

(२३) लग्नेति। लग्ना: संसक्ता: चिताग्नय: येषु तथाभूता इव चिताग्निभि: ज्वलिता इव इति यावत् गुणा: शौर्य्यदाक्षिण्यादय: दहन्ति भस्मीकुर्वन्ति।

(२४) पर्य्यदेवत परिदेवितवान् विललापेत्यर्थ:। शर्वर्य्यां रात्रौ। प्रतीहारं दौवारिकम्। अशेषगजसाधनाधिकृतं समस्तगजारोहिसैनिकाधिपतिम्।

(२५) अथ स्कन्दगुप्त: स्वमन्दिरात् सम्भ्रान्त: चरणाभ्यामेव राजकुलं विवे-

स्वमन्दिरात् (२६) अप्रतिपालितकरेणुः चरणाभ्यामेव सम्भ्रान्तः ससम्भ्रमैः दण्डिभिः उत्सार्य्यमाणजानपदः (२७) पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान् वरवारणानां विभावरीवार्त्ताः पृच्छन् (२८) उच्छ्रितशिखिपिच्छलाञ्छित-वंशलतावनगहनगृहीतदिगायामैः विन्ध्यवनैः इव (२९) वारणबन्धविमर्दोद्योगागतैः पुरःप्रधावद्भिः अनायत्तमण्डलैः आधोरणगणैश्च (३०) मरकतहरितघासमुष्टीश्च दर्शयद्भिः नवग्रहगजपतींश्च प्रार्थयमानैश्च (३१) लब्धाभिमतमत्त-

---

श्रेति सम्बन्धः । तं विशिनष्टि युगपदित्यादि । युगपत् समकालं प्रधावितानां प्रद्रुतानां बहूनां पुरुषाणां परम्पराभिः श्रेणिभिः आहूयमानः आकार्य्यमाणः ।

(२६) अप्रतिपालितकरेणुः अनपेक्षितगजवाहन इत्यर्थः ससम्भ्रमैः दण्डिभिः याष्टीकैः उत्सार्य्यमाणाः अपसार्य्यमाणाः जानपदाः पल्लीवासिनः यस्मात् तथोक्तः ।

(२७) पदे पदे प्रतिपदक्षेपमित्यर्थः । इभभिषग्वरान् गजवैद्यप्रवरान् वर-वारणानां श्रेष्ठगजानां विभावरीवार्त्ताः रात्रिवृत्तान्तान् पृच्छन् जिज्ञासन् ।

(२८) उच्छ्रितेति । उच्छ्रितैः उन्नतैः शिखिनां मयूराणां पिच्छैः बर्हैः लाञ्छि-तानि मण्डितानि वंशलतावनानि वेणुवल्लीकाननानि येषु तथाविधैः गहनैः अरण्यैः गृहीता अधिकृता दिशां आयामा आभोगाः यैः तादृशैः विन्ध्यवनैरिव विन्ध्याचलकाननैरिव ।

(२९) वारणेति । वारणानां हस्तिनां बन्धे धारणे रोधने इति यावत् यो विमर्दः प्रयासः तस्य उद्योगात् आगताः उपस्थिताः तैः । पुरः अग्रतः प्रधावद्भिः प्रद्रवद्भिः अनायत्तमण्डलैः न आयत्तं मण्डलं सङ्घः येषां तैः अनधीनानुचरैरिति भावः । आधोरणगणैः हस्तिपालकवृन्दैः ।

(३०) मरकतेति । मरकतवत् हरिताः श्यामलाः घासानां मुष्टीः दर्शयद्भिः ईदृशी घासमुष्टिर्दातुं शक्यते नवा इति जिज्ञासयेति भावः । नवः नूतनः ग्रहः धरणं येषां तादृशा ये गजपतयः तान् प्रार्थयमानैः एतान् अस्मदधीनान् कुर्विति याचमानैः इत्यर्थः ।

मातङ्गमुदितमानसैश्च सुदूरम् उपसृत्य नमस्यद्भिः (३२) आत्मीयमातङ्गमदागमांश्च निवेदयद्भिः डिण्डिमाधिरोहणाय च विज्ञापयद्भिः (३३) प्रमादपतितापराधापहृतद्विरददुःखप्लुतदीर्घश्मश्रुभिः अग्रतो गच्छद्भिः (३४) अभिनवोपसृतैश्च कार्पटिभिर्वारणाप्तिसुखप्रत्याशया धावमानैः गणिकाधिकारिगणैः चिरलब्धान्तरैः उच्छ्रितकरैः (३५) कर्मण्यकरेणुकासंकथनाकुलैः उल्लासितपल्लवचिह्नाभिः अरण्यपालपङ्क्तिभिश्च (३६) निष्पादितनवग्रहनागनिवहनिवे-

---

(३१) लब्धेति। लब्धाः प्राप्ताः अभिमताः इष्टा मत्ता मातङ्गा हस्तिनः तैः मुदितानि हृष्टानि मानसानि येषां तैः। नमस्यद्भिः प्रणिपतद्भिः।

(३२) आत्मीयेति। आत्मीयाः स्वाधिकृता इति यावत् ये मातङ्गाः तेषां मदागमान् मदवारिस्रावसञ्चारान् निवेदयद्भिः विज्ञापयद्भिः डिण्डिमाधिरोहणाय गजोपरि पटहवादित्रविधानाय इत्यर्थः।

(३३) प्रमादेति। प्रमादेन अनवधानतया पतितं पतनं हस्तिपृष्ठादिति भावः भावे क्तप्रत्ययः तदेव अपराधः दोषः तेन हेतुना अपारकोऽयं हस्तिपृष्ठमारोढुमिति धियेति भावः अपहृतः आच्छिद्य नीत इत्यर्थः यो द्विरदः गजः तस्य दुःखेन तदपहरणजनितेन इति भावः प्लुताः दीर्घाः प्रलम्बाः श्मश्रवः यैः तथाभूतैः।

(३४) अभिनवोपसृतैः अभिनवागतैः कर्पटिभिः जीर्णमलिनवसनधारिभिः वारणस्य गजस्य आप्तौ लाभे यत् सुखं तस्य प्रत्याशया धावमानैः प्रद्रवद्भिः गणिकाधिकारिगणैः गणिका गजानां लोभनार्था हस्तिनी यया प्रलोभ्य हस्तिनीध्रियन्ते इति भावः तस्याः अधिकारिगणाः अध्यक्षवर्गाः तैः। चिरलब्धान्तरैः चिरेण लब्धम् अन्तरम् अवकाशः यैः तथोक्तैः उच्छ्रितकरैः उद्धृतहस्तैः।

(३५) कर्मण्येति। कर्मण्या करिग्रहणकुशला या करेणुका हस्तिनी तस्याः सङ्कथने समालपने आकुलाः तैः। उल्लासितेति उल्लासितानि उद्धृतानि पल्लवान्येव चिह्नानि याभिः अरण्यपालपङ्क्तिभिः गजबन्धनार्थं वनरक्षिवर्गैरित्यर्थः।

दनोद्यताभिः उत्तम्भिततुङ्गतोत्त्रवनाभिः (३७) महापात्रपेटकैश्च (३८) प्रकटितकरिकर्मचर्मपुटैः अभिनवगजसाधनसञ्चरणवार्त्तानिवेदनविसर्जितैश्च (३९) नागवनवीथीपालदूतवृन्दैः प्रतिक्षणप्रत्यवेक्षितकरिकवलकूटैः कटभङ्गसंग्रह (४०) ग्रामनगरनिगमेषु निवेदयमानैः कटककदम्बकैः क्रियमाणकोलाहलः (४१) स्वामिप्रसादसम्भृतेन महाधिकाराविष्कारेण स्वाभाविकेन च अवष्टम्भाभोगेन उदासीनो-

---

(३६) निष्पादितेति। निष्पादितः सम्पादितः नवग्रहाणां नवधृतानां नागानां गजानां निवहः समूहः तस्य निवेदने उद्यताभिः प्रवृत्ताभिः।

(३७) उत्तम्भितेति। उत्तम्भितम् उल्लासितं तुङ्गम् उन्नतं तुदति अनेनेति तोत्त्रं हस्तिशासनचर्ममिति भावः वनम् अरण्यजातं दारु इत्यर्थः याभिः तथोक्ताभिः। महापात्रपेटकैः प्रधानहस्तिपकवृन्दैः।

(३८) प्रकटितेति प्रकटितानि करिणां हस्तिनां कर्मणे युद्धादिक्रियायै इत्यर्थः चर्मपुटानि चर्मनिर्मिता हस्त्याकारा यैः तथोक्तैः। अभिनवेति अभिनवं गजानां साधनं वशीकरणं तस्मै सञ्चरणं समुद्योगः तस्य वार्त्तानिवेदनाय विसर्जितैः प्रेषितैः केनचिदिति भावः।

(३९) नागेति। नागानां हस्तिनां वनवीथी वनश्रेणी तस्याः पालाः अध्यक्षाः तेषां दूतवृन्दैः वार्त्तावहनिवहैः। प्रतिक्षणेति प्रतिक्षणं प्रत्यवेक्षितानि परिदृष्टानि करिणां गजानां कवलकूटानि ग्राससमूहाः यैः।

(४०) ग्रामनगरनिगमेषु ग्रामः पल्ली नगरं बहुजनवासभूतं समृद्धं स्थानं निगमः वणिक्पथः तेषु कटभङ्गसंग्रहं प्रत्यग्रगोधूमादिसंग्रहं निवेदयमानैः विज्ञापयद्भिः कटककदम्बकैः कटका हस्तिकर्मनियुक्ताः तेषां कदम्बकानि वृन्दानि तैः। क्रियमाणः कोलाहलः कलरवः यस्य यं प्राप्य एतैः स्वस्वव्यापारसंसिद्धये कोलाहलः कृत इति भावः।

(४१) स्वामीति। स्वामिनः प्रभोः प्रसादः अनुग्रहः तेन सम्भृतः जनितः तेन। महाधिकारस्य गजाध्यक्षतारूपस्य आविष्कारेण प्रकटनेन स्वाभाविकेन स्वतः

ऽप्यादिशन् इव (४२) असंख्यकरिकर्णशङ्खसम्पत्सम्पादनाय समुद्रान् आज्ञापयन् इव (४३) शृङ्गारगैरिकपङ्काङ्गरागसंग्रहाय गिरीन् मुष्णन् इव (४४) दिग्गजाधिकारं ककुभाम् ऐरावतमिव अपहरन् हरैर्हरपदभरनमितकैलासगिरिगुरुभिः पादन्यासैः गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव (४५) गतिवशविलोलस्य च आजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपैः आलानशिलास्तम्भमालामिव उभयतो निखनन् ईषदुत्तुङ्गलम्बेन अधरबिम्बेन अमृतरसस्वादुना नवपल्लवकोमलेन कवलेन इव श्रीकरेणुकां विलोभयन् (४६) निजनृपवंशदीर्घं नासावंशं दधानः अतिस्निग्धमधुरधवलविशाल-

---

सिद्धेन अवष्टम्भाभोगेन गर्वाविशेन उदासीनः मध्यस्थः आदेशदानानधिकारी इत्यर्थः । आदिशन्निव आज्ञापयन्निव अनुजीविन इति भावः ।

(४२) असङ्ख्येति । असङ्ख्यानां बहूनामिति यावत् करिणां गजानां कर्णेषु शङ्खा एव सम्पदः भूषणानीति भावः तासां सम्पादनाय संग्रहाय समुद्रान् सागरान् आज्ञापयन् इव आदिशन् इव ।

(४३) शृङ्गारेति । शृङ्गारः गजभूषणम् एव गैरिकपङ्कः गैरिकद्रवः स एव अङ्गरागः गजानामङ्गरञ्जनार्थं लेपविशेषः तस्य संग्रहाय गिरीन् पर्वतान् मुष्णन् इव अपहरन् इव गैरिकाणीति शेषः ।

(४४) दिग्गजाधिकारं दिग्गजाधिकारित्वम् । ककुभां दिशाम् ऐरावतम् अपहरन्निव मुष्णन् इव । हरैर्वराहरूपिण इति भावः उर्व्याः पृथिव्याः गुरुभारग्रहणगर्वं महाभारोद्वहनाहङ्कारं हरस्य शिवस्य पदभरेण नमितः यः कैलासगिरिः तद्वद् गुरुभिः भारवद्भिः पादन्यासैः पदविक्षेपैः संहरन्निव सङ्कोचयन्निव ।

(४५) गतीति । गतिवशेन विलोलस्य चञ्चलस्य । विक्षेपैः दोलनैः । आलानानि गजबन्धनानि शिलास्तम्भाः तेषां मालामिव श्रेणिमिव उभयतः उभयोः पार्श्वयोः निखनन् आरोपयन् । ईषदुत्तुङ्गलम्बेन अत्युन्नतलम्बिना । कवलेनेन ग्रासेनेव श्रीकरेणुकां लक्ष्मीहस्तिनीम् ।

(४६) निजेति । निजेन स्वीयेन नृपवंशेन राजवंशेन राजवंशभवत्वेनेति

तया पीतक्षीरोदेन इव पिबन् ईक्षणयुग्मायामेन दिशाम् आयामम् (४७) मेरुतटादपि विकटविपुलालिकः सततम् अविच्छिन्नच्छत्रच्छायाप्ररूढ़िवशादिव नितान्तायतनील-कोमलच्छविसुभगेन स्वभावभङ्गुरेण (४८) कुन्तलबाल-वल्लरीवेल्लितविलासिना लुनन्निव लुप्तालोकान् अर्ककरान् वर्वरकेण अरिपक्षपरिचयपरित्यक्तकार्मुककर्मापि (४९) सकलदिगन्तश्रूयमाणगुरुगुणध्वनिः आत्मस्थसमस्तमत्त-मातङ्गसाधनोऽपि अस्पृष्टो मदेन (५०) भूतिमानपि स्नेह-मयः पार्थिवोऽपि गुणमयः करिणामिव (५१) दानवताम्

---

भावः दीर्घम् आयतं नासावंशं नासादण्डम्। अतीति अतिस्निग्धं मधुरं मनोहरं धवलं विशालमायतं तस्य भावः तत्ता तया। पीतक्षीरोदेन क्षीरसागरपायिना ईक्षणयुग्मायामेन नेत्रयुगलविस्तारेण। आयामं दैर्घ्यम्।

(४७) मेरुतटात् सुमेरुतटात् विकटम् अत्यन्तं विपुलं विशालम् अलिकं भालदेशः यस्य तथाभूतः। अविच्छिन्नेति अविच्छिन्ना विच्छेदरहिता या छत्र-च्छाया तस्याः प्ररूढ़िः आतिशय्यं तद्वशादिव। नितान्तम् आयता नीला कोमला या छविः कान्तिः तया सुभगं रम्यं तेन। स्वभावभङ्गुरेण सहजभङ्गिमता।

(४८) कुन्तलेति कुन्तलाः केशा एव बालवल्लर्यः बाललताः तासां वेल्लितेन स्फुरणेन विलसति उद्भासते इति तथोक्तेन। वर्वरकेण केशबन्धनविशेषेन लुप्ता आलोका उद्योता येषां तान् अर्ककरान् सूर्यमयूखान् लुनन्निव खण्डयन्निव। अरीति अरिपक्षाणां शत्रुपक्षाणां परिचयेण परित्यक्तं कार्मुककर्म धनुर्धारणादिकं येन तथाभूतः।

(४९) सकलेति। सकलेषु दिगन्तेषु श्रूयमाणः आकर्ण्यमानः गुरुर्महान् गुणानां मौर्वीणां शौर्यादीनाञ्च ध्वनिर्यस्य तथाभूतः। मदेन मद्यपानजनितेन विकारेण अस्पृष्टः अनाक्रान्तः।

(५०) भूतिमान् सम्पन्नः भस्ममयश्च। पार्थिवः पृथिवीपरमाणुघटितः राजा च गुणमयः शौर्यादिगुणसमन्वितः तन्तुमयश्च।

उपरि स्थितः स्वामितामिव स्पृहणीयां भृत्यताम् अपि अपरिभूताम् उद्वहन् (५२) एकभर्तृभक्तिनिश्चलां कुलाङ्गनामिव अनन्यगम्यां प्रभुप्रसादभूमिम् आरूढो निष्कारणबान्धवो (५३) विदग्धानाम् अभृतभृत्यो भजताम् अक्रीतदासो विदुषां स्कन्दगुप्तो विवेश राजकुलम्। दूरादेव च (५४) उभयकरकमलावलम्बितं स्पृशन् मौलिना महीतलं नमस्कारम् अकरोत्।

उपविष्टं नातिनिकटे तं तदा जगाद देवो हर्षः श्रुतो विस्तर एव अस्य (५५) आर्य्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च। अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षाम्यति अतिस्वल्पम् अपि आर्य्यपरिभवपीड़ापावकः प्रयाणविलम्बम्। इत्येवम् अभिहितश्च प्रणम्य

---

(५१) दानवतां दानशीलानां मदस्राविणाञ्च। भृत्यतां भृत्यभावम्। अपरिभूताम् अनवमताम्।

(५२) एकेति एक एव भर्त्ता प्रभुः तस्मिन् भक्तिः अनुरागः तया निश्चला स्थिरा ताम्। अनन्यगम्याम् अन्यदुर्लभाम्। आरूढः अधिगतः।

(५३) विदग्धानां विदुषां निष्कारणबान्धवः अकृत्रिममित्रम्। भजतां सेवमानानाम् अभृतभृत्यः न भृतानि न धृतानि भृत्यानि भृत्यवेतनानि येन तथोक्तः। अक्रीतदासः न क्रीतः अथच दासः सेवकः।

(५४) उभयेति। उभाभ्यां करकमलाभ्याम् अवलम्बितं धृतम्। महीतलं भूतलम्। मौलिना शिरसा।

(५५) आर्य्यव्यतिकरस्य आर्य्यसम्बन्धस्य इत्यर्थः प्रचारनिर्गतानि प्रचारेण भ्रमणेन भक्षणादिकं कारयितुमिति भावः निर्गतानि निष्क्रान्तानि गजसाधनानि करिसैन्यानि प्रवेश्यन्तां रणभूमौ प्रेष्यन्तामिति भावः। आर्य्यस्य परिभवेण या पीड़ा व्यथा सैव पावकः अग्निः। क्षाम्यति सहते।

व्यज्ञापयत् क्षतम् अवधारयतु स्वामी समादिष्टं किन्तु स्वल्पं विज्ञाप्यमस्ति भर्त्तृभक्तेः । तत् आकर्णयतु देवः । देवेन हि पुष्पभूतिवंशसम्भूतस्य (५६) अजात्यस्य सहजस्य तेजसो दिक्करिकरप्रलम्बस्य बाहुयुगलस्य असाधारणस्य च सोदरस्नेहस्य सर्वं सदृशम् उपक्रान्तम् । काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ति विकारं किमुत भवादृशाः तेजसां राशयः ? केवलं (५७) देवराज्यवर्द्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम् । ईदृशाः खलु लोकस्वभावाः प्रतिग्रामं प्रतिनगरं प्रतिदेशं प्रतिद्वीपं प्रतिदिशं च भिन्ना वेशाश्च आकाराश्च आहाराश्च व्यवहाराश्च जनपदानाम् । तत् इयम् (५८) आत्मदेशाचारोचिता स्वभावसरलहृदयजा त्यज्यतां सर्वविश्वासिता । (५९) प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त्त एव प्रतिदिनं देवः । यथा (६०) नागकुलजन्मनः सारिकाश्रावितमन्त्रस्य आसीत्

---

(५६) अजात्यस्य जातिमतिक्रान्तमजात्यं तस्य क्षत्रियजात्यतिशायिन इति भावः । सदृशमनुरूपम् उपक्रान्तम् आरब्धम् । काकोदराभिधानाः भुजङ्गनामानः कृपणा दुर्बलाः कृमयः कृमिसदृशाः कीटविशेषाः विकारं परपरिभवं न मृष्यन्ति न सहन्ते ।

(५७) देवेति देवस्य राज्यवर्द्धनस्य उदन्तेन वृत्तान्तेन । दुर्जनानां दौरात्म्यं दुर्वृत्तता कियदपि अल्पमात्रमित्यर्थः ।

(५८) आत्मेति । आत्मनः स्वस्य देशाचारस्य उचिता अनुरूपा । सर्वविश्वासिता सर्वेषु जनेषु विश्वासकरणम् ।

(५९) प्रमादेति । प्रमाददोषेण अनवधानतादोषेण अभिषङ्गाः पराभवाः तेषु । श्रुता आकर्णिता बहवः वार्त्ता वृत्तान्ता येन तथाभूतः ।

(६०) नागकुलजन्मनः नागो नाम कश्चिद्राजा तस्य कुले जन्म यस्य तथा-

नाशो नागसेनस्य पद्मावत्याम्। (६१) शुकश्रुतरहस्यस्य च श्रीः अशीर्य्यत श्रुतवर्मणः श्रावस्त्याम्। (६२) स्वप्नायमानस्य च मन्त्रभेदोऽभूत् मृत्यवे मृत्तिकावत्यां स्वर्णचूड़स्य। (६३) चूड़ामणिलग्नलेखप्रतिबिम्बवाचिताक्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य। (६४) लोभबहुलस्य बहुलनिशि निधानम् उत्खनन्तम् उत्खात-

---

विधस्य सारिका पक्षिविशेषः तया तन्मुखेन इति भावः श्रावितः मन्त्रः गुप्तमन्त्रणं यस्य तथाभूतस्य नागसेनस्य तदाख्यस्य नृपस्य पद्मावत्यां तदाख्यायां नगर्य्यामित्यर्थः नाशः निधनम्। पुरा पद्मावत्यां नागसेनो नाम राजा मन्त्रिणम् अहिराज्यहरणदोषेण ताड़यितुं सारिकासमक्षं मन्त्रमकरोत्। स च मन्त्री सारिकामुखात् तद्विज्ञाय विश्वास्य तं हतवानिति कथा अत्र अनुसन्धेया।

(६१) शुकेति। शुकात् पक्षिणः श्रुतं रहस्यं गुप्तमन्त्रणं यस्य तथाभूतस्य श्रुतवर्मणः तदाख्यस्य नृपतेः श्रावस्त्यां नगर्य्यां श्रीः लक्ष्मीः अशीर्य्यत व्यनश्यत्। एतेन आख्यानद्वयेन यत्नात् गूढ़मन्त्रेण भाव्यमित्युक्तम्।

(६२) स्वप्नायमानस्य स्वप्नदशायां मन्त्रं कुर्वतः स्वर्णचूड़स्य तदाख्यस्य राज्ञः मन्त्रभेदः रहस्यप्रकाशः मृत्यवे निधनाय निधनकारणमित्यर्थः अभूत्। पुरा मृत्तिकावत्यां नगर्य्यां स्वर्णचूड़ो नाम राजा कश्चित् विस्रम्भपूर्वकं जिघांसन् स्वप्नदशायां मन्त्रितवान्। तच्च अवगम्य तत्प्रयुक्तेन केनचित् शिरोरक्षकेण भूत्वा असौ निभृतं व्यापादित इति वार्त्ता।

(६३) चूड़ामणीति। चूड़ामणिः शिरोरत्नं तत्र लग्नः संक्रान्तः लेखप्रतिबिम्बः लिपिच्छाया तेन वाचितानि पठितानि इत्यर्थः अक्षराणि यया तथाभूता चारुचामीकरचामरग्राहिणी मनोहरकाञ्चनदण्डचामरहस्तेत्यर्थः. तादृशेन चामरेण वीजयन्तीति भावः यवनेश्वरस्य यमतां मृत्युतां ययौ प्राप। पुरा यवनेश्वरः केनचित् शत्रुणा व्यापादयितुमिष्टः स्वसुहृदा तद्वृत्तान्तं लेखेन बोधितः। तच्च लेखं स्वयं वाचयतः यवनेश्वरस्य चूड़ामणिप्रतिबिम्बितानि अक्षराणि काचित् चामरग्राहिणी मनसा वाचयित्वा शत्रुणोपजप्ता निभृतं स्वामिनं जघान इति वार्त्ता।

(६४) लोभेति। लोभबहुलम् अतिलुब्धं बहुलनिशि कृष्णपक्षरजन्यां निधानं

खड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथवरूथिनी। (६५) नागवनविहारशीलञ्च मायामातङ्गाङ्गात् निर्गता महासेनसैनिका वत्सपतिं न्ययंसिषुः। (६६) अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्द्धानम् असिलतया मृणालमिव अलुनात् अग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः। (६७) प्रियतन्त्रीवाद्यस्य अलावुवीणाभ्यन्तरशुषिरनिहितनिशिततरवारयो गान्धर्वच्छात्रच्छद्मानः चिच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः। (६८) प्रज्ञादुर्वलञ्च

---

भूगर्भस्थितं रत्नम् उत्खनन्तम् उद्धरन्तं माथुरं मथुराधिपं बृहद्रथं विदूरथस्य राज्ञः वरूथिनी सेना उत्खातेन उद्धृतेन खड्गेन असिना प्रमथ्नातीति तथाभूता सती ममन्थ जघान।

(६५) नागेति। नागानां वनं काननं हस्तिबहुलमरण्यमित्यर्थः। तत्र विहारे शीलं यस्य तथाभूतं वत्सपतिं वत्सराजं महासेनस्य ,कस्यचित् राज्ञः सैनिकाः मायामातङ्गाङ्गात् मायया कपटेन रचितः मातङ्गः हस्ती तस्याङ्गं तस्मात् निर्गताः सन्तः न्ययंसिषुः बबन्धुः पुरा महासेनो नाम उज्जयिनीपतिः स्वां दुहितरं वासवदत्ताम् उदयनाय दित्सुः नागवनविहारिणं तं मायामातङ्गशरीरनिर्गतैः स्वसैनिकैः नियम्य स्वगृहमानीय कन्यां ददौ इति वार्त्ता।

(६६) अतीति। अतिदयितम् अतिप्रियं लास्यं नृत्यं यस्य तथोक्तस्य नृत्यप्रियस्य इत्यर्थः। शैलूषमध्यं नटमध्यं शैलूषो नटभिन्नयो इत्यमरः अध्यास्य अधिष्ठाय अलुनात् चिच्छेद। पुरा सुमित्रो नाम राजा नटजने विश्वस्तः मित्रदेवेन नटत्वमाश्रित्य व्यापादित इति कथा।

(६७) प्रियेति। प्रियं तन्त्रीवाद्यं वीणावाद्यं यस्य तथाभूतस्य अश्मकेश्वरस्य अश्मकाख्यजनपदाधिपस्य शरभस्य तदाख्यस्य नृपतेः शिरः रिपुपुरुषाः शत्रुप्रयुक्ताः पुरुषाः। अलाब्विति अलावुरचिता वीणा तस्या अभ्यन्तरशुषिरे अन्तरालगर्त्ते निहितः निशितः तरवारिः असि यैः तथोक्ताः गान्धर्वच्छात्रच्छद्मानः गान्धर्वं सङ्गीतविद्या तस्य छात्राः शिष्याः तेषां छद्म कपटं विद्यते येषां तथाभूताः वयं भवत्सकाशे गान्धर्वं शिक्षितुमागता इति छलनिवेदनेन समुपस्थिता इति भावः चिच्छिदुः निकृत्तवन्तः।

बलदर्शनव्यपदेशदर्शिताशेषसैन्यः सेनानीः अनार्यो मौर्य्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम्। (६९) आश्चर्य्यकुतूहली च चण्डीपतिः दण्डोपनतयवननिर्म्मितेन नभस्तलयायिना यन्त्रयानेन अनीयत क्वापि। (७०) काकवर्णः शैशुनागिश्च नगरोपकण्ठे कण्ठे निचकृते निस्त्रिंशेन। (७१) अतिस्त्रीसङ्गरतम् अनङ्गपरवशं शुङ्गम् अमात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यञ्जनया वीतजीवितम् अकारयत्। (७२) असुरविवरव्यसनिनं चापजङ्कः अपरिमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनगिरिसुरङ्गया स्वविषयं मेकलाधिपमन्त्रिणः। (७३) महा-

---

(६८) प्रज्ञादुर्बलं बुद्धिबलहीनम्। बलेति बलानां सैन्यानां दर्शनमेव व्यपदेशश्छलं तेन दर्शितानि अशेषाणि अतिबहूनि इत्यर्थः सैन्यानि येन तथाभूतः सेनानीः सेनपतिः अनार्य्यः असाधुः मौर्य्यं मौर्य्यवंशभवं पिपेष जघान।

(६९) आश्चर्य्येति। आश्चर्य्ये विस्मयकरव्यापारे कुतूहली कौतुकवान् चण्डीपतिः चण्डीनामनगरी तस्याः पतिः दण्डेन संग्रामेण उपनताः निर्जिता इति यावत् यवनाः तैः निर्म्मितं रचितं तेन। नभस्तलयायिना आकाशगामिना यन्त्रयानेन यन्त्रनिर्म्मितरथेन इत्यर्थः क्वापि अनीयत अदर्शनं गमित इत्यर्थः। पुरा चण्डीपतिः यवनान् विजित्य तैः उपायनीकृतेन छद्मरचितेन यन्त्रयानेन परदारान् गच्छेति प्रलोभ्य स्वदेशं नीत्वा व्यापादित इति वार्त्ता।

(७०) काकवर्णः कश्चिद्राजा शैशुनागिः शिशुनागाख्यजनपदाधिपतिः निचकृते निकृत्तः केनचित् शत्रुणेति शेषः।

(७१) अतीति। शुङ्गं तदाख्यं नृपं देवीव्यञ्जनया महिषीवेशधारिण्येत्यर्थः।

(७२) असुरविवरव्यसनिनम् असुरविवरं पातालं तत्र व्यसनी कुतूहलीत्यर्थः तं मागधं मगधराजम् अपरिमितानां बहूनां रमणीनां मणिनूपुरयोः झणझणेन झणत्कारेण य आह्लादः तेन रम्या मनोज्ञा तया। गोधनगिरिसुरङ्गया गोधनाख्यपर्वतगह्वरेण स्वविषयं स्वजनपदं मेकलाधिपस्य मन्त्रिणः अपजङ्कः अपहृतवन्तः स्वविषयं नीत्वा व्यापादयामासुरिति भावः।

कालमहे च महामांसविक्रयवादवातूलं वेतालः तालजङ्घो जघान जघन्यजं प्रद्योतस्य पौणकिं कुमारं कुमारसेनम्। (७४) रसायनरसाभिनिवेशिनश्च वैद्यव्यञ्जनाः सुबहुपुरुषान्तरप्रकाशितौषधगुणा गणपतेः विदेहराजसुतस्य राजयक्ष्माणम् अजनयन्। (७५) स्त्रीविश्वासिनश्च महादेवीगृहगूढ़भित्तिभाक् भ्राता भद्रसेनस्य अभवन् मृत्यवे कालिङ्गस्य वीरसेनः। (७६) मातृशयनीयतूलिकातलनिषसश्च तनयोऽन्यं तनयम् अभिषेक्तुकामस्य दध्रस्य करूषाधिपतेः अभवन् मृत्यवे। (७७) उत्सारकरुचिश्च रहसि ससचिवमेव दूरी-

---

(७३) महाकालमहे महाकालाख्यशिवमूर्त्तिभेदस्य महः उत्सवः तस्मिन् महामांसस्य विक्रयवादः महामांसमहं विक्रीणामि इति वाद इत्यर्थः। तत्र वातूलः मत्तः तं तालजङ्घो नाम वेतालः जघान हतवान् तदप्राशीदिति भावः जघन्यजं कनिष्ठं प्रद्योतस्य तदाख्यस्य राज्ञः पौणकिं पुणकस्य अपत्यं पुमान् तम्।

(७४) रसायनेति। रसायनरसः विषजनित औषधविशेषः तत्र अभिनिवेशिनः कृतप्रयत्नाः वैद्यव्यञ्जनाः चिकित्सकच्छद्मानः। सुबह्विति सुबहुभिः अतिबहुलैः पुरुषान्तरैः प्रकाशिता औषधगुणाः येषां तथाभूताः। गणपतेः तदाख्यस्य राजयक्ष्माणं क्षयरोगविशेषम्।

(७५) स्त्रीविश्वासिनः स्त्रीषु विश्वासं कुर्वतः कालिङ्गस्य कलिङ्गदेशाधिपस्य भद्रसेनस्य भ्राता वीरसेनः महादेव्याः राजमहिष्याः देवरेण पूर्वमुपजप्ताया इति भावः गृहे गूढं सुगुप्तं यथा तथा भित्तिं भजते इति तथाभूतः सन् मृत्यवे निधनाय अभवत् निधनमकरोदिति भावः।

(७६) मात्रे ति। मातुः शयनीयं शय्या तस्याः तूलिका तूलरचितमुपकरणं गदीतिभाषाप्रसिद्धम्। तस्य तले निषसः स्थितः तनयः पुत्रः दध्रस्य तदाख्यस्य करूषाधिपतेः करूषजनपदाधीशस्य अन्यं तनयम् अभिषेक्तुकामस्य मृत्यवे अभवत् निधनमकरोदित्यर्थः पितृहत्यां चकारेति भावः।

(७७) रहसि विजने ससचिवं मन्त्रिसहितं चकोरनाथं चकोराख्यजनपदाधिपं चन्द्रकेतुम् उत्सारकरुचिम् उत्सारके दूरीकरणे रुचिरभिलाषो यस्य तथा-

चकार चकोरनाथं शूद्रकदूतः चन्द्रकेतुं जीवितात्। (७८) मृगयासक्तस्य च मथ्नतो गण्डकान् उद्दण्डनड्वलनलवननिलीनाश्च चम्पाधिपचमूचरभटाः चामुण्डीपतेः आचेमुः प्राणान् पुष्करस्य। (७९) वन्दिरागपरश्च परप्रयुक्ता जयशब्दमुखरमुखा सङ्घा मौखरिं मूर्खं क्षत्रवर्माणम् उदखनन्। (८०) अरिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्च चन्द्रगुप्तः शकपतिम् अशातयदिति। (८१) प्रमत्तानां प्रमदाकृताः प्रमादाः श्रुतिविषयम् आगता एव देवस्य। यथा (८२) मधुमोदितं मधुरकसंलिप्तैः लाजैः सुप्रभा पुत्र-

---

भूतं शूद्रकं नृपं दूरीकर्त्तुकाममिति भावः शूद्रकदूतः विदिततद्‌वृत्तान्त इति भावः जीवितात् दूरीचकार निजघान इत्यर्थः।

(७८) मृगयासक्तस्य आखेटव्यसनिनः गण्डकान् खड्गिनः मथ्नतः व्यापादयत चामुण्डीपतेः चामुण्डीनाम नगरी तस्याः पतिः तस्य पुष्करस्य। उद्दण्डानि उन्नतनालानि नड्वलानि नड्भूयिष्ठानि नलाख्यतृणवनानि तेषु निलीनाः सुगूढं स्थिताः चम्पाधिपस्य चमूषु सेनासु चरन्तीति तथोक्ताः भटा वीराः प्राणान् आचेमुः भक्षयामासुः जघ्नुरित्यर्थः।

(७९) वन्दीति। वन्दिनः स्तुतिपाठकाः वैतालिका इति यावत् तेषु रागः अनुरागः प्रीतिरिति यावत् तत्परं तदासक्तमित्यर्थः मौखरिं मुखरवंशसम्भूतं मूर्खं निर्बोधं क्षत्रवर्माणं परप्रयुक्ताः शत्रुप्रहिताः जयशब्देन मुखराणि वाचालानि मुखानि येषां तथाभूताः सङ्घाः तदाख्याः क्षत्रियाः उदखनन् निजघ्नुः।

(८०) अरिपुरे शत्रुनगरे परकलत्रकामुकं परस्त्रीसमासक्तं कामिनीवेशेन परकामिनीवेशं गृहीत्वेत्यर्थः गुप्तः छद्मचारी सन् शकपतिं शकनरपतिम् अशातयत् न्यपातयत्।

(८१) प्रमत्तानां प्रमादशालिनां प्रमदाभिः कामिनीभिः कृताः प्रमादा विपदः देवस्य श्रुतिविषयं कर्णपथम् आगताः श्रुता इत्यर्थः।

(८२) मधुमोदितं मधुना मद्येन मोदितम् उल्लसितं मधुरकेण विषविशेषेण

राज्यार्थं महासेनं काशिराजं जघान। (८३) व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरधारापर्य्यन्तेन अयोध्याधिपतिं परन्तपं रत्नवती जारूथम् (८४) विषचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम् (८५) योगपरागविरसवर्षिणा च मणिनूपुरेण वल्लभा सपत्नीरुषा वैरन्त्यं रन्तिदेवम् (८६) वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णिं विदूरथम् (८७) रसदिग्धमध्येन च मेखला-

---

संलिप्तैः दिग्धैः लाजैः भृष्टधान्यैः सुप्रभा नाम महिषी पुत्रराज्यार्थं महासेनं नाम काशिराजं जघान निहतवती। लाजैर्नूपुरैरित्यर्थः तथाच विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजमिति मनुटीकायां कुल्लूकभट्टधृतं वचनम् इति केचित्।

(८३) व्याजेति। व्याजेन छलेन जनितः उत्पादितः कन्दर्पस्य कामस्य दर्पः आवेशातिशय इत्यर्थः यया तथाविधा काममुद्दीपयन्तीति भावः। क्षुरधारा पर्य्यन्ते प्रान्तदेशे यस्य तादृशेन दर्पणेन आदर्शेन अयोध्याधिपतिं परन्तपं शत्रुतापिनं जारूथं तदाख्यं नृपं रत्नवती नाम काचित् कामिनी जघानेति पूर्वेणान्वयः एवमुत्तरत्र।

(८४) विषेति विषचूर्णेन चुम्बितः लिप्तः मकरन्दः मधु यस्य तादृशेन कर्णेन्दीवरेण कर्णस्थितनीलोत्पलेन देवसेनं तदाख्यं सौह्मं सुह्मदेशाधिपम्।

(८५) योगेति। योगपरागः अभिचारार्थं रचितचूर्णविशेषः तेन विरसं विरुद्धं वर्षतीति तथोक्तेन। मणिनूपुरेण वल्लभा प्रिया महिषीत्यर्थः सपत्नीरुषा सपत्नीं प्रति समासक्त इति क्रोधेनेति भावः वैरन्त्यं वैरन्ती नाम नगरी तस्या अधिपः वैरन्त्यः तं रन्तिदेवं नाम नृपम्।

(८६) वेणीनिगूढेन केशपाशनिहितेन विन्दुमती नाम महिषी वृष्णिं वृष्णिवंशप्रसूतं विदूरथं तथाच शस्त्रेण वेणीविनिगूहितेन विदूरथं वै महिषी जघानेति मनुटीकायां कुल्लूकभट्टधृतवचनम्।

(८७) रसदिग्धमध्येन रसोविषं तेन दिग्धं लिप्तं मध्यं यस्य तथाविधेन।

मणिना हंसवती सौवीरं वीरसेनम् (८८) अदृश्यागदलिप्तवदना च विषवारुणीगण्डूषपायनेन पौरवी पौरवेश्वरं सोमकम्। इत्युक्त्वा विरराम (८९) स्वाम्यादेशसम्पादनाय च निर्जगाम।

देवोऽपि हर्षः (९०) सकलराज्यस्थितीश्चकार। ततश्च तथा कृतप्रतिज्ञे (९१) प्रयाणं विजयाय दिशां समादिशति देवे हर्षे गतायुषां प्रतिसामन्तानाम् उदवसितेषु बहुरूपाणि उपलिङ्गानि वितेनिरे। तथाहि (९२) अविप्रकृष्टाः कालदूतदृष्टय इव इतस्ततः चेरुः चटुलाः कृष्णसारश्रेणयः। (९३) प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासङ्घातझङ्कारा जङ्कादिरेऽजिरे। (९४) विवृतविकृतवदनविवर-

---

मेखलामणिनाकाञ्चीरत्नेन हंसवती नाम महिषी सौवीरं तदाख्यजनपदाधिपतिं वीरसेनं तदाख्यं नृपम्।

(८८) अदृश्येति। अदृश्येन गूढेन अगदेन औषधेन आत्मरक्षार्थं विषनाशकेन इति भावः लिप्तं वदनं यस्याः यया वा तथाभूता। विषेति विषवारुणी विषयुक्ता सुरा तस्या गण्डूषं तस्य पायनेन पौरवी नाम महिषी पौरवेश्वरं पुरुवंशीयानामधिपं सोमकं तदाख्यं नृपम्।

(८९) स्वाम्यादेशसम्पादनाय प्रभोराज्ञापालनाय।

(९०) सकलराज्यस्थितीः समस्तराज्यव्यवस्थाः।

(९१) प्रयाणं यात्रां समादिशति आज्ञापयति गतायुषां मारकालानामिति भावः प्रतिसामन्तानां हर्षवर्द्धनस्य शत्रूणाम्। उदवसितेषु गृहेषु उपलिङ्गानि अनिमित्तानि उत्पातचिह्नानीति यावत् वितेनिरे विस्तारं प्रापुः।

(९२) अविप्रकृष्टाः सन्निहिताः कालस्य यमस्य दूताः तेषां दृष्टय इव नेत्राणि इव। चेरुः भ्रमन्ति स्म चटुलाश्चपलाः कृष्णसारश्रेणयः कृष्णमृगनिवहाः।

(९३) प्रचलितायाः प्रस्थितायाः लक्ष्म्याः नूपुरयोः प्रणादप्रतिमाः निस्वनसदृशाः मधुसरघाणां मधुमक्षिकाणां सङ्घातस्य समूहस्य झङ्काराः शब्दविशेषाः अजिरे अङ्गने जङ्कादिरे व्यजृम्भन्त।

विसृतवह्निविसरा वासरेऽपि विरसं विरेसुः चिरम् अशिवार्थम् अशिवाः शिवाः। (९५) शवपिशितप्ररूढ़प्रणया इव कपिपीतकपोलकपिलपक्षतयः कानककपोताः पेतुः। (९६) आमन्त्रयमाणा इव दधुः अकालकुसुमानि समम् उपवनतरवः। (९७) तरलकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सभाशालभञ्जिकाः। ददृशुः (९८) आसन्नकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिव आत्मानं कबन्धम् आदर्शोदरेषु योधाः। (९९) चूड़ामणिषु चक्रशङ्खकमललक्ष्माणः प्रादुर-

---

(९४) विवृतेति। विवृतानां प्रकटितानां विस्तृतानां विकटानां वदनानां विवरेभ्यः अन्तरेभ्यः विसृतः निर्गतः वह्निविसरः अग्निप्रसरः यासां तथाभूताः तथाविधेभ्यः वदनेभ्यः अग्निमुद्गिरन्त्य इति यावत्। वासरे दिवसे। विरसं कटु विरेसुः शब्दायन्तेस्म अशिवार्थम् अमङ्गलार्थम्। अशिवाः अमङ्गलसूचिन्यः शिवाः शृगालाः।

(९५) शवेति। शवानां मृतदेहानां पिशितेषु मांसेषु प्ररूढ़ः प्रवृद्धः प्रणयः स्पृहा येषां तथाभूता इव शवपिशिताकाङ्क्षिण इति यावत्। कपीति कपिपोतानां वानरशावकानां कपोला इव कपिलाः पिङ्गलाः पक्षतयः पक्षा येषां तथाविधाः कानककपोताः अरण्यपारावताः श्येना इति यावत् पेतुः पतन्तिस्म।

(९६) आमन्त्रयमाणा इव शेषालापं कुर्वन्त इव दधुः धारयन्तिस्म जनयन्तिस्मेति भावः। समं युगपत्।

(९७) तरलेति तरलेन चञ्चलेन करतलेन यः प्रहारः तेन प्रहतौ ताड़ितौ पयोधरौ स्तनौ यासां तथाविधाः सभाशालभञ्जिका सभापुत्तलिकाः प्रसभं सहसा रुरुदुः रुदन्तिस्म।

(९८) आसन्नेति आसन्नात् सन्निहितात् अचिरभाविन इत्यर्थः कचग्रहात् केशाकर्षणात् भयेन उद्भ्रान्तं विघूर्णितम् उत्तमाङ्गं शिरो यस्य तथाभूतम् अतएव आत्मानं स्वदेहम् आदर्शोदरेषु मुकुराभ्यन्तरेषु कबन्धम् अशिरस्कम्। योधाः सैनिकाः।

भवन् पादन्यासा राजमहिषीणाम्। (१००) चेटीचामराणि अकस्मात् अधावन्त पाणिपल्लवात्। प्रणयकलहेऽपि दत्तपृष्ठाः चिरम् अभवन् भटाः पराङ्मुखा मानिनीनाम्। (१) करिकपोलेषु व्यघटन्त मधुलिहां मधुमदिरापानगोष्ठ्यः। (२) समाघ्रातयममहिषगन्धा इव ताम्यन्तः स्तम्बकरिम् अपि हरयो हरितं नवयवसं न चेरुः। (३) चलवलयावलीवाचालबालिकातालिकातोद्यलालिता अपि न ननृतुः मन्दा मन्दिरमयूराः। निशि निशि (४) रजनिकरहरिणनिहितनयन इव उन्मुखः तारम् उपतीरणम्

---

(९९) चूडामणिषु मुकुटेषु। चक्रीति चक्रादीनां लक्ष्माणि चिह्नानि येषु तथाभूताः पादन्यासाः चरणनिक्षेपाः विजेतुश्चक्रवर्त्तिन इति भावः। प्रादुरभवन् समपतन्।

(१००) चेटीनां दासीनां चामराणि पाणिपल्लवात् करकिसलयात् अधावन्त अच्यवन्त। दत्तपृष्ठाः दत्तं पृष्ठं यैः तथाभूताः। चिरं विमुखा अभवन् इति भावः।

(१) करिणां हस्तिनां कपोलेषु गण्डेषु मधुलिहां भ्रमराणां मधु पुष्परस एव मदिरा तस्याः पानगोष्ठ्यः पानसभाः व्यघटन्त विश्लेषेण घटितवन्तः।

(२) समाघ्रातेति। समाघ्रातः यममहिषस्य गन्धो यैः तथाभूता इव ताम्यन्तः क्लिश्यन्तः स्तम्बकरिं कदम्बस्तम्बं राशीकृतमिति यावत् हरितं श्यामलं नवयवसं नूतनं घासं हरयः वाजिनः न चेरुः न भक्षयामासुः।

(३) चलेति। चलाभिः तरलाभिः वलयावलीभिः वलयश्रेणीभिः वाचाला मुखरा या बालिकाः कन्याः तासां तालिका करतलध्वनिरेव आतोद्यं वाद्यभेदः तेन लालिता अपि उत्तेजिता अपि मन्दा विमनसः।

(४) रजनीति रजनिकरस्य चन्द्रस्य यो हरिणः मृगः तस्मिन् निहिते निक्षिप्ते नयने येन तथाभूत इव उन्मुख ऊर्द्ध्वमुखः तारम् उच्चैः। उपतीरणं बहिर्द्वार-

अकारणम् अकाणीत् कौलेयकगणः। (५) गणयन्तीव गतायुषः तर्जनतरलया तर्जन्या दिवसम् आट वाटकेषु कोटवी। (६) कुट्टिमेषु कुटिलहरिणखुरवेणीतरङ्गिण्यः अश्मराजयो-ऽजायन्त। (७) जनितवेणीबन्धानि निरञ्जनरोचनारोचींषि चषकमधुनि मुखकमलप्रतिबिम्बानि अदृश्यन्त भटीनाम्। (८) समासन्नात्मापहारचकिता इव चकम्पिरे भूमयः। (९) बध्यालङ्काररक्तचन्दनरसच्छटा इव अलक्ष्यन्त शूराणां पतिताः शरीरेषु विकसितबन्धूककुसुमशोणितशोचिषः

---

समीपे अकारणम् अहेतुकम् अकाणीत् चीत्चकार। कौलेयकगणः कुक्कुरगणः।

(५) गणयन्तीव संख्यान्तीव गतायुषः गतजीवितान् के के गतायुषो जाता इति गणनां कुर्वती वेत्यर्थः। तर्जनतरलया तर्जनं निर्भर्त्सनं तत्र तरला चञ्चला तया तर्जन्या अङ्गुष्ठानन्तरवर्त्तिन्या अङ्गुल्या। आट बभ्राम वाटकेषु पथिषु कोटवी नग्ना स्त्री।

(६) कुट्टिमेषु गृहाभ्यन्तरतलेषु। कुटिलेति कुटिलाभिः हरिणानां खुरवेणीभिः खुरपरम्पराभिः तरङ्गिण्यः तरङ्गवत्यः सञ्जाततरङ्गा इव प्रतीयमाना इति भावः अश्मराजयः अभिनवदृषच्छ्रेणयः।

(७) जनितेति। जनितः वेणीबन्धः केशसंयमनं येषां तानि। सधवभर्तृकाणां वेणीबन्धनियमस्य शास्त्रीयत्वादिति भावः। निरञ्जना कज्जलवर्जिता रोचनावत् रोचिषः प्रभा येषां तथाभूतानि। चषकमधुनि पानपात्रवर्त्तिनि मधुनि। भटीनां सैनिकनारीणाम्।

(८) समासन्नेति। समासन्नः सन्निकृष्टः आत्मनः स्वस्य अपहारः अपहरणं परकृतग्रहणमिति भावः तेन चकिता इव शङ्किता इव भूमयः चकम्पिरे भूकम्पो-ऽभूदिति भावः।

(९) बध्येति। बध्यानां बधार्थं नीयमानानां जनानाम् अलङ्काराः भूषणानि रक्तचन्दनरसच्छटा रक्तचन्दनद्रवानुलेपा इव शूराणां भटानाम्। विकसितेति

शोणितवृष्टयः । (१०) पर्य्यग्नीकुर्वाणा इव विनश्वरीं श्रियम् (११) अविरलस्फुरत्स्फुलिङ्गाङ्गारोद्गारदग्धतारागणा गणशः पतन्तः प्रज्वलन्तो न व्यरंसिषुः उल्कादण्डाः । प्रथममेव (१२) प्रतीहारीव अपहरन्ती प्रतिभवनं चामरातपत्रव्यजनानि परुषा बभ्राम वात्येति ।

इति श्रीवाणभट्टकृते हर्षचरिते प्रयाणं नाम षष्ठ उच्छ्वासः ।

---

विकसितानि प्रस्फुटानि बन्धूककुसुमानीव शोणिता रक्ताः शोचिषः अर्चिषः यासां तथाविधाः शोणितवृष्टयः रक्तवृष्टयः ।

(१०) पर्य्यग्नीति । विनश्वरीं विनाशिनीं श्रियं लक्ष्मीं पर्य्यग्नीकुर्वाणा इव अपरिगताग्निं परिगताग्निं कुर्वाणा इव विनष्टम् अग्निना दह्येदिति 'आस्तादिति भावः ।

(११) अविरलेति । अविरलं सान्द्रं यथा तथा स्फुरन्तः स्फुलिङ्गाः अग्निकणा येषां तथाभूता ये अङ्गाराः ज्वलदुल्मुकाः तेषाम् उद्गारेण निःसारणेन दग्धा तारागणा नक्षत्रवृन्दानि यैः तथाविधाः गणशः सङ्घशः बहुश इत्यर्थः उल्कादण्डाः दण्डाकारा अग्निरेखाः न व्यरंसिषुः न विरताः अविरलमाविरभवन् इत्यर्थः ।

(१२) प्रतीहारी इव दौवारिकी इव अपहरन्ती अपसारयन्ती परुषा कर्कशा वात्या वायुसङ्घातः ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता हर्षचरितस्य षष्ठोच्छ्वासव्याख्या समाप्ता ।

## सप्तमः उच्छ्वासः।

अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम्।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य॥ १॥
धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्य्यम्।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु?॥ २॥

(३) अथ व्यतीतेषु च केषुचित् दिवसेषु मौहूर्त्तिकमण्डलेन शतशः सुगणिते सुप्रशस्तेऽहनि दत्ते चतसृणामपि दिशां विजययोग्ये (४) दण्डयात्रालग्ने, सलिलमोक्षविशारदैः

---

अङ्गनेति। कृतप्रतिज्ञस्य प्रतिज्ञामारूढस्य वीरस्य वसुधा पृथ्वी अङ्गनवेदी अजिरवर्त्तिनी परिष्कृता भूमिः जलधिः समुद्रः कुल्या अल्पा कृत्रिमा सरित् कुल्याल्पा कृत्रिमा सरिदित्यमरः। पातालं स्थली अकृत्रिमा अचुर्णेति भावः भूमिः सुमेरुः स्वर्गराज्यमिति भावः वल्मीकः कीटविशेषरचितमृत्तिकास्तूप इत्यर्थः। शूरा हि निजशौर्य्यप्रभावेण त्रिभुवनं करतलस्थितं कुर्वन्तीति भावः॥ १॥

धृतेति। बाहुशालिनि भुजवीर्य्यवति इत्यर्थः जने इति शेषः धृतधनुषि धनुष्पाणौ सति शैलाः पर्वताः न नमन्ति न तं प्रणमन्तीति यत् तत् आश्चर्य्यं पर्वता अपि धनुर्वलेन विदारिता भवन्तीति भावः रिपुसंज्ञकेषु शत्रुनामधारिषु वराकेषु दीनेषु काकेषु कैव गणना? अन्ये शत्रवस्तस्य बाहुशालिनः सकाशे न गण्यन्ते इति भावः। एतेन हर्षस्य भावि त्रिभुवनविजयित्वं सूच्यते॥ २॥

(३) अथेति। भवनान्निर्जगामेति सम्बन्धः। क्रमेण विशिनष्टि व्यतीतेषु अतिक्रान्तेषु मौहूर्त्तिमण्डलेन ज्योतिर्विद्गणेन शतशः पुनः पुनरित्यर्थः सुगणिते सुनिरूपिते।

(४) दण्डयात्रालग्ने दण्डश्चतुरङ्गं बलं तस्य यात्रा तस्या लग्नं शुभक्षणः तस्मिन् दत्ते निर्दिष्टे। सलिलेति सलिलस्य जलस्य मोक्षे निःसारणे विशारदाः पटवः

शारदैरिव अम्भोधरै: कालधौतै: शातकुम्भैश्च कुम्भै: स्नात्वा विरचय्य परमया भक्त्या भगवतो (५) नीललोहितस्य अर्चाम् उदर्चिषं हुत्वा प्रदक्षिणावर्त्तशिखाकलापम् आशुशुक्षणिं दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रश: तिलपात्राणि (६) कनकपत्रलतालङ्कृतशफशृङ्गशिखरा गाश्च अर्बुदश: समुपविश्य विततव्याघ्रचर्मणि भद्रासने विलिप्य प्रथमविलिप्तायुधो (७) निजयशोधवलेन आचरणत: चन्दनेन शरीरं परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुकूले (८) परमेश्वरचिह्नभूतां शशिकलाम् इव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि नीत्वा कर्णा-

---

अन्यत्र सलिलानां मोचेण वर्षासु वर्षणेन विशारदा: शुभा: तै: शारदै: शरत्कालीनैरिव अम्भोधरै: जलधरै: मेघैश्च कालधौतै: राजतै: कलधौतं रौप्यहेम्नो: इत्यमर:। अन्यत्र कालेन वर्षापगमेन धौता: निर्दृष्टा: श्वेता वा तै: शातकुम्भै: काञ्चनै:। विरचय्य विधाय।

(५) नीललोहितस्य हरस्य। उदर्चिषम् उद्गतशिखं प्रदक्षिणम् आवर्त्तते इति तथोक्त: शिखाकलाप: ज्वालासमूह: यस्य तथाभूतम् आशुशुक्षणिम् अग्निम्। हुत्वा हवि:प्रक्षेपेण अर्चयित्वा द्विजेभ्य: ब्राह्मणेभ्य:। राजतानि रौप्यमयाणि जातरूपमयानि स्वर्णमयानि तिलपात्राणि तिलपूर्णानि भाजनानि।

(६) कनकेति। कनकपत्रलताभि: सुवर्णपत्रभङ्गिभि: अलङ्कृता: शफा: खुरा: शृङ्गशिखराणि च यासां तथाभूता: गा: अर्बुदश: दशकोटिश:। विततेति विततं विस्तृतं व्याघ्रचर्म यस्मिन् तथोक्ते भद्रासने सिंहासने। प्रथमेति प्रथमं विलिप्तम् अनुरञ्जितम् आयुधं धनुरस्त्रञ्च येन तथाभूत:।

(७) निजयशोधवलेन निजं स्वं यश इव धवलं श्वेतं तेन। आचरणत: चरणपर्यन्तं शरीरं चन्दनेन विलिप्य। राजहंसमिथुनं लक्ष्म चिह्नं यस्य तथाभूते सदृशे अनुरूपे दुकूले वसने परिधाय।

(८) परमेश्वरचिह्नभूतां सार्वभौमलक्षणां कल्पयित्वा कृत्वा सितकुसुममुण्ड-

भरणमरकतमयूखमिव कर्णगोचरतां गोरोचनाच्छुरितम् अभिनवं दूर्वापल्लवं विन्यस्य सह (९) शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे (१०) परिपूजितप्रहृष्टपुरोहितकरप्रकीर्य्यमाणशान्तिसलिलशीकरनिकराभ्युक्षितशिराः संप्रेष्य (११) महार्हाणि वाहनानि बहलरत्नालोकलिप्तककुम्भि च भूषणानि (१२) भूभुजां संविभज्य (१३) क्लिष्टकार्पटिककुलपुत्रलोकमोचितैः प्रसाददानैश्च विमुच्य बन्धनानि नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव च अष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भम् अहमहमिकया

---

मालिकां श्वेतपुष्पहारविशेषं कर्णाभरणमरकतमयूखमिव कर्णभूषणहरिन्मणिकिरणमिव गोरोचनाच्छुरितं गोरोचनया माङ्गल्यद्रव्यविशेषेण छुरितं प्रलिप्तं दूर्वापल्लवं कर्णगोचरतां नीत्वा कर्णेन धृत्वा इत्यर्थः।

(९) शासनवलयेन मुद्राकटकेन। गमनमङ्गलप्रतिसरं यात्रिकमङ्गलसूत्रम्। प्रकोष्ठे करनिमणिबन्धयोः अन्तरे।

(१०) परिपूजितेति। परिपूजितेन समर्चितेन अतएव प्रहृष्टेन प्रीतेन पुरोहितेन करेण हस्तेन प्रकीर्य्यमाणानां शान्तिसलिलानां शान्त्युदकानां शीकरनिकरैः कणसमूहैः अभ्युक्षितं सिक्तं शिरो यस्य तथाभूतः।

(११) महार्हाणि महामूल्यानि वाहनानि हस्त्यादीनि। बहलेति बहलानां प्रभूतानां रत्नानां मणीनाम् आलोकेन प्रभया लिप्ताः रञ्जिताः ककुभः दिशः येषां तानि भूषणानि अलङ्कारान्।

(१२) भूभुजां राज्ञां स्वाधीनानामिति भावः संविभज्य सम्यग् विभागेन दत्त्वा इत्यर्थः।

(१३) क्लिष्टेति। क्लिष्टकार्पटिकाः जीर्णमलिनवसनाः ये कुलपुत्रलोकाः सत्कुलजातजनाः ते मोचिताः यैः तथाभूतैः प्रसाददानैः अनुग्रहवितरणैः। बन्धनानि मङ्गलसूत्रादिनेति शेषः विमुच्य श्लथाय तत्कालस्मरणस्फुरणेन तात्कालिकवृत्तान्तस्य भ्रातृपरिभवरूपस्य स्मरणेन कथितः निवेदितः आत्मा स्वरूपं यस्य तथाभूतमिव निवेदितप्रतिहिंसाभिप्रायमिव इति भावः। अहमहमिकया

सेवकै: इव सुनिमित्तै: अपि समग्रै: अग्रतो भवद्भि: (१४) प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात् कृतयुगकरणाय भवनात् निर्जगाम।

(१५) नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये समुत्तम्भिततुङ्गतोरणे वेदीविनिहितपल्लवललामहेमकलशे (१६) बद्धवनमालादाम्नि धवलध्वजमालिनि भ्रमच्छुक्लवाससि पठद्द्विजन्मनि मन्दिरे प्रस्थानम् अकरोत्। तत्रस्थस्य च अस्य (१७) ग्रामाक्षपटलिक: सकलकरणिपरिकर: करोतु देवो दिवसग्रहणम् अद्यैव (१८) अवन्ध्य-

---

अहमग्रे अहमग्रे इत्येवं स्पर्द्धया सुनिमित्तै: शुभसूचकै: लक्षणै: अग्रतो भवद्भि: पुरतो गच्छद्भि:।

(१४) प्रमुदितेति। प्रमुदिताभि: प्रहृष्टाभि: प्रजाभि: जन्यमान: क्रियमाण: जयशब्दकोलाहल: जय जयेति कलरव: यस्य तथाभूत: हिरण्यगर्भ इव ब्रह्मा इव ब्रह्माण्डात् ब्रह्माण्डिम्बात् कृतयुगकरणाय सत्ययुगस्थापनाय कृतस्य शत्रुजनितस्य भ्रातृद्रोहस्य युगकरणाय प्रतीकाराय इत्यर्थश्च।

(१५) उपसरस्वति सरस्वत्या नद्या: समीपे। तृणमये तृणरचिते समुत्तम्भित: समुत्थापित: तुङ्ग उन्नत: तोरणो बहिर्द्वारं यस्य तथाभूते। वेदीति वेद्यां विनिहित: स्थापित: पल्लव एव ललामं चिह्नं यस्य तथाभूत: हेमकलस: स्वर्णकुम्भ: यस्मिन् तथोक्ते।

(१६) बद्धेति। बद्धं विरचितं वनमालादाम वनपुष्पमालाप्रसर: यस्मिन् तथोक्ते। धवलध्वजानां माला अस्ति अस्मिन्निति तथाभूते। भ्रमदिति भ्रमन्ति घूर्णमानानि वायुवेगादिति भाव: शुक्लानि वासांसि यस्मिन् तथोक्ते। पठन्त: वेदान् धर्मशास्त्राणि वेति भाव: द्विजन्मानो ब्राह्मणा यस्मिन् तथोक्ते। प्रस्थानं स्थितिम्।

(१७) ग्रामाक्षपटलिक: अक्षाणां भूतानां पटले समूहे नियुक्त: अक्षपटलिक: ग्रामस्य अक्षपटलिक: ग्रामाक्षपटलिक: ग्रामवासी लेखाख्यसाधक इति भाव:। सकलकरणिपरिकर: सर्वप्रकारलेख्यरचना निपुण इति यावत्।

शासन: शासनानाम् इति अभिधाय (१९) वृषाङ्काम् अभिनवघटितां हाटकमयों मुद्राम् उपनिन्ये जग्राह च तां राजा। समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रष्य करकमलात् अधोमुखी महीतले पपात मुद्रा। (२०) मन्दाश्यानपङ्कपटले मृदुमृदि सरस्वतीतीरे स्फुटं व्यराजन्त राजयो वर्णानाम्। अमङ्गलाशङ्किनि च विषीदति परिजने नरपति: अकरोत् मनसि एतत् (२१) अतत्त्वदर्शिन्यो हि भवन्ति अविदग्धानां धिय:। तथाहि (२२) एकशासनमुद्राङ्का भूर्भवतो भविष्यतीति निवेदितमपि निमित्तेन अन्यथा गृह्णन्ति ग्राम्या:। इति अभिनन्द्य मनसा महानिमित्तं तत् (२३) सीरसहस्रसम्मितसीम्नां ग्रामाणां

---

(१८) अवन्ध्यशासन: अप्रतिहताज्ञ: शासनानां दिवसग्रहणं सामयिकसंख्याग्रहणम् अद्यारभ्य एतावतो दिवसान् भवता प्रजाशासिना भवितव्यमिति एवं निश्चयमिति भाव:।

(१९) वृषाङ्कां धर्मचिह्नाम् अभिनवघटितां नवरचितां हाटकमयीं काञ्चनमयीं मुद्रां वर्णावलिखचितकाञ्चनपदकविशेषम् उपनिन्ये अर्पयामास। अधोमुखी अवनतपूर्वभागा इत्यर्थ:।

(२०) मन्देति। मन्दाश्यानमीषच्छुष्कं पङ्कपटलं कर्दमचय: यस्मिन् तथोक्ते अतएव मृद्वी कोमला मृत् मृत्तिका यस्मिन् तथाभूते सरस्वतीतीरे। स्फुटं स्पष्टम्। वर्णानां मुद्राक्षराणाम्।

(२१) अतत्त्वदर्शिन्य: अयाथार्थ्यदर्शिन्य: अदीर्घदर्शिन्य इति भाव:। अविदग्धानाम् अज्ञानाम्।

(२२) एकेति। एका एव शासनमुद्रा अङ्कश्चिह्नं यस्या: तथाभूता एकच्छत्रा इति भाव: निमित्तेन शकुनेन। ग्राम्या: अविदग्धा इत्यर्थ:।

(२३) सीरेति। सीराणां हलानां सहस्रेण सम्मिता: सीमानो येषां तथा-

शतमदात् द्विजेभ्यः निनाय च तत्र तं दिवसम्। प्रतिपन्नायां शर्वर्य्यां सम्मानितसर्वराजलोकः सुष्वाप।

(२४) अथ गलति तृतीये यामे सुप्तसमस्तसत्त्वनिःशब्दे दिक्कुञ्जरबृंहणगम्भीरध्वनिः अताड्यत प्रयाणपटहः। अग्रतः स्थित्वा च मुहूर्त्तमिव पुनः (२५) प्रयाणक्रोशसंख्यापकाः स्पष्टम् अष्टौ अदीयन्त प्रहाराः पटहे पटीयांसः।

(२६) ततो रटत्पटहे नन्दन्नान्दीके गुञ्जत्कुञ्जे कूजत्काहले शब्दायमानशङ्खे (२७) क्रमोपचीयमानकटककलकले परिजनोत्थापनव्यापृतव्यवहारिणि (२८) द्रुतद्रुवन-

---

भूतानां सहस्राधिकहवनावाद्यमानपर्य्यन्तानामिति यावत्। प्रतिपन्नायाम् उपस्थितायाम्।

(२४) गलति अतिक्रामति। सुप्तेति सुप्तैः निद्रितैः समस्तैः सत्त्वैः निःशब्दे नीरवे। दिक्कुञ्जरेति दिक्कुञ्जराणां दिग्गजानां बृंहणवत् बृंहितमिव इत्यर्थः गम्भीरः ध्वनिः निनादः यस्य तथाभूतः प्रयाणपटहः प्रयाणवाद्यभेद इत्यर्थः।

(२५) प्रयाणेति। प्रयाणस्य क्रोशाः तेषां सङ्ख्यापकाः अद्य अष्टौ क्रोशा गन्तव्या इत्येवं सङ्ख्यासंस्थापकाः। पटीयांसः अतिपटवः। प्रहाराः ताड़नानि।

(२६) तत इत्यादि प्रयाणसमये राजभिः राजद्वारमापुपूरे इत्यन्वयः। प्रयाणसमये इति विशिनष्टि रटत्पटहे इत्यादि। रटन्तः ध्वनन्तः पटहा यस्मिन् तथोक्ते। नन्दन्नान्दीके नन्दन्त्यः राजलोकान् उत्साहयन्त्य इति यावत् नान्द्यः माङ्गल्यवाद्यभेदाः यस्मिन् तथोक्ते। गुञ्जत्कुञ्जे गुञ्जन्तः ध्वनन्तः कुञ्जाः शङ्खभेदा यस्मिन् तथोक्ते। कूजत्काहले कूजन्तः स्वनन्तः काहला वाद्यभेदा यस्मिन् तादृशे।

(२७) क्रमेति। क्रमेण उपचीयमानः वृद्धिं गच्छन् कटकानां कलकलः कोलाहलः यस्मिन् तथोक्ते। परिजनेति परिजनानां पार्श्वचराणां निद्रितानाम् इति भावः उत्थापने प्रबोधने व्यापृताः प्रवृत्ताः व्यवहारिणः कर्मचारिणः यत्र तथाभूते।

घातघट्यमानकोणिकाकीलकोलाहलकलितककुभि (२९) बलाधिकृतबध्यमानपाटीपतिपिटके जनज्वलितोल्कासहस्रालोकलुप्यमानत्रियामातमसि (३०) यामचेटीचरणचलनोत्थाप्यमानकामिमिथुने (३१) कटुककटुकनिर्देशनश्यन्निद्रोन्मिषन्निषादिनि (३२) प्रबुद्धहास्तिकशून्यीक्रियमाणशय्यागृहे (३३) सुप्तोत्थिताश्वीयविधूयमानसटे (३४) रटत्कटकमुखरखनित्रखन्यमानक्षौणीपाशे (३५) समुत्कील्यमान-

---

(२८) द्रुतेति। द्रुतं सत्वरं द्रुघनस्य मुद्गरस्य इति प्रसिद्धस्य घातेन ताड़नेन घट्यमाना आहन्यमाना या कोणिका ताड़नयष्टिविशेषः तस्याः कीलस्य अग्रभागस्य कोलाहलेन निनादेन कलिताः पूरिताः ककुभः दिशो यत्र तथोक्ते।

(२९) बलेति। बलाधिकृतैः सैन्याधिकारिभिः बध्यमानं ताड्यमानं पाटीपतिपिटकं प्रतिनियतरक्षकवर्गः प्रमादीति भावः यत्र तथोक्ते। जनेति जनैः परिजनैरिति यावत् ज्वलितानां प्रज्वालितानाम् उल्कासहस्राणाम् उल्कासहस्राणाम् आलोकेन लुप्यमानं विनाश्यमानं त्रियामातमः रात्रितिमिरं यस्मिन् तथोक्ते।

(३०) यामेति। यामचेटीनां प्रहरिकदासीनां चरणचलनेन पदक्षेपनिनादेन इति यावत् उत्थाप्यमानं प्रबोध्यमानं कामिमिथुनं कामियुगलं यस्मिन् तथोक्ते।

(३१) कटुकेति। कटुकानां हस्तिपकयोक्तॄणाम् कटुकेन रूक्षेण निर्देशेन आज्ञया नश्यन्ती या निद्रा तया उन्मिषन्तः विकसन्नयना इत्यर्थः निषादिनः अश्ववारा यस्मिन् तथोक्ते।

(३२) प्रबुद्धेति। प्रबुद्धैः जागरितैः हास्तिकैः हस्तिसमूहैः शून्यीक्रियमाणं शय्यागृहं यस्मिन् तथोक्ते।

(३३) सुप्तेति। सुप्तोत्थितैः अश्वीयैः अश्वसमूहैः विधूयमाना कम्प्यमाना सटा जटा यस्मिन् तथोक्ते।

(३४) रटदिति। रटद्भिः शब्दायमानैः कटकैः वलैः मुखरेण अस्पष्टं नदता खनित्रेण खननसाधनेन अस्त्रविशेषेण खन्यमानाः क्षौणीपाशाः भूबन्धनानि पटमण्डपरचनायां कृतानीति भावः यत्र तथोक्ते।

कीलशिञ्जानशिञ्जीरे (३६) उपनीयमाननिगडतालकलरवोत्तालतुरङ्गतरङ्ग्यमाणखुरपुटे (३७) लेशिकमुच्यमानमदस्यन्दिदन्तिसन्दान-शृङ्खलाखनखन-निनादनिर्भरभरितदशदिशि (३८) घासपूलकप्रहारप्रमृष्टपांशुलकरिपृष्ठप्रसार्य्यमाणप्रस्फोटितचर्मणि (३९) गृहचिन्तकचेटकसंवेश्यमानपटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके (४०) कीलकलापापूर्य्यमाणचिर्पिटचर्मपुटे (४१) संभाण्डीयमानभाण्डा-

---

(३५) समुत्कील्यमानेति। समुत्कील्यमानेन समुत्खन्यमानेन कीलेन शङ्कुना शिञ्जानं स्वनत् शिञ्जीरं लौहशृङ्खलं यस्मिन् तथोक्ते।

(३६) उपनीयमानेति। उपनीयमानस्य परिधीयमानस्य निगडतालस्य बन्धनार्थं तालपत्रविशेषस्य कलरवेण उत्तालम् उत्कटं यथा तथा तुरङ्गैः अश्वैः तरङ्ग्यमाणाः कुटिलीक्रियमाणाः खुरपुटाः यस्मिन् तथोक्ते।

(३७) लेशिकेति। लेशिकैः घासिकैः घासदायिभिः हस्तिभ्य इति भावः। मुच्यमानाः मदस्यन्दिनां मदस्राविणां दन्तिनां गजानां सन्दानशृङ्खलाः बन्धनशृङ्खलाः तासां खनखननिनादेन निर्भरम् अत्यन्तं यथा तथा भरिताः पूरिता दश दिशः यस्मिन् तथोक्ते।

(३८) घासेति। घासपूलकस्य घासस्तवकस्य प्रहारेण प्रमृष्टं परिष्कृतं पांशुलं रजस्वलं करिपृष्ठं हस्तिपृष्ठं तत्र प्रसार्य्यमाणम् आस्तरणार्थं विस्तार्य्यमाणं प्रस्फोटितं प्रमृष्टं चर्म यस्मिन् तथोक्ते।

(३९) गृहेति। गृहाणां चिन्तकाः कार्य्यदर्शिन इत्यर्थः ये चेटकाः भृत्याः तैः संवेश्यमानाः पटकुट्यः स्कन्धावारसरणिभेदाः काण्डपटानि काण्डपटनिर्मितानि गृहाणि परिवस्त्रा जवनिकाः वितानका उल्लोचाः चन्द्रातपभेदाः यत्र तथोक्ते।

(४०) कीलेति। कीलानां शङ्कूनां कलापैः समूहैः आपूर्य्यमाणाः ध्रियमाणाः चिर्पिटा ह्रस्वाः क्षुद्रा इति यावत्। चर्मपुटाः चर्मनिर्मितभाजनविशेषाः यस्मिन् तथोक्ते।

(४१) सम्भाण्डेति। सम्भाण्डीयमानानि संगृह्यमाणानि भाण्डागाराणि द्रव्य-

गारिणि भाण्डागारवहनवाह्यमानबहुबलीवाहिके (४२) निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलसपीड़ापीड़सङ्कटायमानसामन्तौकसि (४३) दूरगतदक्षदासेरकक्षिप्रप्रक्षिप्यमाणोपकरणसम्भारभ्रियमाणदुष्टदन्तिनि (४४) तिर्यगानमज्जाघनिककरकक्ष्याकृष्टलम्बमान-परतन्त्र-तुन्दिलचुन्दीजनजनितजनहासे (४५) पीड्यमानशारशारिवरत्रागुणग्राहित-

---

गृहाणि यस्मिन् तथोक्ते । भाण्डेति भाण्डागारस्य वहनाय वाह्यमानाः नीयमानाः बहवः बलीवाहिकाः बलीवर्दाः यस्मिन् तथोक्ते । नालीवाहिके इति पाठे नालीवाहिकाः करिणां घासग्रहणनियुक्ता हस्तिपकविशेषाः ।

(४२) निषादीति निषादिभिः आरोहिभिः निश्चलेषु तिष्ठत्सु अनेकेषु बहुषु अनेकपेषु हस्तिषु तत्पृष्ठेषु इति भावः आरोप्यमाणानां निधीयमानानां कोशकलसानां धनपूर्णकुम्भानां पीड़ापीड़ेन सङ्कीर्णतया स्थापनेन इति भावः सङ्कटायमानानि सङ्कीर्णानि इति यावत् सामन्तानां राज्ञाम् अध्यासिनामिति भावः ओकांसि स्थानानि यत्र तथोक्ते ।

(४३) दूरेति । दूरगतैः दक्षैः भारवहनक्षमैः इति यावत् यद्वा दूरगते दूरगमने दक्षाः शक्तास्तैः दासेरकैः उष्ट्रैः क्षिप्रं सहसेति यावत् प्रक्षिप्यमाणाः भूमौ पात्यमानाः ये उपकरणसम्भारा परिच्छदसमूहाः तैः भ्रियमाणा पूरितपृष्ठा इति यावत् दुष्टा लोकानां वहने दोषकारिण इत्यर्थः दन्तिनः गजा यस्मिन् तथोक्ते ।

(४४) तिर्य्यगिति । तिर्य्यक् कुटिलं यथातथा आनमन् आनतीभवन् येन कोऽपि न पश्यतीति भावः जाघनिकः जघनस्पर्शी कामुक इति भावः तेन करेण हस्तेन कक्ष्येण कष्टेन आकृष्टा आलिङ्गितेति भावः लम्बमाना अपसरन्तीति भावः अथच परतन्त्रा पराधीना अपसर्तुमक्षमेति यावत् तुन्दिला स्थूलाङ्गी या चुन्दी कुट्टनी तया जनितः उत्पादितः जनानां हासः यस्मिन् तथोक्ते तथाभूतां कुट्टनीं दृष्ट्वा हसज्जने इत्यर्थः ।

(४५) पीड्यमानेति । पीड्यमाना जीर्णतादिदोषेण छिद्यमानेत्यर्थः शारा चित्रिता या शारिर्मञ्जरी हस्तिपर्य्याणमिति यावत् तस्या वरत्रागुणैः कक्षरज्जुभिः -

गात्रविहारहंहन्बहुहहदुन्मदकरिणि (४६) करिघटाघट-
मानघण्टाटाङ्कारक्रियमाणकर्णज्वरे पृष्ठप्रतिष्ठाप्यमानकण्ठा-
लककदर्थितकूजत्करभे (४७) अभिजातराजपुत्रप्रेष्यमाण-
कुप्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने (४८) गमनवेला-
विप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके (४९) प्रसाद-
वित्तपत्तिनीयमाननरपतिवल्लभवरवाजिनि (५०) चारुचार-
भटसैन्यन्यस्यमाननासीरमण्डलाडम्बरस्थूलस्थासके (५१)

---

आहितानि संयमितानि गात्राणि अङ्गानि तेषां विहारेण कर्म्मन हंहन्तः नदन्तः बहवः हहतः महान्तः उन्मदाः मदमत्ताः करिणः हस्तिनः यत्र तथोक्ते ।

(४६) करीति । करिणां घटासु श्रेणिषु घटमानानां संसजन्तीनां घण्टानां टाङ्कारेण टंटमिति निनादेन क्रियमाणः जन्यमानः कर्णज्वरः यस्मिन् तथोक्ते । पृष्ठेति पृष्ठेषु प्रतिष्ठाप्यमानेन आरोप्यमाणेन कण्ठालकेन उष्ट्रेण उष्ट्रभावकेन इति यावत् अल्पार्थे कप्रत्ययः । कदर्थिताः क्लेशिताः अतएव कूजन्तः उष्ट्रभारासहिष्णुतया इति भावः क्वणन्तः अतिभारेणेति भावः करभाः करिशावका यस्मिन् तथोक्ते ।

(४७) अभिजातेति । अभिजातैः कुलीनैः राजपुत्रैः प्रेष्यमाणानि चाल्यमानानि कुप्रयुक्तेन असदृशसञ्चालनेन आकुलानां त्रस्तानां कुलीनानां सत्कुलजानां कुलपुत्रकलत्राणां कुलीनकुलाङ्गनानां वाहनानि यानानि यस्मिन् तथोक्ते ।

(४८) गमनेति । गमनवेलायां विप्रलब्धाः प्रतारिताः अविदितगमनवेला इत्यर्थः अतएव वारणानां हस्तिनाम् आधोरणाः हस्तिपालाः तैः अन्विष्यमाणाः नवसेवकाः नूतनभृत्या यस्मिन् तथोक्ते ।

(४९) प्रसादेति । प्रसादेन राजानुग्रहेण वित्ताः ख्याताः ये पत्तयः पदातिसैन्यानि तैः नीयमानः नरपतेः राज्ञः वल्लभः प्रियः वरः श्रेष्ठः वाजी अश्वः यस्मिन् तथोक्ते ।

(५०) चार्विति । चारुर्मनोज्ञश्चारो गतिर्येषां तथाभूतानि भटसैन्यानि योधबलानि तैः न्यस्यमानानि निधीयमानानि नासीरमण्डलाडम्बरस्य सेनाग्रगामिसैन्यनिवहस्य स्थासकानि अलङ्करणानि यस्मिन् तथोक्ते ।

स्थानपालपर्य्याणलम्बमानलवणकलापीकिङ्किणीनालीसनाथसङ्कलिततलसारिके (५२) कुण्डलीकृतावरच्छिणीजालजटिलवल्लभपालाश्वघटानिवेश्यमानशाखामृगे (५३) परिवर्द्धकाकृष्यमाणार्द्धजग्धप्राभातिकयोग्याशनप्रारोहके (५४) व्याक्रोशीजृम्भमाणघासिकघोषे (५५) गमनसम्भ्रमभ्रमदुत्तुण्डतरुणतुरङ्गमतन्यमानैकमन्दुराविमर्दे (५६) सज्जीकृतकरेणुकारोहाह्वानसत्वरसुन्दरीदीयमानमुखालेपने (५७) चलितमातङ्गतुरङ्गप्रधावितप्राकृतप्रातिवेश्यकलोकलुण्ठ्यमाननिर्घा-

---

(५१) स्थानेति स्थानपालानाम् अश्वपालानां पर्य्याणेषु लम्बमाना लवणकलापी लवणकलावीति केचित् सा च मृगाकृतिर्दारुमयी क्रियत इति किङ्किणी-क्षुद्रघटिका नाली वेणुवीयष्टिः ताभिः सनाथं सहितं यथातथा सङ्कलिता तलसारिका मुखपट्टिका यत्र तथोक्ते ।

(५२) कुण्डलीति । कुण्डलीकृतैः जड़ितैरित्यर्थः अवरच्छिणीजालैः बन्धनरज्जुभिरित्यर्थः जटिलः संयमितः वल्लभपालैः अश्वपालकैः अश्वघटासु तुरङ्गवृन्देषु तत्पृष्ठेष्विति भावः निवेश्यमानः आरोप्यमाणः शाखामृगः वानरः यत्र तथोक्ते ।

(५३) परिवर्द्धकेति । परिवर्द्धकेन अश्वपालेन आकृष्यमाणः आकार्ष्यमाण इत्यर्थः अर्द्धजग्धं अर्द्धभक्षितं प्राभातिकं प्रभातकालिकं योग्यम् अशनं भोजनीयं द्रव्यं येन तादृशः प्रारोहकः अश्वारोहिभिर्न्यामित्यर्थः यस्मिन् तथोक्ते ।

(५४) व्याक्रोशीति । व्याक्रोशीषु परस्पराह्वानेषु जृम्भमाणा वर्द्धमाना घासिकानां घासदायिनां घोषाः निनादा यस्मिन् तथोक्ते ।

(५५) गमनेति गमनेषु यात्रासु यः सम्भ्रमः त्वरा तेन भ्रमन्तः उत्तुण्डा उन्नमितमुखाः तरुणाः युवानः ये तुरङ्गमा अश्वाः तैः तन्यमानः क्रियमाणः अनेकानां बहूनां मन्दुराणां वाजिशालानां विमर्दः विध्वंसः यत्र तथोक्ते ।

(५६) सज्जीकृतेति । सज्जीकृतासु अलङ्कृतासु करेणुकासु आरोहाय आरोहणार्थमित्यर्थः आह्वाने सत्वरा त्वरावती या सुन्दरी कामिनी हस्तिपकस्य इति भावः तया दीयमानं मुखालेपनं सिन्दूरादिना मुखानुलेपः यस्मिन् तथोक्ते ।

(५७) चलितेति । चलितेषु प्रस्थितेषु मातङ्गेषु हस्तिषु तुरङ्गेषु अश्वेषु च -

समस्तसस्यचये सञ्चरच्चेलचक्राक्रान्तचक्रीवति (५८) चक्र-चीत्कारिगन्त्रीगणगृह्यमाणप्रहतवर्त्मनि (५९) अकाण्ड-दीयमानभाण्डभरितानडुहि (६०) निकटघासलाभलुभ्य-ल्लम्बमानप्रथमप्रसार्य्यमाणसारसौरभेये (६१) प्रमुखप्रवर्त्त्य-मानमहासामन्तमहानसे पुरःप्रधावद्ध्वजवाहिनि (६२) प्रिय-प्रतोपलभ्यमानसङ्कटकुटीरकान्तरालनिस्सरणे (६३) करि-चरण-दलित-मठिकोत्थित-लोकलोष्टाहन्यमाना-धोरण-क्रिय-माणासन्नसाक्षिणि (६४) संघट्टविघट्टमानव्याधकुटीपलाय-

---

प्रधावितैः सत्वरमापतितैः प्राकृतैः साधारणैः प्रातिवेश्यकलोकैः प्रतिवेशिजनगणैः लुण्ठ्यमानाः क्रियमाणाः निर्वासभ्यस्तसञ्चयाः मुक्तशेषशस्यराशयः यत्र तादृशे । सञ्चरदिति सञ्चरन्तः चेलचक्रेण वस्त्रसमूहेन आक्रान्ताः आपूरितपृष्ठा इत्यर्थः चक्रीवन्तः गर्दभा यत्र तथोक्ते ।

(५८) चक्रेति । चक्रैः चीत्कारिणः ये गन्त्रीगणाः शकटवृन्दानि तैः गृह्य-माणानि आक्रम्यमाणानि प्रहतानि क्षुण्णानि वर्त्मानि यत्र तथोक्ते ।

(५९) अकाण्डेति अकाण्डे सहसा दीयमानेन आरोप्यमाणेन भाण्डेन द्रव्य-सञ्चयेन भरितः पूरितपृष्ठ इति यावत् अनड्वान् वृषः यस्मिन् तथोक्ते ।

(६०) निकटेति । निकटे घासस्य लाभेन लुभ्यन्तः लोलुपतां गच्छन्तः लम्ब-मानाः प्रलम्बदेहाः प्रथमं प्रसार्य्यमाणाः प्रस्थाप्यमानाः सारसौरभेयाः बलवद-बलिवर्दा यस्मिन् तथोक्ते ।

(६१) प्रमुखे अग्रतः प्रवर्त्त्यमानं प्रस्थाप्यमानं महासामन्तानां महतां नृप-तीनां महानसं रन्धनशाला यस्मिन् तथोक्ते । पुर इति पुरः अग्रतः प्रधावन्तः ध्वजवाहिनः पताकावाहिनः यत्र तथोक्ते ।

(६२) प्रियप्रतेति । प्रियप्रतैः प्रियवाक्यप्रतैः उपलभ्यमानं प्राप्यमाणं सङ्कटात् सङ्कीर्णात् कुटीरकाणां क्षुद्रगृहाणाम् अन्तरालात् निःसरणं निर्गमनं यस्मिन् तथोक्ते ।

(६३) करीति । करिणां हस्तिनां चरणैः दलितायाः मर्दितायाः मठिकायाः क्षुद्रगृहात् उत्थितैर्लोकैः लोष्टेन आहन्यमानैः ताड्यमानैः आधोरणैः हस्तिपकैः क्रियमाणाः आसन्ना लोका इति भावः साक्षिणो यत्र तथोक्ते ।

मानक्षुद्रकुटुम्बके (६५) कलकलोपद्रवद्रवद्द्रविणबलीवर्दविद्राणवणिजि (६६) पुरःसरदीपिकालोकविरलायमानलोकोत्पीड़सुखप्रस्थितान्तःपुरकरिणीकदम्बके (६७) हयारोहाह्वयमानलम्बितशुनि (६८) सरभसचरणनिपतननिश्चलगमनसुखायमानखक्खटस्तूयमानतुङ्गतुङ्गणगुणे (६९) स्रस्तवेसरविसंवादिसीदद्दाक्षिणात्यसादिनि (७०) रजोजध्वस्तगति प्रयाणसमये प्रतिदिशमागच्छद्भिर्गजवधूसमारूढैः आधोरणी-

---

(६४) सङ्घट्टेति सङ्घट्टेन सङ्घर्षणेन विघट्टमाना विनश्यन्ती या व्याधकुटी तृणनिर्मितकुटीभेदः तस्याः पलायमानं क्षुद्रकुटुम्बकं स्वल्पपरिजनः यस्मिन् तथोक्ते ।

(६५) कलकलेति । कलकलोपद्रवेण द्रवन्ति पतन्ति द्रविणानि धनानि द्रव्याणि इति यावत् येभ्यः तथाविधा ये बलीवर्दाः वृषाः तैः विद्राणाः पलायमानाः खिन्ना वा वणिजः व्यवसायिनः यस्मिन् तथोक्ते ।

(६६) पुर इति । पुरःसरैः अग्रगैः दीपिकानाम् आलोकैः विरलायमानेन स्वल्पीभवता अपसरतेति भावः लोकोत्पीड़ेन जनसम्मर्देन सुखप्रस्थितानि अनायासप्रचलितानि अन्तःपुराणाम् अन्तःपुरवासिनीनां नारीणामिति यावत् । करिणीकदम्बकानि हस्तिनीवृन्दानि यस्मिन् तथोक्ते ।

(६७) हयेति । हयारोहाय अश्वारोहणाय आह्वयमानाः लम्बिताः पश्चात् स्थिताः श्वानः कुकुरा यस्मिन् तथोक्ते ।

(६८) सरभसेति । सरभसेन सवेगेन चरणनिपतनेन पादक्षेपणेन निश्चलगमनेन च धीरगमनेन इति भावः सुखायमानाः खक्खटा वृद्धाः तैः स्तूयमानं तुङ्गानाम् उन्नतानां तुङ्गणानां तङ्गणेति पाठान्तरम् अश्वानां तदाख्यदेशजाश्वानां वा गुणः यस्मिन् तथोक्ते ।

(६९) स्रस्तेति । स्रस्तान् भ्रष्टान् पश्चात् पतितानिति भावः वेसरान् अश्वतरान् विसंवदन्ति परिशीलयन्ति अनुशोचन्तीति भावः तथोक्ताः अतएव सीदन्तः अवसादं गच्छन्तः दाक्षिणात्याः दक्षिणापथजाताः सादिनोऽश्ववारा यस्मिन् तथोक्ते ।

(७०) रज इति । रजोभिः धूलिभिः ध्वस्तानि आपूरितानीति यावत्

र्ध्रियमाणहेमपत्रभङ्गशारशार्ङ्गैः (७१) अन्तरासनासीनान्तरङ्गगृहीतासिभिः ताम्बूलिकविधूयमानचामरपल्लवैः (७२) पश्चिमासनिकार्पितभस्त्राभरणभिन्दिपालपूलिकैः (७३) पत्रलताकुटिलकलधौतनलकपल्लवितपर्य्याणैः (७४) पर्य्याणपञ्चकपरिक्षेपपट्टिकाबन्धनिश्चलपट्टोपधानस्थिरावधानैः (७५) प्रचलपाद-फलिकास्फालनस्फायमान-पटबन्ध-मणिशिलाशब्दैः (७६) उच्चित्रनेत्रसुकुमारस्वस्थापनस्थगितजङ्घाकाण्डैश्च

---

जगन्ति यस्मिन् तथोक्तं। प्रतिदिशमागच्छद्भिः इत्यादीनि [ ५५० पृष्ठायां द्रष्टव्यम्। ] राजभिः इत्यस्य विशेषणानि। गजवधूसमारूढैः करिणीसमारूढैः। आधोरणैः हस्तिपालैः ऊर्द्ध्वं ध्रियमाणानि हेमपत्रभङ्गेन काञ्चनपत्ररचनया शाराणि चित्राणि शार्ङ्गाणि धनूंषि येषां तैः।

(७१) अन्तरेति। अन्तरासनेषु मध्यवर्त्तिषु आसनेषु आसीनैः उपविष्टैः अन्तरङ्गैः स्वजनैः गृहीता असयः तलवाराः येषां तैः। ताम्बूलिकेति ताम्बूलिकैः ताम्बूलदायिभिः परिजनैः विधूयमानाः सञ्चाल्यमानाः चामरपल्लवाः येषां तैः।

(७२) पश्चिमेति। पश्चिमासनिकायां पश्चाद्वर्त्तिनि आसने अर्पितानि स्थापितानि भस्त्राभरणानि तूणाः भिन्दिपालाः अस्त्रविशेषाः तेषां पूलिकानि समूहा येषां तैः।

(७३) पत्रेति। पत्रलतया पत्रावलिरचनया कुटिलानि भङ्गिमन्ति कलधौतनलकेन काञ्चननिर्मितनलाकारेण पल्लवितानि रञ्जितानि इति भावः पर्य्याणानि पल्ययनानि येषां तैः।

(७४) पर्य्याणेति। पर्य्याणस्य पञ्चकः प्रान्तः पार्श्वं वा तस्य परिक्षेपपट्टिका वेष्टनपट्टी तस्या बन्धेन निश्चलं यत् पट्टोपधानं पट्टवसननिर्मितम् उपधानं बालिश इति भाषा तस्मिन् स्थिरं निश्चलम् अवधानम् अभिनिवेशः येषां तैः।

(७५) प्रचलेति। प्रचला या पादफलिका उभयोः पार्श्वयोः पर्य्याणे या क्रियते इति भावः तस्या आस्फालनेन चालनेन स्फायमानः प्रवर्द्धमानः पटबन्धमणिशिलायाः पादकटकरत्नस्य शब्दः येषां तैः।

(७६) उच्चित्रेति। उच्चित्रेण उत्कीर्णचित्रेण नेत्रेण पट्टवस्त्रविशेषेण सुकुमारं

(७७) कार्दमिकपटकल्माषितपिशङ्गपिङ्गैः अलिनीलमसृण-प्रान्तसमुत्पादितसितसमायोगपरभागैश्च (७८) अवदातदेहविराजमानराजावर्त्तमेचकैः कञ्चुकैश्च (७९) उपचितचीनचोलकैश्च तारमुक्तास्तवकित-स्तवरकवारवाणैश्च नानाकषायकर्बुरकूर्पासकैश्च (८०) शुकपिच्छच्छायाच्छादनकैश्च (८१) व्यायामोल्लुप्तपार्श्वप्रदेशप्रविष्टचारुशस्त्रैश्च (८२) गतिवशवेल्लित-हारलता-लग्नलोलकुण्डलोन्मोचनप्रधावितपरिजनैः (८३) चामीकरपत्राङ्कुरकर्णपूरकविवर्त्तमानवाचालबालपाशैश्च

---

सुकोमलं यत् स्वस्थापनं स्वरचणस्थानमित्यर्थः तस्मिन् स्थगिताः निहिता जङ्घाकाण्डा जङ्घादण्डा यैः तथोक्तैः।

(७७) कार्दमिकेति। कर्दमेन रक्तः कार्दमिकः यः पटः वसनभेदः तेन कल्माषिताः रञ्जिताः पिशङ्गाः कपिलाः पिङ्गा जङ्घा येषां तैः। अलीति अलिनील: भ्रमरनीलः मसृणः कोमलः यः प्रान्तः तेन समुत्पादितः सितस्य शुभ्रस्य समायोगस्य परभागः वर्णोत्कर्षः येषां तैः।

(७८) अवदातेति। अवदातेषु गौरेषु अवदातः सितो गौर इत्यमरः देहेषु विराजानाः शोभमाना राजावर्त्तवत् कृष्णपाषाणवत् मेचकाः श्यामलाः तैः। कञ्चुकैः वर्मभिः।

(७९) उपचितेति। उपचितं शोभितम् अपचितमिति पाठान्तरं चीनं सूक्ष्ममिति यावत् चोलकं वसनं येषां तैः।

(८०) शुकेति। शुकस्य पक्षिभेदस्य पिच्छं तस्य छाया कान्तिरिव कान्तिः येषां तादृशानि आच्छादनानि उत्तरीयाणि येषां तैः।

(८१) व्यायामेति। व्यायामेन अङ्गचालनाविशेषेण उल्लुप्तेषु प्रसृष्टेषु पार्श्वप्रदेशेषु प्रविष्टानि स्थितानि इत्यर्थः चारूणि शस्त्राणि येषां तैः।

(८२) गतीति। गतिवशेन द्रुतगत्येति यावत् वेल्लितायां दोलितायां हारलतायां लग्नं संसजत् यत् लोलं तरलं कुण्डलं तस्य उन्मोचनाय निष्कासनाय प्रधावितः परिजनो येषां तैः।

(८३) चामीकरेति। चामीकरः सौवर्ण इत्यर्थः पत्राङ्कुरः पत्रप्ररोहः यस्य

( ८४ ) उष्णीषपट्टावष्टब्धकर्णोत्पलनालैश्च ( ८५ ) कुङ्कुमराग-कोमलोत्तरीयान्तरितोत्तमाङ्गैश्च ( ८६ ) चूड़ामणिखण्डख-चितक्षौमचोलैश्च ( ८७ ) मायूरपत्रायमाणशेखरोड्डीयमान-षट्पदपटलैश्च ( ८८ ) मार्गागतशारिकशारिवाह्वेगदण्डैः ( ८९ ) पुरश्चलच्चामरकिर्मीरकार्दरङ्गचर्ममण्डलमण्डनोड्डीय-मानचटुलडामरचारभटभरितभुवनान्तरैः ( ९० ) आस्कन्द-त्काम्बोजवाजिशतशिञ्जानजातरूपायानरवमुखरितदिङ्मुखैश्च

---

तथाभूतः यः कर्णपूरः कर्णभूषणं तत्र विघट्टमानः सङ्घर्षमाणः बालपाशः अपरकर्णाभरणविशेषः येषां तैः ।

(८४) उष्णीषेति । उष्णीषपट्टेन अवष्टब्धानि आक्रान्तानि कर्णोत्पलनालानि येषां तैः ।

(८५) कुङ्कुमेति । कुङ्कुमरागेण कोमलैः मृदुलैः उत्तरीयैः उत्तरासङ्गैः अन्तरितं वेष्टितं उत्तमाङ्गं शिरः येषां तैः ।

(८६) चूड़ामणीति । चूड़ामणीनां शिरोरत्नानां खण्डेन शकलेन खचितं रञ्जितं चौमचोलं चौमवसनं येषां तैः ।

(८७) मायूरेति । मयूरस्य इदं मायूरं मायूरं पत्रं पिच्छमित्यर्थः तदिव आचरत् शेखरं शिरोभूषणम् तस्मिन् उड्डीयमानानां षट्पदानां भ्रमराणां पटलं समूहः येषां तैः ।

(८८) मार्गागतेति । मार्गागताः मार्गप्राप्ताः शारिकशारिवाह्वेगानां हय-भेदानां दण्डा यैः तथोक्तैः ।

(८९) पुर इति । पुरः अग्रतः चलद्भिः चामरैः किर्मीराणि शबलानि कार्द-रङ्गाणि कार्दरङ्गदेशोद्भवानि चर्ममण्डनानि एव मण्डनानि भूषणानि तैः सह उड्डीयमानानि चटुलानि तरलानि डामराणि विशालानि चारभटानि तदाख्य-देशीयसैनिकानि तैः भरितम् आपूरितं भुवनान्तरं यैः तथोक्तैः ।

(९०) आस्कन्ददिति । आस्कन्दताम् आस्फालयतां वल्गतामित्यर्थः काम्बोज-वाजिनां काम्बोजदेशीयाश्वानां शतानि तेषु शिञ्जानानि रणन्ति जातरूपाणि सौवर्णानि आयानानि अश्वभूषणविशेषाः तेषां रवेण झणत्कारेण मुखरितं ध्वनितं दिङ्मुखं येषां यैः वा तैः ।

(८१) निर्दयप्रहतलम्बापटहशतपटुरववधिरीकृतश्रवणविवरैः (८२) उद्घोष्यमाणनामभिः उन्मुखपादातप्रतिपाल्यमानाज्ञापातैः राजभिः आपुपूरे राजद्वारम् ।

उदिते च भगवति दिनकृति राज्ञः (८३) समायोगग्रहणसमयशंसी सस्वान संज्ञाशङ्खो मुहुर्मुहुः । (८४) अथ नचिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव (८५) गमनविलोलकर्णतालदोलाविलासैः कुर्वाणया करेणुकया उह्यमानो (८६) वैदूर्य्यदण्डविकटेन उपरि (८७) प्रत्युप्तपद्मरागखण्डखचिततया सूर्य्योदयदर्शनकोपादिव लोहि-

---

(८१) निर्दयेति । निर्दयं दृढं यथा तथा प्रहतानां ताड़ितानां लम्बापटहानां पटहाख्यवादित्रभेदानां शतानि तेषां पटुरवैः विकटशब्दैः वधिरीकृत पूरितमिति यावत् श्रवणविवरं येषां यैः वा तैः ।

(८२) उद्घोष्यमाणेति । उद्घोष्यमाणं कीर्त्यमानं नाम यैः येषां वा तैः । उन्मुखेति उन्मुखैरुर्द्ध्वमुखैः पादातैः पदातिसैन्यैः प्रतिपाल्यमानः प्रतीक्ष्यमाणः आज्ञापातः येषां तैः ।

(८३) समायोगेति । समायोगः संविधानं सन्नाह इति भावः तस्य ग्रहणं तस्य समयः तं शंसति सूचयतीति तथोक्तः । सस्वान दध्वान संज्ञाशङ्खः सङ्केतशङ्खः ।

(८४) अथेति । दिग्विजयाय निर्जगाम नरपतिरिति सम्बन्धः । प्रथमप्रयाण एव प्रथमयात्रायामेव । दिग्गजसमागममिव ऐरावतसङ्गमिव ।

(८५) गमनेति गमनेन विलोलाः चञ्चला ये कर्णतालाः तेषां दोलाविलासैः कम्पनविभ्रमैः । करेणुकया हस्तिन्या ।

(८६) वैदूर्य्येति वैदूर्य्यः विदूरपर्वतजो मणिः स एव दण्डः तेन विकटम् उज्ज्वलं तेन ।

(८७) प्रत्युप्तेति प्रत्युप्तैः खचितैः पद्मरागाणां खण्डैः शकलैः खचितं रञ्जितं तस्य भावः तत्ता तया । लोहितायतया लौहित्येन ध्रियमाणेन स्रग्यमाणेन ।

तायतया ध्रियमाणेन मङ्गलातपत्रेण (९८) कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनाम् अधिपतिः अङ्गलग्नेन कञ्चुकेन अमृतमथनदिवस इव (९९) क्षीरोदफेनपटलधवलाम्बरवाही बाल एव पारिजातपादप इव आखण्डलभूमिम् आरूढ़ो (१००) विधूयमानचामरमरुद्विधूतकर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरणचूर्णेन इव दिशः कुरयन् (१) अभिमुखचूड़ामणिघटमानपाटलप्रतिविम्बम् उदयमानं सवितारमपि पिबन् इव तेजसा (२) बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव दीपान्तराणि ओष्ठमुद्रया अनुरागस्य (३) स्फुरन्महाहारमरीचि-

---

(९८) कदलीति । कदली रम्भातरुः तस्या गर्भः उदरं तस्मादभ्यधिकः म्रदिमा मार्दवं यस्य तेन नवनेत्रनिर्मितेन नवपट्टवस्त्रविशेषकल्पितेन । भोगिनामधिपतिः अनन्तनागः । अङ्गलग्नेन देहसंसक्तेन कञ्चुकेन वर्मणा निर्मोकेण च ।

(९९) क्षीरोदेति । क्षीरोदस्य क्षीरसागरस्य फेनपटलं फेनपुञ्जः तद्वत् धवलं शुभ्रम् अम्बरं वस्त्रं वहति परिधत्ते इति तथोक्तः । आखण्डलभूमिं स्वर्गम् इन्द्रसद्मनेपथ्यञ्च । आरूढ़ः अधिष्ठितः ।

(१००) विधूयमानेति विधूयमानयोश्चाल्यमानयोश्चामरयोः मरुता वायुना विधूतायाः कम्पितायाः कर्णपूरकुसुममञ्जर्य्याः कर्णभूषणीकृतपुष्पवल्लर्य्याः रजः परागः तेन सकलानां भुवनानां वशीकरणाय चूर्णं तेनेव । कुरयन् व्याप्नुवन् ।

(१) अभिमुखेति । अभिमुखे सम्मुखवर्त्तिनि इत्यर्थः चूड़ामणौ शिरोरत्ने घटमानं प्रतिफलत् पाटलं श्वेतरक्तं प्रतिविम्बं यस्य तथाभूतम् ।

(२) बहलेति बहलेन प्रभूतेन ताम्बूलसिन्दूरेण ताम्बूलरागेण छुरिता व्याप्ता तया ओष्ठमुद्रया ओष्ठविभागेन । विलभमान इव विलोभयन् इत्यर्थः ।

(३) स्फुरदिति । स्फुरन् विकसन् यो महाहारः तस्य मरीचीनां मयूखानां चक्रवालानि वृन्दानि ।

चक्रवालानि चामराणि इव दिग्गोऽपि ग्राहयन् (४) राजकेक्षणोत्क्षिप्तत्रिभागया त्रीन् अपि लोकान् करदानाय आज्ञापयन् इव सविभ्रमं भ्रूलतया द्राघीयसा बाहुप्राकारेण परिक्षिपन् इव रिरक्षया सप्तापि सागरमहाखातान् अखिलमिव क्षीरोदमाधुर्य्यम् आदाय उन्नतया लक्ष्म्या समुपगूढो गाढम् अमृतमय इव पीयमानः (५) कुतूहलोत्तानकटकलोकलोचनसहस्रैः स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेण मज्जन्निव लिम्पन्निव सौभाग्यद्रवेण द्रष्टॄणाम् अमरपतिरिव (६) अग्रजवधकलङ्कप्रक्षालनाकुलः पृथुरिव पृथिवीपरिशोधनावधानसङ्कलितसकलमहीभृत्समुत्सारणः पुरःसरैः आलोककारकैः सहस्रसंख्यैः अर्क इव किरणैः (७) अधिकारचातुर्य-

(४) राजकेति । राजकानां राजन्यानाम् ईक्षणे दर्शने उत्क्षिप्तः उन्नमितः त्रिभागः तृतीयो भागः क्वचित् सङ्ख्याशब्दानां पूरणार्थमपि दृश्यते यस्याः तथाभूतया । द्राघीयसा अतिदीर्घेण बाहुप्राकारेण भुजप्राचीरेण परिक्षिपन्निव परिवेष्टयन्निव । सागरमहाखातान् सागरा एव महान्तः खाताः तान् । उन्नतया उत्थितया समुपगूढः समालिङ्गितः । पीयमानः सादरं दृश्यमान इति भावः ।

(५) कुतूहलेति । कुतूहलेन आश्चर्य्यमिदमिति कौतुकेन उत्तानानाम् उत्क्षिप्तानां कटकलोचनानां सैनिकनयनानां सहस्राणि तैः । अमरपतिरिव इन्द्र इव ।

(६) अग्रजेति अग्रजस्य ज्येष्ठस्य वध एव कलङ्कः अभिभव इति भावः तस्य प्रक्षालनाय आकुलः उत्सुकः । पृथुरिव वेनतनय इव । पृथिवीति पृथिव्याः परिशोधनं संस्करणं तस्मिन् अवधानेन मनोनिवेशेन सङ्कलिताः कृता व्यवस्थापिताश्च सकलानां महीभृतां राज्ञां पर्वतानाञ्च समुत्सारणा इतस्ततः समाह्वानं सञ्चालनञ्च येन तथोक्तः । आलोककारकैः दीपकरैः उद्योतकारैः ।

(७) अधिकारेति अधिकारस्य नियोगस्य चातुर्य्येण नैपुण्येन चञ्चला सत्वरा इत्यर्थः चरणाः पदनिक्षेपा इति यावत् येषाम् तैः । व्यवस्थेति व्यवस्था लोक-

चञ्चलचरणै: व्यवस्थास्थापननिष्ठुरै: (८) भयपलायमानलोकोत्पीडान्तरिता दशापि दिशो प्राहयद्भि: इव (९) चलितकदलिकासम्पातपीतप्रचारं पवनमपि विनये स्थापयद्भि: इव (१०) द्रुतचरणोद्धूतधूलिपटलावधूतान् दिनकरकिरणान् अपि उत्सारयद्भि: इव कनकवेत्रलतालोकविक्षिप्यमाणं दिनमपि दूरीकुर्वद्भि: इव दण्डिभि: इतस्तत: समुत्सार्य्यमाणजनसमूहो निर्जगाम नरपति: ।

(११) अवनमति च विनयनमितवपुषि भयचकितमनसि चलनशिथिलमणिकनकमुकुटकिरणनिकररुचिरशिरसि (१२) विलुलितकुसुमशेखररजसि राजचक्रे प्रभामुचां चूडामणीनाम् अवाञ्च: तिर्य्यञ्च उदञ्च चञ्चन्तो मरीचय: चाप-

---

स्थिति: तस्या: स्थापने निष्ठुरा निर्दया: तै: दण्डप्रहारेण दण्डप्रदर्शनेन निर्भर्त्सनादिना च लोकोत्सारणकरणादिति भाव: ।

(८) भयेति । भयेन पलायमाना ये लोका: तेषाम् उत्पीडै: समूहैरन्तरिता व्यवहिता: ।

(९) चलितेति । चलितानां कदलीनां वैजयन्तीनां सम्पातेन सञ्चारेण पीत: ग्रस्त: प्रचार: यस्य तथाभूतम् ।

(१०) द्रुतेति । द्रुतै: शीघ्रगैरित्यर्थ: चरणै: उद्धूतानि उत्क्षिप्तानि यानि धूलिपटलानि रज: सङ्घाता: तै: अवधूता: तिरस्कृता: तान् । उत्सारयद्भि: इव निराकुर्वद्भिरिव ।

(११) अवनमति प्रणमति । विनयनमितवपुषि विनयनमितकलेवरे । चलनेति चलनेन पदनिक्षेपेण शिथिला विश्लथा मणय: रत्नानि यस्य तादृशस्य मुकुटस्य किरणनिकरेण मयूखचयेन रुचिरम् उज्ज्वलं शिरो यस्य तथोक्ते ।

(१२) विलुलितेति । विलुलितं प्रसृतं कुसुमशेखरस्य शिरोभूषणपुष्पस्य रज: परागो यस्य तथाभूते राजचक्रे नृपतिवृन्दे प्रभामुचाम् आलोकवर्षिणाम् । अवाञ्च: अध:प्रसरन्त: तिर्य्यञ्च: पार्श्वेषु चरन्त: उदञ्च: उद्गच्छन्त: चञ्चन्त:

राशय इव शुभशकुनसम्पादनाय चेलुः (१३) मेघायमानरेणुमेदुरं मन्दिरशिखण्डिन इव समुड्डीयमानाः कोमलकल्पपादपपल्लवचन्दनमालाकलापा इव आबध्यन्त दिग्द्वारेषु दिक्पालैः प्रणम्यमानश्च नेत्रत्रिभागैश्च कटाक्षैश्च समग्रेक्षितैः (१४) भ्रूवक्षितैश्च अर्द्धस्मितैश्च परिहासैश्च छेकालापैश्च कुशलप्रश्नैश्च प्रतिप्रणामैश्च उन्मत्तभ्रूवीक्षितैश्च आह्लादानैश्च आक्रीणन् इव मानमयान् प्राणान् प्रणयदानैः प्रवीराणां वीरो यथानुरूपं विबभाज राजकम्।

अथ प्रस्थिते राजनि (१५) कलकलत्रस्तदिङ्नागसूत्कार-रव इव इतस्ततः तस्तार तारतरः तूर्य्याणां प्रतिध्वनिः आशातटेषु। दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्रुतानां करिणां मदप्रस्रवणवीथीभिः अलिकुलकालीभिः कालिन्दीवेणिका-

---

स्फुरन्तः। चाषराशय इव चाषाख्यपक्षिसमूहा इव शुभशकुनसम्पादनाय सुनिमित्तप्रकटनाय। चेलुः भ्रमन्ति स्म।

(१३) मेघेति। मेघायमाना मेघा इव आचरन्तः ये रेणवः रजांसि तैः मेदुरं स्निग्धं समाच्छन्नमिति भावः मन्दिरशिखण्डिन इव गृहमयूरा इव। कोमलेति कोमला ये कल्पपादपस्य पल्लवाः किसलया तेषु चन्दनमालाकलापा इव चन्दनधारारचनानि इव आबध्यन्त समतन्यन्त।

(१४) भ्रूवक्षितैः भ्रूभङ्ग्या रक्षितैः भ्रुवाक्षितैः इति पाठे भ्रुवा भ्रूविक्षेपेण अक्षितैः मनोज्ञैः इत्यर्थः। छेकालापैः वक्रोक्तिभिः आक्रीणन्निव विशेषेण क्रीणन्निव विबभाज विभज्य स्थापितवान् इत्यर्थः।

(१५) कलकलेति। कलकलेन कलरवेण त्रस्तस्य दिङ्नागस्य दिग्गजस्य सूत्कार इव त्राससूचकशब्दविशेष इव तस्तार व्याप। तूर्य्याणां वाद्यविशेषाणाम्। आशातटेषु दिग्विभागेषु दिग्गजेभ्यः दिग्गजान् प्रतीत्यर्थः त्रिप्रस्रुतानां त्रिभिः अङ्गैः कपोलादिभिः प्रस्रुताः मदवर्षिणः तेषां मदप्रस्रवणवीथीभिः मदस्राव-

सहस्राणि इव सस्यन्दिरे। (१६) सिन्दूररेणुराशिभिः अरुणायमानबिम्बे रवौ अस्तमयसमयं शशङ्किरे शकुनयः। करिणां (१७) षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैः तिरोदधिरे दुन्दुभिध्वनयः। (१८) दोधूयमानश्च सचराचरम् आचचाम चामरसङ्घातो विश्वम्। (१९) अश्वीयश्वासनिक्षिप्तैः शिश्विन्दे सिन्धुवारदामशुचिभिः निरन्तरम् अन्तरिक्षं फेनपिण्डैः। (२०) पिण्डीभूततगरस्तवकपाण्डुराणि पपुः इव परस्परसंघट्टनष्टाष्टदिशं दिवसम् उच्चचामीकरदण्डानि आतपत्रवनानि। (२१) रजोरजनीनिमीलितो

---

रेखाभिः अलिकुलकालीभिः भृङ्गकुलश्यामलाभिरित्यर्थः कालिन्दीवेणिकासहस्राणि इव यमुनाप्रवाहसहस्राणि इव सस्यन्दिरे सुस्रुवुः।

(१६) सिन्दूरेति। सिन्दूररेणूनां सिन्दूरचूर्णानां करिकलेवरनिहितानाम् इति भावः राशिभिः निचयैः अरुणायमानं लोहितायमानं बिम्बं मण्डलं यस्य तथाभूते रवौ सतीति भावः अस्तमयसमयम् अस्तगमनकालं सन्ध्याकालमित्यर्थः शशङ्किरे शङ्कितवन्तः। शकुनयः चक्रवाकाः तेषां तथाविधदर्शनेन वियोगसम्भवात् शङ्केति भावः।

(१७) षट्पदेति। षट्पदानां भ्रमराणां मदवारिलुब्धानामिति भावः कोलाहलेन मांसलाः प्रवृद्धा इत्यर्थः तैः। तिरोदधिरे तिरस्कृताः।

(१८) दोधूयमानः पुनः पुनः सञ्चाल्यमानः। सचराचरं स्थावरजङ्गमसहितम्। आचचाम जग्रास आच्छादयामासेति यावत्।

(१९) अश्वीयेति। अश्वानां समूहः अश्वीयं तस्य श्वासेन निक्षिप्तानि तैः। सिन्धुवारदामशुचिभिः सिन्धुवारमालाविशदैः फेनपिण्डैः फेनचयैः। शिश्विन्दे शुक्लतां प्राप।

(२०) पिण्डीभूतेति। पिण्डीभूतः राशीभूतः यः तगरस्तवकः तगरपुष्पगुच्छः तद्वत् पाण्डुराणि शुभ्राणि। पपुरिव जग्रसुरिव। परस्परस्य सङ्घट्टेन सङ्घर्षणेन नष्टा अष्टौ दिशो यत्र तम्। उच्चचामीकरदण्डानि उच्चाः उत्तुङ्गाः चामीकरदण्डाः सौवर्णयष्टयः येषां तानि।

मुकुटमणिशिलावलीबालातपेन विचकास वासरः। (२२) राजतैः हिरण्मयैश्च मण्डनकभाण्डमण्डलैः ह्रादमानैः हरितीकृताः परिह्रादा हरितो बधिरतां दधुः। (२३) अरिप्रतापानलनिर्मूलनाय इव मदोदबिन्दुशीकरैः शिशिरीकिरे करिणः ककुभां चक्रम्। (२४) चक्षुषाम् उन्मेषं मुमुषुः तड़िच्चञ्चलानि चूड़ामणीनामर्चींषि। स्वयमपि (२५) विसिस्मिये बलानां भूपालः सर्वतो विक्षिप्तचक्षुश्च अद्राक्षीत् आवासस्थानसकाशात् प्रतिष्ठमानं स्कन्धावारम् (२६) अधोक्षजकुक्षेः इव युगादौ निष्पतन्तं जीवलोकम् अम्भोनिधिमिव कुम्भभुवो वदनात् प्लावितभुवनम् उद्गवन्तम् (२७) अर्ज्जुनबाहुदण्ड-

---

(२१) रज इति। रज एव रजनी रात्रिः तत्र निमीलितः रजसाच्छन्न इति यावत्। मुकुटमणिशिलानां किरीटरत्नानां बालातपेन नवालोकेन विचकास व्यशोभत।

(२२) राजतैः रौप्यैः हिरण्मयैः सौवर्णैः मण्डनकभाण्डमण्डलैः अश्वाभरणभाण्डसमूहैः ह्रादमानैः रणद्भिः हरितीकृताः श्यामीकृताः परिह्रादाः परितो निस्वनपूरिता इत्यर्थः।

(२३) अरीति। अरीणां शत्रूणां प्रतापानलस्य तेजोवह्नेः निर्मूलनाय इव निर्वापणाय इव। मदोदबिन्दुशीकरैः मदवारिणाम् उदककणिकाभिः ककुभां दिशां चक्रं शिशिरीकिरे सिक्तवन्तः।

(२४) चक्षुषां नेत्राणाम् उन्मेषं विकासं मुमुषुः अहरन्। तड़िच्चञ्चलानि विद्युच्चञ्चलानि। अर्चींषि किरणाः।

(२५) विसिस्मिये अद्भुतम् अमन्यत। प्रतिष्ठमानं प्रचलन्तम्। स्कन्धावारं शिबिरम्।

(२६) अधोक्षजकुक्षेरिव नारायणोदरादिव। युगादौ सत्ययुगप्रारम्भे। निष्पतन्तं निःसरन्तम्। कुम्भभुवः अगस्त्यस्य महर्षेः कुम्भसम्भव इत्यमरः। प्लावितभुवनं व्याप्तजगत्।

सहस्रसम्पिण्डितोन्मुक्तमिव सहस्रधा प्रवर्त्तमानं प्रवाहम् नर्मदाया:। (२८) प्रसर तात! भाव! किं विलम्बसे? त्वङ्गति तुरङ्गम: भद्र! भग्नचरण इव सञ्चरसि यावदमी पुर:सरा: सरभसम् उपरि पतन्ति वाहयसि किमुष्ट्रं न पश्यसि निर्दय! शुकशिशुं शयानं वत्स रामिल! (२९) रजसि यथा न नश्यसि नो पश्यसि गलति शक्तुप्रसेवक: किमेवम् (३०) इत्वर! त्वरसे सौरभेय! सरणिम् अपहाय हयमध्यं धावसि धीवरि! विशसि गन्तुकामा मातङ्गि! मातङ्गमार्गम् अङ्ग! गलति तिरश्चीना चणकगोणी गणयसि न मामारटन्तम् अवटम् अतटेन अवतरसि (३१) सुखमास्व स्वैरिणि! सौवीरक! कुम्भो

---

(२७) अर्जुनेति। अर्जुनस्य कार्त्तवीर्य्यस्य इति भाव: बाहुदण्डानां सहस्रेण सम्पिण्डितं समाहृतं पश्चादुन्मुक्तमिव परित्यक्तमिव। प्रवर्त्तमानं प्रसरन्तम्।

(२८) प्रसर गच्छ तात। वत्स! विलम्बसे चिरयसि। त्वङ्गति चलति। भग्नचरण इव खञ्जितपद इव। पुर:सरा अग्रगामिन:। सरभसं सवेगम्। शयानं शुकशिशुं पद्भ्यां दलन् यासीति भाव:।

(२९) रजसि धूलिराशौ इति भाव: यथा न नश्यसि न अदर्शनं यासि तथा कुर्व्विति शेष:। गलति दूरं गच्छतीत्यर्थ: शक्तुप्रसेवक: शक्तुना भृतेन इति भाव: प्रकर्षेण सेवते इति तथोक्त: शक्तुभावबेतनी भृत्य इति भाव: तदाख्यो वा शक्तुर्दन्त्यसकारादिरपि दृश्यते।

(३०) इत्वर! गमनशील! इन गतावित्यस्मात् क्वरप्प्रत्यय:। सौरभेय! कुक्कुर! सरणिं पन्थानम्। धीवरि! धीवरकन्ये! मातङ्गमार्गं हस्तिसरणिम्। अङ्गेति सम्बुद्धौ। गलति च्यवते। तिरश्चीना अनृजुनिहितेति भाव:। चणकगोणी चणकाख्यकलायस्थलिका। आरटन्तं ब्रुवन्तम्। अवटं गर्त्तं अवटेन असार्गेण।

(३१) आस्व स्थितिं कुरु। स्वैरिणि! स्वेच्छाचारिणि! उक्षाणं वृषभम्।

भग्नो मन्थरक! खादिष्यसि गतः सन्निहुम् उह्नाणं प्रसादय कियच्चिरं चिनोषि चेट! वदराणि दूरं गन्तव्यं किमद्यैव विद्रासि द्रोणक! द्राघीयसी दण्डयात्रा (३२) विनैकेन निष्ठुरकेण निष्क्रयम् अस्माकम् अग्रतः पन्थाः स्थपुटक! स्थावरक! यथा न भनक्षि फाणितस्थालीं गरीयान् (३३) गण्डकतण्डुलभारको न निर्वहति दम्यो दासक! माषीणात् अमुतः द्राग् दात्रेण सुखघासपूलकं लुनीहि को जानाति (३४) यवसगतं गतानाम् धव! वारय बलीवर्दान् वाहीकरक्षितं क्षेत्रमिदं (३५) लम्बिता शकटी शाक्करं धुरन्धरं धुरि धवलं नियुङ्क्ष्व यक्षपालित! प्रमदाः पिनक्षि अक्षिणी किं

---

चिनोषि गृह्णासि वदराणि कुलफलानि। विद्रासि प्रासरसि। अद्यैव इदानीमेव। द्राघीयसी अतिदीर्घा अतिमहतीत्यर्थः दण्डयात्रा संग्रामप्रयाणम्।

(३२) विनैकेन एकेन केवलेन विना निष्ठुरकेण निर्दयाचरणेन संग्रामेण इति भावः। निष्क्रयम् ऋणं शोधनीयम्। भनक्षि भग्नां करोषि फाणितस्थालीं फाणितमिक्षुविकारः गुड़ इति यावत् तस्य स्थालीं भाण्डमित्यर्थः।

(३३) गण्डकेति। गण्डकतण्डुलभारकः गण्डकेषु पशुविशेषेषु तण्डुलभारकः तण्डुलभारः गरीयान् अतीव गुरुः महानित्यर्थः। दम्यः दमनीयः शिशुरिति भावः निर्वहति वोढुं शक्नोति। माषीणात् माषकलायक्षेत्रात् अमुतः अमुष्मात् द्राक् झटिति। सुखघासपूलकं किञ्चिन्मात्रबुभुक्षानिवृत्तये घासः सुखघासः तस्य पूलकं गुच्छम्। लुनीहि छिन्धि।

(३४) यवसगतं यवसं घास एव गतं गतिरित्यर्थः तत् शष्पं बालतृणं घासो यवसमित्यमरः। गतानां प्रस्थितानां पशूनामिति शेषः। धव पुरुष!। वाहीकरक्षितं परिपालकरक्षितम्।

(३५) लम्बिता मार्गादपस्खलितेत्यर्थः। शकटी क्षुद्रशकटम्। शाक्करं शूरं युवानं वा धुरन्धरं भारवहनक्षममित्यर्थः धवलं महावृषम्। यक्षपालित! सख्यो-

ते स्फुटिते हत हस्तिपक रे! दीव्यसि (३६) करिकरदण्डे समर्दं संमर्दं कर्दमे स्खलसि भ्रातर्भाव विधुरबन्धो! उद्धर पङ्कात् अनड्वाहम् इत एहि माणवक! (३७) घनेभघटासंघट्ट-सङ्कटे नास्ति निस्तरणम् (३८) इत्येवमादिप्रवर्त्तमाना-नेकसंलापं क्वचित् (३९) स्वेच्छाक्षुदितोद्दामशस्यघासविघस-सुखसम्पन्नान्नपुष्टैः केलिकोकिलैः किलकिलायमानैः मेण्ठवण्ड-वठरलञ्चनलेशिकलुण्ठकचेटचाटचण्डालमण्डलैः आण्डीरैः स्तूयमानं क्वचिदसहायैः (४०) क्लेशार्जितकुग्रामकुटुम्बि-सम्पादित-सीदत्सौरभेयशम्बलसंवाहनायासावेगागतसंयोगैः

---

घनपदमिदं प्रमदाः स्त्रियः पिनक्षि दलसि पदनिक्षेपेण इति भावः। स्फुटिते विदीर्णे। दीव्यसि क्रीड़सि।

(३६) करिकरदण्डे हस्तिशुण्डदण्डे। स्खलसि पतसि। विधुरबन्धो! दीन-दयालो!। अनड्वाहं वृषम्।

(३७) घनेति। घना निविड़ा इभघटा हस्तिसङ्घः तस्य सङ्घट्टेन सम्मर्देन सङ्कटं तस्मिन्।

(३८) इत्येवमादिप्रवर्त्तमानानेकसंलापं कटकं वीक्षमाणः पश्यन् जगाम इत्यन्वयः। कटकं विशिनष्टि क्वचिदित्यादि।

(३९) स्वेच्छेति। स्वेच्छया क्षुदितानि दलितानि उद्दामानि उद्भटानि प्रभूतानि इति यावत् शस्यानि धान्यादयः तथा विघसाः भृत्याद्युपयोगशिष्टानि अन्नानि परस्परलुण्ठनानि तैः सुखेन सम्पन्नानि समुपस्थितानि अन्नानि तैः पुष्टाः पूरितोदराः तैः केलिकोकिलैः क्रीड़ापरैः कोकिलैः किलकिलायमानैः अति-नीचत्वात् किलकिलाशब्दं कुर्वद्भिरित्यर्थः। मेण्ठाः हस्तिजागरिकाः मेठा इति पाठान्तरम्। वण्डाः अकृतविवाहाः तरुणाः वठरा मूर्खाः लञ्चना: गर्दभदासाः लेशिकाः जनपरिचारकाः लुण्ठकाः चौराः चेटाः दासाः चाटाः धूर्त्ताः शाठेति पाठान्तरं चण्डालाः तेषां मण्डलानि समूहाः तैः आण्डीरैः प्रगल्भैः राण्डीरैरिति पाठे राण्डीरैः रण्डापुत्रैः स्तूयमानं स्तुत्या प्रशस्यमानमित्यर्थः।

(४०) क्लेशेति। क्लेशेन अर्जितं लब्धं कुग्रामकुटुम्बिभिः नीचग्रामीयगृहस्थैः

स्वयं (४१) गृहीतगृहोपस्करणै: इयम् एका कथञ्चित् दण्डयात्रा यातु यातु पातालतलं तृष्णाभूतेः (४२) अभवनिर्भवतु शिवं सेवा करोतु स्वस्ति (४३) सर्वदुःखकूटाय कटकाय इति दुर्विधकुलपुत्रकैः निन्द्यमानम् (४४) क्वचित् अतितीक्ष्णसलिलस्रोतःपातिनौगतैः इव ग्रथितैः इव पङ्क्तिभूतैर्जनैः अतिद्रुतं द्रवद्भिः (४५) कृष्णकठिनस्कन्धगुरुलगुडैः

---

सम्पादितं दत्तं सीदतः कृच्छ्रं गतस्य सौरभेयस्य कुक्कुरस्य शम्बलमिव प्राणधारणोपयोगि अन्नमिव यत्किञ्चिददनीयं द्रव्यमिति भावः तस्य संवाहने संग्रहणे य आयासः क्लेशः तेन हेतुना आवेगेन आगतः प्राप्तः संयोगः सङ्गः यैः। अन्नकष्टातिशयात् प्रभूतान्नलाभाशया: समागतैरिति भावः।

(४१) गृहीतेति। गृहीतानि गृहस्य उपकरणानि सामग्र्यः शय्यासनादीनि इति भावः यैः तथोक्तैः। असहायैः अप्राप्तसाहाय्यैः इति भावः। इयं पुरोवर्त्तिनी दण्डयात्रा युद्धार्थं प्रचलिता सेनेति यावत् एकैव अस्माकं सहायभावमप्राप्तैव इत्यर्थः यातु गच्छतु। तृष्णा लोभः आशेति यावत् अस्माकमिति शेषः पातालतलं पातालादपि अध इत्यर्थः यातु गच्छतु एतत्सङ्गेन अस्माकं सुखाशा विरमतु इति भावः।

(४२) भूतेः सम्पदः अभवनिः अनुत्पत्तिरित्यर्थः आक्रोशेऽनिप्रत्ययः भवतु संसारे भूतिः नश्यतु इति भावः। सेवा भृत्यभावः शिवं मङ्गलं करोतु।

(४३) सर्वदुःखकूटाय सर्वदुःखसङ्घातरूपायेति भावः कटकाय सैनिकाय सैनिकवृत्तये इति भावः स्वस्ति शुभमस्त्विति शेषः स्वस्तिशब्दयोगे कटकायेति चतुर्थी। शिवसेवा करोतु स्वस्ति सर्वदुःखकूटाय कटकायेति पाठे शिवसेवा शिवाराधना सर्वदुःखकूटाय कटकाय स्वस्ति करोतु इत्यन्वयः शिवसेवा सैनिकवृत्तेरक्षतु लोकानिति भावः। दुर्विधेति दुर्विधा दरिद्राः कुलपुत्रकाः कुलक्रमागतसेवका इत्यर्थः तैः। दुर्विधवद्धकुलपुत्रकैरिति पाठान्तरम्।

(४४) अतितीक्ष्णेति अतितीक्ष्णम् अत्युग्रम् अतिवेगवदित्यर्थः यत् सलिलस्रोतः जलप्रवाहः तत्र पातिनीं चलन्तीं नावं तरणिं गताः अधिष्ठिताः तैरिव। ग्रथितैरिव गुम्फितैरिव पङ्क्तिभूतैः श्रेणिबद्धैः द्रवद्भिः गच्छद्भिः।

गृहीतसौवर्णपादपीठीकरङ्ककलशपतद्ग्राहावग्राहै: (४६) प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्वारै: सर्वमेव बहि: कारयद्भि: भूपतिभृतकभारिकै: महानसोपकरणवाहिभिश्च (४७) बद्धवराहवर्ध्रवार्ध्रीणसै: (४८) लम्बमानहरिणचटुकचटकजूटजटिलै: शिशुशशकशाकपत्रवेत्राग्रसंग्रहसंग्राहिभि: (४९) शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरसभाण्डै: (५०) तलकतापकतापिकाहस्तकताम्रचरुकटाहसङ्कटपिटक-

---

(४५) कर्कशेति। कर्कशेषु कठिनेषु दृढ़ेषु स्कन्धेषु गुरूणि महान्ति लगुडानि येषां तै:। गृहीतेति गृहीता: सौवर्णपादपीठ्य: काञ्चनपादपीठानि करङ्का: ताम्बूलपात्राणि कलशा: कुम्भा: पतद्ग्राहा: निष्ठीवनपात्राणि अवग्राहा: स्नानद्रोण्य: यै: तथाभूतै:।

(४६) प्रत्यासन्नस्य निकटस्थस्य पार्थिवस्य राज्ञ: उपकरणानां आसनादीनां ग्रहणेन ये गर्वा: अहङ्कारा: वयं राजभृत्या इत्येवं रूपा इति भाव: तै: दुर्वारा: वारयितुमशक्या: उद्धता इति यावत् तै:। सर्वमेव जनमिति शेष: बहि: कारयद्भि: निरस्यद्भिरित्यर्थ: अवजानद्भिरिति भाव:। भूपतिभृतकभारिकै: भूपते: राज्ञ: भृतकं भरणोपयोगि अन्नादिकमित्यर्थ: तस्य भारिका: भारवाहिन: तै:। महानसोपकरणवाहिभि: रन्धनसामग्रीवाहकै:।

(४७) बद्धेति। बद्धानि संगृहीतानि वराहवर्ध्राणि शूकरचर्माणि वार्ध्रीणसा यज्ञीयच्छागविशेषा: तच्चर्माणि वा यै: तथाभूतै:।

(४८) लम्बेति। लम्बमाना: स्कन्धे धृता इति शेष: हरिणस्य मृगविशेषस्य चटुका: पूर्वभागा: चटका: पक्षिविशेषाश्च। तेषां जूटै: समूहै: जटिला: युक्ता: तै:। शिश्विति। शिशव: अदीर्घवयस: शशका: पशुभेदा: शाकपत्राणि वेत्राग्राणि वंशाङ्कुरा: तेषां संग्रहं सञ्चयं संगृह्णन्तीति तथोक्तै:।

(४९) शुक्लेति। शुक्लेन श्वेतेन कर्पटेन वसनेन प्रावृतं आच्छादितं मुखं येषां तानि तथा एकदेशे एकस्मिन् विभागे दत्ता निहिता आर्द्रा अभिनवेति भाव: मुद्रा चिह्नविशेष: येषां तानि गुप्तानि अप्रकाशानि राजपेयतया विषप्रयोगादिभयादिति भाव: गोरसभाण्डानि गव्यपात्राणि यै: तथाभूतै:।

भारिकैः समुत्सार्य्यमाणपुरोवर्त्तिजनं क्वचित् क्लेशोऽस्माकं (५१) फलकाले अन्य एव विटाः समुपस्थास्यन्त इति मुखरैः पदे पदे पततां दुर्बलबलीवर्दानां खेटने नियुक्तैः खेटचेटकैः (५२) खेद्यमानासंविभक्तकुलपुत्त्रलोकं क्वचित् (५३) नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदं (५४) मार्गग्रामनिर्गतैराग्रहारिकजाल्मैः पुरःसरजरन्महत्तरोत्तम्भिताम्भःकुम्भैः (५५) उपायनीकृतदधिगुड़खण्डकुसुमकरण्डैः

---

(५०) तलकेति। तलकः अग्निशकटिका तापकः सूपादिकरणपात्रं तापिका काकपालिका यत्र तैलादिभिः भक्ष्याणि परिपच्यन्ते हस्तकः शूलं मांसादिपाकसाधनमिति भावः ताम्रचरुकटाहः ताम्रनिर्मितपायसान्नकटाहः सङ्कटपिटकः क्षुद्रभाण्डं तेषां भारिकाः भारवाहिनः तैः। समुत्सार्य्यमाणेति समुत्सार्य्यमाणाः पुरोवर्त्तिनो जनाः यस्य तथाभूतम् ।

(५१) फलकाले फलप्राप्तिसमये विटाः धूर्त्ताः समुपस्थास्यन्ते सन्तोषयिष्यन्ते न वयमिति भावः मुखरैः वाचालैः। पततां स्खलतां दुर्बलबलीवर्दानां क्लान्तवृषाणां खेटने प्रेरणे चालने इति भावः खलने इति पाठे स्खलने स्खलनादुद्धरणे इति भावः। नियुक्तैः आदिष्टैः खेटचेटकैः चालकभृत्यैः। खल-चेटकैरिति पाठे खलचेटकैः दुष्टभृत्यैरित्यर्थः ।

(५२) खेद्यमानेति। खेद्यमानाः क्लिश्यमानाः असंविभक्ताः कर्मविशेषेण सम्यगदत्तविभागाः विशेषकर्मबाह्या इति भावः। कुलपुत्त्रलोकाः कुलक्रमागतसेवकजना इत्यर्थः यत्र तथोक्तम् ।

(५३) नरपतीति। नरपतेः राज्ञः दर्शने यत् कुतूहलम् औत्सुक्यं तस्मात् उभयतः उभयोः पार्श्वयोः कटकस्येति भावः। प्रजविताः सवेगाः प्रधाविताः चलिताः ग्रामेयकाः ग्राम्याः जनपदाः देशवासिनश्च यस्य तथाभूतम् ।

(५४) मार्गग्रामनिर्गतैः मार्गे मार्गसमीपे इत्यर्थः स्थिता ये ग्रामाः तेभ्यः निर्गताः निःसृताः तैः आग्रहारिकजाल्मैः आग्रहारिकाः शस्यरक्षणनियुक्ताः जाल्माः निर्बोधाः पुरुषाः तैः। पुरःसरेति पुरःसरैः अग्रगैः जरद्भिः स्थविरैः महत्तरैः महाजनैः उत्तम्भिता ऊर्द्धीकृताः अम्भःकुम्भाः जलपूर्णकलशाः येषां तैः ।

घटितपेटकैः सरभसं समुत्सर्पद्भिः (५६) प्रकुपितप्रचण्ड-दण्डिवित्रासनविद्रुतैः दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रनिहितदृष्टिभिः असतोऽपि (५७) पूर्वभोगपतिदोषानुद्भावयद्भिः अतिक्रान्तायुक्तकशतानि च शंसद्भिः (५८) चिरन्तनचाटापराधांश्चाभिदधानैः उद्धूयमानधूलिपटलं क्वचित् (५९) एकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौड़विसृज्यमाणशस्यसंरक्षणम् अपरैः (६०) आदिष्टपरिपालकपुरुषपरितुष्टैः धर्मः प्रत्यक्षो देव इति (६१) स्तुतीः आतन्वद्भिः अपरैः

---

(५५) उपायनीकृतेति। उपायनीकृतानि उपढौकनत्वेन दत्तानि दधीनि गुड़ाः खण्डा इक्षुविकारविशेषाः कुसुमानि एषां करण्डानि भाजनानि यैः तथाभूतैः। घटितपेटकैः कल्पितपेटकैः। सरभसं सवेगं समुत्सर्पद्भिः समुपगच्छद्भिः।

(५६) प्रकुपितेति। प्रकुपितानां चण्डानां उग्राणां प्रचण्डानामिति पाठान्तरं दण्डिनां वेत्रपाणीनां वित्रासनेन भयप्रदर्शनेन विद्रुताः पलायितास्तैः।

(५७) पूर्वेति। पूर्वे ये भोगपतयः अन्नाच्छादनाद्यधिकारिणः तेषां दोषान् उद्भावयद्भिः प्रकटयद्भिः। अतिक्रान्तेति अतिक्रान्तानि गतानि अयुक्तकानाम् अयुक्तव्यवहाराणां शतानि शंसद्भिः कथयद्भिः।

(५८) चिरन्तनेति। चिरन्तनानां अतिचिरकृताः ये चाटानां धूर्त्तानां अपराधाः दोषाः तान् अभिदधानैः कथयद्भिः। उद्धूयमानेति उद्धूयमानानि उत्क्षिप्यमाणानि धूलीनां पटलानि निचया यत्र तथाभूतम्।

(५९) एकान्तेति। एकान्तप्रवृत्तानां द्रुतचलितानामिति भावः अश्ववाराणां अश्वारोहिणां चक्रैः समूहैः चर्व्यमाणानि भक्ष्यमाणानि आगामिषु गौड़ेषु विसृज्यमाणेषु अन्विष्यमाणेषु शस्यसंरक्षणानि संरक्षितशस्यानि इति यावत् तदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायादिति भावः गौड़ीयसंग्रामकाले भक्षणार्थं सञ्चितानि शस्यानि अश्ववारैर्यत्र भक्षितानि इति तात्पर्य्यम्। अपरैः अन्यैः पुरुषैरित्यर्थः।

(६०) आदिष्टेति। आदिष्टान् एते परिपाल्या इति राज्ञा निर्दिष्टान्

लूयमाननिष्पन्नशस्यप्रकटितविषादैः चैत्रशुचा सकुटुम्बैरेव निर्गतैः (६२) प्ररूढप्राणच्छेदैः परितापत्याजितभयैः क्व राजा कुतो राजा कीदृशो वा राजेति (६३) प्रारब्धनरनाथनिन्दं शशकैश्च पदे पदे प्रजविप्रचण्डदण्डपाणिपेटकानुबद्धैः गिरिगुडकैः इव हन्यमानैः इतस्ततः सञ्चरद्भिः अपरैः युगपत्परापतितमहाजनग्रस्तैः तिलशो विलुप्यमानैः (६४) अनेकजन्तुजङ्घान्तरालनिःसरणकुशलिभिः (६५) कुटिलिकाव्यंसितसादिवहुश्वभिः (६६) पतल्लोष्टलगुडकोणकुठारकील-

---

परिपालयन्ति इति तथाभूताः ये पुरुषाः तेषु परितुष्टाः तैः अपरितुष्टेति पाठान्तरम् ।

(६१) आतन्वद्भिः कुर्वद्भिः । लूयमानेति लूयमानैः छिद्यमानैः निष्पन्नैः पर्यन्तहीनैः शस्यैः प्रकटितः प्रकाशितः विषादो यैः तथाभूतैः सकुटुम्बैरेव सपरिवारैरेव । चैत्रशुचा चैत्राणां शस्यनाशात् शोकेन इति यावत् ।

(६२) प्ररूढेति । प्ररूढः जातः प्राणानां छेदः येषां तथाभूतैः चैत्रशस्यनाशात्तेषां प्राणनाशतुल्य इति भावः प्ररूढच्छेदैरिति पाठे प्ररूढः जातः छेदः अङ्गानामिव इति भावः येषां तथाभूतैः । परितापेति परितापेन शस्यनाशदुःखेन त्याजितं भयं येषां तथाभूतैः निर्भयैरिति भावः ।

(६३) प्रारब्धेति । प्रारब्धस्य नरनाथस्य राज्ञः निन्दा यत्र येन वा तथोक्तम् । प्रजवीति प्रजविनः प्रकृष्टवेगशालिनः प्रचण्डाः दण्डपाणयः वेत्रधारिणः पुरुषाः तेषां पेटकेन समूहेन अनुबद्धाः अनुसृताः तैः । गिरिगुडकैः इव लोष्टैः इव हन्यमानैः ताड्यमानैः । युगपत् समकालं परापतितैः समुपस्थितैः महाजनैः महत्तरैः लोकैः ग्रस्ताः आक्रान्ताः तैः । तिलशः तिलं तिलं कृत्वा विलुप्यमानैः गृह्यमाणैः ।

(६४) अनेकेति । अनेकेषां जन्तूनां जङ्घान्तरालेभ्यः निःसरणे निर्गमने कुशलिनः निपुणाः तैः ।

(६५) कुटिलिकेति । कुटिलिकया कुटिलगमनेन व्यंसिताः वञ्चिताः सादिनाम् अश्ववाराणां बहवः श्वानः कुक्कुराः यैः तथाभूतैः ।

कुद्दालखनित्रदात्रयष्टिभिरपि निःसरद्भिः आयुधो बलात् कृतकलकलम् अन्यत्र (६७) सङ्घशो घासिकैः वुसधूलिधूसरितवासजालजालकितजघनैश्च (६८) पुराणपर्य्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णाशकलशिथिलमलिनमलकुथैश्च (६९) प्रभुप्रसादीकृतपाटितपटच्चरचलच्चोलकधारिभिश्च धावमानैः उद्धूयमानधूलिपटलं क्वचित् (७०) एकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौड़विग्रहं क्वचित् (७१) पङ्किलप्रदेशपूरणादेशाकुलसकललोकलूयमानतृणपूलकं क्वचित्

---

(६६) पतदिति। पतन्त्यः लोष्टानि लगुड़ानि कोणा वादनयष्टयः कुठाराः परशवः कीलाः शङ्कवः कुद्दालाः कोदाल इति भाषा प्रसिद्धाः खनित्राणि खननसाधनानि शस्त्राणि दात्राणि प्रसिद्धानि यष्टयः येषु तथोक्तैः। निःसरद्भिः तत्तदस्त्राघातमलभमानैः इति भावः। बलात् प्रभावात्। कृतकलकलं कृतकोलाहलम्।

(६७) सङ्घशः बहुशः घासिकैः घासे नियुक्ताः तैः। वुसेति वुसेन चेलात् उच्चयनेन या धूलयः ताभिः धूसरितानाम् आकीर्णानां घासानां जालेन जालकितानि सञ्जातजालानि इव लक्ष्यमाणानि जघनानि येषां तैः।

(६८) पुराणेति। पुराणस्य पर्य्याणस्य पल्ययनस्य एकदेशे दोलायमानानि दात्राणि घासच्छेदनास्त्रविशेषा येषां तैः। शीर्णेति शीर्णानि क्षीणानि इति यावत् ऊर्णानां मेषादिलोम्नाम् उर्णामेषादिलोम्नीत्यमरः। शकलानि खण्डानि तैः शिथिलाः दुर्बला इत्यर्थः मलिनाः मलकुथाः उत्तरीयाणि येषां तैः।

(६९) प्रभ्विति। प्रभुणा स्वामिना प्रसादीकृतं कृपया दत्तं पश्चात् पाटितं छिन्नं यत् पटच्चरं जीर्णवस्त्रं तस्मात् चलत् भ्रंशत् यत् चोलकं वस्त्रखण्डं तत् धारयन्तीति तथोक्तैः।

(७०) एकान्तेति। एकान्तप्रवृत्तैः अश्ववारचक्रैः सादिसमूहैः चर्व्यमाणः भक्ष्यमाणः आलोच्यमान इति यावत् आगामिनो गौड़स्य गौड़राजस्य इति यावत् विग्रहः देहः युद्धञ्च यैः तथोक्तम्।

(७१) पङ्किलेति। पङ्किलस्य कर्दमवतः प्रदेशस्य पूरणादेशेन पूरणाज्ञया

(७२) तलवर्त्तिवैविवैलविलास्यमानशाखिशिखरगतविक्रोश-द्विवादिब्राह्मणं क्वचित् (७३) कुलण्डकपाशविवेष्ट्यमान-ग्रामीणग्रासाकृष्टकौलेयकं क्वचित् (७४) अन्योन्यविभवस्पर्द्धो-द्धुरराजपुत्रवाह्यमानवाजिसङ्घट्टमण्डितम् अनेकवृत्तान्ततया कौतुकजननं प्रलयजलधिम् इव (७५) जगद्ग्रासग्रहणाय प्रवृत्तं पातालमिव महाभोगिनां गुप्तये समुत्पादितं कैलास-मिव परमेश्वरवसतये सृष्टं (७६) दृश्यमानसकलप्राणिपर्य्यायं चतुर्युगसर्गकोशमिव प्रजापतीनां क्लेशवहुलमपि तपःकरण-

---

आकुलैः व्यापृतैः सकलैः लोकैः लूयमानानि छिद्यमानानि तृणानां पूलकानि समूहाः पङ्कीपरिप्रदानार्थमिति भावः यत्र तथोक्तम्।

(७२) तलवर्त्तीति। तलवर्त्तिभिः तलस्थितैः इत्यर्थः वैविभिः दण्डिभिः वैलेण विलास्यमानाः भीतिं प्रदर्श्यमानाः अतएव शाखिनां वृक्षाणां शिखरम् अग्रं गता आरूढाः विक्रोशन्तः शपन्तः विवादिनो ब्राह्मणा यत्र तथोक्तम्।

(७३) कुलण्डकेति। कुलण्डकपाशः कुक्कुरबन्धनशृङ्खलं कुलुण्डकेति पाठा-न्तरं तेन विवेष्ट्यमानाः बध्यमानाः ग्रामीणानां ग्राम्यजनानां ग्रासेन अन्नस्य इति भावः आकृष्टाः कौलेयकाः कुक्कुराः यस्य तथाभूतम्।

(७४) अन्योन्येति। अन्योन्यस्य परस्परस्य विभवः सम्पद् तत्र तेन वा स्पर्द्धा अहङ्कारः तया उद्धुरैः उद्धतैः राजपुत्रैः वाह्यमानानां वाजिनाम् अश्वानां सङ्घट्टेन सङ्घर्षेण मण्डितम् अलङ्कृतम्। अनेकवृत्तान्ततया बहुव्यापारतया कौतुकजननं चमत्कारावहम्।

(७५) जगदिति। जगदेव ग्रासः तस्य ग्रहणाय स्वीकरणाय भावनाय च। महाभोगिनां महान्तः भोगिनः सुखभोगरताः लोकाः सर्पाश्च तेषाम्। गुप्तये रक्षणाय। परमेश्वरवसतये परमेश्वरो हर्षः हरश्च तस्य वसतये स्थितये।

(७६) दृश्यमानेति। दृश्यमानाः सकलानां प्राणिनां पर्य्यायाः नामानि यत्र तथोक्तं सर्वप्राणिसमाकीर्णमिति यावत्। चतुर्युगेति चतुर्णां युगानां कृतादीनां सर्गकोशमिव सृष्टिस्थानमिव। तपःकरणमिव तपश्चरणमिव सिद्धिलाभजनकाला-

मिव क्रमकारणं कल्याणानाम् एवञ्च वीक्षमाणः कटकं जगाम ।

(७७) आसन्नवर्त्तिनाञ्च तत्रभवतां मान्याना प्रवर्त्तिताः पन्थानो दिग्विजयाय ; (७८) अप्रतिहतरथरंहसा रघुणा लघुना इव कालेन अकारि ककुभां प्रसादनम् ; शरासन-द्वितीयः करदीचकार चक्रं क्रमागतभुजबलाभिजनधन-मदावलिप्तानां भूभुजां पाण्डुः ; पाण्डवः (७९) सव्यसाची चीनविषयम् अतिक्रम्य राजसूयसम्पदे (८०) क्रुध्यद्गन्धर्व-धनुष्कोटिटाङ्कारकूजितकुञ्जं हेमकूटपर्वतं पराजैष्ट ; सङ्ख्या-

---

दिति भावः । क्रमकारणं क्रमेण साधनम् । क्रमकारिणमिति पाठे क्रमः पाद-विक्षेपः तस्य कारी तम् ।

(७७) आसन्नेत्यादि । बाहुशालिनां भुजवीर्य्यवतां पार्थिवकुमाराणाम् इत्येवं प्रायान् आलापान् शृण्वन् आवासं विश्रामस्थानम् आससाद प्रापेति सम्बन्धः । आलापप्रकारमाह आसन्नेति आसन्नवर्त्तिनाम् अन्तिकचराणां तत्र-भवतां मान्यानां पार्थिवकुमाराणामित्यनेनान्वयः । मान्याना राज्ञा दिग्विजयाय पन्थानः उपायाः प्रवर्त्तिताः प्रदर्शिता इत्यर्थः ।

(७८) अप्रतिहतरथरंहसा अप्रतिहतरथवेगेन । लघुनैव अल्पेनैव । ककुभां दिशां प्रसादनं वशीकरणम् । करदीचकार शासनाधीनं चकार । चक्रं राज-मण्डलम् । क्रमागतेति क्रमागतस्य पितृपितामहागतस्य भुजबलस्य बाहुवीर्य्यस्य अभिजनस्य वंशमर्य्यादायाः धनानाञ्च मदेन गर्वेण अवलिप्ताः उद्धताः तेषाम् ।

(७९) सव्यसाची अर्जुनः । चीनविषयं चीनराज्यम् अतिक्रम्य निर्जित्येत्यर्थः । राजसूयसम्पदे राजसूयसम्पत्तिनिमित्तम् ।

(८०) क्रुध्यदिति । क्रुध्यतां गन्धर्वाणां देवयोनिविशेषाणां धनुष्कोटिः कार्मुककोटिः टाङ्कारेण कूजिताः शब्दिताः कुञ्जा यस्य तथोक्तम् । पराजैष्ट जिगाय ।

न्तरितो विजयः ( ८१ ) तरस्विनाम् ; ( ८२ ) सहिमहिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरः करं कौरवेश्वरस्य किङ्कर इव अक्षती द्रुमः ; (८३) नातिजिगीषवः खलु पूर्वं येन अल्प एव भूभागो भूयांसो भगदत्तदन्तवक्त्रक्राथकर्णकौरवशिशुपालसाल्वजरासन्धसिन्धुराजप्रभृतयोऽभवन् भूपतयः ; सन्तुष्टो राजा युधिष्ठिरो यो हि (८४) असहत समीप एव धनञ्जयजयजनितजगत्कम्पः किम्पुरुषाणां राज्यम् ; अलसः चण्डकोषो यो न प्राविक्षत् क्ष्मां जित्वा स्त्रीराज्यम् ; (८५) ह्रसीय एवान्तरं तुषारगिरिगन्धमादनयोः । उत्साहिनः किष्कुतुरुष्कविषयाः ; (८६) प्रादेशः पारसीकदेशः ; शशपदं शकस्थानम् ; अदृश्यमानप्रति-

---

(८१) तरस्विनां वीर्य्यशालिनाम् । विजयः सङ्कल्पान्तरितः सङ्कल्पमात्रसाध्य इत्यर्थः ।

(८२) सहिमेति । सहिमेन हिमाकीर्णेन हिमवता हिमाद्रिणा व्यवहितः अन्तरितः दुर्जय इति भावः बाहुबलव्यतिकरकातरः भुजवीर्य्यपराक्रमरहित इति यावत् । कौरवेश्वरस्य दुर्य्योधनस्य । अक्षती अचमः द्रुमः तदाख्यः किन्नर नरपतिः ।

(८७) नातिजिगीषवः नातिविजयाकाङ्क्षिण इत्यर्थः । पूर्वे पुरातना राजानः । भूयांसः अतिवहवः ।

(८४) असहत सोढ़वान् । क्ष्मां पृथ्वीं स्त्रीराज्य जित्वा स्त्रीवशीभूतो भूत्वा इत्यर्थः ।

(८५) ह्रसीयः अल्पतरम् । तुषारगिरिः हिमाद्रिः । उत्साहिनः उत्साहशालिनः । किष्कु तुरुष्कविषयाः किष्कुः हस्तो वितस्तिः वा तत्परिमितोऽल्पपरिसर इति भावः तुरुष्कजनपदः ।

(८६) प्रादेशः प्रदेशिन्यङ्गुष्ठयोः अन्तरपरिमाणसम्मित इति यावत् अतिक्षुद्र इति भावः । शशपदं शशस्य क्षुद्रपशुभेदस्य पदं पदपरिमितम् । शकस्थानं शकदेशः । अदृश्यमानेति । न दृश्यमानः प्रतिप्रहारः प्रतिद्वन्द्विविक्रमः यत्र

प्रहारे पारियात्रे यात्रैव शिथिला; (८७) शौर्य्यशुल्कः सुलभो दक्षिणापथः; (८८) दक्षिणार्णवकल्लोलानिलचलित-चन्दनलतासौरभसुन्दरीकृतदरीमन्दिरात् दर्दुरात् अद्रेः नेदीयसि मलयो मलयलग्न एव च महेन्द्रः; इत्येवंप्रायान् उद्योगद्योतकानाम् आलापान् पार्थिवकुमाराणां बाहुशालिनां शृण्वन् एव आससाद आवासम्। मन्दिरद्वारि च उभयतः सबहुमानं (८९) भ्रूलताभ्यां विसर्जितराजलोकः प्रविश्य च अवततार बाह्यास्थानमण्डपस्थापितम् आसनम् आचक्राम अपास्तसमायोगश्च क्षणमासिष्ट।

अथ तत्र प्रतीहारः (९०) पृथ्वीपृष्ठप्रतिष्ठापितपाणि-पल्लवो विज्ञापितवान् देव! (९१) प्राग्ज्योतिषेश्वरेण प्रहितो हंसवेगनामा दूतोऽन्तरङ्गः तोरणमध्यास्ते इति। राजा तु

---

तादृशे पारियात्रे तदाख्ये देशे पर्वते वा यात्रा युद्धार्थगमनं शिथिला निरर्थ-केति भावः।

(८७) शौर्य्यशुल्कः शौर्य्यं वीर्य्यमेव शुल्कः पणः यस्य तथाभूतः विक्रमलभ्य इति भावः।

(८८) दक्षिणेति। दक्षिणार्णवस्य कल्लोलानिलेन तरङ्गवायुना चलितानां कम्पितानां चन्दनलतानां सौरभेण गन्धेन सुन्दरीकृतं मनोज्ञीकृतं दरी गुहा एव मन्दिरं गृहं यस्य तथाभूतात् दर्दुरात् तदाख्यात् अद्रेः पर्वतात् नेदीयसि अतिनिकटे मलयः तदाख्यपर्वतः। महेन्द्रः तदाख्यपर्वतः। उद्योगद्योतकानाम् उत्साहवर्द्धकानाम्।

(८९) भ्रूलताभ्यां भ्रूसङ्केतेन इति भावः। बाह्येति बाह्यं बहिर्देशस्थम् आस्थानमण्डपं सभागृहं तत्र स्थापितं निहितम्। आचक्राम अधितष्ठौ। अपा-स्तसमायोगः त्यक्तसन्नाहः।

(९०) पृथ्वीति। पृथ्वीपृष्ठे भूतले प्रतिष्ठापितः निहितः पाणिपल्लवः येन तथाभूतः।

तमाशु प्रवेशयेति सादरम् आदिदेश। अथ (९२) दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात्। अनन्तरञ्च हंसवेगः सविनयम् (९३) आकृत्यैव नयनानन्दसम्पादनसुभगाभोगभद्रया (९४) समुल्लङ्घ्यमानगुणगरिमा प्रभूतप्राभृतभृतां पुरुषाणां समूहेन महता अनुगम्यमानः प्रविवेश राजमन्दिरम्। (९५) आरादेव पञ्चाङ्गालिङ्गिताङ्गनः प्रणाममकरोत्। एह्येहि इति सबहुमानमाहूतश्च प्रधावितोऽपसृतः (९६) पादपीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेन उपसृत्य भूयो नमश्चक्रे। स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टम् अविप्रकृष्टं स प्रदेशमध्यास्त। ततो राजा (९७) तिरश्चीं तनुम् ईषत् इव दधानश्चामरग्राहिणीम् अन्तरालवर्त्तिनीं समुत्सार्य्य सम्मुखीनस्तं सप्रश्रयं पप्रच्छ हंसवेग! श्रीमान् कच्चित् कुशली कुमार इति। स तमन्ववादीत् अद्य कुशली येन

---

(९१) प्राज्ज्योतिषेश्वरेण कामरूपाधिपतिना। अन्तरङ्गः स्वजनः। तोरणं बहिर्द्वारम्।

(९२) दक्षतया निपुणतया।

(९३) आकृत्यैव अवयवेनैव। नयनेति नयनानन्दः चक्षुःप्रीतिः तस्य सम्पादने सुभगः अनुकूलः आभोगः विस्तारः तेन भद्रा मनोहारिणी तया।

(९४) समुल्लङ्घ्यमानेति। समुल्लङ्घ्यमानः निर्जीयमानः गुणानां गरिमा गौरवं यस्य तथाभूतः गुणगौरवादपि आकृतिगौरवमादधान इति भावः प्रभूतप्राभृतभृतां बहुलोपढौकनवताम्।

(९५) आरादेव समीप एव। पञ्चाङ्गेति पञ्चभिः अङ्गैः शिरश्चरणादिभिः आलिङ्गितं स्पृष्टम् अङ्गनं येन तथाभूतः।

(९६) पादपीठेति। पादपीठेषु लुठिता घृष्टा ललाटलेखा भालरेखा यस्य तथाभूतः। न्यस्तहस्तः अर्पितकरः। निर्दिष्टं प्रदर्शितम् अविप्रकृष्टं सन्निकृष्टम्।

एवं स्नेहस्नपितया सौहार्दद्रवार्द्रया सगौरवं गिरा पृच्छति देव इति।

स्थित्वा च मुहूर्त्तमिव पुनः स चतुरमुवाच (९८) चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भम् अपहाय हृदयमेकम् अन्यत् अनुरूपं प्राभृतमिव दुर्लभं लोके तथाप्यस्मत्स्वामिना सन्देशम् अशून्यतां नयता (९९) पूर्वजोपार्जितं वारुणातपत्रमाभोगाख्यम् अनुरूपस्थानन्यासेन कृतार्थीकृतमेतत्। (१००) अस्य च कुतूहलकान्ति बहूनि आश्चर्य्याणि दृश्यन्ते। प्रतिदिवसं प्रविशति (१) शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिः अस्मिन्। अस्मिन् प्रविष्टे (२) प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्य्याश्च्योतन्ति चन्द्रभासामच्छाः मणिशलाकाभ्यो यावदिच्छ-

---

(९७) तिरश्चीं तिर्य्यक्चारिणीम्। समुत्सार्य्य अपसार्य्य। सप्रश्रयं सविनयम्। स्नेहस्नपितया स्नेहसिक्तया।

(९८) चतुरम्भोधीति। चतुर्णाम् अम्भोधीनां समुद्राणां भोगभूतिः भोगैश्वर्य्यं तस्या भाजनं पात्रं तस्य। सद्भावगर्भं सदाशयपूर्णम्। प्राभृतमुपढौकनं अशून्यतां नयता अशून्यं कुर्वता।

(९९) पूर्वजोपार्जितं पूर्वपुरुषलब्धम्। आभोगाख्यम् आभोगनामकम्। अनुरूपस्थानन्यासेन योग्यस्थानार्पणेन।

(१००) अस्य आभोगस्य कुतूहलकान्ति कौतुककराणि।

(१) शैत्यहेतोः शीतलतानिमित्तम्। सोमस्य चन्द्रस्य रश्मिः मयूखः। अस्मिन् रश्मौ।

(२) प्रध्यानानन्तरं प्रकृष्टभावनात् परम्। स्वादवः सुस्वादाः। दन्तेति दन्तवीणा दन्तानामन्योन्याघातः तस्या उपदेशे शिक्षायाम् आचार्य्याः गुरवः। मणिशलाकाभ्यः मणिमयच्छत्रशलाकाभ्यः यावदिच्छं यावती इच्छेति तथोक्तं अच्छाः निर्मलाः।

मच्छा धाराः। (३) प्रचेता इव यश्चतुर्णाम् अर्णवानाम् अधिपतिर्भूतो भावी वा तमनुगृह्णाति छायया न इतरम्। इदञ्च न (४) सप्तार्चिर्दहति न पृषदश्वो हरति न उदकम् आर्द्रयति न रजांसि मलिनयन्ति न जरा जर्जरयति। एतत् तावदनुगृह्णातु इमा देवः सन्देशमपि विस्रब्धं श्रोष्यति। इत्येवम् अभिधाय विवृत्य आत्मीयं पुरुषम् अभ्यधात् उत्तिष्ठ दर्शय देवस्य इति।

स वचनान्तरम् उत्थाय पुमान् (५) ऊर्द्धीचकार तत् धौतदुकूलकल्पिताच्च निचोलकात् अकोषीत्। (६) आकृष्यमाणे एव च यस्मिन् अतिसितमहसि सरभसम् अहासि इव हरेण रसातलात् उदलासीव (७) शेषफणिफणाफलकमण्डलेन अस्थायि इव चक्रीभूय अन्तरिक्षे क्षीरोदेन अघटीव गगनाङ्गने गोष्ठीबन्धः शारदेन वलाहकव्यूहेन (८) विश्रा-

---

(३) प्रचेता इव वरुण इव। छायया अनातपेन। यः चतुरर्णवाधिपतिः तमेवासौ सेवते, अतः त्वमेव तथा भविष्यसीति तव एतद्युक्तमिति भावः।

(४) सप्तार्चिः अग्निः। पृषदश्वः वायुः। विवृत्य मुखं परावर्त्त्येत्यर्थः।

(५) ऊर्द्धीचकार उद्धृतवानित्यर्थः। धौतेति धौतेन दुकूलेन कल्पितात् रचितात् निचोलकात् आवरणवस्त्रात् अकोषीत् निष्कोषितवान्।

(६) आकृष्यमाणे निष्कृष्यमाणे यस्मिन् आतपत्रे। अतिसितमहसि अतिशीतलत्विषि। हरेण शिवेन अहासि इव हसितमिव। रसातलात् पातालात्। उदलासि इव उल्लसितमिव।

(७) शेषेति। शेषफणी अनन्तनागः तस्य फणाफलकमण्डलं फणासमूहः तेन। अस्थायि इव स्थितमिव। चक्रीभूय मण्डलीभूय। अघटि इव घटित इव रचित इव इत्यर्थः। गोष्ठीबन्धः समाजः। शारदेन शरत्कालीनेन निर्जलत्वात् शुभ्रेण इति भावः वलाहकव्यूहेन मेघमण्डलेन।

न्तम् इव विततपक्षतिना वियति पितामहविमानहंसयूथेन अत्रिनेत्रनिर्गतस्य (९) धवलधाममण्डलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः प्रत्यक्षीकृत इव उद्गमनक्षणो नारायणनाभिपुण्डरीकस्य आहित इव (१०) कौमुदीप्रदोषदर्शनानन्दतृप्तिरक्ष्णाम् उदमाङ्क्षीत् इव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे (११) परिवर्त्तित इव दिवसः पौर्णमासीनिशया मन्दमन्दमिन्दूदयसन्देहदूयमानमानसैः विघटितं (१२) घटमानचञ्चुच्युतमृणालकोटिभिः आसन्नकमलिनीचक्रवाकमिथुनैः (१३) शरज्जलधरपटलाशङ्कासङ्कोचितकेकारवमूकमुखपुटैः पराङ्मुखीभूतं भवनशिखण्डि-

---

(८) विश्रान्तमिव विश्रामः कृत इव। विततपक्षतिना विस्तृतपक्षेण। वियति आकाशे। पितामहविमानहंसयूथेन ब्रह्मणो रथवाहनहंससङ्घेन। अत्रिनेत्रनिर्गतस्य अत्रिमुनेः नेत्रात् निर्गतस्य ज्योतिष इति भावः।

(९) धवलेति। धवलं शुभ्रं धाममण्डलं परिधिः तेन मनोहरः रमणीयः। कुमुदबन्धोः चन्द्रस्य जन्मदिवस इव उत्पत्तिदिनमिव। प्रत्यक्षीकृत इव साक्षात्कृत इव उद्गमनक्षणः उत्पत्तिक्षणः। आहित इव जनित इव।

(१०) कौमुदीति। कौमुदीप्रदोषः चन्द्रिकारजनी तस्य दर्शनेन य आनन्दः तेन तृप्तिः प्रीतिः। अक्ष्णां चक्षुषाम्। उदमाङ्क्षीदिव उत्थितमिव मन्दाकिनीपुलिनमण्डलं स्वर्गङ्गासैकतमण्डलम्। अम्बरोदरे गगनोदरे।

(११) परिवर्त्तित इव विनिमीत इव। इन्द्विति इन्दोश्चन्द्रस्य उदयः तस्मिन् सन्देहेन दूयमानं सन्तप्यमानं मानसं येषां तैः।

(१२) घटमानेति। घटमानायाः मुद्रितायाः चञ्च्वाः च्युता मृणालकोटिः येषां तैः। आसन्नेति आसन्ना या कमलिनी सरसी तस्याः चक्रवाकमिथुनैः चक्रद्वन्द्वैः विघटितं विच्छिन्नमिवेति प्रतीयमानोत्प्रेक्षा।

(१३) शरदिति। शरदि यत् जलधरपटलं मेघमण्डलं निर्दृष्टत्वात् शुभ्रमिति भावः तस्य आशङ्कया सङ्कोचितेन केकारवेण मूकानि निःशब्दानि मुखपुटानि

मण्डलैः प्रवुद्धम् (१४) आबद्धचन्द्रानन्दोद्दामोद्दलद्दलपुटाट्टहासविशदं कुमुदषण्डैः।

(१५) चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत्तिलकम् इव त्रिभुवनस्य शैशवम् इव श्वेतद्वीपस्य अंशावतारम् इव शरदिन्दोः हृदयम् इव धर्मस्य निवेशम् इव शशिलोकस्य दन्तमण्डलधवलं मुखमिव चक्रवर्त्तित्वस्य (१६) मौक्तिकजालपरिकरसितं सीमन्तचक्रमिव दिवः (१७) बहलज्योत्स्नाशुक्लोदरमैन्दवम् इव परिवेशवलयं (१८) शौक्ल्यहसितशङ्खश्रीकं श्रवणमण्डलम् इव निश्चलतां गतमैरावतस्य (१९) श्वेत-

---

येषां तथाभूतैः भवनशिखण्डिमण्डलैः गृहमयूरनिचयैः पराङ्मुखीभूतं वैमुख्यं गतमिवेति प्रतीयमानोत्प्रेक्षा। प्रवुद्धं विकसितम् अत्रापि तथोत्प्रेक्षा।

(१४) आवद्धेति। आवद्धः निहितः चन्द्रे य आनन्दः तस्य उद्दामेन औत्कण्ठ्येन उद्दलन्ति विकासं गच्छन्ति यानि दलपुटानि ते एव अट्टहासाः हासविशेषाः तैः विशदं निर्मलं यथा तथा क्रियाविशेषणमिदम्। कुमुदषण्डैः कुसुमसङ्घैः।

(१५) चित्रीयमाणचेताः चमत्कृतचित्तः। दण्डानुसारेति दण्डानुसारेण अधिरोहतीति तथोक्तया। शरदिन्दोः शरच्चन्द्रस्य। हृदयमिव निर्मलत्वादिति भावः। निवेशमिव आयतनमिव शशिलोकस्य चन्द्रलोकस्य। दन्तमण्डलवत् धवलं दन्तमण्डलेन धवलञ्च। चक्रवर्त्तित्वस्य साम्राज्यस्य।

(१६) मौक्तिकेति। मौक्तिकानां जालेन दाम्नेति यावत् यः परिकरः वेष्टनं तेन सितम् उज्ज्वलं शुभ्रञ्च। सीमन्तचक्रमिव संयतकेशनिचयमिव सीमन्ताः संयताः कचा इत्यमरः। दिवः स्वर्गस्य।

(१७) बहलेति। बहलया प्रभूतया ज्योत्स्नया चन्द्रिकया शुक्लम् उदरम् अभ्यन्तरं यस्य तथाभूतम् ऐन्दवं चान्द्रमसं परिवेशमण्डलमिव परिधिमण्डलमिव।

(१८) शौक्ल्येनेति। शौक्ल्येन श्वेतगुणेन हसिता शङ्खस्य श्रीः कान्तिर्येन तथोक्तं श्रवणमण्डलमिव कर्णमण्डलमिव।

गङ्गावर्त्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य (२०) प्रचेतसश्चूड़ामणिमरीचिशिखाभिः इव श्लिष्टाभिर्मानसविसतन्तुमयीभिः चामरिकावलीभिः विरचितपरिवेशम् उपरि (२१) चक्रवर्त्तिलक्ष्मीनूपुरस्वनश्रवणदोहदनिश्चलेन इव लक्ष्मणा विततपत्रेण हंसेन सनाथीकृतशिखरं (२२) स्पर्शवता च प्रभावस्तम्भितेन मन्दाकिनीमृणालेन मुकुलितफणेन वासुकिना इव नीतेन दण्डतां द्योतमानं (२३) धवलिम्ना चालयत् इव नक्षत्रपथं प्रभाप्रवाहप्रथिम्ना प्लावयत् इव दिवसं समुच्छ्रायेण अधः कुर्वदिव दिवम् उपरिस्थितम् इव सर्वमङ्गलानां श्वेतमण्डपम् इव श्रियः स्तवकमिव ब्रह्म-

---

(१९) श्वेतेति। श्वेतगङ्गाया आवर्त्तवत् पाण्डुरं धवलम्। पदमिव आकाशमिवेत्यर्थः त्रिभुवनवन्दनीयं त्रिलोकीपूज्यं त्रिविक्रमस्य वामनावतारस्य विष्णोः इत्यर्थः।

(२०) प्रचेतसः वरुणस्य चूड़ामणिः शिरोरत्नं मस्तकस्थितमिति भावः तस्य मरीचिशिखाभिरिव मयूखाग्रैरिव श्लिष्टाभिः संसक्ताभिः मानसविसतन्तुमयीभिः मानससरोवरकमलमृणालतन्तुरचिताभिः चामरावलीभिः विरचितः कल्पितः परिवेशः परिधिर्यस्य तथोक्तम्।

(२१) चक्रेति। चक्रवर्त्तिनः सम्राजः या लक्ष्मीः तस्या नूपुरस्वनस्य मञ्जीररणितस्य श्रवणे यत् दोहदम् अभिलाषः तेन निश्चलः स्थिरः तेनेव। लक्ष्मणा चिह्नभूतेन विततपत्रेण विस्तृतपक्षेण हंसेन हंसाकारेणेत्यर्थः सनाथीकृतशिखरं संयुक्तशिरोभागम्।

(२२) स्पर्शवता सुखस्पर्शेनेत्यर्थः। प्रभावस्तम्भितेन प्रभावेण महिम्ना स्तम्भित निश्चलतां गतं तेन दृढ़ेनेति भावः मन्दाकिनीमृणालेन मन्दाकिन्याः पद्मनालेन मुकुलितफणेन सङ्कुचितफणामण्डलेन दण्डतां नीतेन वासुकिनेव सर्पराजेनेव द्योतमानं राजमानम्।

(२३) धवलिम्ना श्वैत्येन नक्षत्रपथम् अन्तरीक्षम्। प्रभेति प्रभाणां प्रवाहस्य

स्तम्भस्य नाभिमण्डलम् इव ज्योत्स्नायाः विषदं हासमिव कीर्त्तेः फेनराशिम् इव खड्गधाराजलानां यशःपटलम् इव शौर्य्यशालितायाः त्रैलोक्याद्भुतं महत् छत्रम्।

दृष्टे च तस्मिन् राज्ञा (२४) प्रथमे शेषमपि प्राभृतं प्रकाशयाञ्चक्रुः क्रमेण कार्माः तद्यथा पराईरत्नांशुशोणीकृतदिग्भागान् भगदत्तप्रभृतिख्यातपार्थिवपरागतान् आहतलक्षणान् अलङ्कारान् प्रभालेपिनाञ्च चूड़ामणीनां समुत्कर्षान् क्षीरोदधेः धवलताहेतून् इव हारान् (२५) अनेकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौचक्षमाणि क्षौमाणि (२६) कुशलशिल्पिलोकोल्लिखितानाञ्च शुक्तिशङ्खगल्वर्कप्रमुखानां पानभाजनानां निचयान्

---

सोतसः प्रथिमा विस्तारः तेन प्रावृण्वदिव आच्छादयदिव। समुच्छ्रायेण समुन्नत्या।

(२४) प्रथमे मुख्या इत्यर्थः कार्माः कर्मचारिणः परिजना इत्यर्थः। शेषमपि अन्यदपि इत्यर्थः प्राभृतम् उपदां प्रकाशयाञ्चक्रुः प्रकटितवन्तः। तद्यथा तथाहि। पराईेति पराईानाम् अत्युत्कृष्टानां रत्नानाम् अंशुभिः किरणैः शोणीकृता रक्तीकृता दिग्भागा यैः तथोक्तान् भगदत्तादिराजभिः परागतान् व्यवहृतान् आहतलक्षणान् गुणैः प्रसिद्धान् गुणैः प्रतीते तु कृतलक्षणाहतलक्षणावित्यमरः। प्रभालेपिनां कान्तिपूर्णानां समुत्कर्षान् अतिशयान् बहूनि तादृशानि चूड़ारत्नानि इति भावः।

(२५) अनेकेति। अनेकैः विविधैः रागैः रुचिराणि मनोज्ञानि वेत्रकरण्डानि वेत्रनिर्मितभाजनविशेषाः तैः तेषु वा कुण्डलीकृतानि सङ्कोचितानि शरचन्द्रमरीचिरुचि शरदिन्दुकिरणप्रभाणि शौचक्षमाणि क्षालनक्षमाणि क्षौमाणि वसनविशेषान्।

(२६) कुशलेति। कुशलैः निपुणैः शिल्पिलोकैः उल्लिखितानाम् उद्घर्षितानां प्रकृष्टानामिति यावत् शुक्तीति शुक्तयः मुक्तास्फोटाः मुक्तास्फटोऽस्त्रियां

(२७) निचोलकरचितरुचाञ्च रुचिरकाञ्चनपत्रभङ्गभङ्गुराणाम् अतिबन्धुरपरिवेशानां कार्दरङ्गचर्मणां सम्भारान् भूर्जत्वक्कोमलाः स्पर्शवतीः जातिपट्टिकाः (२८) चित्रपटानाञ्च म्रदीयसां चमूरुकोपधानादीन् विकारान् (२९) प्रियङ्गुप्रसवपिङ्गलत्वञ्चि च आसनानि वेत्रमयाणि अगुरुवल्कलकल्पितसञ्चयानि च सुभाषितभाञ्जि पुस्तकानि (३०) परिणतपाटलपटोलत्विंषि च तरुणहारीतहरिन्ति चौरचारीणि च पूगानां पल्लवलम्बीनि सरसानि फलानि (३१) सहकार-

---

युक्तिरित्यमरः। अङ्काः गल्वर्काः मसराख्या मणिभेदाः प्रमुखा येषां तथाभूतानां तत्प्रचितानामिति भावः पानभाजनानां पानपात्राणां निचयान् सङ्घान्।

(२७) रुचिरेति। रुचिरैः मनोज्ञैः काञ्चनपत्रभङ्गैः सौवर्णपत्ररचनाभिः भङ्गुराणि भङ्गिमन्ति तेषाम् अतिबन्धुरपरिवेशानाम् अतिशयेन उन्नतानताभोगानामित्यर्थः निचोलकैः आवरणवस्त्रैः रचिता रुचः प्रभा येषां तथोक्तानां कार्दरङ्गचर्मणां कार्दरङ्गदेशजमृगविशेषचर्मणां सम्भारान् निचयान्। भूर्जत्वक्कोमलाः भूर्जत्वच इव मृदुलाः स्पर्शवतीः सुखस्पर्शाः जातिपट्टिकाः उत्कृष्टानि जघनग्रन्थनसाधनानि सूत्राणीति भावः।

(२८) चित्रपटानां विचित्रवसनानां म्रदीयसाम् अतिमृदूनां चमूरुकोपधानादीन् चमूरुको मृगभेदः तदाकाराकारितोपधानादीन् विकारान् रूपान्तराणि।

(२९) प्रियङ्ग्विति। प्रियङ्गुप्रसवः प्रियङ्गुलतापुष्पं तद्वत् पिङ्गलाः त्वचो येषां तानि। अगुर्विति। अगुरुवल्कलेन अगुरुकाष्ठत्वचा कल्पितः रचितः सञ्चयः पत्रसमूहः येषां तथोक्तानि सुभाषितभाञ्जि सुवचनवन्तीत्यर्थः पुस्तकानि ग्रन्थान्।

(३०) परिणतेति। परिणतं परिपक्वम् अतएव पाटलं श्वेतरक्तं यत् पटोलं प्रसिद्धं तस्य इव त्विषः कान्तयः येषां तानि तरुणहारीतहरिन्ति तरुणः नवीनः यः हारीतः पक्षिविशेषः तद्वत् हरिन्ति श्यामलानि चौरचारीणि चौरोद्गारीणि पूगानां गुवाकतरूणां पल्लवलम्बीनि पल्लवयुतानीति भावः सरसानि अपरिपक्वानि इति भावः।

लतारसानाञ्च कृष्णागुरुतैलस्य च (३२) कुपितकपिकपोलकपिलकापोतिकापलाशकोशीकवचिताङ्गीः स्थवीयसीर्वैणवीर्नाडीश्च (३३) पट्टसूत्रप्रसेवकार्पितांश्च भिन्नाञ्जनकृष्णस्य कृष्णागुरुणः गुरुपरितापमुषश्च गोशीर्षचन्दनस्य (३४) तुषारशिलाशकलशिशिरस्वच्छसितस्य च कर्पूरस्य कस्तूरिकाकोशकानाञ्च (३५) पक्वफलजूटजटिलानाञ्च कक्कोलपल्लवानां लवङ्गपुष्पमञ्जरीणां जातीफलस्तवकानाञ्च राशीन् अतिमधुरमधुरसामोदनिर्हारिणीश्च उल्लककलशीः सितासितस्य च चामरजातस्य निचयान् (३६) अवलम्ब-

---

(३१) सहकारेति। सहकारलता आम्रतरुः तस्या रसाः तेषां लतासहकाररसानामिति पाठे लतारूपो यः सहकारः आम्रः तस्य रसाः तेषामित्यर्थः।

(३२) कुपितेति। कुपितस्य क्रुद्धस्य कपेः वानरस्य कपोलः गण्डः तद्वत् कपिला या कपोतिका ओषधिविशेषः तस्याः पलाशानां पत्राणां कोशीभिः समूहैः कवचितानि आवृतानि अङ्गानि अवयवाः यासां ताः स्थवीयसीः अतिस्थिराः दृढा इत्यर्थः वैणवीः वंशसम्बन्धिनीः नाडीः पात्रविशेषान्।

(३३) पट्टेति। पट्टसूत्राणां प्रसेवकाः भाजनविशेषाः तेषु अर्पिताः तान्। भिन्नाञ्जनकृष्णस्य भिन्नं मर्दितं यदञ्जनं तद्वत् कृष्णं तस्य। गुरुपरितापमुषः गुरुर्महान् परितापः तं मुष्णाति हरतीति तथोक्तस्य गोशीर्षचन्दनस्य चन्दनविशेषस्य।

(३४) तुषारेति। तुषारशिला हिमशिलाः तासां शकलं खण्डं तद्वत् शिशिरं शीतलं स्वच्छं निर्मलं सितं शुभ्रं तस्य। कस्तूरिकाकोशकानां कस्तूरिकानाभीनां मृगनाभीनामित्यर्थः।

(३५) पक्वेति। पक्वानां फलानां जूटैः समूहैः जटिलाः युक्ताः तेषां कक्कोलपल्लवानां कक्कोलतरुकिसलयानां लवङ्गपुष्पमञ्जरीणां लवङ्गलताकुसुमानां वल्लरीणां जातीफलस्तवकानां जातीफलगुच्छानां राशीन् सञ्चयान्। अतीति अतिमधुरायाः मधुरसायाः द्राक्षायाः मृद्वीका गोस्तनी द्राक्षामाध्वी मधुरसेति च इत्यमरः आमोदं निर्हरन्तीति तथोक्ताः उल्लककलशीः उल्लकः सुगन्धिफलविशेषरसः तस्य कलशीः कुम्भान्। सितासितस्य कृष्णस्य श्वेतस्य च।

मानतूलिकालावुकांश्च लिखितानालेख्यफलकसम्पुटान् (३७) कुतूहलकान्ति कनकशृङ्खलानियमितग्रीवाणां किन्नराणाञ्च वनमानुषाणाञ्च जीवञ्जीवकानाञ्च जलमानुषाणाञ्च मिथुनानि (३८) परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान् गेहपरिसरणपरिचिताश्च चमरीः (३९) चामीकररसचित्रवेत्रपञ्जरान्तर्गतांश्च सुबहुसुभाषितजल्पाकजिह्वांश्च शुकशारिकाप्रभृतीन् पक्षिणः (४०) प्रवालपञ्जरगतांश्च चकोरान् जलहस्तिनाम् उदग्रकुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्डकुण्डलानि ।

राजा तु छत्रदर्शनात् प्रहृष्टहृदयः (४१) प्रथमप्रयाणे

---

(३६) अवलम्बमानेति । अवलम्बमानाभिः लम्बमानाभिः तूलिकाभिः चित्रकर्मसाधनीभिः सहिता अलावुकाः तुम्ब्यः तान् । लिखितेति लिखिताः चित्रिताः अनालेख्याः अचित्रिताः ये फलकसम्पुटाः चित्राधारकाष्ठफलकविशेषाः तान् ।

(३७) कुतूहलकान्ति कौतुकावहानि । कनकेति कनकशृङ्खलया काञ्चनदाम्ना नियमिता निबद्धा ग्रीवा येषां तथोक्तानां किन्नराणां कुत्सितदेवयोनिभेदानां जीवञ्जीवकानां चकोराणां मिथुनानि द्वन्द्वानि ।

(३८) परिमलेति । परिमलेन सौरभेण आमोदिताः ककुभः दिशः यैः तथाभूतान् कस्तूरिकाकुरङ्गान् कस्तूरीमृगान् । गेहेति गेहेषु गृहेषु परिचरणे विचरणे परिचिता अभ्यस्ताः ताः ।

(३९) चामीकरेति । चामीकरस्य स्वर्णस्य रसेन चित्राणि रञ्जितानि वेत्राणि तेषां पञ्जराणि तद्रचितानि पञ्जराणि इत्यर्थः तेषाम् अन्तर्गताः तान् सुबहूनि सुभाषितानि तेषां जल्पाका जिह्वा येषां तान् ।

(४०) प्रवालेति । प्रवालो विद्रुमाख्यरत्नविशेषः तस्य पञ्जराणि तत्र गताः तान् । जलहस्तिनां जलचराणां हस्तिनाम् उदग्रेषु उन्नतेषु कुम्भेषु यानि मुक्ताफलानि तेषां दाम्ना स्रजा दन्तुराणि उज्ज्वलानीति भावः दन्तकाण्डकुण्डलानि दशनस्तम्भरचितानि कर्णभूषणविशेषान् ।

शोभननिमित्तमिति मनसा जग्राह हंसवेगञ्च प्रीयमाणो बभाषे भद्र! सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्य अस्य महातपत्रस्य महार्णवात् इव कुमुदबान्धवस्य कुमारात् लाभो न विस्मयाय। बालविद्याः खलु महताम् उपक्रतय इति। (४२) अपनीते च तस्मात्प्रदेशात् प्राभृतसम्भारे क्षणम् इव स्थित्वा हंसवेग! विश्रम्यताम् इति प्रतीहारभवनं विसर्जयाम्बभूव। स्वयमपि उत्थाय स्नात्वा मङ्गलाकाङ्क्षी प्राङ्मुखः प्राविशत् आभोगस्य छायाम्।

अथ विशत एव अस्य (४३) छायाजन्मना जड़िम्ना चूड़ामणिताम् अनीयत इव शशिबिम्बम् (४४) अम्बुबिन्दुमुचः चुचुम्बुः इव चन्द्रकान्तमणयो ललाटतटं कर्पूररेणव इव व्यलीयन्त लोचनयुगले (४५) गलत्तुहिनकणनिकरकृतनीहारा हारा इव अबध्यन्त (४६) हरिचन्दनरसासारेण इव अपाति सन्ततम् उरसि कुमुदमयम् इव हृदयम् अभवत् अति-

---

(४१) प्रथमप्रयाणे प्रथमयात्रायाम्। शोभननिमित्तं शुभलक्षणम्। सकलरत्नधाम्नः सर्वरत्नाकरस्य परमेश्वरस्य हरस्य चक्रवर्त्तिनश्च शिरोधारणार्हस्य मस्तकधारणयोग्यस्य। कुमुदबान्धवस्य चन्द्रस्य।

(४२) अपनीते अपसारिते भाण्डागारं प्रापिते इति भावः प्राभृतसम्भारे उपदासङ्घे आभोगस्य तदाख्यस्य महातपत्रस्य।

(४३) छायाजन्मना अनातपजातेन जड़िम्ना जाड्येन शैत्येन इत्यर्थः।

(४४) अम्बुबिन्दुमुचः जलकणस्राविणः। चुचुम्बुरिव पस्पृशुरिव। व्यलीयन्त विलीनाः विलिप्ता इत्यर्थः।

(४५) गलदिति। गलद्भिः स्रवद्भिः तुहिनकणानां हिमबिन्दूनां निकरैः समूहैः कृताः विरचिताः नीहारा हिमकणा येषु तथाविधाः हिमकणनिर्मिता इत्यर्थः अबध्यन्त कण्ठे व्यराजन्तेति भावः।

शिशिरम् अन्तर्हितहिमशिला इव विलीयमाना व्यलिम्पत् अङ्गानि। जातविस्मयश्च अकरोत् मनसि (४७) एकमजर्य्यं सङ्गतम् अपहाय कास्ति अन्या प्रतिकौशलिकेति। आहार-काले च हंसवेगाय (४८) धवलकर्पटप्रावृतधौतनारिकेलपरिगृहीतं विलिप्तशेषं चन्दनम् अङ्गस्पृष्टे च वाससी (४९) शरत्तारकाकारतारमुक्तास्तवकितपदं परिवेशं नाम कटि-सूत्रम् (५०) अतिमहार्हपद्मरागालोकलोहितीकृतदिवसं च तरङ्गकं नाम कर्णाभरणं प्रभूतञ्च भोज्यजातं प्राहिणोत्। एवंप्रायेण च क्रमेण जगाम दिवसः।

(५१) ततः कटकस्थबलबहलधूलिधूसरितवपुरंशुमाली मलीमसम् अङ्गमिव क्षालयितुम् अपरजलनिधिम् अवातरत्।

---

(४६) हरिचन्दनेति। हरिचन्दनरसानाम् आसारः धारासम्पातः तेनैव अपाति पतितम्। सन्ततम् अजस्रम् उरसि वक्षसि।

(४७) एकं केवलम् अजर्य्यम् अक्षयं सङ्गतं मैत्रीम् अपहाय त्यक्त्वा अन्या अपरा प्रतिकौशलिका प्रत्युपकृतिः का अस्ति ? नैव काप्यस्तीत्यर्थः।

(४८) धवलेति। धवलेन धौतेन इत्यर्थः कर्पटेन वस्त्रेण प्रावृतम् आच्छादितं यत् धौतं नारिकेलं नारिकेलसमुद्गकमित्यर्थः तेन परिगृहीतं तत्रार्पितमिति यावत् विलिप्तशेषं स्वानुलिप्तावशिष्टमित्यर्थः। अङ्गस्पृष्टे अङ्गधृते।

(४९) शरदिति। शरदः तारका नक्षत्रं तस्या आकार इव तारा महत्यः या मुक्ता मुक्ताफलानीत्यर्थः तैः स्तवकितं ग्रथितं पदं अवयव इत्यर्थः यस्य तथाभूतं परिवेशं नाम परिधिरूपत्वादिति भावः।

(५०) अतीति। अतिमहार्हस्य महामूल्यस्य पद्मरागस्य रत्नविशेषस्य कर्णाभरणनिहितस्य इति भावः आलोकेन उद्योतेन लोहितीकृतः रक्तीकृतः दिवसो येन तथाभूतं तरङ्गकं नाम आन्दोलनादिति भावः कर्णाभरणं कर्णकुण्डलम्।

(५१) कटकेति। कटकं हस्त्यश्वरथपादातसन्निवेशः तस्मिन् तिष्ठतीति कटकस्थं यत् बलं सैन्यं तस्य बहलाभिः प्रभूताभिः धूलिभिः रजोभिः धूसरितं

( ५२ ) आभोगातपत्रप्रदानवार्त्तामिव निवेदयितुं वरुणाय वारुणीं दिशम् अयासीत्। ( ५३ ) मुकुलायमानसकलकमलवना प्रमुख एव बद्धसेवाञ्जलिपुटा इव सद्वीपा भूः अभूत् भूपतेः। नृपानुरागमय इव ( ५४ ) निखिलजीवलोकलोकाञ्जलिबन्धबन्धुर्जगत् जग्राह सन्ध्यारागः। ( ५५ ) गौड़ापराधशङ्किनी इव श्यामतां प्रपेदे दिक् प्राची। ( ५६ ) प्रचिततिमिरनिवहा निर्वाणान्यनृपप्रतापानलकलापा इव कालिमानम् अतानीत् मेदिनी। ( ५७ ) मेदिनीशप्रदोषास्थानपुष्पनिकरम् इव ( ५८ ) विकचतगररुचिरम्

---

वपुः शरीरं यस्य तथाभूतः अंशुमाली सूर्य्यः। मलीमसं मलिनम्। अपरजलनिधिं पश्चिमसागरम्।

(५२) आभोगेति। आभोगं नाम आतपत्रं तस्य प्रदानं कुमारेण प्राभृतीकरणमित्यर्थः तस्य वार्त्ता संवादः तामिव। वारुणीं वरुणाधिष्ठितां प्रतीचीमित्यर्थः।

(५३) मुकुलायमानेति। मुकुलायमानं निमीलदिति भावः सकलं कमलवनं यस्या यस्यां वा तथाभूता प्रमुख एव अग्र एव बद्धसेवाञ्जलिपुटा इव सेवार्थं रचिताञ्जलिपुटा इव इत्यर्थः। सद्वीपा अष्टादशद्वीपवती।

(५४) निखिलेति। निखिलस्य सकलस्य जीवलोकस्य संसारस्य लोकानाम् अञ्जलिबन्धस्य बन्धुः मित्रं कृताञ्जलिभिः लोकैः सन्ध्या उपास्यते इति भावः। जगत् जग्राह आचक्राम। सन्ध्याकालः संवृत्त इति भावः।

(५५) गौड़ेति। गौड़स्य गौड़राज्याधिपस्य इत्यर्थः अपराधात् राज्ञः सोदरबधादिति भावः शङ्कते बिभेतीति तथोक्तामिव श्यामतां मलिनतां प्रपेदे प्राप।

(५६) प्रचितेति। प्रचितः उदितः तिमिरनिवहः अन्धकारनिचयः यस्या यस्यां वा तथोक्ता। निर्वाणेति निर्वाणः शान्तः विनष्ट इत्यर्थः अन्येषां नृपाणां राज्ञां प्रतापानलकलापः प्रतापाग्निसमूहः यस्यां तथाभूता इव कालिमानं कृष्णत्वं तिमिराच्छन्नत्वमिति भावः। अतानीत् विस्तारयामास।

(५७) मेदिनीति। मेदिनीशस्य भूपतेः प्रदोषास्थानं रजनीमुखसभामण्डपं तस्य पुष्पनिकरः पुष्पनिचयः तमिव।

अवचकरु: उडुनिकरम् अविरलं ककुभः। (५९) स्कन्धावारगन्धगजमदामोदधावितस्य इव मार्गो वियति विरराज रजःपाण्डुः ऐरावतस्य। (६०) कुपितनृपव्याघ्राघ्राताम् उपसृष्टाम् इव पौरुहुतीं विहाय विहायस्तलम् आरुरोह रोहिणीरमणः। (६१) प्रयाणवार्त्ता इव मानिनीनां हृदयभेदिन्यो ययुः इन्दुदीधितयो दश दिशः। (६२) नवनृपदण्डयात्रात्रासातुरा इव तरलितसत्त्ववृत्तयः चुक्षुभुः पतयो वाहिनीनाम्। चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि

---

(५८) विकचेति। विकचैः तगरैः पुष्पविशेषैः रुचिरं मनोज्ञं विकचानि प्रस्फुटानि तगराणि तदाख्यकुसुमानि तद्वत् रुचिरं मनोहरञ्च। उडुनिकरं नक्षत्रनिचयम् अवचकरुः आविश्चक्रुः। अविरलं सान्द्रं ककुभः दिशः।

(५९) स्कन्धावारेति। स्कन्धावारस्य कटकस्य ये गन्धगजाः गन्धप्रधाना हस्तिनः तेषां मदामोदेन मदवारिसौरभेण धावितस्य इव तं प्रति क्रोधादिति भावः रजःपाण्डुः रजोभिः धवलः।

(६०) कुपितेति। कुपितेन नृपव्याघ्रेण राजश्रेष्ठेन व्याघ्रश्रेष्ठेन च आघ्राता आक्रान्तेति यावत् ताम् उपसृष्टामिव उपद्रुतामिव पौरुहुतीं पुरुहूतेन इन्द्रेण अधिष्ठितां प्राचीमित्यर्थः। विहायस्तलम् अन्तरीक्षतलम्। रोहिणीरमणः चन्द्रः रोहिणी गौः तस्या रमणः वृषश्च। वृषभश्च कुपितव्याघ्रशालिनीं सोपद्रवां दिशं विहाय स्थानान्तरं गच्छतीति भावः।

(६१) प्रयाणवार्त्ता इव युद्धयात्राप्रवृत्तय इव मानिनीनां प्रियान् प्रति प्रणयकोपवतीनां हृदयभेदिन्यः चित्तव्यथादायिन्यः भर्तॄणां भटानां युद्धगमनेन विरहाशङ्कित्वादन्यत्र उद्दीपकत्वादिति भावः इन्दुदीधितयः चन्द्रकिरणाः।

(६२) नवेति। नवस्य नूतनस्य नृपस्य दण्डयात्रा तया त्रासः तेन आतुरा इव कातरा इव। तरलितेति तरलिता चलिता सत्त्वानां प्राणिनां सत्त्वस्य धैर्य्यस्य च वृत्तिर्येषां तथाभूताः वाहिनीनां सैनिकानां नदीनाञ्च पतयः चुक्षुभुः विव्यथिरे।

(६३) विमुक्तसर्वोर्वीतिमिरसन्ततिः। प्रतिसामन्तचक्षुषाम् इव ननाश निद्रा कुमुदवनानाम्।

अस्याञ्च वेलायां (६४) विततवितानतलवर्त्ती नरेन्द्रो यात तावत् इति विसर्ज्य अनुजीविनो हंसवेगम् आदिष्टवान् कथय सन्देशमिति। प्रणम्य स कथयितुं प्रास्तावीत् देव! पुरा (६५) वराहसम्पर्कसम्भूतगर्भया भगवत्या भुवा नरको नाम सूनुः असावि रसातले। वीरस्य यस्य अभवन् बाल्य एव पादप्रणामप्रणयिनः चूड़ामणयो लोकपालानाम्। यस्य च (६६) त्रिभुवनभुजो भुजशौण्डस्य भवनकमलिनीचक्रवाकी-कोपकुटिलकटाक्षेक्षितोऽपि (६७) भयचकितारुणपरिवर्त्तित-रथो न आज्ञया विना रविः अस्तम् अव्राजीत्। यश्च वरुणस्य (६८) वहिर्वृत्ति हृदयम् इदम् आतपत्रम् अहार्षीत्। महा-

---

(६३) विमुक्तेति। विमुक्ता सर्वा उर्वी पृथ्वी यया तथाभूता तिमिरसन्ततिः अन्धकारसमूहः। प्रतिसामन्तचक्षुषामिव प्रतिपक्षनृपतिनयनानामिव। निद्रा सङ्कोचः स्वापश्च।

(६४) विततेति। विततस्य उपरि विस्तृतस्य वितानस्य उल्लोचस्य तलवर्त्ती तलस्थितः। यात गच्छत। प्रास्तावीत् प्रचक्रमे।

(६५) वराहेति। वराहः भगवतो विष्णोरवतारविशेषः तस्य सम्पर्केण सङ्गेन सम्भूतः सञ्जातः गर्भः यस्याः तथाभूतया भुवा पृथिव्या। यस्य नरकस्य। लोक-पालानामिन्द्रादीनाम्। येन लोकपालाः सर्वे निर्जिता इति भावः।

(६६) त्रिभुवनभुजः। त्रिलोकीभोगिनः त्रिलोकीश्वरस्य इति यावत्। भुज-शौण्डस्य बाहुशालिन इति यावत्। भवनेति भवनकमलिनी गृहसरसि पद्मिनी तत्र या चक्रवाकी तस्याः कोपेन कुटिलः यः कटाक्षः तेन ईक्षितोऽपि दृष्टोऽपि अस्तगमनोत्सुकोऽपि इति भावः।

(६७) भयेति। भयेन चकितः त्रस्तः योऽरुणः स्वसारथिः तेन परिवर्त्तितः प्रत्यावर्त्तितः रथः यस्य तथाभूतः। अव्राजीत् अगमत्।

त्मन: तस्यान्वये भगदत्तपुष्पदत्तवप्पदत्तप्रभृतिषु व्यतीतेषु बहुषु (६९) मेरूपमेषु महत्सु महीपालेषु प्रपौत्रो महाराजभूतिवर्मण: पौत्र: चन्द्रमुखवर्मण: पुत्रो देवस्य कैलासशिखरस्थिते: स्थितिवर्मण: सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशि: मृगाङ्क इति यं जना जगु:। (७०) योऽयमजेनैवाजायत सहैवाहङ्कारेण। यश्च बाल एव प्रीत्या द्विजातीन् अप्रीत्या च अरातीन् समग्रान् (७१) प्रतिग्रहान् अग्राहयत्। यत्र च अतिदुर्लभं (७२) लवणालयसम्भूताया: परं माधुर्य्यम् अभूल्लक्ष्म्या:। तथाच यो (७३) वाहिनीनाथानां ग्रहान् जहार न रत्नानि पृथिव्या: स्थैर्य्यं जग्राह न करम् (७४) अवनिभृतां गौरवमादत्त न नैष्ठुर्य्यम्। तस्य च सुगृहीतनाम्नो देवस्य देव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्मापरनामा तनय: शान्तनोर्भागीरथ्यां भीष्म इव कुमार: समभवत्। अयमस्य च शैशवादारभ्य (७५) सङ्कल्प: स्थेयान स्थाणुपादारविन्दद्वया-

---

(६८) बहिर्वृत्ति बहि:स्थितम्। अन्वये वंशे।

(६९) मेरूपमेषु सुमेरुतुल्येषु। जगु: कीर्त्तयामासु:।

(७०) यमजेनेव युग्मजातेनेव।

(७१) प्रतिग्रहान् दानीयद्रव्याणि सैन्यपश्चाद्भागांश्च पराजयव्यलीकानीति भाव:।

(७२) लवणालयसम्भूताया: लवणसागरसमुत्पन्नाया:।

(७३) वाहिनीनाथानां प्रतिसेनापतीनां समुद्राणाञ्च ग्रहान् विजयग्रहान् इत्यर्थ:। स्थैर्य्यं चिरस्थितिम्।

(७४) अवनिभृतां राज्ञां पर्वतानाञ्च गौरवं गुरुत्वम्। नैष्ठुर्य्यं क्रूरत्वं काठिन्यञ्च।

ऋते न अहम् अन्यं नमस्कुर्य्यामिति। ईदृशश्च अयं मनोरथ: त्रिभुवनदुर्लभ: त्रयाणाम् अन्यतमेन सम्पद्यते सकलभुवनविजयेन वा मृत्युना वा यदि वा (७६) प्रचण्डप्रतापज्वलनदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण। मैत्री च प्राय: (७७) कार्य्यव्यपेक्षिणी क्षौणीभृताम्। कार्य्यञ्च कीदृशं नाम तद्भवेत् यत (७८) उपन्यस्यमानम् उपनयेत् मित्रतां देवम्। देवस्य हि यशांसि (७९) सञ्चिचीषतो वहिरङ्गभूतानि धनानि। बाहावेव च केवले निषसस्य शेषावयवानामपि साहायकसम्पादनमनोरथो निरवकाश: किमुत वाह्यजनस्य? (८०) चतु:सागरग्रासग्रहणघस्मरस्य पृथिव्येकदेशदानोपन्यासेनापि का तुष्टि:? अभिरूपकन्या-

---

(७५) सङ्कल्प: अभिलाष: वासनेति यावत् स्थेयान् अतिस्थिर: दृढतर इति यावत्। स्थाण्विति स्थाणोर्हरस्य पादारविन्दद्वयात् चरणारविन्दयुगलात् ऋते विना। अन्यतमेन केनचिदेकेन।

(७६) प्रचण्डेति। प्रचण्डेन प्रतापज्वलनेन प्रतापवह्निना दिशां दाहो येन तथाभूतेन। देवोपमेन देवसदृशेन।

(७७) कार्य्यव्यपेक्षिणी। कार्य्यानुरोधिनी। क्षौणीभृतां राज्ञाम्।

(७८) उपन्यस्यमानं कथ्यमानम् उपनयेत् प्रापयेत्।

(७९) सञ्चिचीषत: सञ्चेतुमिच्छत: सञ्जिघृक्षत इत्यर्थ:। वहिरङ्गभूतानि अनायासस्थानीति भाव:। बाहावेव बाहुवीर्य्य एव निषसस्य शेषावयवानामपि बाहुव्यतिरिक्तानाम् अङ्गानामिति यावत् साहायकसम्पादनमनोरथ: साहाय्यकरणाभिलाष: निरवकाश: अवकाशरहित: निरर्थक इति भाव:। वाह्यजनस्य वहिस्थितस्य सैन्यादेरिति भाव:।

(८०) चतु:सागरेति। चत्वार: सागरा एव ग्रासा: तेषां ग्रहणे घस्मर: लोलुप इति भाव: तस्य। पृथिवीति पृथिव्या एकदेशस्य दानोपन्यासेन दानकीर्त-

विश्राणनविलोभनमपि (८१) लक्ष्मीमुखारविन्ददर्शनदुर्ललितदृष्टेः अकिञ्चित्करम्। एवम् (८२) अघटमानसकलोपायसम्पादितपदार्थेऽस्मिन् प्रार्थनामात्रमेव केवलम् अनुरुध्यमानः शृणोतु देवः। (८३) प्राग्ज्योतिषेश्वरो हि देवेन एकपिङ्ग इव अनङ्गद्विषा दशरथ इव गोत्रभिदा धनञ्जय इव पुष्कराक्षेण (८४) वैकर्त्तन इव दुर्य्योधनेन मलयानिल इव माधवेन अजर्य्यं सङ्गतम् इच्छति। यदि च देवस्यापि मैत्रीयति हृदयम् अवगच्छति च पर्य्यायान्तरितं दास्यम् अनुतिष्ठन्ति सुहृद इति ततः किमास्यते समाज्ञाप्यताम् अनुभवतु विष्णोर्मन्दरगिरिः इव (८५) विकटकेयूरकोटिमणिविघट्टनक्वणितकटकमणिशिलाशकलानि गाढोपगूढानि

---

नेन। अभिरूपेति अभिरूपायाः सुन्दर्य्याः कन्याया विश्राणनं दानं तेन विलोभनं लोभप्रदर्शनम्।

(८१) लक्ष्मीति। लक्ष्म्या मुखारविन्दस्य दर्शनेन दुर्ललिता दुर्विनीता अन्यदर्शननिरभिलाषेति भावः दृष्टिः यस्य तथाभूतस्य।

(८२) अघटमानेति। अघटमानेन दुर्घटेनेति यावत् सकलेन उपायेन सम्पादितं पदमेव अर्थः विषयः तस्मिन्। अनन्योपायसाध्ये इति भावः अस्मिन् भवन्मैत्रीकरणे इति भावः।

(८३) प्राग्ज्योतिषेश्वरः कामरूपेश्वरः। देवेन महाराजाधिराजेन भवतेति भावः। एकपिङ्ग इव कुवेर इव अनङ्गद्विषा हरेण। गोत्रभिदा इन्द्रेण। धनञ्जय इव अर्जुन इव पुष्कराक्षेण पुण्डरीकाक्षेण कृष्णेनेत्यर्थः।

(८४) वैकर्त्तन इव सूर्य्यसुतः कर्ण इव। माधवेन वसन्तेन। मैत्रीयति मैत्रीमिच्छति तथापि हृदयं सुहृदः मित्राणि पर्य्यायान्तरितं मैत्रीनाम्ना व्यवहितमित्यर्थः दास्यं कैङ्कर्य्यम् अनुतिष्ठन्ति इति आगच्छति जानाति च। ततः तस्मात् किम् आस्यते कथं तूष्णीं स्थीयते इत्यर्थः।

(८५) विकटेति। विकटस्य उन्नतस्य केयूरकोटिमणेः अङ्गदाग्रनिहितरत्नस्य

देवस्य कामरूपाधिपतिः। (८६) अस्मिन्नाढ्ये: अनवरतविमललावण्यसौभाग्यसुधानिर्झरिणि मुखशशिनि चिरात् चक्षुषी लालयतु प्राग्ज्योतिषेश्वरश्रीः। न अभिनन्दति चेत् देवः प्रणयम् आज्ञापयतु किं कथनीयं मया स्वामिन इति।

विरतवचसि तस्मिन् भूपालः (८७) पूर्वोपलब्धैः एव गुरुभिः गुणैः आरोपितबहुमानः कुमारे सुदूरमाभोगातपत्रव्यतिकरेण तु परां कोटिम् आरोपिते प्रेम्णि लज्जमान इव सादरं जगाद हंसवेग! कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ गुणिनां प्राग्रहरे परोक्षसुहृदि स्निह्यति मद्विधस्य अन्यथा स्वप्नेऽपि प्रवर्त्तेत मनः। (८८) सकलजगदुत्तापनपटवोऽपि शिशिरायन्ते त्रिभुवननयनानन्दकरे कमलाकरे कराः तिग्मतेजसः। सुबहुगुणक्रीताश्च के वयं सख्यस्य। सज्जनमाधुर्य्याणामभृतदास्यो दश दिशः।

---

विघट्टनेन सङ्घर्षेण क्षणितानि रणितानि कटकस्य नितम्बस्य अङ्गदस्य च मणिशिलाशकलानि रत्नपाषाणखण्डानि येषु तथाभूतानि गाढोपगूढाणि गाढालिङ्गनानि।

(८६) अस्मिन् अनवरतम् अविरतं विमलं लावण्यमेव सौभाग्यं तदेव सुधा अमृतं तस्या निर्झरः प्रस्रवः तद्वति मुखशशिनि वदनचन्द्रे प्राग्ज्योतिषेश्वरस्य श्रीः लक्ष्मीः चिरात् चिरकालं आढ्यैः चक्षुषी लालयतु चिरं तृप्तिं लभताम् इत्यर्थः। प्रणयं प्रार्थनाम्।

(८७) पूर्वोपलब्धैः पूर्वविदितैः। आरोपितबहुमानः जनितबह्वादरः। सुदूरमत्यर्थं परां कोटिं परमोत्कर्षम् आरोपिते नीते। प्राग्रहरे श्रेष्ठे। परोक्षसुहृदि अप्रत्यक्षमित्रे। अन्यथा विरुद्धमिति भावः।

(८८) सकलेति। सकलानां जगताम् उत्तापने पटवः समर्थाः। शिशिरायन्ते शीतलायन्ते। कराः किरणाः हस्ताश्च तिग्मतेजसः सूर्य्यस्य। अभृतदास्यः अवेतनकिङ्कर्यः।

(८८) एकान्तावदातोत्तानस्वभावसम्भृतसादृश्यस्य कुमुदस्य कृते केनाभिहितः शिशिररश्मिः। श्रेयांश्च (८०) संकल्पः कुमारस्य। स्वयं बाहुशाली मयि च समालम्बितशरासने सुहृदि हराद्दते कमन्यं नमस्यति। संवर्द्धिता मे प्रीतिः अमुना संकल्पेन। अवलेपिनि पशौ अपि केसरिणि बहुमानो हृदयस्य किं पुनः सुहृदि। तत् तथा यतेथाः यथा न चिरमियम् अस्मान् क्लेशयति कुमारदर्शनोत्कण्ठेति।

हंसवेगस्तु विज्ञापयाम्बभूव देव! किमपरम् इदानीं क्लेशयति (८१) अभिजातम् अभिहितं देवेन। सेवाभीरवो हि सन्तः तत्रापि विशेषेण अयम् अहङ्कारधनो वैष्णवो वंशः। आस्तां तावत् अस्मत्स्वामिवंशः पश्यतु देवः पुरुषस्य हि सेवां प्रति (८२) दुर्जनन्या इव अतिव्रढया दुर्गत्या वा अभिमुखीक्रियमाणस्य (८३) कुटुम्बिन्या इव असन्तुष्टया तृष्णाया

---

(८८) एकान्तेति। एकान्तम् अत्यन्तम् अवदातेन श्वेतेन निर्मलेन इति यावत् उत्तानेन उन्नतेन स्वभावेन प्रकृत्या सम्भृतम् अधिगतं सादृश्यं येन तथाभूतस्य। कृते निमित्तम् शिशिररश्मिः चन्द्रः।

(८०) सङ्कल्पः अभिलाषः। बाहुशाली वीर्य्यवानित्यर्थः। समालम्बितशरासने सम्भृतकार्मुके। अवलेपिनि गर्वशालिनि गौरववतीति यावत् मानशालिनीति भावः केशरिणि सिंहे। यथा इयं कुमारस्य दर्शनोत्कण्ठा चिरम् अस्मान् न क्लेशयति तथा यतेथाः यत्नं कुरु यथा शीघ्रं कुमारं द्रक्ष्यामि तथा कुर्विति भावः।

(८१) अभिजातं सुन्दरम्। सेवेति सेवायां परपरिचर्य्यायां भीरवः पराङ्मुखा इत्यर्थः। अहङ्कारधनः मानधन इत्यर्थः वैष्णवः विष्णोः अवतारस्य वराहस्य वंशः कुलं विशेषेण अहङ्कारधन इति शेषः।

(८२) दुर्जनन्या इव दुष्टया मात्रा इव। अतिव्रढया अतिस्थविरया अतिप्रवलया च दुर्गत्या दैन्येन अभिमुखीक्रियमाणस्य अभिमुखतां नीयमानस्य।

वा प्रेर्य्यमाणस्य दुरपत्यैः इव यौवनजनितैः नानाभिलाषिभिः असत्संकल्पैर्वा आकुलीक्रियमाणस्य (९४) जरत्कुमारीमिव परमार्गणयोग्याम् अतिमहतीं वा अवस्थां पश्यतः स्वगृहे (९५) दुर्बन्धुभिः इव दुःस्थितैः समग्रैः ग्रहैर्वा ग्राह्यमाणस्य अभियोगम् पुरातनैः अतिदुस्त्यजैः भृत्यैरिव (९६) मलिनैः कर्मभिर्वा अनुवर्त्यमानस्य सकलशरीरसन्तापकरं करीषाग्निमिव दुष्कृतिनः क्लृतचित्तस्य संप्रवेष्टुं राजकुलम् (९७) उपहतसकलेन्द्रियशक्तेरिव मिथ्या एव (९८) हृदयगतविषयग्रामग्रहणाभिलाषस्य प्रथममेव तोरणतले वन्दन-

---

(९३) तृष्णायाः कुटुम्बिन्या इव गृहिण्या इव असन्तुष्टया असम्भृतया तृष्णया धनलालसया प्रेर्य्यमाणस्य नियोज्यमानस्य दुरपत्यैरिव कुपुत्रैरिव यौवनजनितैः यौवनकालोत्पन्नैः नानाभिलाषिभिः बह्वाशावद्भिः असत्सङ्कल्पैः दुर्वासनाभिः आकुलीक्रियमाणस्य आकुलतां नीयमानस्य ।

(९४) जरत्कुमारीमिव । वयस्थामदत्तां कन्यामिव परमार्गणयोग्यां परस्य पात्रस्य धनस्वामिनश्च मार्गणम् अन्वेषणं तस्य योग्या ताम् अतिमहतीम् अवस्थां कष्टां दशामित्यर्थः पश्यतः अवलोकयतः ।

(९५) दुर्बन्धुभिरिव दुष्टैः ज्ञातिभिरिव दुःस्थितैः दुर्गतैः दुष्टतया विरुद्धलिन इति भावः स्थितैश्च समग्रैः सकलैः ग्रहैः रव्यादिभिः अभियोगम् असद्भावम् । ग्राह्यमाणस्य प्राप्यमाणस्य ।

(९६) मलिनैः मालिन्यापादकैः पापैरित्यर्थः । अनुवर्त्यमानस्य अनुस्रियमाणस्य । सकलशरीरसन्तापकरं सर्वाङ्गदहनमित्यर्थः । करीषाग्निमिव तुषानलमिव । राजकुलं राजद्वारं सम्प्रवेष्टुं क्लृतचित्तस्य क्लृतमानसस्य ।

(९७) उपहतेति । उपहता विलुप्ता सकलानाम् इन्द्रियाणां शक्तिः सामर्थ्यं यस्य तथाभूतस्य मिथ्या एव वृथा एव ।

(९८) हृदयेति । हृदयगतस्य मनोरथोपस्थितस्य न तु वस्तुतः समुपस्थितस्य इति भावः विषयाणां स्रक्चन्दनवनितादीनां भोग्यवस्तूनां ग्रामस्य समूहस्य ग्रहणे प्राप्तौ अभिलाषो यद्वा हृदयं गतः विषयग्रामस्य ग्रहणे अभिलाषो यस्य

मालाकिशलयस्य इव शुष्यतो द्वाररक्षिभिः निरुद्धस्य पीड़ितस्य प्रविशतो द्वारि हरिणस्य इव अपरैः हन्यमानस्य (९९) करिकर्मचर्मपुटस्य इव मुहुर्मुहुः प्रतीहारमण्डल-करप्रहारैः निरस्यमानस्य (१००) निधिपादपप्ररोहस्य इव द्रविणाभिलाषात् अधोमुखीभवतो दूरम् अमार्गणस्य अपि अतिविप्रकृष्टविवृत्तविसर्जितस्य उद्वेगं व्रजतः (१) अकण्टकस्यापि चरणतललग्नस्य आकृष्य क्षेपीयः क्षिप्यमाणस्य अमकरकेतोरपि (२) अकालोपसर्पणप्रकुपितेश्वरदृष्टिदग्धस्य

---

तथाभूतस्य। प्रथमम् एव आदौ एव तोरणतले बहिर्द्वारतलभूमौ वन्दनमाला-किसलयस्येव वन्दनं तोरणस्य मण्डलमित्यर्थः तस्य माला स्रक् तस्यां तस्या वा यः किसलयः पल्लवः तस्य इव शुष्यतः शोषं प्राप्नुवतः क्षुत्पिपासाकुलत्वात् सूर्य्योत्तापाच्च निरुद्धस्य अवरुद्धस्य पीड़ितस्य वेत्रादिना ताड़ितस्य। अपरैः रक्षिपुरुष-व्यतिरिक्तैः राजपरिजनैः इति भावः। हन्यमानस्य ताड्यमानस्य।

(९९) करीति। करिणां हस्तिनां कर्मणि युद्धशिक्षार्थमिति भावः चर्म-पुटस्य इव चर्मनिर्मितहस्त्याकारस्य इव अचमस्य इति भावः। प्रतीहारमण्डलेन दौवारिकसमूहेन करप्रहारैः चपेटाघातैः इत्यर्थः यद्वा प्रतीहारेण वेष्टनेन मण्डलं यस्य तथाविधः करः तस्य प्रहारैः। निरस्यमानस्य निराक्रियमाणस्य।

(१००) निधिपादपप्ररोहस्य इव तलनिहितधनराशिः निधिः तस्य उपरि जातः यः पादपप्ररोहः वृक्षाङ्कुरः तस्य इव। द्रविणाभिलाषात् धनलालसात् अधो-मुखीभवतः अवाङ्मुखस्य इत्यर्थः। अमार्गणस्यापि मार्गणः शरः तद्भिन्नस्यापि दूरविक्षेपानर्हस्यापि इति भावः अयाचकस्य च अतिविप्रकृष्टम् अतिदूरं यथा तथा विवृत्तः पराङ्मुखः विसर्जितः विक्षिप्तः तस्य। उद्वेगम् आधिं व्रजतः प्राप्नुवतः उद्गतवेगं गच्छतश्च।

(१) अकण्टकस्य कण्टकभिन्नस्य अक्षुद्रशत्रोश्च चरणतललग्नस्य चरणनिपतितस्य चरणतलं विद्धा स्थितस्य च। आकृष्य धृत्वा गले इति भावः। कर्णान्तञ्च आकृष्य आनीय इत्यर्थश्च। क्षेपीयः अतिक्षिप्रम्। अमकरकेतोः मकरकेतुः कामः तद्भिन्नस्य अकामस्य च।

(३) प्रलयम् उपगच्छतः कपेरिव कोपनिर्भर्त्सितस्यापि अभिन्नमुखरागस्य ब्रह्मघ्न इव प्रतिदिवसवन्दनोद्घृष्टशिरः-कपालस्य (४) स्पर्शरहितस्य अशुभकर्माणि निर्वहतः त्रिशङ्कोरिव उभयलोकभ्रष्टस्य नक्तन्दिनम् अर्वाक्शिरसः तिष्ठतः वाजिन इव (५) कवलवशेन सुखवाह्यम् आत्मानं विदधानस्य अनशनशायिन इव हृदयस्थापितजीवनाशस्य (६) शरीरं क्षपयतः शुन इव निजदारपराङ्मुखस्य (७) जघ-

---

(२) अकालेति । अकाले असमये उपसर्पणम् उपस्थितिः तेन प्रकुपितस्य क्रुद्धस्य ईश्वरस्य प्रभोः हरस्य दृष्ट्या दग्धस्य सन्तापितस्य भस्मीकृतस्य च ।

(३) प्रलयं प्रकर्षेण लयः भित्त्यादिषु लीनत्वं प्रायेण नाश इत्यर्थः तम् उपगच्छतः व्रजतः । कपेरिव वानरस्य इव । अभिन्नमुखरागस्य अविकृतवदनप्रभस्य इत्यर्थः । ब्रह्मघ्न इव ब्रह्मवधकृत इव प्रतिदिवसं वन्दनाय प्रणतये उद्घृष्टं शिरसः कपालं येन तथाभूतस्य ब्रह्महा प्रत्यहं कुटीचरो भूत्वा द्वादशवर्षं चतुर्विंशतिवर्षं वा तपश्चरन् देवान् प्रणमतीति शास्त्रीयत्वादिति भावः ।

(४) स्पर्शरहितस्य केनापि न स्पृश्यमानस्य यद्वा स्पर्शमकुर्वतः अशुभकर्माणि पदसंवाहनादीनि निर्वहतः सम्पादयतः । उभयलोकभ्रष्टस्य ऐहिकं संसारसुखमलभमानस्य पारलौकिकं तपश्चरणादिकञ्च नाचरत इत्यर्थः ऐहिकं राज्यसुखं परित्यज्य स्वर्गमधिरोपितस्यापि ततः परिभ्रंशनेन अन्तरीक्षे अधोमुखं तिष्ठतश्च । पुरा त्रिशङ्कुः नाम राजा गुरुशापाच्चण्डालत्वमापन्नो विश्वामित्रेण गुरुद्वेषिणा याजयित्वा स्वर्गमधिरोपितोऽपि कुपितशतक्रतुहुङ्कारेण तर्जितः निपतिष्यन्नेव विश्वामित्रेण स्वप्रभावात् अन्तरीक्षे एव स्थापित इति पुराणवार्त्ता । वाजिन इव अश्वस्येव ।

(५) कवलवशेन अन्नहेतोः ग्रासहेतोश्च सुखवाह्यं सुखेन वहनीयं भरणीयं सुखाद् वाह्यं बहिर्भूतस्य । विदधानस्य कुर्वतः । अनशनशायिन इव अनशनेन अभोजनेन शेते इति तथोक्तस्य इव । हृदयेति हृदये मनसि स्थापिता निहिता जीवनस्य जीविकाया इत्यर्थः आशा जीवस्य नाशश्च येन तथाभूतस्य ।

(६) शरीरं देहं क्षपयतः क्षयं नयतः शुन इव कुक्कुरस्य इव निजदारपराङ्मुखस्य निजकलत्रसम्भोगवर्जितस्य इत्यर्थः ।

न्यकर्मलग्नमात्मानं ताड़यतः प्रेतस्य इव अनुचितभूमिदीय-मानान्नपिण्डस्य बलिभुज इव (८) जिह्वालौल्योपयुक्तपुरुषवर्च्चसो वृथा विहितायुषो जीवतः श्मशानपादपानिव (९) पिशाचस्य दग्धभूत्या परुषीकृतान् राजवल्लभान् उपसर्पतः (१०) विपरीतजिह्वाजनितमाधुर्य्यैः ओष्ठमात्रप्रकटितरागैः राजशुकालापैः शिशोरिव मुग्धविलोभ्यमानस्य वेतालस्य इव (११) नरेन्द्रप्रभावाविष्टस्य किञ्चित् न आचरतः चित्रधनुष इव

---

(७) जघन्येति । जघने भवं जघन्यं निकृष्टमित्यर्थः जघन्यः कनीयान् सुतस्तत् तस्य च कर्म तस्मिन् लग्नं समासक्तम् । ताड़यतः अनुशोचयतः इत्यर्थः । प्रेतस्य इव निकृष्टयोनेरिव गतप्राणस्येव च अनुचितायाम् अयुक्तायां भूमौ प्रदेशे चितायाः पश्चादनुचिता या भूमिः तत्र च दीयमानम् अन्नपिण्डं यस्य यस्मै वा तथाभूतस्य । बलिभुज इव काकस्येव ।

(८) जिह्वेति । जिह्वायाः लौल्यं चापल्यम् अभिलाषश्च तेन उपयुक्तं व्ययीकृतं भुक्तञ्च पुरुषवर्चः पौरुषं तेजः पुरीषञ्च येन तथाभूतस्य । विहितायुषः कृतजीवनस्य विभ्यः पक्षिभ्यः हितम् आयुर्यस्य तथाभूतस्य च वृथा निरर्थकं जीवतः प्राणान् धारयतः ।

(९) पिशाचस्य निर्बोधस्य निकृष्टदेवयोनिविशेषस्य । दग्धभूत्या दग्धा असारा इति भावः भूतिः सम्पद् भस्म च तया । भूतिर्भस्मनि सम्पदीत्यमरः । परुषीकृतान् मलिनीकृतान् । उपसर्पतः उपासीनस्य आराधयत इति यावत् ।

(१०) विपरीतेति । विपरीतं हृदयाद् भिन्नमिति भावः यथा तथा जिह्वया जनितं माधुर्य्यं मनोहरत्वं येषां तैः । ओष्ठेति ओष्ठमात्रेण केवलेन ओष्ठेन नतु मनसा इति भावः प्रकाशितः रागः अनुरागः प्रणय इति यावत् लौहित्यञ्च येषु तथाविधैः । राजशुकालापैः राजानः शुका इव राजशुकाः तेषाम् आलापैः वचनैः । मुग्धविलोभ्यमानस्य मुग्धं सुन्दरं यथा तथा मुग्धः सुन्दरमूढयोरिति कोषः विलोभ्यमानस्य विशेषेण आश्वासं नीयमानस्य इति यावत् । वेतालस्येव भूतस्येव ।

(११) नरेन्द्रेति । नरेन्द्रो राजा भौतिकमन्त्रवित् च तस्य प्रभावेण सामर्थ्येन

(१२) अलीकगुणाध्यारोपणैकक्रियानित्यनम्रस्य निर्वाणतेजसः (१३) सम्मार्जनीसमुपार्जितरजसोऽवकरकूटस्येव निर्माल्यवाहिनः (१४) कफविकारिण इव दिने दिने कटुकैः उद्वेज्यमानस्य सौगतस्येव (१५) अर्थशून्यविज्ञप्तिजनितवैराग्यस्य (१६) काषायाणि अभिलषतः निशासु अपि मातृबलि-

---

च आविष्टस्य वशं गतस्य । किञ्चित् न आचरतः किमपि कर्त्तव्यं न अनुतिष्ठतः चित्रधनुष इव आलेख्यलिखितकार्मुकस्य इव ।

(१२) अलीकेति । अलीकानामसत्यानां गुणानां दयादाक्षिण्यादीनां प्रभोः इति भावः अध्यारोपणं कीर्त्तनमिति भावः तदेव एका केवला क्रिया कार्य्यं तया नित्यं नम्रः आनतः तस्य अन्यत्र अलीकस्य कल्पितस्य गुणस्य मौर्व्याः अध्यारोपणं संयोजनमेव एकक्रिया तया नित्यं सततं नम्रं तस्य । निर्वाणतेजसः निर्वाणं प्रशान्तं तेजः यस्य अन्यत्र निर्गतं बाणस्य शरस्य तेजः यस्मात् तथाभूतस्य ।

(१३) सम्मार्जनीति । सम्मार्जन्या शोधन्या समुपार्जितानि सङ्कलितानि रजांसि यस्य यत्र वा तथाभूतस्य अवकरकूटस्येव अवकराणां मार्जनीक्षिप्तानां तृणादीनां सङ्घाताः तेषां कूटोराशिः तस्य इव सम्मार्जनी शोधनी स्यात् सङ्करोऽवकरस्तथा क्षिप्त इत्यमरः । निर्माल्यवाहिनः निर्माल्यं देवोच्छिष्टं द्रव्यं लक्षणया अत्र प्रभोरुच्छिष्टमपि प्रतीयते । तत् वहति व्यवहरतीति तथाभूतस्य ।

(१४) कफविकारिण इव । श्लेष्मविकारवत इव कटुकैः उग्रैः प्रतीहारादिभिः औषधैश्च श्लेष्महरैः इति भावः उद्वेज्यमानस्य क्लिश्यमानस्य । सौगतस्य इव जैनस्य इव ।

(१५) अर्थेति । अर्थशून्या निष्फलेत्यर्थः या विज्ञप्तिः विज्ञापनं प्रभुसमीपे इति भावः तया जनितम् उत्पादितं वैराग्यं यस्य तथाभूतस्य विज्ञापनसहस्रेणापि प्रभुसकाशादर्थमलभमानस्येति निष्फलया विज्ञप्त्या विज्ञानेन बाह्यवस्तूनामिति भावः वीतरागस्य च इति भावः ।

(१६) काषायाणि । कषायरसद्रव्याणि अपिरवाध्याहार्य्यः अन्यत्र कषायरक्तानि वसनानि अभिलषतः प्राप्तुमिच्छतः । मातृबलिपिण्डस्य इव मातृभ्यो

पिण्डस्य इव दिक्षु विक्षिप्यमाणस्य (१७) अशौचगतस्य इव कुशयनजनितसमधिकतरदुःखवृत्तेः तुलायन्त्रस्य इव पश्चात् कृतगौरवस्य (१८) तोयार्थमपि नमतः अतिकृपणस्य शिरसा केवलेन असन्तुष्टस्य वचसापि पादौ स्पृशतः (१९) निर्दयवेत्रिवेत्रताड़नत्रस्तयेव त्रपया त्यक्तस्य (२०) दैन्यसङ्कोचितहृदयकृतावकाशया इव आहोपुरुषिकया परिवर्जितस्य (२१) कुत्सितकर्माङ्गीकरणकुपितया इव उन्नत्या वियुक्तस्य धनश्रद्धया क्लेशान् उपार्जयतः (२२) स्वप्नवृद्धिबुद्ध्या अवमानं वर्द्धयतो मूढ़स्य सत्यपि विविधकुसुमाधिवाससुरभिणि वने

---

देवीविशेषेभ्यः देयं बलिपिण्डम् उपहारान्नं तस्येव दिक्षु प्राच्यादिषु विक्षिप्यमाणस्य निरस्यमानस्य दीयमानस्य च ।

(१७) अशौचगतस्य इव अशौचं मृतकादि तद्गतस्य अशौचिन इवेत्यर्थः । कुशयनेति कुशयनेन कुत्सितेन शयनेन शय्यया कौ पृथिव्यां शयनेन च अशौचिनां स्थण्डिलशायित्वस्य शास्त्रीयत्वादिति भावः जनिता उत्पादिता समधिकतरा अतिशायिनी दुःखवृत्तिः दुःखस्थितिर्यस्य तथाभूतस्य । तुलायन्त्रस्य इव तोलनयन्त्रस्य इव पश्चात् पृष्ठतः कृतं गौरवं महत्त्वं गुरुत्वञ्च यस्य तथाभूतस्य ।

(१८) तोयार्थमपि जलप्राप्त्यर्थमपि नमतः नतिं कुर्वतः नत्या याचमानस्य इत्यर्थः अतिकृपणस्य दीनस्य । शिरसा पादौ स्पृशत इत्यर्थः असन्तुष्टस्य अप्रसन्नस्य वचसा वाक्येनापि ।

(१९) निर्दयेति । निर्दयेन निष्ठुरेण वेत्रिणा वेत्रधारिणा पुरुषेण वेत्रताड़नात् वेत्रप्रहारात् त्रस्तयेव भीतयेव । त्रपया लज्जया त्यक्तस्य विहीनस्य ।

(२०) दैन्येति । दैन्येन सङ्कोचितं कुण्ठितं हृदयं तेन कृतः अपनीतः अवकाशः स्थानं यस्याः तथाभूतया आहोपुरुषिकया अहोपुरुषिकादर्पात् या स्यात् सम्भावनात्मनीत्युत्तावचया परिवर्जितस्य परित्यक्तस्य ।

(२१) कुत्सितेति । कुत्सितं कर्म सेवेत्यर्थः तस्य अङ्गीकरणेन कुपितयेव क्रुद्धयेव । उन्नत्या अभ्युदयेन वियुक्तस्य विरहितस्य धनश्रद्धया धनप्राप्त्याशया ।

तृष्णाञ्जलिम् उपरचयतः कुलपुत्रस्यापि (२३) कृतागस इव भीतभीतस्य समीपम् उपसर्पतः दर्शनीयस्यापि आलेख्य-कुसुमस्य इव निष्फलजन्मनः विदुषोऽपि (२४) वैधेयस्य इव अपशब्दमुखस्य शक्तिमतोऽपि श्वित्रिण इव सङ्कोचितकर-युगलस्य (२५) समसमुत्कर्षेषु निरग्निपच्यमानस्य नीच-समीकरणेषु निरुच्छ्वासं म्रियमाणस्य (२६) परिभवैः तृणी-कृतस्य दुःखानिलेन अनिर्वृतेः ज्वलतो (२७) भक्तस्य अपि अभक्तस्य निरूष्मणः सन्तापयतो बन्धून् विमानस्य अपि (२८) अगतिकस्य च्युतगौरवस्य अपि अधस्ताद्गच्छतः निःस-

---

(२२) स्वबृद्धिबुद्ध्या स्वम् आत्मा धनञ्च स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने इत्यमरः तस्य वृद्धिरभ्युन्नतिः तस्यास्तव वा या बुद्धिः तया अवमानं वर्द्धयतः। मूढस्य बालिशस्य सत्यपि विद्यमानेऽपि। वने कानने जले च तृष्णाञ्जलिं तृष्णया धनलालसया पिपासया च अञ्जलिम् उपरचयतः कुर्वतः। कुलपुत्रस्यापि सत्कुलजातस्यापि।

(२३) कृतागस इव कृतापराधस्येव। दर्शनीयस्य अभिरूपस्य निष्फलजन्मनः वृथोत्पन्नस्य विदुषः ज्ञानिनः।

(२४) वैधेयस्येव मूर्खस्येव अपशब्दमुखस्य अपशब्दः असंस्कृतः शब्दः मुखे यस्य तथाभूतस्य। श्वित्रिण इव श्वेतकुष्ठरोगिण इव सङ्कोचितकरयुगलस्य कृता-ञ्जलेः रोगप्रभावात् सङ्कोचितहस्तद्वयस्य च।

(२५) समसमुत्कर्षेषु समानां तुल्यशीलगुणानां समुत्कर्षेषु समुन्नतिषु निरग्निपच्यमानस्य विनाग्निं दह्यमानस्य नीचसमीकरणेषु नीचैः साम्यप्राप्तिषु निरुच्छ्वासवर्जितं यथा तथा म्रियमाणस्य मरणमनुभवतः।

(२६) परिभवैः अवमानैः तृणीकृतस्य तृणतां नीतस्य। अनिर्वृतेः निर्वृतिः सुखं तद्रहितस्य।

(२७) भक्तस्य अनुरक्तस्य अभक्तस्य भक्तवर्जितस्य निरन्नस्येत्यर्थः। निरूष्मणः अगर्वस्य सन्तापयतः सम्यक् तापयतः। बन्धून् स्वजनान्। विमानस्य मानवर्जि-तस्य आकाशसञ्चारिरथविशेषस्य च।

स्वस्यापि महामांसविक्रयं कुर्वतः निर्मदस्य (२९) अस्वतन्त्रवृत्तेः अयोगिनो ध्यानवशीकृतात्मनः (३०) शय्योत्थायं प्रणमतो दग्धमुण्डस्य गोत्रविदूषकस्य नक्तन्दिनं नृत्यतो मनस्विजनं हासयतः कुलाङ्गारस्य वंशं दहतः नृपशोः क्षणेऽपि लब्धे कन्धराम् अवनमयतः (३१) जठरपरिपूरणमात्रप्रयोजनजन्मनो मांसपिण्डस्य गर्भरोगस्य मातुः अपुण्यानां कर्मणाम् आचरणात् भृतकस्य किं प्रायश्चित्तं का (३२) प्रतिपत्तिक्रिया क्व गतस्य शान्तिः कीदृशं जीवितं कः पुरुषाभि-

---

(२८) अगतिकस्य। निरुपायस्य गमनहीनस्य च च्युतगौरवस्य च्युतं भ्रष्टं गौरवं महत्त्वं भारवत्त्वञ्च यस्य तथाभूतस्य अधस्तात् गच्छतः नीचतां निम्नताञ्च गच्छतः। निःसत्त्वस्य सत्त्वम् अनुभावः तद्वर्जितस्य गतप्राणस्य महामांसविक्रयं स्वशरीरविक्रयं निर्मदस्य निरहङ्कारस्य मद्यपानरहितस्य च।

(२९) अस्वतन्त्रवृत्तेः न स्वतन्त्रा स्वाधीना वृत्तिः स्थितिः यस्य तथाभूतस्य मत्तस्य तु स्थितिः अस्वाधीना भवति अमत्तस्य तथेति विरोधः एवं पूर्वत्र उत्तरत्र च विरोधः स्पष्ट एव इति न पृथगुक्तः। अयोगिनः योगः धनस्य इति भावः विद्यतेऽस्य इति योगी स न भवति इति अयोगी तस्य निर्धनस्य इत्यर्थः प्रतिकूलदैवस्य इति केचित् योगिभिन्नस्य च। ध्यानेति ध्यानेन दुर्भावनया वशीकृतः अधीनीकृतः आत्मा यस्य तथोक्तस्य ध्यानेन समाधिना वशीकृतात्मनः निरुद्धचित्तवृत्तेश्च।

(३०) शय्योत्थायं शय्याया उत्थाय आप्रभातादिति भावः प्रणमतः वन्दमानस्य। दग्धमुण्डस्य आतपोत्तप्तशिरसः। गोत्रविदूषकस्य वंशं दूषयतः। नृत्यतः नृत्यं कुर्वतः प्रभुनिर्देशादनवरतं कर्म कुर्वत इति भावः। मनस्विजनं धीरजनं हासयतः हासिनं कुर्वतः। कन्धरां ग्रीवाम्।

(३१) जठरेति। जठरस्य स्वोदरस्य परिपूरणमात्रं भरणमात्रं प्रयोजनं यस्य तादृशं जन्म यस्य तथाभूतस्य। मांसपिण्डस्य जड़स्वरूपस्य इत्यर्थः। गर्भरोगस्य उदरीयव्याधिभूतस्य। भृतकस्य भृत्यभावमापन्नस्य पुरुषस्य इति पूर्वेण सम्बन्धः।

(३२) प्रतिपत्तिक्रिया कर्त्तव्यतानुष्ठानम्। उच्छ्वसितं जीवितम् उपयातु

मान: किन्नामानो विलासा: कीदृशी भोगश्रद्धा प्रबलपङ्क इव सर्वम् अधस्तात् नयति दारुणो दासशब्द:। धिक् (३३) तदुच्छ्वसितम् उपयातु तद्वनं निधनम् अभवनिर्भूति: अस्तु तस्या: नमो भगवद्भ्यस्तेभ्य: सुखेभ्य: तस्य अयमञ्जलि: ऐश्वर्यस्य तिष्ठतु दूर एव सा श्री: शिवं स परिच्छद: करोतु यदर्थम् (३४) उत्तमाङ्गं गां गमिष्यति मुखप्रियरत: क्लीव: अपूतिमांसमय: कृमि: (३५) अगण्यमानो नरक: (३६) पादरजोधूसरोत्तमाङ्गो जङ्गम: पादपीठ: पुंस्कोकिल: काकुक्वणितेषु शिखी (३७) सुखकरकेकासु स्थूलकूर्म: क्रोडकषणेषु श्वा नीचचाटुकरणेषु वेणु: (३८) मूर्च्छनासु वेश्याकाय:

---

गच्छतु। अभवनि: अनुत्पत्ति:। आक्रोशेऽनिप्रत्यय:। भूति: सम्पद:। तेभ्य: सुखेभ्य: दास्यसुखेभ्य इत्यर्थ:। परिच्छद: उपकरणम्।

(३४) उत्तमाङ्गं शिर:। गां पृथ्वीं गमिष्यति। शिरोनति: भविष्यतीत्यर्थ:। क्लीव:। न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रश्चोत्थानशुक्राभ्यां हीन: क्लीव: स उच्यते इत्युक्तलक्षण:। मुखप्रियरत: मुखे प्रारम्भे वदने च प्रियं रतं मैहनं यस्य तथाभूत:। अपूतिमांसमय: अदुर्गन्धमांसलीन इत्यर्थ:।

(३५) अगण्यमान: अगणनार्ह: अगण्यो मानो यस्य तथाभूतो वा असङ्ख्यायमानश्च कुत्सितो नर: नरक: निरयश्च अवीच्यादिभेदेन कतिविध: सङ्ख्येय इति भाव:।

(३६) पादेति। पादरजसा चरणरेणुना धूसरम् उत्तमाङ्गम् उपरिभाग इत्यर्थ: यस्य तथाभूत: पादपीठ: जङ्गम: पुन: पुन: गतिशील:। काकुक्वणितेषु मधुरवचनेषु शोकजनितभिन्नकण्ठध्वनिषु भिन्न: कण्ठध्वनि: धीरै: काकुरित्यभिधीयते इति दर्पण:।

(३७) सुखकरकेकासु सन्तोषकरेषु वचनविशेषेषु शिखी मयूर:। क्रोडकषणेषु उत्सङ्गारोहणेषु पीवनिखननेन स्थूलकूर्म: पीवर: कमठ:। नीचचाटुकरणेषु दैन्यजनिततोषणेषु श्वा कुक्कुर:।

करणबन्धक्लेशेषु पलालं (३८) सत्त्वशालिषु कृकलास: शिरोविड़म्बनासु जाहक (४०) आत्मसङ्कोचनेषु प्रतिपादक: पादसंवाहनासु कटुक: करतलताड़नेषु वीणादण्ड: (४१) कोणाभिघातेषु वराक: सेवकोऽपि मर्त्त्यमध्ये राजिलोऽपि वा भोगी (४२) पुलाकोऽपि वा कलम: वरं तृणमपि कृता मानवता न मतो (४३) नमत: त्रैलोक्याधिराज्योपभोगोऽपि मनस्विन:। तदेवम् अभिनन्दिता अस्मदीयप्रणयो

---

(३८) मूर्च्छनासु मोहेषु स्वराणां विशिष्टासु स्थितिषु वेणु: वाद्यभेद:। करणबन्धक्लेशेषु करणं शरीरं तस्य बन्ध: बन्धीकरणं तेन क्लेशा: करणेषु रतिशास्त्रविहितेषु व्यापारविशेषेषु ये बन्धा: आश्लेषादय: तै: क्लेशा: तेषु। वेश्याकाय: वाराङ्गनाशरीरम्।

(३९) सत्त्वशालिषु सत्त्वम् अस्तित्व तेन शालन्ते शोभन्ते इति तथोक्तेषु अस्तित्वमात्रधर्मेषु न तु फलवत्सु इति भाव: मध्ये पलालम् धान्यवर्जितव्रीह्यवयवराशिरिति यावत् शिरोविड़म्बनासु शिरश्चेष्टासु प्रणत्यादिषु इति भाव: शिरस उन्नमनेषु च कृकलास: कीटविशेष:।

(४०) आत्मसङ्कोचने स्वदेहसङ्कोचेषु जाहक: तदाख्य: प्राणिभेद:। पादसंवाहनासु पदसेवासु प्रतिपादक: प्रतिपत्तियुक्त: सुख्यातिमानित्यर्थ: करतलताड़नेषु करप्रहारेषु करतलविमर्दनेषु च कटुक: द्रव्यभेद:।

(४१) कोणाभिघातेषु कोणेन लगुड़ेन वीणावादनयष्टिविशेषेण च अभिघाता: ताड़नानि तेषु वीणादण्ड:। एवम्भूत: वराक: दीन इत्यर्थ: सेवक: दास: मर्त्त्यमध्ये यदि गण्यते इति शेष: तदा राजिलोऽपि डिण्डिभोऽपि निर्विष: सर्पविशेष इत्यर्थ: भोगी फणी सुखभोगवांश्च भोग: सुखे स्त्र्यादिभृतावहेश्च फणकाययो: इत्यमर:।

(४२) पुलाक: फलहीन: शालि: तुच्छधान्यमित्यर्थ: स्यात् पुलाक: तुच्छधान्य इत्यमर:। कलम: धान्यं मानवता मानिना मानवता मनुष्यत्वं पौरुषमित्यर्थ:। मत इष्ट:।

देवोऽपि दिवसैः कतिपयैः एव परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसि इत्युक्त्वा तूष्णीम् अभूत् अचिराच्च नमस्कृत्य निर्जगाम।

राजापि रजनीं तां (४४) कुमारदर्शनौत्सुक्यक्षीकृतहृदयः समनैषीत्। (४५) आत्मार्पणं हि महताम् अमूलमन्त्रमयं वशीकरणम्। प्रभाते च प्रभूतं (४६) प्रतिप्राभृतं प्रधानप्रतिदूताधिष्ठितं दत्त्वा हंसवेगं प्राहिणोत्। (४७) आत्मनापि ततः प्रभृति प्रयाणकैः अनवरतैः अभ्यमित्रं प्रावर्त्तत। कदाचित्तु राज्यवर्द्धनभुजबलोपार्जितम् अशेषं (४८) मालवराजसाधनम् आदाय आगतं समीप एव आवासितं लेखहारकात् भण्डिम् अशृणोत्। श्रुत्वा च अभिनवीभूतभ्रातृशोकहुताशनः कातरहृदयो बभूव मूर्च्छान्धकारमिव विवेश अतिष्ठच्च समुत्सृष्टसकलव्यापारः (४९) प्रतीहारनिवारणनिभृत-

---

(४३) नमतः दासत्वं कुर्वत इत्यर्थः। मनस्विनः प्रशस्तमनसः उदाराशयस्येति यावत्। परागतः उपस्थितः।

(५) कुमारेति। कुमारस्य प्राग्ज्योतिषेश्वरस्य दर्शने दर्शनाय वा यदौत्सुक्यं कौतूहलं तेन क्षीकृतम् आक्रान्तं हृदयं यस्य तथाभूतः।

(४५) आत्मार्पणं स्वदेहार्पणम् अमूलमन्त्रमयं मूलमन्त्रः प्रधानदेवमन्त्रः तन्मयं न भवतीत्यमूलमन्त्रमयं विना एव मूलमन्त्रमित्यर्थः वशीकरणमन्त्रेण इव जना वशीक्रियन्ते आत्मार्पणे तु तत्प्रयोजनं नास्ति इति भावः।

(४६) प्रतिप्राभृतं प्रत्युपढौकनम्। प्रधानेन प्रतिदूतेन स्वप्रेष्यदूतेन इति यावत् अधिष्ठितं युक्तं प्रधाने प्रतिदूते न्यस्तमिति भावः।

(४७) आत्मनापि स्वयमपि। प्रयाणकैः यात्राभिः अनवरतैः अविश्रान्तैः।

(४८) मालवराजसाधनं मालवेन्द्रसैन्यम्। आवासितं कृतनिवेशम्। समुत्सृष्टसकलव्यापारः त्यक्तसर्वक्रियः।

नि:शब्दपरिजने निजमन्दिरे सराजकपरिवार: तदागमनम् उदीक्षमाणो मुहूर्त्तम्।

(५०) अथ भण्डि: एकेन एव वाजिना कतिपयकुलपुत्त्र-परिवृतो मलिनवासा रिपुशरशल्यपूरितेन निखातबहुलोह-कीलकपरिकररचितस्फुटनेन इव हृदयेन (५१) हृदयलग्नै: स्वामिसत्कृतै: इव श्मश्रुभि: शुचं समुपदर्शयन् (५२) दूरी-कृतव्यायामशिथिलभुजदण्ड-दोलायमानमङ्गलवलयैकशेषाल-ङ्कृति: (५३) अनादरोपयुक्तताम्बूलविरलरागेण शोकदहन-दह्यमानस्य हृदयस्य अङ्गारेण इव (५४) दीर्घनिश्वासवेग-निर्गतेन अधरेण शुष्यता (५५) स्वामिविरहविधृतजीविताप-

---

(४९) प्रतीहारेति। प्रतीहारस्य दौवारिकस्य निवारणेन मा अत्र कलरवं कुरुतेति निषेधेन निभृता: निस्तब्धा: नि:शब्दा: तूष्णीं स्थिता: परिजना: यत्र तथाभूते। तदागमनं तस्य भण्डे: आगमनम् उदीक्षमाण: प्रतीक्षमाण:।

(५०) अथ भण्डि: राजद्वारमाजगामेति सम्बन्ध:। तं विशिनष्टि कतिपय इत्यादि। रिपुेति। रिपूणां शत्रूणां शरशल्यै: शरफलकै: पूरितेन व्याप्तेन। अतएव निखातेति। निखातानां बहूनां लोहकीलानाम् अय:शङ्कूनां परि-करेण आश्रयेण इति यावत् रचितं निरुद्धमिति यावत् स्फुटनं विदरणं राज्य-वर्द्धनव्यापारजनितशोकादिति भाव: यस्य तथाभूतेन इव।

(५१) हृदयनिहितै: हृदि स्थितै: उरोलम्बितैश्च स्वामिसत्कृतैरिव प्रभु-सत्कारैरिव श्मश्रुभि: चिबुकजातरोमनिचयै: अकृतक्षौरैरिति भाव: शुचं शोकं समुपदर्शयन् प्रकटयन्।

(५२) दूरीकृतेति। दूरीकृतेन परित्यक्तेन शोकादिति भाव: व्यायामेन शारी-रिकाङ्गचालनविशेषेण शिथिले अकठिने इति भाव: भुजदण्डे दोलायमानं मङ्गलवलयमेव एकशेषा एकमात्रावशिष्टा अलङ्कृति: अलङ्कार: यस्य तथोक्त:।

(५३) अनादरेति। अनादरम् अयत्नं यथा तथा उपयुक्तं चर्वितं यत् ताम्बूलं तेन विरल: अल्प: राग: यस्य तेन।

(५४) दीर्घेति। दीर्घेण महता निश्वासवेगेन निर्गत: नि:सृत: तेन। शुष्यता शोषं गच्छता।

राधवैलक्ष्यादिव बाष्पवारिपटलेन पटेन इव प्रावृतवदनः विशन्निव दुर्बलीभूतैः स्वाङ्गमपत्रपया अङ्गैः वमन्निव च (५६) व्यर्थीभूतभुजोष्माणमायतैः निश्वसितैः पातकीव अपराधीव द्रोहीव मुषित इव छलित इव यूथपतिपतन-विषण्ण इव वेगदण्डवारणः सूर्य्यास्तमयनिःश्रीक इव कम-लाकरः दुर्य्योधननिधनदुर्मना इव (५७) द्रौणिः अपहृतरत्न इव सागरो राजद्वारम् आजगाम। अवतीर्य्य च तुरङ्गमात् अवनतमुखो विवेश राजमन्दिरम्। दूरादेव च विमुक्ता-क्रन्दः पपात पादयोः।

अवनिपतिरपि दृष्ट्वा तम् उत्थाय विरलैः पदैः प्रत्युद्गम्य उत्थाप्य च गाढ़म् उपगूह्य कण्ठे करुणमतिचिरं ररोद। शिथिलीभूतमन्युवेगश्च पुरेव पुनः आगत्य निजासने निष-साद। प्रथमप्रक्षालितमुखे च भण्डी मुखम् अक्षालयत्। समतिक्रान्ते च कियत्यपि काले भ्रातृमरणवृत्तान्तम् अप्रा-क्षीत्। अथ अकथयच्च यथावृत्तम् अखिलं भण्डिः। अथ नरपतिः तमुवाच (५८) राज्यश्रीव्यतिकरः क इति। स पुनः

---

(५५) स्वामीति स्वामिनः राज्यवर्द्धनस्य विरहे वियोगे विधृतं यत् जीवितं तदेव तेन वा योऽपराधः तेन यत् वैलक्ष्यं लज्जा तस्मादिव। प्रावृतवदनः आच्छादितमुखः। अपत्रपया लज्जया। वमन्निव उद्गिरन्निव।

(५६) व्यर्थीभूतेति। व्यर्थीभूतः विफलतां गतः अवुदञ्चनासामर्थ्यादिति भावः भुजस्य उष्मा तेजः तम्। मुषित इव अपहृत इव। छलितः प्रतारित इव वेग-दण्डवारणः वेगेन दण्डयति शत्रून् घातयतीति वेगदण्डः स चासौ वारणः हस्ती चेति तथोक्तः।

(५७) द्रौणिः द्रोणाचार्य्यसुतः अश्वत्थामा।

अवादीत् देव ! (५९) देवभूयं गते देवे राज्यवर्द्धने गुप्तनाम्ना च गृहीते कुशस्थले देवी राज्यश्रीः परिभ्रश्य बन्धनात् विन्ध्याटवीं सपरिवारा प्रविष्टा इति लोकतो वार्त्ताम् अशृणवम् । अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता जना न अद्यापि निवर्त्तन्ते इति । तच्च आकर्ण्य भूपतिः अब्रवीत् किमन्यैः (६०) अनुपदिभिः यत्र सा तत्र परित्यक्तान्यकृत्यः स्वयमहं यास्यामि । भवानपि कटकम् आदाय प्रवर्त्ततां गौड़ाभिमुखम् । इत्युक्त्वा च उत्थाय स्नानभुवम् अगात् । (६१) कारितशोकश्मश्रुवपनकर्म्मणा च प्रतीहारभवनस्नातेन (६२) शारीरकवसनकुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना सार्द्धम् अभुङ्क्त निनाय च तेनैव सह वासरम् ।

अथ अपरेद्युः उषसि एव भण्डिर्भूपालम् उपसृत्य व्यज्ञापयत् पश्यतु देवः श्रीराज्यवर्द्धनभुजबलार्जितं साधनं (६३) सपरिवर्हं मालवराजस्य इति । नरपतिना स एवं क्रियताम् इति अभ्यनुज्ञातो दर्शयाम्बभूव तद्यथा (६४) अनवरतगलितमदमदिरामोदमुखरमधुकरजूटजटिलकरटपट्ट-

---

(५८) राज्यश्रीव्यतिकरः राज्यश्रिया वृत्तान्तः ।

(५९) देवभूयं देवत्वम् ।

(६०) अनुपदिभिः अनुचरैः ।

(६१) कारितेति । कारितं शोकश्मश्रूणां वपनकर्म क्षौरं यस्य तेन ।

(६२) शारीरकेति । शरीरसम्बन्धि शारीरकं वसनं कुसुमम् अङ्गरागः अनुलेपनम् अलङ्कारः तेषां प्रेषणेन प्रकटितः प्रदर्शितः प्रसादो यस्य तेन ।

(६३) सपरिवर्हं सपरिच्छदम् ।

(६४) अनवरतेति । अनवरतगलितस्य मदस्य दानवारिणः मदिरः मत्तताजननः य आमोदः सौरभं तेन मुखरैः वाचालैः झणत्कारवद्भिः इत्यर्थः मधुकर-

पङ्किलगण्डान् गण्डशैलान् इव जङ्गमान् गम्भीरगर्जितरवान् जलधरान् इव महीम् अवतीर्णान् (६५) उत्फुल्लसप्तच्छदवनामोदमुचः शरद्दिवसान् इव पुञ्जीभूतान् अनेकसहस्रसङ्ख्यान् करिणः (६६) चारुचामीकरचित्रचामरमण्डलमनोहरांश्च हरिणरंहसो हरीन् (६७) बालातपविसरवर्षिणाञ्च किरणैः अनेकेन्द्रायुधीकृतदशदिशाम् अलङ्काराणां विशेषान् (६८) विस्मयकृतः स्मरोन्मादितमालवीकुचपरिमलदुर्ललितांश्च (६९) निजज्योत्स्नापूरप्लावितदिगन्तान् अपि तारान् हारान् उडुपतिपादसञ्चयशुचीनि निजयशांसि इव बालव्यजनानि जातरूपमयनालञ्च निवास-

---

जूटैः भृङ्गनिचयैः जटिलाः युक्ताः करटपट्टा इव कुसुम्भफलकानि इव पङ्किला आर्द्राः गण्डाः कपोलाः येषां तान्। गण्डशैलानिव पर्वतविच्युतवृहच्छिला इव।

(६५) उत्फुल्लेति। उत्फुल्लानां विकसितानां सप्तच्छदवनानाम् आमोदं सौरभं मुञ्चन्तीति तथोक्तान्।

(६६) चार्विति। चारुभिः मनोज्ञैः चामीकरैः काञ्चनैः चित्राणि रञ्जितानि चामरमण्डलानि तैः मनोहराः तान्। हरिणरंहसः हरिणवेगान् हरीन् अश्वान्।

(६७) बालातपेति। बालातपानाम् अभिनवसूर्य्यालोकानां विसरान् निवहान् वर्षन्ति प्रकटयन्तीति तथोक्तान्। अनेकेति। अनेकानि इन्द्राद्युधानि शक्रधनूंषि यासु ताः सम्पद्यमानाः कृता अनेकेन्द्रायुधीकृता दश दिशः यैः तथोक्तान् बहूनीन्द्रायुधानीव दिगुद्भासिन इत्यर्थः।

(६८) विस्मयकृतः चमत्कारकान्। स्मरेति स्मरेण कामेन उन्मादिता उन्मत्तीकृताः या मालव्यः मालवाङ्गनाः तासां कुचपरिमलेन स्तनविमर्दजगन्धेन दुर्ललिताः आदरवन्तः तान्।

(६९) निजेति। निजेन स्वकीयेन ज्योत्स्नापूरेण प्रभातिशयेन प्लाविता उद्भासिता दिगन्ता यैः तान् तारान् महतः। उडुपतीति उडुपतेश्चन्द्रस्य पादानां

पुण्डरीकमिव श्रियः श्वेतातपत्रम् अप्सरस इव (७०) बहु-समररससाहसानुरागावतीर्णा वारविलासिनीः (७१) सिंहा-सनशयनासन्दीप्रभृतीनि राज्योपकरणानि (७२) काला-यसनिगड़निश्चलीकृतचरणयुगलञ्च सकलं मालवराजलोकम् अशेषांश्च ससङ्ख्यालेख्यपत्रान् (७३) सालङ्कारापीड़पीड़ान् कोषकलशान्। अथ आलोच्य तत्सर्वम् अवनिपालः (७४) स्वीकर्त्तुं यथाधिकारम् आदिक्षत् अध्यक्षान्। अन्यस्मिन् च अहनि हयैः स्वसारम् अन्वेष्टुम् उच्चचाल विन्ध्याटवीम् अवाप च परिमितैः एव प्रयाणकैः ताम्।

(७५) अथ प्रविशन् दूरादेव दह्यमानषष्टिकवुसविसर-

---

किरणानां सञ्चयाः समूहा इव शुचीनि धवलोज्ज्वलानि इत्यर्थः जातरूपमयनालं सौवर्णदण्डमित्यर्थः निवासपुण्डरीकमिव निवासश्वेतकमलमिव।

(७०) बह्विति। बहुः प्रभूतः समररसः संग्रामानुरागः साहसञ्च ताभ्याम् अनुरागेण प्रीत्या अवतीर्णाः स्वर्गात् भुवमागताः ताः।

(७१) सिंहेति। सिंहासनं शयनं पर्य्यङ्कः आसन्दी आसनविशेषः एते प्रभृतयः येषां तानि।

(७२) कालायसेति। कालायसनिगड़ेन कृष्णवर्णलौहशृङ्खलेन निश्चली-कृतानि चरणयुगलानि यस्य तथाभूतं बन्दीभूतमिति यावत्। ससङ्ख्यालेख्य-पत्रान् सङ्ख्या अत्र एतत्सङ्ख्यकानि धनानि सन्तीत्येवं गणना तस्या लेख्यपत्रं तेन सहिताः तान्।

(७३) सालङ्कारेति। अलङ्काराणाम् आपीड़ानां शिरोभूषणविशेषाणां पीड़ा सङ्गः तया सहिताः तान्। कोषकलशान् धनपूर्णकुम्भान्।

(७४) स्वीकर्त्तुं ग्रहीतुम् आत्मसात्कर्त्तुमिति यावत्। अध्यक्षान् सेनापतीन्। परिमितैः अल्पैः।

(७५) अथ प्रविशन् वनग्रामकं ददर्शेति सम्बन्धः। तं विशिनष्टि दह्यमान इत्यादि। दह्यमानेषु षष्टिकवुसानां धान्यविशेषतुषाणां विसरेषु निचयेषु विसा-रिणः प्रसारिणः विभावसवः अग्नयः येषु तथोक्तानाम्।

विसारिविभावसूनां (७६) वन्यधान्यबीजधानीनां धूमेन धूसरिमाणम् आदधानैः शुष्कशाखासञ्चयरचितगोवाटवेष्टितविकटवटैः व्यापादितवत्सरूपकरोषरचितव्याघ्रयन्त्रैः (७७) यन्त्रितवनपालहठक्रियमाणपरग्रामीणकाष्ठिककुठारैः (७८) गहनतरुषण्डनिर्मितचामुण्डामण्डपैः वनप्रदेशैः प्रकाशमानम् (७९) अटवीप्रायप्रान्ततया कुटुम्बभरणाकुलैः कुद्दालप्रायकृषिभिः कृषीवलैः (८०) अबलवद्भिः उच्चभागभाषितेन

---

(७६) वन्येति वनेषु यानि धान्यबीजानि तेषां धान्यः स्थानानि तत्तद्धान्यबीजरक्षणस्थानानि इत्यर्थः तासाम्। धूसरिमाणं धूसरत्वम् आदधानैः गच्छद्भिः। शुष्केति। शुष्कैः शाखासञ्चयैः शाखानिचयैः रचितेन कल्पितेन गोवाटेन वृतिविशेषेण वेष्टिताः विकटाः प्रकाण्डा वटाः वटवृक्षा येषु तथोक्तैः। वटवृक्षतलस्य विश्रामधामतया हिंस्रजन्तुपरिहारार्थं वृतिरिति भावः। व्यापादितेति व्यापादितस्य निहतस्य व्याघ्रेण इति भावः वत्सस्य गोशावकस्य रूपकम् आकृतिः तेन कारणेन रोषात् व्याघ्रं प्रति कोपादित्यर्थः रचितं कल्पितं व्याघ्रयन्त्रं व्याघ्रनिरोधयन्त्रं येषु तैः व्याघ्रनिपातनायेति भावः।

(७७) यन्त्रितेति। यन्त्रितैः यन्त्रकुशलैः वनपालैः वनरक्षकैः हठेन क्रियमाणः परग्रामीणस्य परग्रामवासिनः काष्ठिकस्य काष्ठव्यवसायिनः कुठारः येषु तथोक्तैः।

(७८) गहनेति। गहने निविडे तरूणां वृक्षाणां षण्डे सञ्चये तन्मध्ये इत्यर्थः निर्मितं रचितं चामुण्डायाः कालिकायाः मण्डपं येषु तथाभूतैः वनप्रदेशैः वनविभागैः। प्रकाशमानं राजमानं वनग्रामीऽयमिति प्रतीतिमुत्पादयन्तं वा।

(७९) अटवीप्रायप्रान्ततया अरण्यबहुलप्रान्तदेशत्वेन कुटुम्बभरणाकुलैः परिवारभरणव्यग्रैः कुद्दालप्रायः कुद्दालः भूखननास्त्रविशेषः प्रायेण कृषिः कर्षणसाधनं येषां तथाभूतैः।

(८०) अबलवद्भिः सामान्यबलशालिभिरित्यर्थः। उच्चभागभाषितेन उच्चः उन्नतः भागः भाग्यं यत्र तथाभूतं भाषितं वचनं तेन। उन्नतभाग्यशालित्वसूचकेन

भज्यमानभूरिशालिखलचेत्रखण्डलकम् (८१) अल्पावकाशैश्च कापिलैः कालायसैः इव कृष्णमृत्तिकाकठिनैः (८२) स्थानस्थानस्थापितस्थाणूत्थितस्थूलपल्लवैः दुरुपगमश्यामाकप्ररूढ़िभिः अलम्बुसबहुलैः (८३) अविरहितकोकिलाक्षक्षुपैः विरलविरलैः केदारैः कृच्छ्रकृष्यमाणैः (८४) नातिप्रभूतप्रवृत्तगतागताप्रहतभुवम् उपक्षेत्रसुपरचितैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवं दिशि दिशि च (८५) प्रतिमार्गद्रुमकृतानां पथिक-

---

वाक्येनेति यावत् भज्यमानानि विभज्य मृद्यमानानि इत्यर्थः शालिखलक्षेत्राणां धान्यरक्षणस्थानधान्यवहनस्थानानां खण्डलकानि शकलानि यस्य यत्र वा तम्।

(८१) अल्पावकाशैः अल्पपरिसरैः कापिलैः पिङ्गलवर्णैः कालायसैरिव कृष्णलोहनिर्मितैरिव। कृष्णमृत्तिकाकठिनैः कृष्णमृत्तिका मृत्तिकाविशेषः तद्वत् कठिनाः तैः।

(८२) स्थानेति। स्थानस्थानेषु केषुचित् केषुचित् प्रदेशेषु स्थापितेभ्यः रक्षितेभ्यः स्थाणुभ्यः शाखापल्लवहीनशुष्कतरुभ्यः उत्थिताः प्ररूढ़ाः स्थूलाः पल्लवाः किसलया येषु तथाभूतैः। दुरुपगमेति दुरुपगमा दुर्ज्ञेया श्यामानां घासविशेषाणां प्ररूढ़िः अङ्कुरः येषु तथाभूतैः। अलम्बुसबहुलैः लज्जालुवृक्षाकीर्णैः इत्यर्थः।

(८३) अविरहितेति। न विरहिताः कोकिलाक्षाः तदाख्यद्रुमाः क्षुपाश्च लताभेदा येषु तथोक्तैः। विरलविरलैः अल्पाल्पैः अरण्यप्रायत्वात् अनतिबहुलैः इति भावः। कृच्छ्रकृष्यमाणैः काठिन्यात् कष्टेन कर्षणं नीयमानैः इत्यर्थः केदारैः क्षेत्रैः।

(८४) नातीति। नातिप्रभूतं नात्यधिकं यथातथा प्रवृत्ताभ्यां प्रारब्धाभ्यां गतागताभ्यां यातायाताभ्याम् अप्रहता नातिक्षुण्णा भूर्यत्र तम्। क्षेत्रसमीपे उपक्षेत्रं सामीप्येऽव्ययी भावः यद्वा क्षेत्रेषु उपक्षेत्रमिति विभक्त्यर्थेऽव्ययी भावः उपरचितैः कल्पितैः मञ्चैः माचेतिप्रसिद्धैः। सूच्यमानः अनुमीयमानः श्वापदानां हिंस्रजन्तूनां व्याघ्रादीनाम् उपद्रवः अत्याचारः यत्र तम्।

(८५) प्रतिमार्गेति। प्रतिमार्गं प्रतिपथं द्रुमैः वृक्षैः कृतानां जनितानाम्।

पादप्रस्फोटनधूलिधूसरैः नवपल्लवैर्लाञ्छितच्छायानाम् (८६) अटवीसुलभसालकुसुमस्तवकाञ्चितनवखातकूपिकोपकण्ठप्रतिष्ठितनागस्फुटानाम् (८७) अच्छिद्रकटकल्पितकुटीरकाणां (८८) कुटिलकीटवेणीवेष्ट्यमानशक्तुशारशरावश्रेणीश्रितानाम् (८९) अध्वगजनजग्धजम्बूफलास्थिशबलसमीपभुवाम् उद्धूलिधूलीकदम्बस्तवकप्रकरपुलकिनीनां (९०) कण्टकितकर्करीचक्राक्रान्तकाष्ठमञ्चिकामुषिततृषां तिम्यत्तलशीतलशिकतिल-

---

पथिकेति पथिकानां पान्थानां पादप्रस्फोटनात् चरणमार्जनात् या धूलयः ताभिः तत्संक्रमणेन इति भावः धूसराः तैः। लाञ्छितास्चिह्निताश्छाया येषां तथोक्तानाम्।

(८६) अटवीति। अटव्याम् अरण्ये सुलभाः सुप्रापाः ये सालाः वृक्षविशेषाः तेषां कुसुमस्तवकैः पुष्पगुच्छैः अञ्चिताः शोभिता इत्यर्थः तत्पुष्पगुच्छानां निजजलेषु पतनादिति भावः नवखाता कूपिका क्षुद्रकूपं तस्या उपकण्ठे अन्तिके प्रतिष्ठिताः प्रतिष्ठां गता ये नागस्फुटा नागदन्तिवृक्षाः तेषाम्।

(८७) अच्छिद्रेति। अच्छिद्रं छिद्ररहितं यथातथा कटैः तृणविशेषैः कल्पितानि रचितानि कुटीरकाणि क्षुद्रगृहाणि तेषाम्।

(८८) कुटिलेति। कुटिला या कीटवेणी कीटश्रेणी तया वेष्ट्यमाना आकीर्य्यमाणाः शक्तुभिः यवचूर्णैः शाराः शबलाः शरावाणां मृण्मयभाजनविशेषाणां श्रेण्यः ताभिः श्रिताः युक्ताः तासाम्।

(८९) अध्वगेति। अध्वगैः पान्थैः जनैः जग्धानां खादितानां जम्बूफलानाम् अस्थिभिः अष्टिभिरिति भावः शबला चित्रा समीपभूर्यासां तथोक्तानाम्। उद्धूलितेति उद्धूलितैः उत्क्षिप्तैः धूलिकदम्बानां रजोनिचयानां स्तवकप्रकरैः पुलकिन्यः पुलकशालिन्यः रोमाञ्चिता इव दृश्यमाना इति भावः तासाम्।

(९०) कण्टकितेति। कण्टकितानां सञ्जातकण्टकानां कर्करीणां लताविशेषाणां चक्रैः मण्डलैः आक्रान्ता आवृता याः काष्ठमञ्चिकाः ताभिः मुषिताः हृताः तृषः तृष्णाः यासु तथाविधानाम्। तिम्यदिति तिम्यत्सु आर्द्रेषु तलेषु

कलशीशमितश्रमाणाम् (८१) आश्यानशैवलश्यामलिता-लिञ्जरजायमानजलजड़िम्नाम् (८२) उदकुम्भाक्तष्टपाटल-शर्कराशकलशिशिरीकृतदिशां (८३) घटमुखघटितकटहार-पाटलपुष्पपुटानां (८४) शीकरपुलकितपल्लवपूलीपाल्यमान-शोष्यसरसशिशुसहकारफलजूटीजटिलस्थाणुनां (८५) विश्रा-म्यत्कार्पटिकपेटकपरिपाटीपीयमानपयसाम् अटवीप्रवेश-प्रपाणां शैत्येन त्याजयन्तमिव ग्रैष्मम् उष्माणं क्वचित् अन्यत्र ग्राहयन्तमिव (८६) अङ्गारीयदारुसंग्रहदाहिभिः व्योकारैः

---

शीतलाभिः सिकतिलाभिः बालुकामयीभिः कलशीभिः शमितः अपनीतः श्रमः यासाम् तथोक्तानाम्।

(८१) आश्यानेति। आश्यानैः ईषच्छुष्कैः शैवलैः जलनीलीभिः श्यामलितेषु अलिञ्जरेषु मृण्मयजलाधारविशेषेषु जाला इति ख्यातेषु जायमानः जलानां जड़िमा शैत्यं यासु तथोक्तानाम्।

(८२) उदकुम्भेति। उदकुम्भेभ्यः आकृष्टानां पाटलानां श्वेतरक्तानां शर्क-राणां कर्कराख्यबालुकानां शकलेन खण्डेन जलसिक्तेन इति भावः शिशिरीकृता दिशो याभिः तथोक्तानाम्।

(८३) घटेति। घटानाम् उदकुम्भानां मुखेषु घटितः रचितः कटहारः तृणविशेषनिर्मितहारः पाटलं श्वेतरक्तं पुष्पपुटञ्च यासु तथोक्तानाम्।

(८४) शीकरेति। शीकरैः अम्बुकणैः पुलकिता सम्पृष्टा इति यावत् या पल्लव-पूली किसलयसमूहः तया पाल्यमानः रक्ष्यमाणः आप्यायमान इत्यर्थः अतएव शोष्योऽपि शोषणयोग्योऽपि सरसः यः शिशुसहकारः आम्रतरुशावकः तस्य फलजूटीभिः जटिलः संयुक्तः स्थाणुः शाखापल्लवरहिततरुः इत्यर्थः यासु तथोक्तानाम्।

(८५) विश्राम्यदिति। विश्राम्यद्भिः कार्पटिकैः तीर्थयात्रिकैः पेटकपरि-पाटीभिः पात्रविशेषश्रेणीभिः पीयमानं सलिलं यासां तथोक्तानाम् अटवीप्रवेश-प्रपाणाम् अरण्यप्रवेशे पानीयशालानाम्। ग्रैष्मं नैदाघम् उष्माणम् उत्तापम्।

(८६) अङ्गारीयदारुसंग्रहदाहिभिः अङ्गारेभ्यः हितानि अङ्गारीयाणि

सर्वतश्च (९७) प्रातिवेश्यविषयवासिना समासन्नग्रामगृह-स्थापितस्थविरपरिपाल्यमानपाथेयस्थगितेन (९८) क्षतदारुण-दारुव्यायामयोग्याङ्गाभ्यङ्गेन (९९) स्कन्धाध्यासितकठोर-कुठारकण्ठलम्बमानप्रातराशपुटेन (१००) पाटच्चरप्रत्यवाय-प्रतिपन्नपटच्चरेण कालवेत्रकत्रिगुणव्रततिवलयपाशग्रथित-ग्रीवाग्रथितैः पत्रवीटावृतमुखैः पीतकूटैः ऊढवारिणा (१) पुरःसरवलद्बलीवर्दयुगसरेण नैकटिककुटुम्बिकलोकेन काष्ठ-

---

दारूणि काष्ठाणि तेषां संग्रहः सञ्चयः तं दहन्तीति तथाभूतैः व्योकारैः लौह-कारैः कर्मकारैः इत्यर्थः अन्यत्र क्वचित् ग्राहयन्तमिव संक्रामयन्तमिव उष्माणमिति पूर्वेणान्वयः।

(९७) प्रतिवेश्येति। प्रातिवेश्यः प्रतिवेशी विषयवासी जनपदवासी तेन। समासन्नेति समासन्ने सन्निहिते ग्रामे यत् गृहं तत्र स्थापितेन रचितेन स्थविरेण वृद्धेन परिपाल्यमानं रक्ष्यमाणं यत् पाथेयं सम्बलं तेन स्थगितः पाथेयानधिगमात् गमनात् निवृत्त इत्यर्थः तेन।

(९८) क्षतेति। क्षतस्य दारुणस्य कठिनस्य दारुव्यायामस्य काष्ठव्यवसायस्य योग्यः अङ्गाभ्यङ्गः शरीरतैलमर्दनविशेषः यस्य तथोक्तेन अभ्यङ्गलक्षणमुक्तं यथा मूर्ध्नि न्यस्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेद्वाह्य अभ्यङ्गः स उदाहृत इति।

(९९) स्कन्धेति। स्कन्धे अध्यासितस्य कठोरस्य तीक्ष्णस्य कुठारस्य कण्ठे लम्बमानं प्रातराशपुटं प्रातर्भोजनस्थली यस्य तथाभूतेन।

(१००) पाटच्चरेति। पाटच्चरश्चौर एव प्रत्यवायः अन्तरायः तेन हेतुना प्रतिपन्नं गृहीतं परिहितं पटच्चरं जीर्णवस्त्रं येन तथोक्तेन। कालेति कालवेत्रकस्य कृष्णवेत्रस्य त्रिगुणं त्रिरावृत्तं व्रततिवलयं लतामण्डलमिव पाशः रज्जुः तेन ग्रथितया वेष्टितया ग्रीवया ग्रथितैः विधृतैः पत्रवीटया पत्रसंस्तरेण आवृतम् आच्छादितं मुखं येषां तथोक्तैः पीतकूटैः पानपात्रविशेषैः ऊढवारिणा संगृहीत-सलिलेन।

(१) पुरःसरेति। पुरःसरं यथातथा वलन् चलन् बलीवर्दयुगसरः बलीवर्द-युगलं यस्य तेन। नैकटिककुटुम्बिकलोकेन सन्निहितगृहस्थलोकेन।

संग्रहार्थम् अटवीं प्रविशता (२) श्वापदव्यधनव्यवधानवहली-समारोपितकुटीकृतकूटपाशैश्च (३) गृहीतमृगतन्तुतन्त्री-जालवलयवागुरैः वहिर्व्याधैः विचरद्भिः अंसावसक्तवीतंस-व्यालम्बमानबालपाशिकैश्च (४) संगृहीतग्राहककक्करकपि-ञ्जलादिपञ्जरकैः शाकुनिकैः सञ्चरद्भिः (५) च्युतलासकलेश-लिप्तलताबन्धलट्टालम्पटानां च पेटकैः पाशकशिशूनाम् अटद्भिः (६) तृणस्तम्बान्तरिततित्तिरितरलायमानकौलेयककुलचाटु-कारैश्च विहगमृगयां मृगयुयुवभिः क्रीड़द्भिः (७) परिणत-चक्रवाककण्ठकषायरुचां शीधव्यानां वल्कलानां कलापान्

---

(२) श्वापदेति। श्वापदानां हिंस्रजन्तूनां व्यधनाय वेधनाय व्यवधाने अन्त-राले या वहली निभृतं स्थानं तत्र समारोपिता या कुटी क्षुद्रं तृणनिर्मितं गृहं तत्र कृताः स्थापिताः कूटपाशाः कूटरज्जवः यैः तथाभूतैः।

(३) गृहीतेति। गृहीता मृगतन्तवः मृगाणाम् अन्त्राणि ते एव तन्त्री-जालानि तेषां वलयैः मण्डलैः कल्पितेति भावः वागुरा पाशः यैः तथाभूतैः व्याधैः वहिः विचरद्भिः सञ्चरद्भिः। अंसेति। अंसेषु स्कन्धदेशेषु अवसक्ताः संसक्ताः वीतंसाः बन्धनसाधनानि उपकरणानि व्यालम्बमाना बालपाशिका क्षुद्ररज्जुश्च येषां तैः।

(४) संगृहीतेति। संगृहीतानि ग्राहकाणां कक्कराणां कपिञ्जलादीनाञ्च पक्षिविशेषाणां पञ्जरकाणि यैः तथाभूतैः शाकुनिकैः पक्षिव्याधैः पक्षिलुब्धैः इत्यर्थः।

(५) च्युतेति। च्युतलासकाः विलासशून्या इत्यर्थः तथा लेशेन कदाचिदिति भावः लिप्ता संसृष्टा लता एव बन्धः तासु या लट्टाः पक्षिभेदाः तासु लम्पटाः लुब्धाः तेषां पाशकशिशूनां व्याधशावकानां पेटकैः समूहैश्च। अटद्भिः भ्रमद्भिः।

(६) तृणेति। तृणानां स्तम्बेषु गुच्छेषु अन्तरिताः निभृतस्थिताः ये तित्ति-रयः तदाख्यपक्षिभेदाः तेषु तरलायमानानां लोलुपानां कौलेयकानां कुक्कुराणां यत् कुलं समूहः तस्य चाटुकारैः सेवकैरिति यावत् तत्सहायैरिति भावः। मृगयुयुवभिः तरुणैः व्याधैः।

(७) परिणतेति। परिणतः स्थविरः यः चक्रवाकः पक्षिभेदः तस्य कण्ठः

नातिचिरोद्भूतानाञ्च धातुत्विषां धातकीकुसुमानां गोणी: अगणिता: (८) पिचव्यानां चातसीगणपट्टमूलकानां पुष्कलान् सम्भारान् भारांश्च मधुनो माक्षिकस्य मयूराङ्गजस्य अक्लिष्टमधूच्छिष्टचक्रवालानां (९) लम्बमानलामज्जकजूट-जटानाम् अपत्वचां खदिरकाष्ठानां कुष्ठस्य (१०) कठोर-केशरिसटाभारबभ्रुणश्च रोध्रस्य भूयसो भारकान् लोकेन आदाय व्रजता (११) प्रविचितविविधवनफलपूरितपेटक-मस्तकाभिश्च अभ्यर्णग्रामगत्वरीभि: त्वरमाणाभि: विक्रय-चिन्ताव्यग्राभि: ग्रामेयिकाभि: व्याप्तदिगन्तरम् इतस्ततश्च

---

तद्वत् कषाया पीतरक्ता रुग् येषां तथोक्तानां श्रीधव्यानाम् ऐच्चवाणां वल्कलानां त्वचां कलापान् सङ्घान्। नातिचिरोद्भूतानाम् अनतिचिरोच्चितानां धातुत्विषां गैरिकवर्णानां धातकीकुसुमानां पिप्पलिपुष्पाणाम् अगणिता: असंख्याता: गोणी: गुणनिर्मितभाजनविशेषान्।

(८) पिचव्यानां कार्पासानाम् अतसीगणा अतसीभेदा: पट्टा वसनभेदा: मूलकानि ओषधिभेदा: तेषां पुष्कलान् प्रभूतान् सम्भारान् निचयान्। माक्षिकस्य मक्षिकाविशेषकृतस्य क्षौद्रस्य इत्यर्थ: मधुन: भारान् समूहान्। मयूराङ्गजस्य मयूरपिच्छस्य अक्लिष्टानाम् अक्षुण्णानां मधूच्छिष्टानां सिक्थकानां चक्रवालानि समूहा: तेषाम्।

(९) लम्बमानानां लामज्जकानाम् उशीरविशेषाणां जूटस्य समूहस्य जटा: केसरा: तासाम्। अपत्वचां त्वक्शून्यानां खदिरकाष्ठानां खदिरदारूणां कुष्ठस्य ओषधिविशेषस्य।

(१०) कठोरेति। कठोर: प्रवृद्ध: य: केशरी सिंह: तस्य सटाभार: जटासमूह: तद्वत् बभ्रु कपिलं तस्य रोध्रस्य लोध्रतरुकाष्ठस्य इत्यर्थ: भूयसो अतिप्रभूतान् भारकान् भारा एव भारका: तान्। व्रजता लोकेन जनेन।

(११) प्रविचितेति। प्रविचितानि उच्चितानि विविधानि नानाप्रकाराणि वनफलानि तै: पूरितं पेटकं भाजनविशेष: मस्तके यासां ताभि:। अभ्यर्णग्राम-गत्वरीभि: सन्निकृष्टग्रामगामिनीभि: त्वरमाणाभि: त्वरितगतिभि: विक्रयस्य

(१२) युक्तशूरशक्करशाक्कराणां पुराणपांसूत्किरकरीषकूट-वाहिनीनां (१३) धूर्गतधूलिधूसरसैरिभसरोषस्वरसार्य्यमाणानां संक्रीड़च्चटुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः (१४) सम्पाद्यमानदुर्बलोर्वीविरूक्षक्षेत्रसंस्कारम् (१५) आर-चचित्रदान्तवाहकदण्डोड्डीयमानहरिणहेलालङ्घिततुङ्गवैणव-वृतिभिश्च (१६) निखातगौरकरङ्कशङ्कुशङ्कितशशकशकलित-तुङ्गशृङ्गैः प्रयत्नप्रभृतविशङ्कटविटपैः वाटैः ऐक्षवैः बहुभिः

---

चिन्तया चिन्तायां वा व्यग्राभिः व्यापृताभिः कथं केन प्रकारेण वा एतानि द्रव्याणि विक्रेष्यामीति चिन्तां कुर्वतीभिरित्यर्थः ग्रामेयिकाभिः ग्रामवासिनीभिः । व्याप्तदिगन्तरम् आपूरितदिग्भागमित्यर्थः ।

(१२) युक्तेति । युक्ताः शूरा बलवन्तः शक्कराः तरुणाः शाक्कराः बलीवर्दाः उक्षाणः यासु तासाम् । पुराणेति पुराणाः पांसून् उत्किरन्तीति तथोक्ताः रजोभिः आश्लिष्टा इति यावत् ये करीषाः शुष्कगोमयानि तेषां कूटान् राशीन् वहन्ति इति तथोक्तानाम् ।

(१३) धूर्गतेति । धुरं गतः धूर्गतः भारवहने नियुक्त इत्यर्थः धूलिभिः मार्ग-रजोभिर्धूसरः यः सैरिभः महिषः तेन सरोषेण सक्रोधेन स्वरेण गम्भीररवविशे-षेण सार्य्यमाणाः सञ्चाल्यमानाः तासां । संक्रीड़तां कूजतां चटुलानां घूर्ण-मानानां चक्राणां चीत्कारः शब्दविशेषः तद्वतीनाम् । सम्पातैः सञ्चारैः ।

(१४) सम्पाद्यमानेति । सम्पाद्यमानः जन्यमानः दुर्बलः सामान्य इति भावः उर्व्याः पृथिव्याः विरूक्षः विशेषेण रूक्षः कर्कशः परुष इति यावत् क्षेत्राणां संस्कारः संशोधनं कर्षणमिति भावः यत्र तथोक्तम् ।

(१५) आरचेति । आरचय्य क्षिप्ताः प्रेरिताः दान्ता दन्तमया ये वाहक-दण्डाः तैः उड्डीयमानाः उच्चैः पलायमाना ये हरिणाः तैः हेलया अनायासेन लङ्घिता तुङ्गा उन्नता वैणवी वेणुसम्बन्धिनी वंशनिर्मितेत्यर्थः वृतिः वेष्टनं येषां तैः ।

(१६) निखातेति । निखातैः निहितैः गौरैः करङ्कैः कङ्कालैः शङ्कुभिः शङ्किताः शङ्काकुलाः शशकाः मृगभेदाः तैः शकलिताः खण्डितास्तुङ्गा उन्नताः शृङ्गा

श्यामायमानोपकण्ठम् (१७) अतिविप्रकृष्टान्तरैः मरकतस्निग्धस्नुहावाटवेष्टितैः कार्मुककर्मण्यवंशविटपसङ्कटैः (१८) कण्टकितकरञ्जराजिदुष्प्रवेशैः (१९) उरुवूकवचावङ्ककसुरससूरणशिग्रुग्रन्थिपर्णगवेधुकागर्मुद्गुल्मगहन-गृहवाटिकैः (२०)निखातोच्चकाष्ठारोपितकाष्ठालुकलताप्रतानविहितच्छायैः (२१) परिमण्डलवदरीमण्डपकतलनिखातखादिरकीलबद्ध-

---

अग्रभागा येषां तैः। प्रयत्नेन प्रभूताः पोषिता विशङ्कटा विस्तीर्णा विटपाः शाखा येषु तैः। ऐक्षवैः इक्षुसम्बन्धिभिः बहुभिः वाटैः व्रतिस्थानैः अध्वभिः वा श्यामायमानम् उपकण्ठं सन्निकर्षः यस्य तथोक्तम्।

(१७) अतीति। अतिशयेन विप्रकृष्टं दूरम् अन्तरम् अवकाशः येषां तैः। मरकतेति मरकतवत् स्निग्धैः स्नुहावाटैः सुधावृक्षसमूहैः वेष्टितानि तैः। कार्मुकेति कार्मुकं धनुः तस्य कर्मण्यानां कर्मणि हितानां वंशानां विटपैः शाखाभिः सङ्कटानि आकीर्णानि तैः।

(१८) कण्टकितेति। कण्टकितानां सञ्जातकण्टकानां करञ्जानां नक्तमालाख्यलतानां राजिभिः दुष्प्रवेशानि प्रवेष्टुमशक्यानि तैः।

(१९) उरुवूकेति। उरुवूक एरण्डः उरुवूकस्तथैरण्डोरुचको वातनाशन इत्यमरः। वचा उग्रगन्धा वचोग्रगन्धा गोलोमीत्यमरः वङ्कः इक्षिकविशेषः सुरसो भूतघ्नः सुरसा तुलसीद्रुः स्यादस्त्री बहुमञ्जरी। अपेती राक्षसी गौरी भूतघ्नी देवदुन्दुभिरिति शेषः सूरणः कन्दविशेषः ओल इति भाषा प्रसिद्धः शिग्रुः शोभाञ्जनः शोभाञ्जनकृष्णगन्धा सुखभञ्जोऽथ शिग्रुक इत्यमरः। ग्रन्थिपर्णः मुक्ताकारः सुगन्धिः कन्दभेदः ग्रन्थिपर्णोऽशुकं वर्हिपुष्पं स्थानेय कुन्दरे इति शेषः। गवेधुका तृणधान्यभेदः गर्मुद् लताविशेषः गुल्मः प्रकाण्डरहितवृक्षस्तम्बः तैः गहना सान्द्रा गृहवाटिका उद्यानं येषां तैः।

(२०) निखातेति। निखातेषु निहितेषु उच्चेषु काष्ठेषु आरोपिता उत्थापिता या काष्ठालुकलता अलाबुलता तासां प्रतानैः शाखाप्रशाखाभिः विहिता कृता छाया येषां तैः।

(२१) परिमण्डलेति। परिमण्डलं समन्तात् गोलं यत् वदरीमण्डपकं कोकि-

वल्करूपैः कथमपि (२२) कुक्कुटरटितानुमीयमान-सन्निवेशैः अङ्गनाशस्तिस्तम्भतलविरचितचित्रपूपिकावापिकैः (२३) विकीर्णबदरपाटलपटलैः (२४) वेणुपोटदलनलशर-मयवृतिविहितभित्तिभिः किंशुकरोचनारचितमण्डलमण्डप-वल्वजबद्धाङ्गारराशिभिः (२५) शाल्मलिफलतूलसञ्चयबहुलैः सन्निहितनलशालिशालूकखण्डकुसुदवीजवेणुतण्डुलैः (२६) संगृहीतमालवीजैः भस्ममलनम्लानकाश्मर्य्यकूटव्याप्तकटैः

---

गृहं तस्य तलेषु निखाते रोपिते खादिरे खदिरदारुमये कीले शङ्कौ बद्धा वल्करूपा चुद्रा वत्सा येषां तैः ।

(२२) कुक्कुटेति । कुक्कुटानां रटितेन रवेण अनुमीयमानः सन्निवेशः संस्थानं रचना वा येषां तैः । अङ्गनेति अङ्गनानां स्त्रीणां प्रशस्तिस्तम्भः माङ्गलिकस्तम्भः तस्य तले विरचिता चित्रपूपिकावापिका येषां तैः ।

(२३) विकीर्णेति । विकीर्णैः विचित्रैः वदरीवृक्षात् वायुना पातितैरित्यर्थः वदरैः कोलिफलैः पाटलानि श्वेतरक्तानि पटलानि छदयः येषां तैः ।

(२४) वेणिति । वेणूनां वंशानां पोटदलाः खण्डशकलानि नलाः तृणभेदाः शराः तृणविशेषाश्च तदात्मिका तन्मयी या वृतिः वेष्टनं सैव विहिता भित्तिः कुड्यं येषां तैः । किंशुकेति किंशुकानि पलाशपुष्पाणि रोचना गोरोचनाख्य-माङ्गल्यद्रव्यभेदः ताभ्यां रचितं मण्डलं यस्य तादृशे मण्डपे वल्वजैः तृणभेदैः बद्धः रचितः अङ्गारराशिः अङ्गारचयः येषु तैः ।

(२५) शाल्मलीति । शाल्मलिः रक्तपुष्पा शाल्मली रक्तपुष्पा च मुकुटी स्थिर-जीवितेत्यमरः तस्याः फलानां तूलसञ्चयैः तूलराशिभिः बहुलानि व्याकीर्णानि तैः । सन्निहितेति सन्निहितानि स्थितानि नलशालयः शालिविशेषाः शालूकखण्डाः पद्ममूलानाम् खण्डाः । पद्ममूलन्तु शालूकमित्यमरः कुसुदवीजानि वेणवः वंशाः तण्डुलानि च येषु तैः ।

(२६) संगृहीतेति । संगृहीतानि मालानां स्थलपद्मानां वीजानि येषु तैः । भस्मेति भस्मनां पांशूनां मलनेन सङ्गेन म्लानं मलिनतां गतं यत् काश्मर्य्यकूटं कृष्णमृत्तिकाराशिः तत्र व्याप्ता निहिताः कटाः शयनानि मादुर इति ख्याताः येषां तैः ।

(२७) आम्रानराजादनमदनफलस्फीतैः मधूकासवमद्यप्रायैः (२८) कुसुम्भकुम्भगण्डकुसूलैः अविरहितराजमाषवपुष-कर्कटिकाकुष्माण्डालावुवीजैः (२९) पोष्यमाणवनविड़ाल-मालुधाननकुलशालिजातजातकादिभिः अटवीकुटुम्बिनां गृहैः उपेतं वनग्रामकं ददर्श तत्रैव च अवसदिति।

इति श्रीवाणभट्टकृते हर्षचरिते छत्रलब्धिर्नाम

सप्तमः उच्छ्वासः।

---

(२७) आम्रानेति। आम्रानानि ईषच्छुष्काणि। राजादनः कपीष्टः वृक्षभेदः क्षीरोदकस्तु राजन्यः क्षीरवृक्षः कपीद्रुमः। राजादनो दृढस्कन्धः कपीष्टः प्रियदर्शन इत्यमरः। मदनो रोधवृक्षः मदनः शल्यकोरोध इत्यमरः तयोः फलानि तैः स्फीतानि पूर्णानि तैः। मधूकेति। मधूकानां गुड़पुष्पाणाम् आसवा रसा एव मद्यानि प्रायेण येषु तैः।

(२८) कुसुम्भेति। कुसुम्भानां कुम्भाः गण्डानां खड्गाख्यमृगभेदानां कुसूलानि स्थानानि येषु तैः। अविरहितेति न विरहितानि राजमाषाणां निष्पावाणां वपुषाणां खाडुकानां कर्कटिकानां काँकुड़ इति ख्यातानां कुष्माण्डानाम् अला-बूनां तुम्बीनाञ्च वीजानि येषु तैः।

(२९) पोष्यमाणेति पोष्यमाणाः पाल्यमाना वनविड़ालाः मालधानाः प्राणि-विशेषाः नकुलाः शालिजाताः जीवभेदाः जातकादयश्च प्राणिविशेषा येषु तैः। अटवीकुटुम्बिनां वनगृहिणाम्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता हर्षचरितस्य

सप्तमोच्छ्वासव्याख्या समाप्ता।

# अष्टमः उच्छ्वासः ।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवेव ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ॥ २ ॥

अथ अपरेद्युः उत्थाय पार्थिवस्तस्मात् ग्रामकात् निर्गत्य विवेश विन्ध्याटवीम् । आट च तस्याम् इतस्ततश्च सुबहून् दिवसान् । (३) एकदा तु भूपतेर्भ्रमत एव आटविकसामन्तशरभकेतोः सूनुर्व्याघ्रकेतुः नाम कुतोऽपि (४) कज्जलश्यामलश्यामलतावलयेनाधिललाटम् उच्चैःकृतमौलिबन्धम् अन्धकारि-

---

सहसेति । सहसा हठात् मनोरथप्रार्थितानि मनोऽभीष्टानि वस्तूनि द्रव्याणि सम्पादयता संयोजयता दैवेनापि अनुकूलेनेति भावः भव्यानां सतां पूर्वसेवा इव प्रथमा परिचर्या इव क्रियते ॥ १ ॥

विद्वदिति । विदुषा जनेन सम्पर्कः सङ्गः सख्यमिति भावः नष्टस्य अदर्शनं गतस्य इष्टस्य प्रियस्य ज्ञातेः बन्धुजनस्य दर्शनं साक्षात्कारः तदेव अभ्युदयः मङ्गलं भवने गृहे महारत्नानाम् अन्विष्यापि दुर्लभानामिति भावः लाभश्च प्राप्तिश्च कस्य जनस्य सुखाय आनन्दाय न भवति ? अपि तु सर्वस्य एव भवति इत्यर्थः । एतदेव प्रतिपादयति अथ इत्यादि ।

(३) एकदा तु व्याघ्रकेतुः निघातनामनं शबरयुवानमादाय भूपतेः दर्शस्य कर्मणि षष्ठी आजगाम प्राप इति सम्बन्धः । आटविकः आरण्यः सामन्तः अधिराजः यः शरभकेतुः तस्य सूनुः पुत्र इति व्याघ्रकेतुरित्यस्य विशेषणम् ।

(४) शबरयुवानं विशिनष्टि कज्जलेन इत्यादि । कज्जलवत् श्यामया नीला

लीम् (५) अकारणभुवा भ्रुकुटिभङ्गेन त्रिशाखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तम् (६) अवतंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमणिकर्णिकेन श्रवणेन शोभमानं (७) किञ्चिच्चुल्लस्य प्रविरलपक्ष्मणः चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तारक्षवं क्षतजमिव क्षरन्तम् अवनाटनासिकं चिपिटाधरं चिक्किनचिबुकम् (८) अहीनहनूत्कटकपोलकूटास्थिपर्य्यन्तम्

---

या श्यामलता गन्धप्रियङ्गुलता सा एव वलयं वेष्टनम् अधिललाट ललाटोपरि उच्चैः कृतः उन्नमय्य स्थापितः मौलिः केशचयः येन तथोक्तम्।

(५) अकारणभुवा विना कारणं जातेन इत्यर्थः स्वाभाविकेन इति भावः त्रिशाखेन त्रिरेखेण। भ्रुकुटिभङ्गेन अन्धकारिणीम् अन्धकारवतीम् अतएव त्रियामामिव तमिस्रामिव साहससहचारिणीम् साहससङ्गिनीं ललाटस्थलीं भालदेशम् समुद्वहन्तम् दधानम्।

(६) अवतंसितेति। अवतंसितस्य भूषणीकृतस्य शुकपक्षकस्य प्रभया कान्त्या हरितायमानं श्यामायमानं तेन। पिनद्धेति पिनद्धा बद्धा काचरस्य कपिलस्य काचमणेः कर्णिका कर्णभूषणं काचमणिनिर्मितं कर्णभूषणमित्यर्थः यत्र तथोक्तेन श्रवणेन कर्णेन शोभमानं राजमानम्।

(७) किञ्चिच्चुल्लस्य ईषत् क्लिन्नस्य स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षि चाप्यमी इत्यमरः। प्रविरलपक्ष्मणः असान्द्रलोम्नः सहजेन स्वाभाविकेन रागरोचिषा लोहितप्रभया रसायनरसेन औषधविशेषरसेन सह उपयुक्तं पीतम् इत्यर्थः तरक्षुः वृकः तरक्षुस्तु मृगादन इत्यमरः। तस्य इदं तारक्षवं तच्च क्वचित् रोगविशेषे उपयुज्यते इति वैद्यकाः। क्षतजमिव रक्तमिव क्षरन्तं स्रवन्तम्। अवनाटनासिकं निम्ननासापुटं चिपिटाधरं स्थूललम्बाधरम्। चिक्किनचिबुकं स्थूलिष्ठलम्बाधराधोभागम्।

(८) अहीनेति। अहीनौ अन्यूनौ हनुभ्यामुत्कटयोः कपोलयोः कूटौ शिखरभूतौ अस्थिपर्य्यन्तौ कङ्कालप्रान्तौ यस्य तम्। ईषद्दुदग्रग्रीवाबन्धम् ईषदुदग्रा

ईषदुदग्रग्रीवाबन्धं स्कन्नस्कन्धार्द्धभागम् (८) अनवरतकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन अंसलेन उरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेः (१०) अजगरगरीयसा च भुजयुगलेन लघयन्तं तुहिनशैलशालद्रुमाणां द्राघिमाणं (११) वराहबालवलितबन्धनाभिर्नागदमनजूटिकाभिः जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्तमणिचित्रं त्रापुषं वलयं विभ्राणम् अतुन्दिलमपि तुन्दिभम् (१२) अहीरमणीचर्मनिर्मितपट्टिकया उच्चित्रचित्रकत्वक्तारकितपरिवारया

---

उन्नता ग्रीवा कन्धरा यस्य तम्। स्कन्नेति स्कन्नः शुष्कः लम्बमानः उन्नतो वा स्कन्धार्द्धभागः यस्य तम्।

(८) अनवरतेति। अनवरतेन कोदण्डस्य धनुषः कुण्डलीकरणेन ज्याकर्षणेन चक्रीकरणेन इत्यर्थः कर्कशेन कठिनेन व्यायामेन च अङ्गचालनविशेषेण च विस्तारितं तेन। अंसलेन बलवता उरसा वक्षःस्थलेन। विन्ध्यगिरेः तटशिलायाः प्रथिमानं विस्तारम्।

(१०) अजगरगरीयसा अजगर इव गरीयः गुरुतरं तेन। लघयन्तं लघूकुर्वन्तं तुहिनशैलस्य हिमाद्रेः शालद्रुमाणां शालतरूणां द्राघिमाणम् अतिदीर्घताम्।

(११) वराहेति। वराहस्य शूकरस्य वालेन लोम्ना वलितं कृतं बन्धनं यासां ताभिः नागदमनजूटिकाभिः नागदमनः विषहरः ओषधिविशेषः तस्य जूटिकाः [illegible]तानः ताभिः जटिलीकृतं युक्तं पृष्ठं यस्य तथाभूते प्रकोष्ठे अरत्निमणिबन्धयो- [illegible]लदेशे प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोरित्यमरः। प्रतिष्ठां स्थितिं [illegible] प्राप्तं गोदन्तमणिचित्रं सर्पशिरोरत्नमण्डितं त्रपुण इदं त्रापुषं पित्तलनिर्मित- [illegible] यावत् वलयं विभाणं दधानम्। अतुन्दिलं क्षाममध्यं तुन्दिभम् उन्नत- [illegible]म्।

[illegible]२) अहीति। अहीरमणी द्विवक्त्रः चित्रकाख्यः जन्तुभेदः यश्छायया [illegible]पि अपरसर्पनाशकः तस्याश्चर्मणा निर्मिता पट्टिका आवरणकोशः यस्याः

(१३) संकुचाजिनजालकितया शृङ्गमयमसृणमुष्टिभागभास्वरया (१४) पारदरसलेशलिप्तसमस्तमस्तकया कृपाण्या करालितविसङ्कटकटिप्रदेशं (१५) प्रथमयौवनोल्लिख्यमानमध्यभागभ्रष्टमांसभरितौ इव स्थवीयसावूरुदण्डौ दधतम् (१६) अच्छभल्लचर्ममयेन भल्लीप्रायप्रभूतशरभृता (१७) शबलशार्दूलचर्मपटपीड़ितेन अलिकुलकालकम्बललोम्ना पृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्श्यमुपदर्शयन्तम् (१८) उत्तरत्रिभागोत्तंसितचाषपिच्छचारुशिखरे खदिर-

---

तथाभूतया। उचित्रेति उचित्रा स्वभावोद्गतचित्रा या चित्रकस्य मृगविशेषस्य त्वक् चर्म तया तारकितः सञ्जाततारः परिवारः परिवेष्टनं यस्याः तथाभूतया।

(१३) सङ्कुचेति। सङ्कुचेन सङ्कुचितेन अजिनेन कृष्णमृगचर्मणा जालकिता आवृता तया। शृङ्गेति शृङ्गमयेण मसृणेन स्वच्छेन मुष्टिभागेन मुष्टिदेशेन भास्वरा दीप्तिमती तया।

(१४) पारदेति। पारदस्य रसः तस्य लेशेन बिन्दुना लिप्तः समस्तः मस्तकः शिरोभागः यस्याः तया। कृपाण्या छुरिकया कर्त्तर्या वा करालितेति करालितः भीषणीकृतः विसङ्कटः विशालः कटिप्रदेशः यस्य तम्।

(१५) प्रथमेति। प्रथमेन यौवनेन उल्लिख्यमानात् उत्खन्यमानात् कृशतां नीयमानादिति यावत् मध्यभागात् भ्रष्टेन मांसेन भरिताविव आपूरिताविव स्थवीयसौ अतिस्थूलौ।

(१६) अच्छेति अच्छभल्लचर्ममयेन भल्लूकचर्ममयेन। भल्लीति। भल्ली अस्त्रविशेषः तत्प्रायान् तद्बहुलान् प्रभूतान् शरान् बिभर्त्तीति तथोक्तेन।

(१७) शबलेति। शबलं चित्रं शार्दूलचर्मैव पटः तेन पीड़ितम् आवृतं तेन। अलीति अलिकुलं भृङ्गवृन्दं तद्वत् कालं यत् कम्बललोम तेन तन्निर्मितेन इति भावः पृष्ठभागभाजा पृष्ठदेशस्थितेन भस्त्राभरणेन भस्त्रा अन्यद्वीपकचर्मनिर्मितं वायुयन्त्रविशेषः सैव आभरणं मण्डनं तेन तूणेन वा पल्लवितमिव पूरितमिव।

(१८) उत्तरेति। उत्तरे उपरीत्यर्थः त्रिभागे तृतीये भागे कूर्परोपरि इत्यर्थः उत्तंसितं मण्डलीकृतं यत् चाषपिच्छं चाषाख्यपक्षिपक्षः तेन चारु ना

जटानिर्माणे खरप्राणे (१९) प्रचुरमयूरपित्तपत्रलताचित्रितत्वचि त्वचि सारगुरुणि वामस्कन्धाध्यासितधनुषि दोषि लम्बमानेन अवाक्शिरसा (२०) शितशरकृत्तैकनलकविवरप्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन (२१) बन्धूकलोहितरुधिरराजिरञ्जितघ्राणवर्त्मना (२२) वपुर्विततिव्यक्तविभाव्यमानकोमलक्रोड़रोमशुक्लिम्ना शशेन (२३) शिताटनीशिखाग्रग्रथितग्रीवेण (२४) चापावृतचञ्चूत्तानताम्रतालुना तित्ति-

---

शिखरम् अग्रं यस्य तथोक्ते खदिरेति खदिरजटाया इव निर्माणं घटनं यस्य तथाभूते खदिरजटानिभे इत्यर्थः खरप्राणे तीक्ष्णबले ।

(१९) प्रचुरेति । प्रचुरेण बहुना मयूरपित्तेन या पत्रलता रचितेति भावः तया चित्रिता त्वक् यस्य तथाविधे । त्वचि चर्मणि सारेण काठिन्येन गुरु तस्मिन् । वामस्कन्धम् अध्यासितं धनुर्यस्य तथाभूते दोषि भुजे । अवाक्शिरसा अधोमुखेन ।

(२०) शितेति । शितेन तीक्ष्णेन शरेण निकृत्तं छिन्नं यत् एकं नलकं सच्छिद्राङ्गविशेषः तस्य विवरे छिद्रे प्रवेशिता या इतरजङ्घा हस्तधृता या अन्या जङ्घा तया जनितः स्वस्तिकबन्धः आसनबन्धविशेषः यस्य तथोक्तेन ।

बन्धूकेति । बन्धूकं तदाख्यं पुष्पं तद्वत् लोहितं रक्तं यत् रुधिरं शोणितं तस्य राज्या धारया रञ्जितं घ्राणवर्त्म नासारन्ध्रं यस्य तेन । नासारन्ध्रात् रक्तस्राविणा इत्यर्थः ।

(२१) वपुरिति । वपुषः शरीरस्य विततत्या विस्तारेण व्यक्तं स्पष्टं यथा तथा विभाव्यमानः दृश्यमानः कोमलानां क्रोड़रोम्णां शुक्लिमा श्वैत्यं यस्य तथोक्तेन शशेन तदाख्येन मृगेण ।

(२३) शितेति । शिता तीक्ष्णा या अटनी धनुषोऽग्रभागः तस्याः शिखा चूड़ा तस्या अग्रं तेन ग्रथिता ग्रीवा यस्य तेन ।

(२४) चापेति । चापेन धनुषा आवृतायां चञ्चौ उत्तानः ताम्रः रक्तवर्णः तालुर्यस्य तेन तित्तिरिणा तदाख्येन पक्षिणा वर्णकमुष्टिमिव मुष्टिगृहीतलेखन्या प्रथमम् अक्षरलेखनमिव इति खड़ीति भाषया प्रसिद्धं विधानम् इति यावत्

रिणा वर्णकमुष्टिमिव मृगयाया दर्शयन्तं (२५) विषमविषदूषितवदनेन च विकर्णेन कृष्णाहिना इव मूलगृहीतेन व्यग्रदक्षिणकराग्रं जङ्गममिव गिरितटतमालपादपं यन्त्रोल्लिखितम् अश्मसारस्तम्भमिव भ्रमन्तम् (२६) अञ्जनशिलाच्छेदमिव चलन्तम् अयःसारमिव गिरेर्विन्ध्यस्य गलन्तं पङ्कस्थलीं करिकुलानां कालपाशं कुरङ्गयूथानां (२७) धूमकेतुं मृगराजचक्राणां महानवमीमहं महिषमण्डलानां हृदयमिव हिंसायाः फलमिव पापस्य कारणमिव कलिकालस्य कामुकमिव कालरात्रेः शबरयुवानम् आदाय आजगाम। दूरे च स्थापयित्वा विज्ञापयाम्बभूव देव! सर्वस्य अस्य विन्ध्यस्य स्वामी सर्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा (२८) स्वस्रीयः सकलस्य अस्य विन्ध्यकान्ताराररण्यस्य पर्णानामपि अभिज्ञः किमुत प्रदेशानाम्। एनं पृच्छतु देवः योग्योऽयम् आज्ञां

---

मृगयाया मृगस्वीकारक्रियायाः। क्षुद्रमृगपक्षिवधरूपं प्रथमं मृगयाव्यापारमात्मनः प्रकाशयन्तमिव इति भावः।

(२५) विषमेति। विषमेण दारुणेन विषेण दूषितं वदनं मुखं यस्य तेन कृष्णाहिना इव कृष्णसर्पेण इव विकर्णेन तदाख्यास्त्रविशेषेण। अश्मसारस्तम्भमिव शिल्पविशेषनिर्मितं स्तम्भमिव।

(२६) अञ्जनशिलाच्छेदमिव कज्जलप्रस्तरशकलमिव। अयःसारमिव लौहसारमिव।

(२७) धूमकेतुम् अग्निम्। मृगराजचक्राणां सिंहसमूहानाम्। महानवमीमहं महानवमीमहोत्सवं महिषमण्डलानां महिषसङ्घानाम्। कामुकमिव कान्तमिव।

(२८) स्वस्रीयः भागिनेयः। विन्ध्यकान्ताराररण्यस्य विन्ध्याचलदुर्गमकाननस्य।

कर्त्तुम्। इति कथिते च निर्घातस्तु क्षितितलनिहितमौलिः प्रणामम् अकरोत् उपनिन्ये च (२९) तित्तिरिणा सह शशोपायनम्। अवनिपतिस्तु सम्मानयन् स्वयमेव तम् अप्राक्षीत् अङ्ग! अभिज्ञा यूयम् अस्य सर्वस्य उद्देशस्य। (३०) विहारशीलाश्च दिवसेषु एतेषु भवन्तः। सेनापतेर्वा अन्यस्य वा तदनुजीविनः कस्यचित् (३१) उदाररूपा नारी आगता भवेद्दर्शनगोचरमिति।

निर्घातस्तु भूपालालापनप्रसादेन आत्मानं बहुमन्यमानः प्रणनाम दर्शितादरश्च व्यज्ञापयत् देव! प्रायेण अत्र हरिणोऽपि (३२) न अपरिचिताः सञ्चरन्ति सेनापतेः कुत एव नार्य्यो नापि एवंरूपा काचित् अबला। तथापि देवादेशात् इदानीम् अन्वेषणं प्रति प्रतिदिनम् अनन्यकृत्यैः क्रियते यत्नः। इतश्च (३३) अर्द्धगव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती (३४) प्रभूतान्तेवासिपरिवृतः पराशरी दिवाकरमित्रनामा गिरिनदीम्

---

(२९) तित्तिरिणा सह शशोपायनं तित्तिरिं शशञ्चोपायनद्वयमित्यर्थः। अङ्गेति सम्बोधनम्।

(३०) विहारशीलाः विचरणशीलाः। सेनापतेः भूकम्पस्य।

(३१) उदाररूपा अतिरूपवती।

(३२) अपरिचिताः अज्ञाताः।

(३३) अर्द्धगव्यूतिमात्रे क्रोशैकपरिमिते गव्यूतिः स्त्री क्रोशयुगमित्यमरः। मुनिमहिते ऋषिपूजिते महीधरमालामूलरुहि पर्वतश्रेणिमूलजाते महीरुहां वृक्षाणां षण्डे मण्डले तन्मध्ये इत्यर्थः। पिण्डपाती पिण्डाय ग्रासमात्रान्नाय पतति भिक्षां चरतीति तथोक्तः।

(३४) प्रभूतेति। प्रभूतैः बहुभिरन्तेवासिभिः शिष्यैः परिवृतः। पराशरी भिक्षुः पाराशरीति पाठान्तरम्।

आश्रित्य प्रतिवसति स यदि विन्देत् वार्त्तामिति। तत् श्रुत्वा नरपतिः अचिन्तयत् श्रूयते हि (२५) तत्रभवतः सुगृहीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायणीयः त्रयीं विहाय ब्राह्मणायनो विद्वान् उत्पन्नसमाधिः सौगते मते युवा एव काषायाणि गृहीतवान् इति। प्रायशश्च जनस्य जनयति (२६) सुहृदपि दृष्टो भृशम् आश्वासम्। अभिगमनीयाश्च गुणाः सर्वस्य। कस्य न (२७) प्रतीक्ष्यो मुनिभावः। भगवती वैधेयेऽपि धर्मगृहिणी गरिमाणम् आपादयति प्रव्रज्या किं पुनः सकलजनमनोमुषि विदुषि जने? यतो नः (२८) कुतूहलि हृदयम् अभूत् सततमस्य दर्शनं प्रति प्रासङ्गिकमेव इदमापतितम् अतिकल्याणं पश्यामः प्रयत्नप्रार्थितदर्शनं जनमिति। प्रकाशश्च अब्रवीत् अङ्ग! समुपदिश तम् उद्देशं यत्रास्ते स पिण्डपातीति। एवमुक्ता च तेनैव उपदिश्यमानवर्त्मा प्रावर्त्तत गन्तुम्।

---

(२५) तत्रभवतः पूज्यस्य। मैत्रायणीयः वेदशाखाविशेषाध्येता। त्रयीं त्रिवेदीम् ऋग्यजुःसामनामानस्त्रयो वेदास्त्रयी श्रुतेत्यमरः। ब्राह्मणायनः ब्राह्मणकुलजातः द्विजश्रेष्ठो वा। उत्पन्नसमाधिः चित्तैकाग्र्यनिष्ठः सौगते सुगतो बुद्धः तस्य इदं तस्मिन् मते आश्रये। काषायाणि कषायरक्तानि वसनानि।

(२६) सुहृद मित्रं दृष्टः साक्षात् कृतोऽपि किमपि अकुर्वन्नपीति भावः। आश्वासम् आस्थां प्रीतिं वा। अभिगमनीयाः अनुसरणीयाः सर्वस्य यस्मिन् कस्मिन्नपि मते वर्त्तमानस्य इति भावः।

(२७) प्रतीक्ष्यः पूज्यः मुनिभावः तापसभावः। भगवती सर्वशक्तिमती धर्मगृहिणी प्रव्रज्या सन्न्यासधर्म इत्यर्थः वैधेयेऽपि मूर्खेऽपि गरिमाणं गौरवम् आपादयति प्रतिष्ठापयति। सकलजनमनोमुषि सर्वजनमनोहरे।

(२८) कुतूहलि समुत्सुकम् प्रासङ्गिकं प्रसङ्गात् आगतम्।

अथ क्रमेण (३९) गच्छत एव तस्य अनवकेशिनः कुड्मलितकर्णिकाराः प्रचुरचम्पकाः (४०) स्फीतफलेग्रहयः फलभरनमितनमेरवः नीलदलनलदनारिकेलनिकराः करिकेसरसरलपरिकराः (४१) कोरकनिकुरम्बरोमाञ्चितकुरवकराजयः (४२) रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशः (४३) प्रविकसितकेसररजोविसरबध्यमानचारुधूसरिमाणः खरजःसिकतिलतिलकतलाः (४४) प्रविचलितहिङ्गवः प्रचुरपूगफलाः (४५) प्रसवपूगपिङ्गप्रियङ्गवः परागपिञ्जरितमञ्जरीपुञ्जरमान-

---

(३९) गच्छतस्तस्य एवम्भूताः तरवः दर्शनपथमवतेरुरिति सम्बन्धः। तान् विशिनष्टि अनवकेशिन इत्यादि। अनवकेशिनः फलवन्तः बन्ध्योऽफलोऽवकेशी चेत्यमरः। कुड्मलितकर्णिकाराः कुड्मलिताः सञ्जातकुड्मलाः कर्णिकारा द्रुमोत्पलाः येषु ते। प्रचुरा बहुलाः चम्पका येषु ते।

(४०) स्फीतेति। स्फीताः प्रवृद्धाः फलेग्रहयः अवन्ध्या येषु तथोक्ताः स्यात् अवन्ध्यः फलेग्रहिरित्यमरः। फलेति फलानां भरेण नमिता नमेरवः तरुविशेषाः येषु तथोक्ताः। नीलेति। नीलदलाः श्यामलपर्णाः नलदा उशीराः नारिकेलनिकराः येषु ते। करीति करिकेसराः हरिकेशरेति पाठान्तरं सरला देवदारवः तेषां परिकरः सम्बन्धः समवायो वा येषु ते।

(४१) कोरकेति। कोरकाणां कलिकानां निकुरम्बैः सङ्घैः रोमाञ्चिताः सञ्जातरोमहर्षा इव लक्ष्यमाणाः कुरवकाणां राजयः येषु ते।

(४२) रक्तेति रक्तानां विकसितानाम् अशोकानां पल्लवलावण्यैः किसलयकान्तिभिः लिप्यमाना दश दिशः येषु ते।

(४३) प्रविकसितेति। प्रकर्षेण विकसितानां केसराणां वकुलानां रजोविसरेण परागप्रसरेण बध्यमानाः चारवः मनोज्ञा धूसरिमाणः धूसरत्वानि येषां येषु वा ते। खरज इति खरजोभिः निजपरागैः सिकतिलानि सैकतमयानि तिलकानां विलकतरूणां तलानि येषु येषां वा ते।

(४४) प्रविचलितेति। प्रविचलिताः कम्पिताः हिङ्गवः हिङ्गुलताः येषु ते। प्रचुरेति प्रचुराणि बहूनि पूगानां गुवाकानां फलानि येषु ते।

मधुपमञ्जुशिञ्जाजनितजनमुदः (४६) मदमलमेचकितमुचुकुन्दस्कन्धकाण्डकथ्यमाननिःशङ्ककरिकटकण्डूतयः (४७) उड्डीयमाननिःशङ्कचटुलकृष्णशारशावसकलशाद्वलसुभगभूमयः (४८) तमःकालतमतमालमालामीलितातपाः स्तवकदन्तुरितदेवदारवः (४९) तरलताम्बूलीस्तम्बजालकितजम्बूजम्बीरवीथयः कुसुमरजोधवलधूलीकदम्बचक्रचुम्बितव्योमानः (५०) बहलमधुमोचोच्चितच्चितयः परिमलघटितघ्राण-

---

(४५) प्रसवेति । प्रसवानां फलानां पुष्पाणां वा पूगेन वृन्देन पूगः क्रमुकवृन्दयोरित्यमरः । पिङ्गाः पिङ्गलवर्णाः प्रियङ्गवः श्यामालताः येषु ते । परागेति परागैः रजोभिः पिञ्जरिताः पिङ्गलवर्णाः या मञ्जर्यः ताभिः पुञ्जमानानां संघट्यमानानां मधुपानां भ्रमराणां मञ्जुशिञ्जया मनोहरेण शिञ्जनेन जनिता उत्पादिता जनानां मुदः आनन्दाः यैः तथाभूताः ।

(४६) मदेति । मदस्य मलेन कलङ्केन मेचकिताः संसक्तचन्द्रकाः ये मुचुकुन्दाः पुष्पतरुभेदाः तेषां स्कन्धा इव काण्डाः मूलात् शाखावधिविभागाः तैः कथ्यमानाः निवेद्यमानाः निःशङ्कानां करिणां हस्तिनां कटयोः गण्डयोः कण्डूतयः कण्डूयनानि येषु येषां वा ते ।

(४७) । उड्डीयमानेति । उड्डीयमानैः उत्पतद्भिः निःशङ्कैः निर्भयैः चटुलैः चपलैः कृष्णशारशावानां कृष्णमृगशिशूनां सकलैः सङ्घैः शाद्वलाः श्यामाः अतएव सुभगाः रम्या भूमयः तलदेशा येषां तथोक्ताः ।

(४८) तम इति । तमांसि इव अन्धकारा इव कालतमाः अतिनीलाः याः तमालमालाः तापिञ्छश्रेणयः ताभिः मीलिताः शमिता इत्यर्थः आतपाः सौरालोका येषु तथोक्ताः । स्तवकेति स्तवकैः गुच्छैः दन्तुरिताः सञ्जातदन्ता इव लक्ष्यमाणा देवदारवः येषु तथोक्ताः ।

(४९) तरलेति । तरलानां चपलानां ताम्बूलीनां नागवल्लीनां स्तम्बैः सङ्घैः जालकिता युक्ता जम्बूनां जम्बीराणां दन्तशठाख्यानां तरूणां स्युः जम्बीरो दन्तशठजम्भजम्भीरजम्भला इत्यमरः वीथयः श्रेणयः येषु ते । कुसुमेति कुसुमानां रजांसि एव धवलधूल्यः तासां कदम्बचक्रैः निचयमण्डलैः चुम्बितं स्पृष्टं व्योम आकाशं यैः तथोक्ताः ।

ल्मयः (५१) कतिपयदिवससूतकुक्कुटीकुटीकृतकुटजकोटराः (५२) चटकासञ्चार्य्यमाणवाचाटचाटकैरक्रियमाणचाटवः (५३)सहचरीचारणचञ्चुरचकोरचञ्चवः निर्भयभूरिभूरुण्डभुज्यमानपाककपिलपीलवः (५४) सदाफलकट्फलविशसननिःशूकशुकशकुन्तशातितशलाटवः (५५) शैलेयसुकुमारशिलातलसुखशयितशशशिशवः (५६) शेफालिकाशिफा-

---

(५०) बहुलेति। बहुलेन प्रभूतेन मधूनां मकरन्दानां मोचेण वर्षेण उक्षिताः सिक्ताः क्षितयः तलभूमयः येषां ते। परिमलेति परिमलेन पुष्पादीनां सौरभेण घटिता जनिता घ्राणानां घ्राणेन्द्रियाणां तृप्तिः यैः तथोक्ताः।

(५१) कतिपयेति। कतिपयेषु दिवसेषु सूताभिः प्रसूतवतीभिः कुक्कुटीभिः कुटीकृतानि आवासीकृतानि कुटजानां गिरिमल्लिकानां कोटराणि गह्वराणि येषु तथोक्ताः।

(५२) चटकेति। चटकया तदाख्यया पक्षिण्या सञ्चार्य्यमाणैः वाचाटैः मुखरैः चटकाया अपत्यानि पुमांसः चाटकेराः तैः क्रियमाणा चाटवः मधुरस्वना येषु तथोक्ताः।

(५३) सहचरीति। सहचरीभिः सङ्गिनीभिः चकोरीभिरित्यर्थः चारणे भक्षणे चञ्चुराः निपुणाः चकोराणां चञ्चवः येषु तथोक्ताः। निर्भयेति निर्भयैः भूरिभिः बहुभिः भूरुण्डैः पक्षिविशेषैः भुज्यमानानि पाकेन परिणामेन कपिलानि पिङ्गलानि पीलूनि तदाख्यफलविशेषाः येषु तथोक्ताः।

(५४) सदेति। सदा फलन्तीति सदाफला ये कट्फलाः श्रीपर्णाख्या वृक्षाः तेषां फलविशसने फलभेदने निःशूकाः क्षतचञ्चुवा इत्यर्थः ये शुकशकुन्ताः शुकपक्षिणः तैः शातितानि पातितानि शलाटूनि अपक्वानि फलानि येषां ते। आमे फले शलाटुः स्यादित्यमरः।

(५५) शैलेयेति। शैलेयेन शिलाजत्वाख्यगन्धद्रव्यभेदेन सुकुमारं सुरम्यं यत् शिलातलं तत्र सुखेन शयिताः शशानां मृगभेदानां शिशवः शावकाः येषु येषां वा ते।

(५६) शेफालिकेति। शेफालिकानां शिफासु मूलेषु यानि विवराणि कीट-

विवरविस्रब्धविवर्त्तमानगोधेरराशय: (५७) निरातङ्करङ्कव: निराकुलनकुलकेलय: कलकोकिलकुलकवलितकलिकोद्गमा: (५८) सहकारारामरोमन्थायमानचमूरुयूथा: यथासुखनिषण्णनीलाण्डजमण्डला: (५९) निर्विकारवृकविलोक्यमानपोतपीतगवयधेनव: (६०) श्रवणहारिसनीड़गिरिनितम्बनिर्झरनिनादनिद्रानन्दमन्दायमान-करिकुलकर्णतालदुन्दुभय: (६१) समासन्नकिन्नरीगीतरवरसमानरुरव: प्रमुदिततरतर-

---

राणि तेषु विस्रब्धं नि:शङ्कं यथा तथा विवर्त्तमाना: तिष्ठन्त: गोधेराणां गोधिकामिथुनां राशय: समूहा: येषु तथोक्ता: स्त्रियां गोधेर गोधार गोधेया गोधिकात्मजा इत्यमर:।

(५७) निरातङ्करङ्कव: नि:शङ्करङ्कुमृगा:। निराकुलेति निराकुला नि:शङ्का नकुलानां केलय: विचरणानि येषु तथाभूता:। कलेति कलै: मधुररवै: कोकिलानां कुलै: कवलिता: भक्षिता कलिकोद्गमा: कोरकप्ररोहा: येषां ते।

(५८) सहकारेति। सहकारारामेषु आम्रकाननेषु रोमन्थायमानानि प्राग्भक्षितानि उद्गीर्य्य चर्वयन्ति चमूरूणां मृगभेदानां यूथानि सङ्घा: येषु तथोक्ता:। यथेति यथासुखं सुखमनतिक्रम्य निषण्णानि नीलानि नीलवर्णानि अण्डजानां पक्षिणां यद्वा नीलाण्डजानां मृगविशेषाणां मण्डलानि वृन्दानि येषु तथोक्ता:।

(५९) निर्विकारेति। निर्विकारै: विकारशून्यै: अभ्रान्तैरित्यर्थ: वृकै: तरक्षुभि: विलोक्यमाना दृश्यमाना: पीतपीता: पोतै: शावकै: पीता: पीतस्तना इत्यर्थ: गवयधेनव: गोसदृशाकारा धेनव: येषु तथोक्ता:।

(६०) श्रवणेति। श्रवणं हरतीति श्रवणहारी श्रुतिसुख इत्यर्थ: सनीड़स्य गिरिनितम्बस्य पर्वतमेखलाया: निर्झरनिनाद: तेन या निद्रा तया आनन्द: तेन मन्दायमान: मान्द्यं गच्छन्निति यावत् करिकुलानां गजवृन्दानां कर्णताल एव दुन्दुभि: येषु तथोक्ता:।

(६१) समासन्नेति। समासन्नानां सन्निहितानां किन्नरीणां देवयोनिविशे-

च्छवः (६२) क्षतहरितहरिद्राद्रवरज्यमानवनवराहपोतपोत्र-वलयः गुञ्जाकुञ्जगुञ्जज्जाहकाः (६३) जातीफलकसुप्तशालि-जातकवलयः (६४) दशनकुपितकपिपोतपेटकपाटितपाटल-कीटपुटकाः (६५) लकुचलम्पटगोलाङ्गूललङ्घ्यमानलवलयः बद्धवालुकालवालवलयाः (६६) कुटिलकुटावलिवलितवेग-गिरिनदिकास्रोतसः (६७) निविडशाखाकाण्डलम्बमान-कमण्डलवः (६८) सूत्रशिक्यासक्तरिक्तभिक्षाकपालपल्लवित-

---

षाणां गीतरवेण सङ्गीतनादेन रममानाः सुखमनुभवन्तः रुरवः मृगविशेषाः येषु तथोक्ताः। प्रमुदिततरच्छवः अतिप्रहृष्टवृकाः।

(६२) क्षतेति। क्षतायाः क्षुण्णायाः चर्वितायाः इति भावः हरितायाः श्याम-लायाः हरिद्रायाः द्रवेण रसेन रज्यमाना वनवराहपोतानाम् अरण्यसूकर-शिशूनां पोत्रः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः पोत्रवलयः मुखनिचयाः येषु तथोक्ताः। गुञ्जाकुञ्जेषु गुञ्जावनेषु गुञ्जन्तीति गुञ्जाः कूजनशीला इत्यर्थः जाहकाः प्राणिभेदा येषां ते।

(६३) जातीति। जातीफलकेषु जातीफलसमूहेषु सुप्ता निद्रिताः शालि-जातकानां प्राणिभेदानां वलयः समूहा येषु तथोक्ताः।

(६४) दशनेति। दशनैः दन्तप्रकटनैः कुपिताः ये कपीनां पोताः शिशवः तेषां पेटकैः समूहैः पाटितानि भक्षितानि कीटपुटकानि कीटनिचयाः येषां ते।

(६५) लकुचेति। लकुचेभ्यः डहुभ्यः लकुचो लिकुचो डहुरित्यमरः लम्पटा लुब्धा ये गोलाङ्गूलाः कपिविशेषाः तैः लङ्घ्यमाना लवलयः वृक्षविशेषा येषु येषां वा ते। बद्धेति बद्धं रचितं वालुकाभिः आलवालवलयम् आलवालमण्डलं मूल-देशेषु जलरक्षार्थं वेष्टनमित्यर्थः येषां तथोक्ताः।

(६६) कुटिलेति। कुटिलाभिः कुटानां लताविशेषाणाम् आवलिभिः श्रेणीभिः वलिताः निरुद्धा वेगा येषां तथाविधानि गिरिनदिकानां स्रोतांसि येषु तथोक्ताः।

(६७) निविडेति। निविडेषु सान्द्रेषु शाखाकाण्डेषु लम्बमानाः कमण्डलवः मुनीनां जलपात्रविशेषाः येषां तथोक्ताः।

लतामण्डपाः (६८) निकटकुटीकृतपाटलमुद्राचैत्यकमूर्त्तयः (७०) चीवराम्बररागकषायोदकदूषितोद्देशाः, मेघमया इव कृतशिखण्डिकुलकोलाहलाः वेदमया इव (७१) अपरिमितशाखाभेदगहनाः माणिक्यमया इव महानीलतनवः तिमिरमया इव (७२) सकलजननयनमुषः यामुना इव ऊर्द्धीकृतमहाह्रदाः मरकतमणिश्यामलाः क्रीड़ापर्वतका इव वसन्तस्य (७३) अञ्जनाचला इव पल्लविताः तनया इव अटवीजाता विन्ध्यस्य पातालान्धकारराशय इव भित्त्वा

---

(६८) सूत्रेति । सूत्रनिर्मितासु शिक्यासु वृक्षलम्बितासु शिकेति प्रसिद्धासु आसक्तैः लग्नैः रिक्तैः भिक्षोपार्जितान्नरहितैः इत्यर्थः भिक्षाकपालैः पल्लवितानि सञ्जातपल्लवानि इव कृतानि लतामण्डपानि लतागृहाणि येषां येषु वा तथोक्ताः ।

(६९) निकटेति । निकटकुटीषु सन्निहितकुटीरेषु कृताः रचिताः पाटलमुद्रया रक्तवर्णरचनया चैत्यकानां क्षुद्राणां चैत्यवृक्षाणां मूर्त्तयः आकृतयः येषु तथोक्ताः ।

(७०) चीवरेति । चीवराम्बराणां वल्कलवसनानां रागेण कषायाणि रक्तानि उदकानि जलानि तैः दूषितः आविलितः उद्देशो निम्नदेशः येषां तथोक्ताः । कृतेति कृतः शिखण्डिनां मयूराणां कुलैः कोलाहलः येषु तथोक्ताः ।

(७१) अपरिमितेति । अपरिमितैः अगणितैः इत्यर्थः शाखानां विटपानां कठकौथुमादीनाञ्च भेदैः गहनाः सान्द्राः दूरधिगमाश्च । महानीलाः तनवः अवयवाः येषाम् अन्यत्र महानीलानि नीलकान्ताः तनूनि निकृष्टानि येभ्यः तथोक्ताः ।

(७२) सकलेति । सकलानां जनानां नयनानि मुष्णन्ति हरन्ति दर्शनव्यापाररहितानि कुर्वन्ति भीषयन्ति च इति तथोक्ताः । यामुना इव यमुनाप्रवाहा इव ऊर्द्धीकृता महान्तः ह्रदाः निनादाः पक्षिणाम् इति भावः अन्यत्र मध्ये धृता महान्तः ह्रदाः गम्भीरजलाधारा यैः तथोक्ताः ।

(७३) अञ्जनाचला इव अञ्जनाद्रय इव पल्लविताः सञ्जातपल्लवाः । अटवीजाताः अटवी स्त्री इति भावः तस्यां जाता उत्पन्नाः ।

भुवम् उत्थिताः (७४) प्रतिबिम्बिका इव वर्षावासराणाम् अंशावतारा इव कृष्णरात्रीणाम् इन्द्रनीलमयाः प्रासादा इव वनदेवतानाम् पुरस्तात् दर्शनपथम् अवतेरुः तरवः।

ततो नरपतेः अभवन्मनसि अदूरवर्त्तिना खलु भवितव्यं (७५) भदन्तेन इति। अवतीर्य्य च गिरिसरिति समुपस्पृश्य युगपद्विश्रामसमय-समुन्मुक्त-हेषाघोष-बधिरीकृताटवी-गहनाम् अस्मिन् एव प्रदेशे स्थापयित्वा वाजिसेनाम् अवलम्ब्य च तपस्विजनदर्शनोचितं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तम् अंसे विरलैः एव राजभिः अनुगम्यमानः चरणाभ्यामेव प्रावर्त्तत गन्तुम्।

अथ तेषां तरूणां मध्ये (७६) नानादेशीयैः स्थानस्थानेषु स्थाणून् आश्रितैः शिलातलेषु उपविष्टैः लताभवनानि अध्यावसद्भिः अरण्यानीनिकुञ्जेषु निलीनैः विटपच्छायासु निषण्णैः तरुमूलानि निषेवमाणैः (७७) वीतरागैः आर्हतैः

---

(७४) प्रतिबिम्बिका इव प्रतिच्छन्दका इव वर्षावासराणां वार्षिकदिनानाम्। अवतेरुः जग्मुः।

(७५) भदन्तेन पूज्येन बौद्धभिक्षुणा इति यावत्। अदूरवर्त्तिना निकटवर्त्तिना। युगपदिति युगपत् समकालं विश्रामसमये समुन्मुक्तेन समुच्चरितेन हेषाघोषेण बधिरीकृतम् अटवीगहनं वनगहनं यया तथोक्ताम्। वाजिसेनामश्वसैनिकम्। माधवगुप्तं प्रागुक्तमालवेन्द्रसूनुम्। अंसे स्कन्धदेशे विरलैः कतिपयैः इत्यर्थः। प्रावर्त्तत प्राक्रमत।

(७६) अथ दिवाकरमित्रमद्राक्षीदित्युत्तरेण सम्बन्धः। तमेव विशिनष्टि नानादेशीयैः इत्यादि। अध्यावसद्भिः अधितिष्ठद्भिः। अरण्यानीनिकुञ्जेषु महारण्यस्य लतादिपिहितोदरेषु स्थानेषु निलीनैः निभृतं स्थितैः।

(७७) वीतरागैः विगतविषयवासनैः। आर्हतैः अर्हन् देवता उपास्य इति

मस्करिभिः श्वेतपटैः पाण्डुरिभिक्षुभिः भागवतैः वर्णिभिः (७८) केशलुञ्चकैः कापिलैः जैनैः लोकायतिकैः काणादैः औपनिषदैः ऐश्वरकारणिकैः कारन्धमिभिः धर्मशास्त्रिभिः पौराणिकैः (७९) साप्ततन्तवैः शाब्दैः पाञ्चरात्रिकैः अन्यैश्च स्वान् स्वान् सिद्धान्तान् शृण्वद्भिः (८०) अभियुक्तैः चिन्तयद्भिश्च प्रत्युच्चरद्भिश्च संशयानैश्च निश्चिन्वद्भिश्च व्युत्पादयद्भिश्च विवदमानैश्च अभ्यस्यद्भिश्च व्याचक्षाणैश्च (८१) शिष्यतां प्रतिपन्नैः दूरादेव आवेद्यमानम् अतिविनीतैः कपिभिः अपि चैत्यकर्म कुर्वाणैः (८२) त्रिसरणपरैः परमोपासकैः शुकैरपि

---

भावः येषां तथोक्ताः तैः नग्नक्षपणकैः इत्यर्थः। मस्करिभिः परिव्राजकैः श्वेतपटैः श्वेतोर्णाकम्बलवासोभिः। पाण्डुरिभिक्षुभिः त्यक्तकाषायैः भागवतैः भगवद्भक्तैः वैष्णवैरित्यर्थः वर्णिभिः ब्रह्मचारिभिः।

(७८) केशलुञ्चकैः मुण्डितशिरोभिः। कापिलैः कपिलोक्तसाङ्ख्यमतवर्त्तिभिः जैनैः जिनमतावलम्बिभिः। लोकायतिकैः चार्वाकैः काणादैः वैशेषिकमतवर्त्तिभिः औपनिषदैः वैदान्तिकैः। ऐश्वरकारणिकैः ईश्वरं जगत् कारणमिति वादिभिः नैयायिकैरित्यर्थः कारन्धमिभिः धातुवादिभिः पाषण्डविशेषैः वा।

(७९) साप्ततन्तवैः। सप्ततन्तुः यज्ञः सप्ततन्तुर्मखः क्रतुरित्यर्थः एव उपास्यः इष्टफलप्रद इति भावः येषां तथोक्तैः। शाब्दैः शब्दशास्त्राणि व्याकरणादीनि अधीयते विदन्तीति वा तथोक्तैः। पाञ्चरात्रिकैः पञ्चरात्रोदितशास्त्रानुगामिभिः इत्यर्थः। सिद्धान्तान् आगमान्।

(८०) अभियुक्तैः अभिनिविष्टैः। व्याचक्षाणैः व्याख्यां कुर्वद्भिः।

(८१) शिष्यतां प्रतिपन्नैः अङ्गीकृतशिष्यभावैः इत्यर्थः आवेद्यमानं मां शिष्यं कुर्विति याच्यमानम्। चैत्यकर्म बौद्धधर्मविहितं कर्म अहिंसादिरूपमिति भावः।

(८२) त्रिसरणपरैः त्रीणि सरणानि गतयः बौद्धधर्मभेदाः तेषु तत्पराः तैः। परमोपासकैः परमसेवकैः। शुकैरपि तदाख्यपक्षिभिरपि शाक्यस्य बुद्धदेवस्य

शाक्यशासनकुशलैः कोशं समुपदिशद्भिः (८३) शिक्षापदोपदेशोपशमशालिनीभिः शारिकाभिः अपि धर्मदेशनां दर्शयन्तीभिः अनवरतश्रवणगृहीतालोकैः कौशिकैरपि (८४) बोधिसत्त्वजातकानि जपद्भिः जातसौगतशीलशीतलस्वभावैः शार्दूलैरपि अमांसाशिभिः उपास्यमानम् (८५) आसनोपान्तोपविष्टविस्रब्धानेककेसरिशावकतया मुनिपरमेश्वरम् अकृत्रिम इव सिंहासने निषण्णम् उपशममिव पिबद्भिः वनहरिणैः जिह्वालताभिः उपलिह्यमानपादपल्लवं वामकरतलनिविष्टेन नीवारम् अश्नता पारावतपोतेन कर्णोत्पलेन इव प्रियां मैत्रीं प्रसादयन्तम् (८६) इतरकरकिसलयनखमयूखलेखाभिर्जनितजनव्यामोहम् उद्ग्रीवं मयूरं मर-

---

शासने आज्ञायां कुशलाः निपुणाः तत्परा इत्यर्थः तैः। कोशं बुद्धसिद्धान्तग्रन्थम्।

(८३) शिक्षेति। शिक्षायाः पदानि सुप्तिङन्तानि तेषाम् उपदेशेन शिष्येभ्यः शिक्षाप्रदानेन इत्यर्थः य उपशमः शान्तिः इन्द्रियदमनं तेन शालन्ते शोभन्ते इति तथोक्ताभिः। धर्मदेशनां धर्मचर्चाम्। अनवरतेति अनवरतश्रवणेन गृहीत आलोकः ज्ञानं यैः तथाभूतैः। कौशिकैरपि पेचकैरपि।

(८४) बोधिसत्त्वेति। बोधि ज्ञानि सत्त्वं यस्य तथाविधः बुद्धदेव इत्यर्थः तस्य जातकानि जन्मवृत्तान्ताः तानि जपद्भिः कीर्त्तयद्भिः। जातेति जातेन उत्पन्नेन सौगतस्येव शीलेन चरितेन शीतलः प्रशान्तः स्वभावो येषां तैः।

(८५) आसनेति। आसनस्य उपान्तेषु प्रान्तदेशेषु उपविष्टा विस्रब्धाः निःशङ्का अनेके बहवः केशरिणां सिंहानां शावका यस्य तथोक्तः तस्य भावः तत्ता तया हेतुना मुनिः परमेश्वर इव तम्। अकृत्रिमे इव स्वभावनिष्पन्ने इव उपलिह्यमानपादपल्लवं स्पृश्यमानचरणकिसलयम्। अश्नता खादता।

(८६) इतरेति। इतरस्य दक्षिणस्य करकिसलयस्य नखानां मयूखलेखाभिः जनितेति। जनितः उत्पादितः जनानां व्यामोहः विशेषेण मोहनं येन तथोक्त

कतमणिकरकमिव वारिधाराभिः पूरयन्तम् इतस्ततः पिपीलकश्रेणीनां श्यामाकतण्डुलकणान् स्वयमेव किरन्तम् अरुणेन (८७) चीवरपटलेन स्वदीयसा संवीतं वहलवालातपानुलिप्तमिव पौरन्दरं दिग्भागम् (८८) उल्लिखितपद्मरागप्रभाप्रतिमया रक्तावदातया देहप्रभया पाटलीकृतानां काषायग्रहणमिव दिशामपि उपदिशन्तम् अनौद्धत्यात् अधोमुखेन (८९) मन्दमुकुलितकुमुदाकारेण स्निग्धधवलप्रसन्नेन चक्षुषा जनचक्षुःक्षुद्रजन्तुजीवनार्थम् अमृतमिव वर्षन्तं सर्वशास्त्राक्षरपरमाणुभिः इव निर्मितं परमसौगतमपि अवलोकितेश्वरम् (९०) अस्खलितम् अपि तपसि लग्नम् आलोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनां सुगतस्यापि अभिगमनीयमिव धर्मस्यापि आराधनीयमिव

---

जनचित्तसुखकरमित्यर्थः उद्ग्रीवम् उन्नमितग्रीवं मरकतमणिकरकमिव मरकतमणिनिर्मितपक्षिविशेषमिव। किरन्तं ददतम्।

(८७) चीवरपटलेन जीर्णवसनेन इत्यर्थः संवीतम् आच्छादितम्। बहलेति बहलेन प्रभूतेन बालातपेन नवोदितसूर्य्यालोकेन अनुलिप्तः रञ्जितः तमिव पौरन्दरम् ऐन्द्रम् इन्द्राधिष्ठितमित्यर्थः दिग्भागं पूर्वमिति भावः।

(८८) उल्लिखितेति। उल्लिखितस्य उद्घृष्टस्य पद्मरागस्य प्रभायाः प्रतिमा तुल्या तया रक्तावदातया लोहितोज्ज्वलया। पाटलीकृतानां रक्तीकृतानां काषायग्रहणमिव कषायरक्तवसनधारणमिव। अनौद्धत्यात् प्रशान्तत्वात्।

(८९) मन्देति। मन्दम् ईषत् मुकुलितं कुमुदं तस्य इव आकारो यस्य तेन। परमसौगतं परमबौद्धम्। अवलोकितः ईश्वरो येन तथोक्तमिति विरोधः सुगतानामीश्वरानङ्गीकारादिति भावः ईश्वरः बुद्धदेव इति परिहारः।

(९०) अस्खलितं स्खलनं करणीयकार्य्यस्य भंशनं तद्रहितमिति विरोधपरिहारः। स्खलितस्य इव कुत्रचिदवलम्बनाद्यत्नसम्भवाद् विरोध इति बोध्यम्। सुगतस्यापि दर्शनार्थिन इति भावः।

प्रसादस्यापि प्रसादनीयमिव मानस्यापि माननीयमिव वन्द्यत्वस्यापि वन्दनीयमिव जन्म (६१) यमस्य नेमिं नियमस्य तत्त्वं तपसः शरीरं शौचस्य कोशं कुशलस्य वेश्म विश्वासस्य सद्वृत्तं सद्वृत्ततायाः सर्वस्वं सर्वज्ञतायाः दाक्ष्यं दाक्षिण्यस्य पारं परानुकम्पाया निर्वृतिं सुखस्य मध्यमे वयसि वर्त्तमानं दिवाकरमित्रम् अद्राक्षीत्। अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च सादरं दूरादेव शिरसा मनसा वचसा च ववन्दे।

दिवाकरमित्रस्तु (६२) मैत्रीमयः प्रकृत्या विशेषतः तेन अपरेण अदृष्टपूर्वेण अमानुषलोकोचितेन सर्वाभिभाविना महानुभावभोगभाजा भ्राजिष्णुना भूपतेः अग्राकृतेन आकारविशेषेण तेन च अभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण च आह्लादितः चक्षुषि च चेतसि च युगपत् अग्रहीत्। धीरस्वभावोऽपि च (६३) सम्पादितससम्भ्रमाभ्युत्थानः सङ्कलय्य किञ्चित् उद्गमनकेन विलोलं विलम्बमानं

---

(६१) यमस्य बाह्येन्द्रियनिग्रहस्य जन्म उत्पत्तिम्। नियमस्य अन्तरिन्द्रियनिग्रहस्य नेमिं परां काष्ठामिति भावः। कोशं भाण्डागारम्। वेश्म गृहम्। दाक्ष्यं पाटवम्।

(६२) मैत्रीमयः सद्भावपूर्णः। महानुभावाभोगभाजा महान् अनुभावः प्रभावो यस्य तथाविधो य आभोगः सन्निवेशः तं भजते इति तथोक्तेन। भ्राजिष्णुना राजमानेन आभिजात्यप्रकाशकेन महाकुलजन्मसूचकेन। धीरस्वभाव इत्यत्र वीरस्वभाव इति पाठेन युज्यते तथाविधस्य वीरभावकीर्त्तनस्य अनौचित्यादिति अवधेयम्।

(६३) सम्पादितेति। सम्पादितम् अनुष्ठितं ससम्भ्रमं व्यग्रतासहितम् अभ्यु-

वामांसात् चीवरपटान्तमुत्क्षिप्य (८४) अनेकाभयदानदीक्षादक्षिणो दक्षिणं महापुरुषलक्षणलेखाप्रशस्तं स्निग्धमधुरया वाचा सगौरवम् आरोग्यदानेन राजानम् अन्वग्रहीत् अभ्यनन्दच्च स्वागतगिरा गुरुमिव अभ्यागतं बहु मन्यमानः स्वेन आसनेन आस्यताम् अत्रेति निमन्त्रयाञ्चकार पार्श्वे स्थितञ्च शिष्यम् अब्रवीत् आयुष्मन्! उपानय कमण्डलुना पादोदकमिति। राजा तु अचिन्तयत् (८५) अलोढः खलु संयमनपाशः सौजन्यम् अभिजातानाम्। स्थाने खलु तत्रभवान् गुणानुरागी ग्रहवर्मा बहुशो वर्णितवान् अस्य गुणानिति। प्रकाशञ्च आबभाषे भगवन्! (८६) दर्शनपुण्यानुगृहीतस्य मम पुनरुक्त इव अयमार्य्यप्रयुक्तः प्रतिभाति अनुग्रहः। (८७) चक्षुःप्रमाणप्रसादस्वीकृतस्य च परकरणमिव आसनादिदानोपचारचेष्टितम्। अतिभूमिः एव भवादृशां पुरः

---

त्थानं येन तथाभूतः। उद्गमनकेन उत्थानेन। विलोलं चञ्चलम्। वामांसात् वामस्कन्धात्।

(८४) अनेकेति। अनेकेषां जीवानामिति भावः अभयदानमेव दीक्षा व्रतविशेषः तत्र दक्षिणः अनुकूलः। दक्षिणम् उदारं महापुरुषस्य लक्षणानि या लेखाः चिह्नविशेषाः ताभिः प्रशस्तं प्रशंसनीयम्। आस्यताम् उपविश्य।

(८५) अलोढः लोहव्यतिरेकेण निष्पन्न इत्यर्थः। अभिजातानां सज्जनानाम्।

(८६) दर्शनेति। दर्शनमेव पुण्यं तेन अनुगृहीतः अनुकम्पितः तस्य। पुनरुक्त इव अधिक इव आर्य्यप्रयुक्तः आर्य्येण मान्येन भवता प्रयुक्तः कृतः।

(८७) चक्षुःप्रमाणेति। चक्षुरेव प्रमाणं यस्य तादृशः प्रत्यक्षसिद्ध इत्यर्थः यः प्रसादः अनुग्रहः तेन स्वीकृतस्य अधीनीकृतस्य परकरणमिव अन्यत् साधनमिव प्रसादस्य इति भावः। अतिभूमिः भूमिमतिक्रान्ता स्वर्गावस्थानरूपा इत्यर्थः।

(९८) सम्भाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवृत्तिः। पाद्यमपि अपार्थकम्। आसतां भवन्तो यथासुखम्। आसीनोऽहम् इत्यभिधाय क्षितौ एव उपाविशत्।

अलङ्कारो हि परमार्थतः प्रभवतां (९९) प्रश्रयातिशयो रत्नादिकस्तु शिलाभार इति आकलय्य पुनः पुनः अभ्यर्थ्यमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनं तदा स्वमेव आसनं पुनरपि भेजे भदन्तः भूपतिमुखनलिननिहितनिभृतनयनयुगलनिगड़निश्चलीकृतहृदयश्च स्थित्वा काञ्चित् (१००) कालकलां कलिकालकल्मषकालुष्यमिव क्षालयन् अमलाभिः दन्तमयूखमालाभिः (१) मूलफलाभ्यवहारसम्भवम् उद्वमन् इव च परिमलसुभगं (२) विकचकुसुमपटलपाण्डुरं लतावनम् अवादीत्। अद्यप्रभृति न केवलमयम् अनिन्द्यो वन्द्योऽपि (३) प्रकाशितसत्सारः संसारः। किं नाम न आलो-

---

(९८) प्रदेशवृत्तिः एकदेशावस्थानम्। सम्भाषणेति सम्भाषणमेव अमृतं तेन अभिषेकः तेन क्षालितं धौतं निर्मलीकृतमिति भावः सकलं वपुः शरीरं यस्य तथाभूतस्य। अपार्थकं निरर्थकं पाद्यं पादोदकम्।

(९९) प्रश्रयातिशयः विनयातिरेकः। शिलाभारः प्रस्तरभारः। भूपतीति भूपतेः राज्ञः मुखनलिने वदनपङ्कजे निहितम् अर्पितं निभृतं नयनयुगलमेव निगड़ः शृङ्खलं तेन निश्चलीकृतं हृदयं यस्य तथाभूतः।

(१०) कालकलां कालांशम्। कलिकालेति कलिकालस्य कल्मषं पापमेव कालुष्यं मलम्।

(१) मूलेति। मूलस्य कन्दविशेषस्य फलस्य च अभ्यवहारः भोजनं तस्मात् सम्भवः समुत्पत्तिः यस्य तथोक्तम्।

(२) विकचेति। विकचं विकसितं कुसुमानां पटलं समूहः तेन पाण्डुरं धवलम्।

क्यते जीवद्भिः अद्भुतं येन रूपम् अचिन्तितोपनतमिदं दृक्पथम् उपगतम्। एवंविधैः अनुमीयन्ते जन्मान्तरावस्थितसुकृतानि हृदयोत्सवैः। इह अपि जन्मनि दत्तमेव अस्माकम् अमुना तपःक्लेशेन फलम् असुलभदर्शनं दर्शयता देवानां प्रियम्। आ तृप्तेः पीतम् अमृतम् (४) ईक्षणाभ्याम्। जातं निरुत्कण्ठं मानसं निर्वृतिसुखस्य। महद्भिः पुण्यैः विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः। सुदिवसः स यस्मिन् जातोऽसि। सा (५) सुजाता जननी या सकलजीवलोकजीवितजनकम् अजनयत् आयुष्मन्तम्। पुण्यवन्ति पुण्यानि अपि तानि येषामसि परिणामः। सुकृततपसः ते परमाणवः ये तव परिगृहीतसर्वावयवाः। तत्सुभगं सौभाग्यम् आश्रितोऽसि येन। भव्यः स पुरुषभावो भवति अवस्थितो यः। यस्त्वं मुमुक्षोरपि मे पुण्यभाजम् आलोक्य पुनः श्रद्धा जाता मनुजजन्मनि। न दृष्टः (?) अपि अस्माभिर्दृष्टः कुसुमायुधः। कृतार्थमद्य चक्षुः वनदेवतानाम् अद्य सफलं जन्म पादपानाम् येषामसि गतो गोचरम्। अमृतमयस्य भवतो वचसां माधुर्यं (६) कार्य्यमेव। अस्य तु ईदृशे शैशवे विनयस्य उपाध्यायं ध्यायन्नपि न सम्भावयामि भुवि। सर्वथा शून्य आसीत् अजाते दीर्घायुषि गुण-

---

(३) प्रकाशितेति। प्रकाशितः सन् साधुरेव सारी यस्य तथाभूतः।

(४) ईक्षणाभ्यां नेत्राभ्याम्। दृशश्चक्षूंषि। यस्मिन् दिवसे।

(५) सुजाता सफलजनना। परिणामः फलम्।

(६) कार्य्यमेव। कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायादिति भावः। उपाध्यायमाचार्यं शून्यः निरवलम्बनः।

ग्रामः। धन्यः स भूभृत् यस्य (७) वंशे मणिरिव मुक्तामयः सम्भूतोऽसि। एवंविधस्य च पुण्यवतः कथञ्चित् प्राप्तस्य केन प्रियं (८) समाचराम इति पारिप्लवं चेतो नः। सकल-वनचरसार्थसाधारणस्य कन्दमूलफलस्य गिरिसरिदम्भसो वा के वयम्। (९) अपरोपकरणीकृतस्तु कायकलिः अय-मस्माकम्। सर्वस्वम् अवशिष्टमिष्टातिथ्याय। स्वायत्ताश्च विद्यन्ते (१०) विद्याविन्दवः कतिचित्। उपयोगन्तु न प्रीतिः विचारयति। यदि च नोपरुणद्धि कश्चित् कार्य्य-लवम् (११) अरक्षणीयाक्षरं वा कथनीयं तत् कथयतु भवान् श्रोतुम् अभिलषति हृदयं सर्वमिदं नः। केन कृत्यातिभारेण भव्यो भूषितवान् भूमिम् एताम् अभ्रमणयोग्याम्। किय-दवधिर्वा शून्याटवीपर्य्यटनक्लेशः कल्याणराशेः। कस्माच्च (१२) सन्तप्तरूपा इव ते तनुः इयमसन्तापार्हा विभाव्यते इति।

---

(७) वंशे कुले वेणौ च। मुक्तामयः निर्व्याधिः मौक्तिकरूपश्च।

(८) समाचरामः अनुतिष्ठामः। पारिप्लवं चञ्चलम्। सकलेति सकलानां वनचराणां सार्थस्य समूहस्य साधारणं सामान्यं तस्य। के वयं न अधिका-रिणो वयमेव येन भवदर्चा क्रियते इति भावः।

(९) अपरोपकरणीकृतः परस्य उपकरणीकृतः अधीनीकृतः न इत्यर्थः स्वायत्त इति भावः। कायकलिः कायः देह एव कलिः कोरकः क्षुद्रशरीरमित्यर्थः।

(१०) विद्याविन्दवः विद्यालेशाः। उपयोगम् उपकारिताम्। मम एतेन क्षुद्रदेहेन सामान्यविद्यया वा भवतां क उपकार इत्येवम्।

(११) अरक्षणीयाक्षरं न रक्षणीयानि न गोप्यानि इत्यर्थः अक्षराणि यस्य तथाभूतम्। कृत्यातिभारेण कार्य्यातिभारेण। अभ्रमणयोग्याम् अयोग्यगमनाम् इत्यर्थः।

(१२) सन्तप्तरूपा इव अन्तर्व्यथिता इव। विभाव्यते लक्ष्यते।

राजा तु सादरतरम् अब्रवीत् आर्य्य! (१३) दर्शितसम्भ्रमेण अनेन मधुरसविसरम् अमृतमिव हृदयधृतिकरम् अनवरतं वर्षता वचसा एव ते सर्वम् अनुष्ठितम्। धन्योऽस्मि यत् एवम् अभ्यर्हितम् अनुपचरणीयम् अपि मान्यो मन्यते माम्। अस्य च महावनभ्रमणपरिक्लेशस्य कारणम् अवधारयतु मतिमान्। मम हि (१४) विनष्टनिखिलेष्टबन्धोः जीवितानुबन्धस्य निबन्धनम् एका एव यवीयसी स्वसा अवशिष्टा। सापि भर्त्तुः वियोगात् वैरिपरिभवभयात् भ्रमन्ती कथमपि विन्ध्यवनमिदम् (१५) अशुभशबरबलबहुलम् अगणितगजकुलकलिलम् अपरिमितमृगपतिशरभभयम् (१६) उरुमहिषमुषितपथिकगमनम् अतिनिशितशरकुशपरुषम् (१७) अवटशतविषमम् आविशत्। अतः ताम् अन्वेष्टुं वयमनिशं निशि निशि च सततम् इमाम् अटवीम् अटामः

---

(१३) दर्शितसम्भ्रमेण दर्शितादरेण। मधुरसविसरं मधुरसप्रवाहं हृदयधृतिकरं चित्तसन्तोषकरम्। अभ्यर्हितम् अभिपूजितम्। अनुपचरणीयम् अनादरणीयम्।

(१४) विनष्टेति। विनष्टा निखिलाः समग्राः इष्टाः प्रिया बन्धवः यस्य तथाभूतस्य। जीवितानुबन्धस्य जीवनधारणस्य निबन्धनं हेतुः यवीयसी कनिष्ठा स्वसा भगिनी।

(१५) अशुभेति। अशुभैः दुराचारैः शबराणां व्याधानां बलैः सैन्यैः बहुलं व्याप्तम्। अगणितेति अगणितैः असङ्ख्यातैः गजानां कुलैः वृन्दैः कलिलम् आकीर्णम्। अपरिमितेति अपरिमितम् अतिशयितं मृगपतिभ्यः सिंहेभ्यः शरभेभ्यश्च भयं यस्मिन् तथाभूतम्।

(१६) उर्विति। उरुभिर्महद्भिः महिषैः मुषितम् अपहृतं पथिकानां गमनं यस्मिन् तथोक्तम्। अतिनिशितेति अतिनिशितैः शरैः कुशैश्च परुषं कठिनम्।

नचैनाम् आसादयाम:। कथयतु च गुरु: अपि यदि कदाचित् कुतश्चिद्वनचरत: श्रुतिपथम् उपगता तद्वार्त्ता इति।

अथ तत् श्रुत्वा जातोद्वेग इव भदन्त: पुन: अभ्यधात् धीमन्! न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानभ्युपगतवान्। (१८) अभाजनं हि वयम् ईदृशानां प्रियाख्यानोपायनानां भवताम्। इत्येवं भाषमाण एव तस्मिन् अकस्मादागत्य अपर: (१९) श्रमिनि वयसि वर्त्तमान: सम्भ्रान्तरूप इव पुरस्तात् उपरचिताञ्जलि: जातकरुण: प्रचरितचक्षु: भिक्षु: अभाषत भगवन् भदन्त! महत् करुणं वर्त्तते। (२०) बाला एव बलवद्व्यसनाभिभूता भूतपूर्वापि कल्याणरूपा स्त्री शोकावेशविवशा वैश्वानरं विशति। सम्भावयतु ताम् अप्रोषितप्राणां भगवान्। (२१) अभ्युपपद्यतां समुचितै: समाश्वासनै:। अनुपरतपूर्वं क्रमिकीटमपि दु:खितं दयाराशे: आर्य्यस्य गोचरगतमिति।

---

(१७) अवटेति अवटानां गर्त्तानां शतै: विषमं नतानतत्वाद् दारुणम्! अट्टाम: भ्रमाम:। आसादयाम: प्राप्नुम:।

(१८) अभाजनम् अपात्रम्। प्रियेति प्रियाणि आख्यानानि कथनान्येव उपायनानि उपढौकनानि तेषाम्।

(१९) श्रमिनि श्रान्ते चरमे इति यावत्। सम्भ्रान्तरूप: व्यस्तरूप:। प्रचरितचक्षु: स्रवद्वाष्प:। करुणं शोकजननं घटनम्।

(२०) बाला एव बालिका एव। बलवदिति बलवता प्रबलेन व्यसनेन विपदा अभिभूता परिभवं नीता। भूतपूर्वा अतिक्रान्तपूर्वावस्था। वैश्वानरम् अग्निम्। अप्रोषितप्राणाम् अगतप्राणाम्।

(२१) अभ्युपपद्यताम् अनुगृह्यताम्। अनुपरतपूर्वं पूर्वं न उपरतं न विनष्टम्।

राजा तु जातानुजाशङ्कः सोदर्य्यास्नेहाच्च (२२) अन्तर्द्रुत इव दुःखेन दोदूयमानहृदयः कथमपि गद्गदिकागृहीतकण्ठो विकलवाग् वाष्पायमाणदृष्टिः पप्रच्छ पाराशरिन्। कियद्दूरे सा योषिदेवंजातीया? जीविता कालम् एतावन्तम्? इति। पृष्टा वा त्वया कासि कस्यासि कुतोऽसि किमर्थं वनम् इदमभ्युपगतासि विशसि च किं निमित्तम् अनलम्? इति आदितः प्रभृति कार्त्स्न्येन कथ्यमानमिच्छामि श्रोतुं कथमार्य्यस्य गता गोचरम् आकारतो वा कीदृशी? इति।

तथाभिहितस्तु भूभुजा भिक्षुः आचचक्षे महाभाग! श्रूयताम् अहं हि प्रत्यूषसि एव अद्य वन्दित्वा भगवन्तम् अनेनैव (२४) नदीरोधसा सैकतसुकुमारेण यदृच्छया विहृतवान् अतिदूरम्। एकस्मिंश्च वनलतागहने गिरिनदीसमीपभाजि भ्रमरीणामिव (२५) हिमहतकमलाकरकातराणां रसितं सार्य्यमाणानाम् अतितारतानवर्त्तिनीनां वीणातन्त्रीणामिव झाङ्कारम् (२६) एकतानं नारीणां रुदितम् अधृतिकरम् अतिकरुणम् आकर्णितवान् अस्मि। समुप-

---

(२२) अन्तर्द्रुत इव अन्तर्गलित इव। दोदूयमानहृदयः पुनः पुनः सन्तप्यमानहृदय इत्यर्थः।

(२३) पाराशरिन्! भिक्षो!।

(२४) नदीरोधसा नदीतीरेण। सैकतसुकुमारेण सिकताकोमलेन। विहृतवान् गतवान्।

(२५) हिमेति। हिमेन हतः नाशितः कमलाकरः कमलसरः तेन कातरा व्याकुलास्तासाम्। रसितं रणितम्। सार्य्यमाणानां संक्रियमाणानाम् अतितारः अतिमहान् तानः सङ्गीतस्वरविशेषः तस्मिन् वर्त्तन्ते इति तथोक्तानाम्।

(२६) एकतानं समस्वरम्। अधृतिकरम् अधैर्य्यकरम्।

जातकौतूहलश्च गतोऽस्मि तं प्रदेशम्। (२७) दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिगलल्लोहितेन च (२८) पार्ष्णिप्रविष्टशरशलाकाशल्यशूलसङ्कोचितचक्षुषा च (२९) अध्वनीनश्रमश्वयथुनिश्चलचरणेन च स्थाणवव्रणव्यथितगुल्फबद्धभूर्जत्वचा च (३०) वातखुड़खेदखञ्जजङ्घाजातज्वरेण च पांशुपाण्डुरपिण्डिकेन च (३१) खर्जूरजूटजटाजर्जरितजानुना च (३२) शतावरीविदारितोरुणा च विदारीदारिततनुदुकूलपल्लवेन च (३३) उत्कटवंशविटपकण्टककोटिपाटितकञ्चुकपल्लवेन च

---

(२७) दृष्टवानस्मि योषितमित्युत्तरेण सम्बन्धः। तां विशिनष्टि दृषदित्यादि। दृषदां शिलानां खण्डैः खण्डितायाः निकृत्तायाः अङ्गुलेः गलत् स्रवत् लोहितं रक्तं यस्य तेन।

(२८) पार्ष्णीति। पार्ष्णिषु चरणतलपश्चिमभागेषु प्रविष्टा विद्धा शराणां व्रणविशेषाणां याः शलाकाः ता एव शल्यानाम् अस्त्रविशेषाणां शूलानि अग्राणि तैः सङ्कोचिते चक्षुषी यस्य तेन।

(२९) अध्वनीनेति। अध्वनीनः अध्वगमनजनितः यः श्रमः तस्य श्वयथुः वृद्धिः तेन निश्चलौ चरणौ यस्य तेन। स्थाणवेति स्थाणुः शङ्कुः स्थाणुरस्त्री ध्रुवः शङ्कुरित्यमरः तस्य इदं स्थाणवं स्थाणुवेधनजनितमिति यावत् यत् व्रणं क्षतं तेन व्यथितः यो गुल्फः पादग्रन्थिः तत्र बद्धा व्रणशोधनार्थं निहिता भूर्जत्वक् येन तथाविधेन।

(३०) वातेति। वातखुड़ेन गतिप्रतिघातजनको वातव्याधिविशेषः तेन यः खेदः व्यथा तेन खञ्जा गतिशक्तिहीना या जङ्घा तया जातः ज्वरो यस्य तेन। पांश्विति पांशुना रजसा पाण्डुरम् आविलं पिण्डिकं केशपाशः यस्य तेन।

(३१) खर्जूरेति। खर्जूराणां जूटस्य समूहस्य जटाभिः शाखाभिरिति यावत् कण्टकाकीर्णाभिः इति भावः जर्जरितानि जानूनि यस्य तेन।

(३२) शतावरीति। शतावर्य्या शतमूल्या विदारितौ ऊरू यस्य तेन। विदारीति विदार्य्या चौरशल्कया दारितः खण्डितः तनुः सूक्ष्मः दुकूलपल्लवः वसनप्रान्तदेशः यस्य तेन।

कर्पटेन च (३४) फललोभालम्बितानम्रवदरीलताजालकैः उत्कण्टकैः उल्लिखितसुकुमारकरोदरेण च (३५) कुरङ्गशृङ्गोत्खातैः कन्दमूलफलैः कदर्थितबाहुना च (३६) ताम्बूलविरहविरसमुखखण्डितकोमलामलकीफलेन च (३७) कुशकुसुमाहतिलोहितानां श्वयताम् अक्ष्णां लेपीकृतमनःशिलेन च (३८) कण्टकिलतालूनालकलेशेन च केनचित् किसलयोपपादितातपत्रकृत्येन केनचित् (३९) कदलीदलव्यजनवाहिना केनचित् कमलिनीपलाशपुटगृहीताम्भसा केनचित्

---

(३३) उत्कटेति। उत्कटैः वंशविटपानां वंशशाखानां कण्टककोटिभिः कण्टकाग्रैः पाटितानि छिन्नानि कञ्चुककर्पटानि स्तनावरणवसनानि यस्य तेन।

(३४) फलेति। फलानां लोभेन आलम्बिता अतएव आनम्रा या वदरीलताः कोलितरवः तासां जालकानि समूहाः तैः। उत्कण्टकैः उद्गतकण्टकैः कण्टकाकीर्णैः इति यावत्। उल्लिखितेति उल्लिखितानि विद्धानि सुकुमाराणां कराणां हस्तानाम् उदराणि यस्य तेन।

(३५) कुरङ्गेति। कुरङ्गाणां मृगविशेषाणां शृङ्गैः उत्खातानि उद्धृतानि तैः। कदर्थितबाहुना क्लेशितभुजेन।

(३६) ताम्बूलेति। ताम्बूलस्य विरहेण वर्जनेन विरसं यत् मुखं तेन खण्डितं चर्वितं कोमलम् आमलकीफलं येन तथोक्तेन।

(३७) कुशेति। कुशानां कुसुमानि पुष्पाणि तेषाम् आहत्या आघातेन लोहितानि रक्तानि तेषाम्। श्वयतां स्फीततां गच्छताम् अक्ष्णां नेत्राणाम्। लेपीकृता मनःशिला धातुविशेषः येन तथाभूतेन।

(३८) कण्टकीति। कण्टकिलतया कण्टकाकीर्णव्रतत्या लूनः छिन्नः अलकलेशः चूर्णकुन्तलैकदेशः यस्य तेन। किसलयेति किसलयेन, पल्लवेन उपपादितं सम्पादितम् आतपत्रस्य छत्रस्य कृत्यम् आतपनिवारणरूपमिति भावः येन तेन। आतपनिवारणार्थं मस्तकोपरिधृतपल्लवेन इति भावः।

(३९) कदलीति। कदलीदल एव व्यजनं तत् वहतीति तथोक्तेन कदली-

(४०) पाथेयीकृतमृणालपूलिकेन केनचित् (४१) चीनांशुकदशाशिक्यनिहितनारिकेलकोशकलशीकलितरसालतैलेन (४२) कतिपयावशेषशोकविकलमूककुब्जवामनबधिरवर्वराविरलेन अबलानां चक्रवालेन परिवृताम् आपत्कालेऽपि (४३) कुलोद्गतेन इव अमुच्यमानां प्रभालेपिना लावण्येन प्रतिबिम्बितैः आसन्नवनलताकिसलयैः सरसैः दुःखक्षतैरिव (४४) अन्तःपटलीक्रियमाणकायां कठोरदर्भाङ्कुरक्षतक्षारिणा क्षतजेन अनुसरणालक्तकेन इव रक्तचरणाम् (४५) उन्नालेन अन्यतरनारीधृतेन अरविन्दिनीदलेन कृतच्छायमपि विच्छायं

---

दलेन वीजयतेति भावः। कमलिनीति कमलिन्याः पद्मिन्याः पलाशपुटेन गृहीतम् अम्भः जलं येन तथोक्तेन।

(४०) पाथेयीकृतेति। पाथेयीकृतम् अपाथेयं पाथेयं सम्पद्यमानं कृतं कृतं मृणालपूलिकं विसनिचयः येन तथोक्तेन।

(४१) चीनेति। चीनांशुकस्य सूक्ष्माम्बरस्य दशा एकदेशविशेषः सैव शिक्यं शिकेति भाषाप्रसिद्धं तत्र निहितं लम्बितं नारिकेलकोशकलस्यां नारिकेलकोशरूपे भाण्डे इति भावः कलितं रचितं रसालतैलम् आम्रतैलं येन तथोक्तेन।

(४२) कतिपयेति। कतिपये अल्पा इत्यर्थः अवशेषा येषां तथाविधाः शोकविकलाः शोकार्त्ताः मूकाः वर्णानुच्चारकाः कुब्जाः वामनाः खर्वपुरुषाः वधिराः वर्वरा मूर्खाः तैः अविरलः गहनः तेन। अबलानां नारीणां चक्रवालेन मण्डलेन।

(४३) कुलोद्गतेनेन सत्कुलजातेन इव आजन्मसिद्धेन इव च। अमुच्यमानाम् अपरिह्रीयमानाम्। सरसैः आर्द्रैः दुःखक्षतैरिव आधिव्रणैः इव।

(४४) अन्तरिति। अन्तःपटलीक्रियमाणः अन्तर्विध्यमानः कायो यस्यास्ताम्। कठोरेति कठोरेण कर्कशेन दर्भाङ्कुरेण कुशाङ्कुरेण क्षतं तस्मात् क्षरति स्रवतीति तथोक्तेन। क्षतजेन रक्तेन। अनुसरणालक्तकेन इव गतिवशेन स्रवदलक्तकेन इव रक्तौ लोहितौ चरणौ यस्याः ताम्।

(४५) उन्नालेन। उद्गतदण्डेन अरविन्दिनीदलेन पद्मिनीपत्रेण कृता छाया यस्य तथोक्तम्। विच्छायं विगतप्रभम्।

मुखमुद्वहन्तीम् आकाशमपि (४६) शून्यतया अतिशयानां स्वप्नमयीमिव निश्चेतनतया मरुन्मयीमिव निश्वाससम्पदा पावकमयीमिव सन्तापसन्तानेन सलिलमयीमिव (४७) अस्र-प्रस्रवणेन वियन्मयीमिव निरवलम्बनतया (४८) तड़िन्मयीमिव पारिप्लवतया शब्दमयीमिव परिदेवितवाणीबाहुल्येन (४९) मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां कल्पलतामिव महावने पतितां (५०) परमेश्वरोत्तमाङ्गपातदुर्ललिताङ्गां गङ्गामिव गाङ्गतां (५१) वनकुसुमधूलिधूसरितपादपल्लवां प्रभातचन्द्रमूर्त्तिमिव लोकान्तरम् अभिलषन्तीं (५२) निज-जलमोचकदर्थितदर्शितधवलायतनेत्रशोभां मन्दाकिनी-

---

(४६) अतिशयानां जयन्तीम् । मरुन्मयीमिव वायुमयीमिव । पावकमयी-मिव अग्निमयीमिव सन्तापसन्तानेन सन्तापसमूहेन ।

(४७) अस्रप्रस्रवणेन वाष्पवर्षणेन । वियन्मयीमिव आकाशमयीमिव निरव-लम्बनतया निराधारतया निराश्रयतया इत्यर्थः ।

(४८) तड़िन्मयीमिव विद्युन्मयीमिव पारिप्लवतया चञ्चलतया । परिदेवित-वाणीबाहुल्येन विलापाक्षरनिवहेन ।

(४९) मुक्तेति । मुक्तानि त्यक्तानि मुक्ता मौक्तिकानि अंशुकानि उत्कृष्टवस-नानि रत्नानि कुसुमानि कनकपत्राणि आभरणानि अलङ्काराश्च यया ताम् ।

(५०) परमेश्वरेति । परमेश्वरस्य हरस्य राज्ञः प्रभवर्धनस्य उत्तमाङ्गात् शिरसः उत्तमाङ्गस्य शिरसश्च पातेन निपातनेन छेदनेन च दुर्ललितं दुःखेन पतितम् अङ्गं यस्याः तथोक्ताम् । गाङ्गतां पृथिवीं प्राप्ताम् ।

(५१) वनेति । वनस्य कुसुमधूलिभिः धूसरितौ पादपल्लवौ चरणकिसलयौ यस्याः ताम् ।

(५२) निजेति । निजेन जलमोचेण वाष्पवर्षणेन इत्यर्थः कदर्थितं क्लिष्टं यथा तथा दर्शिता धवलयोरायतयोः नेत्रयोः शोभा यया ताम् । मन्दाकिनी-

मृणालिनीमिव परिम्लायमानां (५३) दुःसहरविकिरण-संस्पर्शखेदनिमीलितां कुमुदिनीमिव दुःखेन दिवसं नयन्तीं (५४) दग्धदशाविसंवादितां प्रत्यूषप्रदीपशिखाम् इव क्षाम-क्षामां पाण्डुवपुषं (५५) पार्श्ववर्त्तिवारणाभियोगरक्ष्यमाणां वनकरिणीमिव महाह्रदे निमग्नां प्रविष्टां (५६) वनगहनं ध्यानञ्च स्थितां तरुतले मरणे च पतितां धातुरङ्के महा-नर्थे च दूरीकृतां भर्त्रा सुखेन च (५७) विरेचितां भ्रमणेन आयुषा च आकुलां केशकलापेन मरणोपायेन च विवर्णिताम् अध्वधूलिभिः अङ्गवेदनाभिश्च दग्धां (५८) चण्डातपेन वैधव्येन च छृतमुखीं पाणिना मौनेन च गृहीतां प्रिय-

---

मृणालिनीमिव स्वर्गगङ्गापद्मिनीमिव परिम्लायमानाम् एकत्र सूर्य्यातपराहित्यात् अन्यत्र पतिविरहादिति भावः।

(५३) दुःसहेति। दुःसहेन रविकिरणेन यः संस्पर्शः तेन खेदः क्लेशः तेन निमीलिता ताम्।

(५४) दग्धेति। दग्धा भस्मीकृता दशा वर्त्तिः दग्धा विधिना विध्वस्तेत्यर्थः दशा अवस्था च तया विसंवादिता निराश्रयीकृता ताम्। क्षामक्षामाम् अति-क्षीणां पाण्डुवपुषं रक्तशून्यकलेवराम्।

(५५) पार्श्ववर्त्तीति। पार्श्ववर्त्तिनां परिजनानामिति यावत् वारण एव अभियोगः चेष्टितम् अन्यत्र पार्श्ववर्त्तिना वारणेन हस्तिना यः अभियोगः बला-त्कारणं तस्मात् रक्ष्यमाणा मरणादिति भावः अन्यत्र केनचिद् बलवता पुरुषेण बलात् कारादिति च भावः ताम्।

(५६) वनगहनं ध्यानञ्च दुश्चिन्ताञ्च प्रविष्टाम्। स्थितां कृतावस्थानां कृत-निश्चयाञ्च। पतितां निहितदेहां मग्नाञ्च। दूरीकृतां विरहिताम्।

(५७) विरेचितां व्यक्ताम्। आकुलां व्याकुलाम् विवर्णितां मलिनितां निष्प्रभीकृताञ्च।

(५८) चण्डातपेन। प्रचण्डसूर्य्यसन्तापेन। छृतमुखीं विछृतवदनां निरुद्धा-ञ्च। गृहीतां धृताम् आक्रान्ताञ्च।

सखीजनेन मन्युना च तथाच (५८) भ्रष्टैः बन्धुभिः विलासैश्च मुक्तेन श्रवणयुगलेन आत्मना च परित्यक्तैः भूषणैः सर्वारम्भैश्च भग्नैर्वलयैः मनोरथैश्च चरणलग्नाभिः परिचारिकाभिः (६०) दर्भाङ्कुरसूचीभिश्च हृदयविनिहितेन चक्षुषा प्रियेण च (६१) दीर्घैः शोकश्वसितैः केशैश्च क्षीणेन वपुषा पुण्येन च पादयोः पतन्तीभिः हृद्भाभिः अश्रुधाराभिश्च स्वल्पावशेषेण परिजनेन जीवितेन च (६२) अलसाम् उन्मेषे दक्षाम् अश्रुमोक्षे सन्ततां चिन्तासु विच्छिन्नाम् आशासु कृशां काये स्थूलां श्वसिते पूरितां दुःखेन (६३) रिक्तां सत्त्वेन अध्यासिताम् आयासेन शून्यां हृदयेन निश्चलां निश्चयेन चलितां धैर्य्यात् अपिच वसतिं व्यसनानाम् आधानम् आधीनाम् अवस्थानम् अनवस्थानाम् आधारम् अधृतीनाम् आवासम्

---

(५८) बन्धुभिः इत्यादौ इत्थम्भूतलक्षणे तृतीया। भ्रष्टैः च्युतैः नष्टैरित्यर्थः बन्धुभिः भर्त्रादिभिः विलासैः सुखचेष्टितैः। मुक्तेन निरलङ्कारेण शून्येन च। भग्नैः खण्डितैः विध्वस्तैश्च। चरणलग्नाभिः पादपतिताभिः मा अस्मान् विहाय प्राणान् जहीहि इति निवारणायेति भावः. चरणलग्नाभिः निकटवर्त्तिनीभिः चरणविद्धाभिश्च।

(६०) दर्भाङ्कुरसूचीभिः कुशाङ्कुराग्रैः। हृदयविनिहितेन हृदयार्पितेन हृदयस्थापितेन च।

(६१) दीर्घैः आयतैः लम्बमानैश्च। क्षीणेन क्षामतां गतेन क्षयं गतेन च। स्वल्पावशेषेण विरलेन अल्पमात्रावशिष्टेन।

(६२) अलसां मन्थरां जड़प्रायमिति भावः उन्मेषे चक्षुरुन्मीलने दक्षा पटुः ताम् अलसां दक्षामिति विरोधः। सन्ततां अविच्छिन्नाम्। विच्छिन्नां रहितां श्वसिते स्थूलां दीर्घं श्वसतीमिति यावत्।

(६३) रिक्तां रहितां सत्त्वेन विद्यमानतया अस्तित्वेन इत्यर्थः बलेन उत्साहेन वा। अध्यासिताम् अधिरूढाम्। वसतिम् आश्रयम् आधानम् आधारम् आधीनां मानसीनां व्यथानां पुंस्याधिर्मानसी व्यथेत्यमरः।

अवसादानाम् आस्पदम् आपदाम् (६४) अभियोगम् अभाग्यानाम् उद्वेगम् उद्वेगानां कारणं करुणायाः पारं परायत्ततायाः योषितम्। चिन्तितवानस्मि च चिरम् ईदृशीमपि आकृतिम् उपतापाः स्पृशन्ति इति।

सा तु समीपगते मयि तदवस्थापि सबहुमानम् (६५) आनतमौलिः प्रणतवती। अहन्तु (६६) प्रबलकरुणाप्रेर्य्यमाणः ताम् आलपितुकामः पुनः कृतवान् मनसि कथमिव (६७) महानुभावाम् एनाम् आमन्त्रये वत्से! इति अतिप्रणयः मातः! इति चाटु भगिनि! इति (६८) आत्मसम्भावना देवि! इति परिजनालापः राजपुत्रि! इति (६९) अस्फुटम् उपासिके! इति मनोरथः स्वामिनि! इति (७०) भृत्यभावाभ्युपगमः भद्रे! इति इतरस्त्रीसमुचितम् आयुष्मति! इति अवस्थायाम् अप्रियं

---

(६४) अभियोगम् आक्रान्तिम्। परायत्ततायाः पराधीनतायाः।

(६५) आनतमौलिः अवनतमस्तका।

(६६) प्रबलेति। प्रबलया महत्या करुणया प्रेर्य्यमाणः वशंवदतां नीयमानः आलपितुकामः सम्भाषितुकामः।

(६७) महानुभावां मनस्विनीम् आमन्त्रये सम्भाषे। अतिप्रणयः अतिवात्सल्यं अपरिचिते तन्न युक्तमिति भावः। चाटु सन्तोषणमित्यर्थः प्रियोक्तिः वा एतदपि पूर्ववदयुक्तमिति भावः।

(६८) आत्मसम्भावना आत्मनः समादरः भिक्षोः मम तादृशी न सम्भवति इति आत्मगौरवं स्यादिति भावः। परिजनालापः भवनपरिवारस्य सम्भाषणम्। नाहं तथेति भावः।

(६९) अस्फुटम् अव्यक्तं तथात्वेनाज्ञातत्वादिति भावः। उपासिके! भिक्षे!। मनोरथः अभिलाषः तादृशी नारी सदुपदेशेन धर्ममार्गे आनेतुमभिलष्यते तत्तु स्वतः प्रकटनमयुक्तमिति भावः।

(७०) भृत्यभावाभ्युपगमः दासभावस्वीकरणं स चायुक्तः भवादृशां तव नैष्क-

कल्याणिनि! इति (७१) दशायां विरुद्धं चन्द्रमुखि! इति अमुनिमतम् बाले! इति (७२) अगौरवोपेतम् आर्य्ये! इति जरारोपणम् पुत्त्रवति! इति फलविपरीतम् भवति! इति सर्वसाधारणम् अपिच कासि इति अनभिजातम् किमर्थं रोदिषि इति दुःखकारणस्मरणकारि मा रोदीः इति शोक-हेतुम् अनपनीय न शोभते समाश्वसिहि इति किम् आश्रित्य स्वागतम् इति यातयामं सुखम् आस्यते इति मिथ्या।

इत्येवं चिन्तयति एव मयि तस्मात् (७४) स्त्रैणात् उत्थाय अन्यतरा योषित् आर्य्यरूपा इव शोकविह्वला समुपसृत्य कतिपयपलितशारं शिरो नीत्वा महीतलम् अतुलहृदय-

---

त्वादिति भावः। इतरस्त्रीसमुचितं सामान्यनारीसदृशम् इयन्तु न तथा दृश्यते तत्कथं तथा सम्बोधनमिति भावः अवस्थायां मरणदशायाम् अप्रियं न प्रीति-करम् अप्रीतिकरस्य वचनस्य कमपि प्रति प्रयोक्तुमनौचित्यात् उक्तञ्च मनुना। सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्। प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातन इति।

(७१) दशायाम् अमङ्गलावस्थायां विरुद्धं विपरीतम् अत्रापि पूर्व एव हेतुः बोध्यः। अमुनिमतं मुनिजनानभिमतं विलासिकामुकप्रयोज्यसम्बोधनमिदम् इति भावः।

(७२) अगौरवोपेतं गौरवैः अयुक्तमित्यर्थः। जरारोपणं वार्द्धकाध्यासनं जरती-नामेव तथा सम्बोधनीयत्वादिति भावः। फलविपरीतं फलेन तादृशेन दुर्विपाक-रूपेण विपरीतं विपर्य्यस्तम्।

(७३) सर्वसाधारणं सर्वेषां साधारणं सामान्यं तच्चात्र अयुक्तम् असामान्य-मूर्त्तित्वात् तस्या इति भावः। अनभिजातम् अकुलोचितम्। किम् आश्रित्य समा-श्वासनाहेतुं कमाश्रित्य ब्रवीमीति भावः। यातयामम् असामयिकं जीर्णप्रायम् इति भावः। मिथ्या अलीकम्।

(७४) स्त्रैणात् स्त्रीसमूहात्। आर्य्यरूपा इव आर्य्यरूपा इव दृश्यमाना इत्यर्थः।

सन्तापसूचकैः अश्रुविन्दुभिः चरणयुगलं दहन्ती मम अतिक्रपणैः अक्षरैश्च हृदयम् अभिहितवती भगवन्! सर्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या। (७५) प्रतिपन्नदुःखक्षपणदीक्षादक्षाश्च भवन्ति सौगताः। (७६) करुणाकुलगृहञ्च भगवतः शाक्यमुनेः शासनम्। (७७) सकलजनोपकारसज्जा सज्जनता जैनी। परलोकसाधनञ्च धर्मो मुनीनाम्। प्राणरक्षणाच्च न परं (७८) पुण्यजातं जगति गीयते जनेन। (७९) अनुकम्पाभूमयः प्रकृत्या एव युवतयः किं पुनर्विपदभिभूताः। साधुजनस्य सिद्धचेत्रम् आर्त्तवचसाम्। यत इयं नः स्वामिनी मरणेन पितुः अभावेन भर्त्तुः (८०) प्रवासेन च भ्रातुः भ्रंशेन च शेषस्य बान्धववर्गस्य अतिमृदुहृदयतया अनपत्यतया च (८१) निरवलम्बना परिभवेन च नीचारातिकृतेन प्रकृति-

---

शोकविक्लवा शोकविधुरा। कतिपयेति कतिपयानि पलितानि जरसा शुक्लकेशवृन्दानि तैः शारं चित्रं शवलमित्यर्थः। अतुलहृदयसन्तापसूचकैः निरुपमचित्ततापव्यञ्जकैः। अतिकृपणैः अतिजीर्णैः।

(७५) सर्वसत्त्वानुकम्पिनी सर्वप्राणिकृपाकारिणी प्रव्रज्या सन्न्यासधर्मः। प्रतिपन्नेति प्रतिपन्नानाम् आपन्नानां दुःखस्य क्षपणं निवारणमेव दीक्षा व्रतं तत्र दक्षाः पटवः सौगताः बौद्धाः।

(७६) करुणेति। करुणायाः कृपायाः कुलगृहं जन्ममन्दिरं शाक्यमुनेः बुद्धदेवस्य शासनम् आदेशः शास्त्रं वा।

(७७) सकलेति। सकलानां जनानाम् उपकारे सज्जा प्रवणा सज्जनता साधुता जैनी जिनधर्मः।

(७८) पुण्यजातं पुण्यनिचयः।

(७९) अनुकम्पाभूमयः कृपापात्राणि। सिद्धचेत्रं सिद्धस्थानम्।

(८०) प्रवासेन विदेशावस्थानेन। भ्रंशेन राहित्येन।

(८१) निरवलम्बना निराश्रया।

मनस्विनी अमुना च महाटवीपर्य्यटनक्लेशेन (८२) कदर्थित-सौकुमार्य्या दग्धदैवदत्तैः एवंविधैः बहुभिः उपर्य्युपरि व्यसनैः विक्लवीकृतहृदया दारुणं दुःखमपारयन्ती सोढ़ुं निवारयन्तम् (८३) अनतिक्रान्तपूर्वं स्वप्नेऽपि अवगणय्य गुरुजनम् अनुनयन्तीः (८४) अखण्डितप्रणया नर्मसु अपि समवधीर्य्य प्रियसखीः विज्ञापयन्तम् (८५) अशरणम् अश्रुव्याकुलनयनम् अपरिभूतपूर्वं मनसापि परिभूय भृत्यवर्गम् अग्निं प्रविशति परित्रायताम्। आर्य्योऽपि (८६) तावत् असह्यशोकापनयनोपायोपदेशनिपुणां व्यापारयतु वाणीम् अस्याम् इति च अतिकृपणं व्याहरन्तीम् अहम् उत्थाप्य उद्विग्नतरः शनैः अभिहितवान् आर्य्ये! यथा कथयसि तथा। असम्भिराम् (८७) अगोचरोऽयम् अस्याः पुण्याशयायाः शोकः। शक्यते चेत् मुहूर्त्तमात्रमपि त्रातुम् (८८) उपरिष्टात् न व्यर्था इयम् अभ्यर्थना भविष्यति। मम हि गुरुः अपर इव भगवान् सुगतः समीपगत एव। कथिते मया अस्मिन् (८९) उदन्ते नियतम् आगमिष्यति परमदयालुः। दुःखान्धकारपटलभिदुरैश्च सौगतैः

---

(८२) कदर्थितसौकुमार्य्या क्लेशितमार्दवा। व्यसनैः विपत्पातैः।

(८३) अनतिक्रान्तपूर्वम् अनुल्लङ्घितपूर्वम्। अवगणय्य अगणयित्वा। अनुनयन्तीः प्रबोधयन्तीः।

(८४) अखण्डितप्रणयाः अविच्छिन्नसद्भावाः। नर्मसु अपि परिहासेषु अपि।

(८५) अशरणम् अनाथम्।

(८६) असह्येति। असह्यस्य शोकस्य अपनयनं निरसनं तस्य उपायः तस्य उपदेशे निपुणा ताम्। व्यापारयतु प्रयुनक्तु।

(८७) अगोचरः असाक्षात्करणीयः। अनपनेय इति भावः।

(८८) उपरिष्टात् परतः। अभ्यर्थना याच्ञा।

सुभाषितैः स्वकैश्च (९०) दर्शितनिदर्शनैः नानागमगुरुभिः गिरां कौशलैः कुशलशीलाम् एनां प्रबोधपदवीम् आरोपयिष्यतीति। तच्च श्रुत्वा त्वरताम् आर्य्य इत्यभिदधाना सा पुनरपि पादयोः पतितवती। सोऽहमुपगत्य त्वरमाणो (९१) व्यतिकरम् इमम् अधृतिकरम् अशरणकृपणबहुयुवतिमरणम् अतिकरुणम् अत्रभवते गुरवे निवेदितवान् इति।

अथ भूभृत् (९२) भैक्षवं समवधार्य्य तद्भाषितम् अश्रुमिश्रितम् अश्रुतेऽपि स्वसुः नाम्नि निम्नीकृतमना मन्युना सर्वाकारसंवादिन्या दशया एव दूरीकृतसन्देहो दग्ध इव सोदर्य्यावस्थाश्रवणेन श्रवणयोः (९३) श्रमणाचार्य्यम् उवाच आर्य्य! नियतं सैवेयम् अनार्य्यस्य अस्य जनस्य अतिकठिनहृदयस्य अतिनृशंसस्य मन्दभाग्यस्य भगिनी भागधेयैः एताम् अवस्थां नीता निष्कारणवैरिभिः (९४) वराकी विदीर्य्यमाणं मे हृदयम् एवं निवेदयति इत्युक्त्वा तमपि

---

(८९) उदन्ते वृत्तान्ते। दुःखेति दुःखानि एव अन्धकाराः तेषां पटलं समूहः तस्य भिदुराणि नाशकानि तैः। सौगतैः सुगतसम्बन्धिभिः। स्वकैः निजैः।

(९०) दर्शितनिदर्शनैः उद्घाटितदृष्टान्तैः।

(९१) व्यतिकरं वृत्तान्तम्। अधृतिकरम् अप्रीतिकरम्। अशरणेति अशरणानां निराश्रयाणां कृपणानां दुःखितानां बहूनां युवतीनां मरणं यस्मिन् तत् अतिकरुणम् अतिशोकावहम्।

(९२) भैक्षवं भिक्षूक्तम्। निम्नीकृतमनाः प्रवणीकृतचित्तः। मन्युना शोकेन। मन्युः शोके क्रतौ शुचीत्यमरः। सर्वाकारसंवादिन्या सर्वाकारेण सर्वप्रकारेण संवदति इयमेव राज्यश्रीरिति व्यनक्तीति तयोक्तया।

(९३) श्रमणाचार्य्यं बौद्धाचार्य्यम्।

(९४) वराकी तपस्विनी।

(९५) श्रमणम् अभ्यधात् आर्य्य! उत्तिष्ठ दर्शय क्व असौ यत: (९६) सुप्रभूतप्राणपरित्राणपुण्योपार्जनाय याम: यदि कथञ्चित् जीवन्तीं सम्भावयाम: इति भाषमाण एव उत्तस्थौ।

अथ समग्रशिष्यवर्गानुगतेन आचार्य्येण तुरगेभ्यश्च अवतीर्य्य समस्तेन सामन्तलोकेन (९७) पश्चादाक्रम्यमाणाश्वीयेन अनुगम्यमान: पुरस्ताच्च तेन (९८) शाक्यपुत्रीयेण प्रदिश्यमानवर्त्मा पद्भ्यामेव तं प्रदेशं प्रविरलै: पदै: पिबन्निव प्रावर्त्तत। क्रमेण च समुपगत: शुश्राव लतावनान्तरितस्य मुमूर्षोर्महत: स्त्रैणस्य तत्कालोचितान् अनेकप्रकारान् आलापान्—

भगवन्! धर्म! (९९) धाव शीघ्रम्। क्वासि कुलदेवते!। देवि! धरणि! धीरयसि न दु:खितां दुहितरम्। क्व नु खलु (१००) प्रोषिता पुष्पभूतिकुटुम्बिनी लक्ष्मी:? नाथ! (१) मुखरवंश! अनाथां विविधाधिविधुरां वधूं विधवां विवो-

---

(९५) श्रमणं भिक्षुम्।

(९६) सुप्रभूतेति। सुप्रभूतानाम् अतिबहुलानां प्राणानां परित्राणं परिरक्षणं तदेव पुण्यं तस्य उपार्जनाय लाभाय। एकस्या एव तस्या मरणेन बहूनां प्राणात्ययाद् सुप्रभूतप्राणेत्युक्तम्।

(९७) पश्चात् पृष्ठत: आक्रम्यमाणम् अश्वीयम् अश्वसैन्यं येन तथोक्तेन।

(९८) शाक्यपुत्रीयेण दिवाकरमित्रशिष्येण प्रागुक्तभिक्षुणा इति भाव: पिबन्निव ग्रसन्निव लङ्घयन्निव इत्यर्थ: प्रावर्त्तत प्रातिष्ठत।

(९९) धाव आगच्छ। धरणि! सर्वधारणकारिणि! पृथ्वि! धीरयसि धीरां करोषि धीराया: कन्या धीरा एव भवतीति भाव:।

(१००) प्रोषिता गता। पुष्पभूते: कुटुम्बिनी गृहिणी।

धयसि किमिति न इमाम्? भगवन्! सुगत! भक्तजने (२) संज्वरिणि सुप्तोऽसि? राजधर्म! पुष्पभूतिभवनपक्षपातिन्! (३) उदासीनीभूतोऽसि कथम्? त्वयि अपि विपद्वान्धव! विन्ध्य! वन्ध्योऽयम् अञ्जलिबन्धः? मातः! महाटवि! रटन्तीं न शृणोषि इमाम् आपत्पतिताम्? (४) पतङ्ग! प्रसीद पाहि पतिव्रताम् अशरणाम्। प्रयत्नरक्षित! कृतघ्न! चारित्र-चण्डाल! न रक्षसि राजपुत्रीम्? किम् (५) अवधूतं लक्षणैः? हा देवि! दुहितृस्नेहमयि! यशोवति! सुषितासि! दग्धदैवदस्युना। देव! दुहितरि दह्यमानायां न (६) आपतसि प्रतापशील! शिथिलीभूतम् अपत्यप्रेम। महाराज! राज्यवर्द्धन! न धावसि मन्दीभूता भगिनीप्रीतिः। अहो निष्ठुरः (७) प्रेतभावः। व्यपेहि पाप! पावक! स्त्रीघातनिर्घृण! ज्वलन् न लज्जसे? भ्रातर्वात! दासी तवास्मि (८) संवादय द्रुतं देवीदाहं देवाय दुःखितजनार्त्ति-हराय हर्षाय। (९) नितान्तनिःशूक शोकश्वपाक! सकामो-

---

(१) सुखरवंश! सुखरकुलप्रसूत! राजन्यवर्ग! विविधेति विविधाभिः आधिभिः मनस्तापैः विधुरा आकुला ताम्।

(२) संज्वरिणि सन्तापवति सन्तापः संज्वरः समावित्यमरः।

(३) उदासीनीभूतः निरपेक्षः। वन्ध्यः विफलः। रटन्तीं विलपन्तीम्।

(४) पतङ्ग! सूर्य्य! पक्षिन् वा पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः। प्रयत्नरक्षित! प्रकृष्टेन यत्नेन पालित! चारित्र! सुचरित!

(५) अवधूतं निरर्थकं स्थितं लक्षणैः शुभचिह्नैः।

(६) आपतसि आगच्छसि। शिथिलीभूतं ह्रासं गतम्।

(७) प्रेतभावः प्रेतत्वं प्रेतत्वस्य निष्ठुरत्वात् भगिनीप्रीतिः अपगतेति भावः।

(८) संवादय ज्ञापय।

ऽसि। दुःखदायिन्! वियोगराक्षस! तुष्टोऽसि। विजने वने कमाक्रन्दामि कस्मै कथयामि कमुपयामि शरणं कां दिशं (१०) प्रतिपद्ये करोमि किम् अभागधेया। गान्धारि! (११) गृहीतोऽयं लतापाशः। पिशाचि! मोचनिके! मुञ्च (१२) शाखाग्रहणकलहम्। कलहंसि! हंसि किमतःपरम् उत्तमाङ्गम्। मङ्गलिके! (१३) मुक्तागलं किमद्यापि बध्यते। सुन्दरि! दूरीभवति सखीसार्थः। (१४) स्थास्यसि कथमिव अशिवे शवशिविरे शवरिके!। (१५) सुतनु! तनूनपाति पतिष्यसि त्वमपि। मृणालकोमले! मालावति! म्लानासि। मातर्मातङ्गिके! (१६) अङ्गीकृतः त्वयापि मृत्युः। वत्से! वत्सिके! वत्स्यसि कथम् अनभिप्रेते प्रेतनगरे। नागरिके! (१७) गरिमाणम् आगतासि अनया स्वामिभक्त्या। विरा-

---

(९) नितान्तनिःशूक! अतिनिर्दय! शोकश्वपाक! शोकचाण्डाल! सकामोऽसि पूर्णमनोरथोऽसि।

(१०) प्रतिपद्ये गच्छामि। अभागधेया अभाग्या।

(११) गान्धारि मोचनिके इत्यादीनि समभिव्याहृतदासीनां सम्बोधनानि। गृहीतः लतापाशः व्रततिरज्जुः उद्बन्धनार्थमिति भावः।

(१२) शाखाग्रहणेति। शाखायाः ग्रहणम् उद्बन्धनार्थमिति भावः तत्र कलहः विवादः तम्। हंसि ताड़यसि। उत्तमाङ्गं शिरः।

(१३) मुक्तागलं मुक्तकण्ठम्। दूरीभवति दूरं गच्छतीत्यर्थः। म्रियते इति भावः सखीसार्थः वयस्यावर्गः।

(१४) स्थास्यसि स्थितिं करिष्यसि। अशिवे अमङ्गले शवशिविरे श्मशाने इति भावः।

(१५) सुतनु! शुभाङ्गि! तनूनपाति वह्नौ।

(१६) अङ्गीकृतः स्वीकृतः अनभिप्रेते अनीप्सिते।

(१७) गरिमाणं गौरवम् आगता प्राप्ता।

जिके! (१८) विराजितासि राजपुत्रीविपदि जीवितव्ययव्यवसायेन। (१९) भृगुपतनाभ्युद्यमभागाभिज्ञे! भृङ्गारधारिणि! धन्यासि। केतकि! कुतः पुनः ईदृशी स्वप्नेऽपि (२०) सुस्वामिनी। मेनके! जन्मनि जन्मनि देवीदास्यमेव ददातु देवो देहं दहन् (२१) दहनः। विजये! वीजय कृशानुम्। सानुमति! (२२) नमति इन्दीवरिका दिवं गन्तुकामा। कामदासि! देहि दहनप्रदक्षिणावकाशम्। विरचिके! विरचय वह्निम्। (२३) विकिर किरातिके! कुसुमप्रकरम्। कुररिके! कुरु (२४) कुरुवककोरकाचितां चिताम्। चामरं चामरग्राहिणि! गृहाण पुनरपि कण्ठे (२५) मर्षयितव्यानि नर्मदे! नर्मनिर्मितानि निर्मर्य्यादहसितानि। भद्रे! सुभद्रे! भद्रमस्तु ते परलोकगमनम्। (२६) अग्रा-

---

(१८) विराजिता शोभिता प्रशंसितेत्यर्थः। राजपुत्रीविपदि राजपुत्र्या राज्यश्रियाः विपदि व्यसने। जीवितव्ययव्यसनेन प्राणत्यागचेष्टितेन।

(१९) भृग्विति। भृगोः पर्वतशिखरविभागात् पतनं तत्र यः अभ्युद्यमः अभियोगः तस्य भागः भजनं ग्रहणमिति यावत् तदभिज्ञा तद्विषयज्ञानवती सत्सम्बुद्धौ। भृङ्गारधारिणि! जलपात्रविशेषवाहिनि!।

(२०) सुस्वामिनी अनुरूपा कर्त्री। देवीदास्यं देव्या राज्यश्रिया दास्यं कैङ्कर्य्यम्।

(२१) दहनः अग्निः। वीजय वायुना उद्दीपय। कृशानुम् अग्निम्।

(२२) नमति प्रणमति दिवं स्वर्गम्। कामदासि! कामकिङ्करि! दहनप्रदक्षिणावकाशम् अग्निप्रदक्षिणीकरणावसरम्।

(२३) विकिर विक्षिप कुसुमप्रकरं पुष्पनिचयम्।

(२४) कुरुवकेति। कुरुवकाणां नीलझिण्टीनां कोरकैः कलिकाभिः आचितां आकीर्णाम्।

(२५) मर्षयितव्यानि सोढव्यानि। नर्मनिर्मितानि परिहासकृतानि निर्मर्य्यादहसितानि निरङ्कुशानि हसितानि।

मीणगुणानुरागिणि! ग्रामेयिके! गच्छ सुगतिम्। (२७) वसन्तिके! अन्तरं प्रयच्छ। आपृच्छते छत्रधारी देवि! देहि दृष्टिम्। (२८) इष्टा तव जहाति जीवितं विजयसेना। सेयं मुक्तिका मुक्तकण्ठम् आरटति निकटे नाटकसूत्रधारी। पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि! पत्रलता। कलिङ्गसेने! अयं (२९) पश्चिमः परिष्वङ्गः पीड़य निर्भरम् उरसा माम्। (३०) असवः प्रवसन्ति वसन्तसेने!। मञ्जुलिके! (३१) मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रासदिग्धं चक्षुः इदं रोदिषि कियत् आश्लिष्य च माम्। (३२) निर्माणम् ईदृशं प्रायशो यशोधने!। धीरयसि अद्यापि किं मां माधविके!। का इयम् अवस्था (३३) संस्थापनानाम्। गतः कालः कालिन्दि! सखीजनानुनयाञ्जलीनाम्। उन्मत्तिके! मत्तपालिके! कृताः (३४) पृष्ठतः प्रणयिनीप्रणि-

---

(२६) अग्रामीणेति। अग्रामीणा नागरिका गुणाः तेषु अनुरागी विद्यतेऽस्याः तत्सम्बुद्धौ। ग्रामेयिके! ग्रामवासिनि! सुगतिं शोभनां गतिम्।

(२७) अन्तरम् अवकाशं प्रयच्छ। आपृच्छते सम्भाषते।

(२८) इष्टा प्रिया। नाटकसूत्रधारी नाटकस्य अभिनेयकाव्यसूत्रधारी सम्पादिका।

(२९) पश्चिमः चरमः परिष्वङ्गः आलिङ्गनम्।

(३०) असवः प्राणाः प्रवसन्ति गच्छन्ति दूरमित्यर्थः।

(३१) मार्जयसि शोधयसि निर्जलीकरोषीत्यर्थः। सुदुःसहेति सुदुःसहैः दुःखानां सहस्रैः असदिग्धं बाष्पकलुषितम्। आश्लिष्य आलिङ्ग्य।

(३२) निर्माणं सृष्टिः ईदृशं दुःखबहुलमिति भावः। धीरयसि स्थिरयसि।

(३३) संस्थापनानां प्रबोधानाम्। गतः अतीतः।

(३४) पृष्ठतः कृताः पश्चात् कृताः।

पातानुरोधाः। शिथिलय चकोरवति! चरणग्रहणं (३५) ग्रहिणि!। कमलिनि! किमनेन पुनः पुनः (३६) दैवोपालम्भेन। न प्राप्तं चिरं सखीजनसङ्गमसुखम्। आर्य्ये! महत्तरिके! तरङ्गसेने! नमस्कारः। सखि! सौदामिनि! दृष्टासि। समुपनय (३७) हव्यवाहनार्च्चनकुसुमानि कुसुदिके!। देहि चितारोहणाय रोहिणि! हस्तावलम्बनम्। अम्ब! धात्रि! धीरा भव। भवन्ति एवंविधा एव कर्मणां (३८) विपाकाः पापकारिणीनाम्। (३९) आर्य्यचरणानाम् अयमञ्जलिः। परः परलोकप्रयाणप्रणामोऽयम् मातः!। मरणसमये कस्मात् लवलिके! (४०) हलहलको बलीयान् आनन्दमयो हृदयस्य मे। हृष्यन्ति (४१) उच्चरोमाञ्चमुञ्चि किम् अङ्गीकृत्य अङ्गानि। वामनिके! वामेन मे स्फुरितम् (४२) अक्ष्णा। वृथा विरससि वयस्य! वायस! वृत्ते चौरिणि क्षणे क्षणे क्षीणपुण्यायाः पुरः। हरिणि! हेषितमिव हया-

---

(३५) ग्रहिणि! आग्रहवति!।

(३६) दैवोपालम्भेन दैवतिरस्कारेण। महत्तरिके! महाशये!। दृढ़ा कठिना।

(३७) हव्यवाहनार्चनकुसुमानि अग्निपूजार्थपुष्पाणि।

(३८) विपाकाः परिणामाः।

(३९) आर्य्यचरणानाम् आर्य्यस्य ज्येष्ठस्य भ्रातुः हर्षस्य चरणानाम्। परः पश्चिमः।

(४०) हलहलकः उत्कण्ठा।

(४१) उच्चरोमाञ्चमुञ्चि उच्चा रोमाञ्चाः तान् मुञ्चन्ति प्रकटयन्तीति तथोक्तानि। किम् अङ्गीकृत्य अवलम्ब्य।

(४२) अक्ष्णा नेत्रेण मङ्गलसूचकमेतदिति भावः। विरससि रौषि। वयस्य! सखे! वायस! काक! हयानाम् अश्वानाम्।

नाम् (४३) उत्तरतः। कस्य इदम् आतपत्रम् उच्चम् अत्र पादप्रान्तरेण प्रभावति! विभाव्यते। कुरङ्गिके! केन सुगृहीतनाम्नो नाम गृहीतम् अमृतमयम् आर्य्यस्य। देवि! दिष्ट्या वर्द्धसे देवस्य हर्षस्य आगमनमहोत्सवेन।

इत्येतच्च श्रुत्वा सत्वरम् (४४) उपससर्प ददर्श च मुह्यन्तीम् अग्निप्रवेशाय उद्यतां राजा राज्यश्रियम् आललम्बे च (४५) मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससम्भ्रमम्।

अथ तेन भ्रातुः (४६) प्रेयसः प्रकोष्ठबद्धानाम् ओषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता वमता इव पारिहार्य्यमणीनाम् अचिन्त्यं प्रभावम् अमृतमिव नखचन्द्ररश्मिभिः उद्गिरता बध्नतेव (४७) चन्द्रोदयच्युतशिशिरशीकरं चन्द्रकान्तचूड़ामणिं मूर्द्धनि मृणालमयाङ्गुलिना इव अतिशीतलेन निर्वापयता दह्यमानं हृदयं (४८) प्रत्यानयता इव

---

(४३) उत्तरतः उत्तरस्यां दिशि। पादप्रान्तरेण वृक्षान्तरालेन विभाव्यते लक्ष्यते।

(४४) उपससर्प समीपमाजगाम आललम्बे जग्राह।

(४५) मूर्च्छेति। मूर्च्छया भ्रातृदर्शनजनितद्विगुणोच्छलितशोकावेगेन इति भावः। उक्तञ्च स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते इति कुमारसम्भवे कालिदासेन।

(४६) प्रेयसः अतिप्रियस्य भ्रातुर्हर्षस्य। प्रकोष्ठबद्धानाम् अरत्निसन्धिमध्यान्तरनिवेशितानाम् ओषधीनां लताविशेषाणां रसविसरमिव रसप्रसेकमिव क्षरता स्रवता। पारिहार्य्यमणीनां कटकरत्नानाम्। बध्नतेव विदधतेव।

(४७) चन्द्रोदयच्युतशिशिरशीकरं चन्द्रस्य उदयात् च्युतः गलितः शिशिराणां तुषाराणां शीकरः कणः तम्।

कुतोऽपि जीवितमाह्लादकेन हस्तसंस्पर्शेन सहसैव समुन्मिमील राज्यश्री:। तथाच असम्भाविता‍गमनस्य अचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातु: स्वप्नदृष्टदर्शनस्य इव कण्ठे समाश्लिष्य (४९) तत्कालाविर्भावनिर्भरेण अभिभूतसर्वात्मना दु:खसम्भारेण निर्दयं नदीमुखप्रणालाभ्यामिव मुक्ताभ्यां स्थूलप्रवाहम् उत्सृजन्ती वाष्पवारि विलोचनाभ्यां हा तात! हा अम्ब! हा सख्य! इति व्याहरन्ती मुहुर्मुहु: (५०) उच्चैस्तराञ्च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठम् अतिचिरं (५१) विक्रुश्य वत्से! स्थिरा भव त्वमिति भ्रात्रा करस्थितमुखी समाश्वास्यमानापि कल्याणिनि! कुरु वचनम् अग्रजस्य गुरोरिति (५२) आचार्य्येण याच्यमानापि देवि! न पश्यसि देवस्य अवस्थाम् अलमतिरुदितेन इति राजलोकेन अभ्यर्थ्यमानापि स्वामिनि! भ्रातरम् अवेचस्व इति परिजनेन विज्ञाप्यमानापि (५३) दुहित:! विश्रम्य पुन: आरटितव्यमिति निवार्य्यमाणापि बान्धव-

---

(४८) प्रत्यानयतेव प्रत्यावर्त्तयतेव।

(४९) तत्कालेति। तस्मिन् काले आविर्भावेण उदयेन निर्भर: अतिशयित: तेन। अभिभूतसर्वात्मना सर्वाङ्गाभिभाविनेत्यर्थ:। दु:खसम्भारेण शोकातिरेकेण निर्दयं दृढं यथा तथा मुक्ताभ्याम् उद्घाटिताभ्याम्।

(५०) उच्चैस्तराम् अतिशयेन इत्यर्थ:। समुद्भूतेति समुद्भूतेन समुत्पन्नेन भगिनीस्नेहसद्भावभारेण भावित: जनित: मन्यु: शोको यस्य तथाभूतेन।

(५१) विक्रुश्य विलप्य। करेति करे हस्ते स्थितं मुखं यस्या: तथाभूता। समाश्वास्यमानापि प्रबोध्यमानापि।

(५२) आचार्य्येण दिवाकरमित्रेण।

(५३) दुहित:! कन्ये!। आरटितव्यं रोदितव्यम्।

ष्टवाभिः प्रियसखि! कियद्रोदिषि तूष्णीमास्स्व दृढ़ं (५४) दूयते देव इति सखीभिः अनुनीयमानापि (५५) चिरसम्भाविताने कदुःसहदुःखनिवहनिर्वहण-वाष्पोत्पीड़पीड्यमानकण्ठभागा (५६) प्रभूतमन्युभारभरितान्तःकरणा करुणकाहलेन स्वरेण कतिचित्कालम् अतिदीर्घं रुरोद। विगते च मन्युवेगे वक्षः समीपात् आचिप्य भ्रात्रा नीता निकटवर्त्तिनि तरुतले निषसाद।

शनैः आचार्य्यस्तु (५७) तथा हर्ष इति विज्ञाय विवर्द्धितादरः सुतरां मुहूर्त्तमिव अतिवाह्य (५८) निभृतसंज्ञाज्ञापितेन शिष्येण उपनीतं नलिनीदलैः स्वयम् आदाय नप्तो मुखप्रक्षालनाय उदकम् (५९) उपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथमम् (६०) अनवरतरोदनाताम्रं चिरप्रवृत्ताश्रुजलजालं रक्तपङ्कजमिव स्वचक्षुः अक्षालयत् पश्चात्

---

(५४) दूयते सन्तापमनुभवति।

(५५) चिरेति। चिरं सम्भावितः भुक्तः अनेकेषां दुःसहानां दुःखानां निवहः तस्य निर्वहणः प्रकटनः यो वाष्पाणामुत्पीड़ः प्रवाहः तेन पीड्यमानः रुध्यमानः कण्ठभागः यस्याः तथाभूता।

(५६) प्रभूतेति। प्रभूतेन बहुना मन्युभारेण शोकभारेण भरितम् आपूरितम् अन्तःकरणं यस्याः तथोक्ता। करुणकाहलेन शोकमहता। मन्युवेगे शोकवेगे। आचिप्य आकृष्य।

(५७) तथा तादृशः सम्राड़िति भावः। विवर्द्धितादरः विशेषेण वर्द्धितः वृद्धिं गतः आदरो यस्य तथाभूतः।

(५८) निभृतेति। निभृतया निःशब्दया संज्ञया इङ्गितेन ज्ञापितः आदिष्टः इत्यर्थः तेन।

(५९) उपनिन्ये अर्पितवान्।

(६०) अनवरतेति। अनवरतेन रोदनेन आताम्रम् आरक्तम्। चिरं प्रवृत्त

(६१) आत्मनः। प्रक्षालितमुखशशिनि च महीपाले सर्वतो निःशब्दः सम्बभूव सकलो लिखित इव लोकः। ततो नरेन्द्रो मन्दमन्दम् अब्रवीत् ससारं वत्से! वन्दस्व अत्रभवन्तं भदन्तम् एष ते भर्त्तुर्हृदयं द्वितीयम् अस्माकञ्च गुरुरिति। राजवचनात्तु राजदुहितरि (६२) पतिपरिचयश्रवणोद्घातेन पुनः आनीतनेत्राम्भसि नमन्त्याम् आचार्य्यः (६३) प्रयत्नरचिताऽगतवाष्पाम्भःसम्भारभज्यमानधैर्य्यार्द्रलोचनः किञ्चित् (६४) परावृत्तनयनो दीर्घं निशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुवादी मधुरया वाचा व्याजहार कल्याणराशे! अलं रुदित्वा अतिचिरम् राजलोको न अद्यापि रोदनात् निवर्त्तते। क्रियताम् अवश्यकरणीयः स्नानविधिः स्नात्वा च गम्यतां तामेव भूयो (६५) भुवम्।

अथ भूपतिः (६६) अनुवर्त्तमानो लौकिकमाचारम्

---

प्रसृतम् अश्रुजलजातं वाष्पवारिसमूहः यस्मात् तथाभूतं स्वसुः भगिन्याः चक्षुः नयनम्।

(६१) आत्मनः स्वस्य चक्षुः इति सम्बन्धः।

(६२) पतीति। पत्युः ग्रहवर्मणः परिचयः सङ्गतं तस्य श्रवणोद्घातः आकर्णनप्रसङ्गः तेन पुनः आनीतं नेत्रयोरम्भः सलिलं यस्याः तथाभूतायां भर्त्तुर्मरणेन सख्यवार्त्ताकर्णनेन पुनर्वाष्पायमाणायामित्यर्थः।

(६३) प्रयत्नेति। प्रयत्नेन रचितानि अपि आगतानि वाष्पाम्भांसि तेषां सम्भारैः निवहैन भज्यमानं च्चाल्यमानं यत् धैर्य्यं तेन आर्द्रे लोचने नेत्रे यस्य तथाभूतः।

(६४) परावृत्तनयनः साचीकृतचक्षुः।

(६५) भुवं स्थानम्।

(६६) अनुवर्त्तमानः अनुसरन्।

आचार्य्यवचनञ्च उत्थाय स्नात्वा (६७) गिरिसरिति सह स्वस्रा तामेव भूमिम् अयासीत्। (६८) तस्याञ्च सपरिजनां प्रथमम् आहितावधान: पार्श्ववर्त्ती परवतीं शुचा (६९) पतिपिण्डप्रदर्शितप्रयत्नप्रतिपन्नाभ्यवहारकरणां भगिनीम् अभोजयत् अनन्तरञ्च स्वयम् आहारस्थितिम् अकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरत: स्वसु: कान्यकुब्जात् (७०) गौड़सम्भ्रमं गुप्तितो गुप्तनाम्ना कुलपुत्त्रेण (७१) निष्कासनं निर्गतायाश्च राज्यवर्द्धनमरणश्रवणं श्रुत्वा च आहारनिराकरणम् अनाहारपराहतायाश्च विन्ध्याटवीपर्य्यटनखेदं (७२) जातनिर्वेदाया: पावकप्रवेशोपक्रमणं यावत् सर्वमशृणोत् (७३) व्यतिकरं परिजनत:। तत: सुखासीनम् एकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं

---

(६७) गिरिसरिति गिरिनद्याम्।

(६८) तस्याञ्च भूमौ इत्यर्थ:। आहितावधान: कृतावधान:। परवतीं शुचा शोकपरवशामित्यर्थ:।

(६९) पतीति। पत्यु: पिण्डं दातव्यं जीवितया पत्न्या इति शास्त्रं तच्च जीवनम् आहारं विना न रक्षितुं शक्यते। तत् पिण्डमदत्त्वा आत्मत्यागो महान् धर्म: आप्रलयं नरकवासहेतुश्च इति भाव: इत्येवं प्रदर्शितेन बोधितेन भावे क्तप्रत्यय: प्रबोधदानेन इति यावत् प्रयत्नेन च प्रकृष्टानुरोधेन च प्रतिपन्नं स्वीकृतम् अभ्यवहारकरणम् भोजनव्यापार: यया तथाविधाम्।

(७०) गौड़सम्भ्रमं गौड़ाधिपात् भयम्। गुप्तित: बन्धनात् कारावासात् इत्यर्थ:।

(७१) निष्कासनं वहिष्करणम् उद्धरणम्। आहारनिराकरणं भोजनपरित्यागम्।

(७२) जातनिर्वेदाया: उत्पन्नवैराग्याया: पावकप्रवेशोपक्रमणम् अग्निप्रवेशप्रक्रमम्।

राजानम् आचार्य्यैः समुपसृत्य शनैः (७४) आसाञ्चक्रे स्थित्वा च कञ्चित्कालांशं लेशतो वक्तुमुपचक्रमे। श्रीमन्! आकर्ण्यताम् आख्येयमस्ति नः किञ्चित्—

अयं हि यौवनोन्मादात् परिभूय (७५) भूयसीर्भार्य्या यौवनावतारतरलतराः (७६) ताराराजो रजनीकर्णपूरः पुरुहूतपुरोधसो धिषणस्य (७७) पुरन्ध्रीं धर्मपत्नीं पत्नीयन् अतितरलः तारां नाम अपजहार नाकतश्च पलायाञ्चक्रे। (७८) चकितचकोरलोचनया तया सह अतिकामया सर्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार। (७९) चिराच्च कथञ्चित् सर्वगीर्वाणवाणीगौरवात् गिरां पत्युः पुनरपि प्रत्यर्पयामास ताम्। हृदये तु (८०) अनिन्धनम् अदह्यत विरहात् वरारोहायाः तस्याः सततम्।

---

(७३) व्यतिकरं वृत्तान्तम्। परिजनतः परिजनसकाशात्। विविक्तभुवि विजनप्रदेशे।

(७४) आसाञ्चक्रे उपविवेश। लेशतः किञ्चित्। आख्येयं वक्तव्यम्।

(७५) भूयसीः बह्वीः सप्तविंशतीः अश्विन्यादिदक्षदुहितॄरित्यर्थः। परिभूय अवधीर्य्य। यौवनेति। यौवनस्य अवतारेण उदयेन तरलतराः अतिशयेन स्फुरन्तीरित्यर्थः।

(७६) ताराराजः चन्द्रः। रजनीकर्णपूरः निशाकर्णभूषणभूतः। पुरुहूतपुरोधसः इन्द्रपुरोहितस्य धिषणस्य बृहस्पतेः गीष्पतिर्धिषणो गुरुरित्यमरः।

(७७) पुरन्ध्रीं गृहिणीं पत्नीयन् आत्मनः पत्नीं कुर्वन्। नाकतः स्वर्गात्।

(७८) चकितेति। चकितः भीतः यश्चकोरः पक्षिविशेषः तद्वत् लोचनं नयनं यस्याः तथाभूतया तया तारया। अतिकामया अतिकामुक्या।

(७९) चिरात् दीर्घकालात् परमित्यर्थः। सर्वेति सर्वेषां गीर्वाणानां देवानां वाण्याः वचनस्य गौरवात् सम्मानात्। गिरां पत्युः बृहस्पतेः। तां ताराम्।

(८०) अनिन्धनम् इन्धनं काष्ठं तद्रहितं यथा तथा वरारोहायाः उत्तमाङ्गनायाः।

(८१) एकदा तु शैलात् उदयात् उदयमानो विमले वारिणि वरुणालयस्य (८२) संक्रान्तमात्मनः प्रतिविम्बं विलोकितवान्। दृष्ट्वा च तदा सस्मार (८३) सस्मरः स्मेरगण्डस्थलस्य ताराया मुखस्य। (८४) मुमोच च मन्मथोन्माथमथ्यमानमानसः (८५) स्वस्थोऽपि अस्वस्थः स्थवीयसः पीतसकलकुमुदवनप्रभाप्रवाहधवलताराभ्यामिव लोचनाभ्यां (८६) वाष्पवारिविन्दून्। अथ पततः तान् उदन्वति समस्तान् एव आचेमुः मुक्ताशुक्तयः। (८७) तासाञ्च कुक्षिकोषेषु मुक्ताफलीभूतान् अवाप तान् कथमपि रसातलनिवासी वासुकिर्नाम (८८) विषमुचाम् ईशः। स च तैः मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्शयद्भिः (८९) एकावलीम् अकल्पयत् चकार च मन्दाकिनीति नाम तस्याः।

---

(८१) उदयात् शैलात् उदयाचलात्। वरुणालयस्य समुद्रस्य।

(८२) संक्रान्तं प्रतिफलितम्।

(८३) सस्मरः सकामः। स्मेरगण्डस्थलस्य विकसत्कपोलतलस्य। मुखस्य इति कर्मणि षष्ठी।

(८४) मुमोच ववर्ष। मन्मथेति मन्मथस्य कामस्य उन्माथेन उत्पीडनेन मथ्यमानं विलोड्यमानं हृदयं यस्य तथाभूतः।

(८५) स्वस्थः अस्वस्थ इति विरोधः स्वस्थः स्वर्गस्थः अप्रकृतिस्थ इति तत्परिहारः। स्थवीयसः अतिस्थूलान्। पीतं सकलं कुमुदवनं तस्य प्रभाप्रवाहः कान्तिसमूहः तेन धवला तारा कनीनिका ययोस्ताभ्याम्।

(८६) तान् वाष्पवारिविन्दून्। उदन्वति समुद्रे। आचेमुः पपुः। मुक्ताशुक्तयः मुक्तास्फोटाः।

(८७) तासां मुक्ताशुक्तीनां कुक्षिकोषेषु उदराभ्यन्तरेषु। अवाप आप।

(८८) विषमुचां नागानाम् ईशः प्रभुः।

सा च भगवत: सोमस्य सर्वासाम् ओषधीनाम् अधिपते: प्रभावात् (९०) अत्यन्तविषघ्नी हिमामृतसम्भवत्वाच्च स्पर्शेन सर्वसत्त्वसन्तापहारिणी बभूव। अत: स तां सर्वदा (९१) विषोष्मशान्तये वासुकि: पर्य्यधत्त।

समतिक्रामति च कियत्यपि काले कदाचित् ताम् एकावलीं तस्मात् नागराजात् नागार्जुनो नाम नागै: एव आनीत: पातालतलं भिक्षु: (९२) अभिक्षत लेभे च। निर्गत्य रसातलात् त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे स ददौ ताम्। सा च अस्माकं कालेन शिष्यपरम्परया कथमपि हस्तमुपगता। यद्यपि च परिभव इव भवति भवादृशां (९३) दत्त्रिम उपचार: तथापि ओषधिबुद्धया बुद्धिमता (९४) सर्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेण आयुष्मता विषरक्षापेक्षया गृह्यताम्। इत्यभिधाय भिक्षो: (९५) अभ्यासवर्त्तिन: चीवरपटान्तसंयतां मुमोच ताम् एकावलीं मन्दाकिनीम्।

---

(८९) एकावलीम् एकसरं हारविशेषमिति यावत् अकल्पयत् अरचयत्। तस्या एकावल्या:।

(९०) अत्यन्तविषघ्नी अतिशयेन विषहरी।

(९१) विषोष्मशान्तये विषसन्तापनिवृत्तये। पर्य्यधत्त परिहितवान्।

(९२) अभिक्षत अयाचत।

(९३) दत्त्रिम: दानेन निष्पन्न: उपचार: सत्कार:।

(९४) सर्वेति। सर्वेषां सत्त्वराशीनां प्राणिसङ्घानां रक्षायां प्रवृत्त: उद्यत: तेन। अतएव रक्षणीयं शरीरं येन तथाभूतेन स्वशरीरं रक्षितुकामेन इत्यर्थ:। विषरक्षापेक्षया विषेभ्य: रक्षानुरोधेन।

(९५) अभ्यासवर्त्तिन: अन्तिकस्थितस्य। चीवरपटान्तसंयतां वसनाञ्चलबद्धाम्।

(९६) उन्मुच्यमानाया एव यस्याः प्रभालेपिनि लब्धावकाशे विषदमहसि महीयसि विसर्पति रश्मिमण्डले युगपदुज्ज्वलायमानेषु दिङ्मुखेषु (९७) मुकुलितलताबधूत्कण्ठितैः आमूलाद्विकाशितमिव तरुभिः अभिनवमृणाललुब्धैः (९८) धावितमिव धुतपक्षपुटपटलधवलितगगनं वनसरसीहंसयूथैः (९९) स्फुटितमिव भरवशविशीर्य्यमाणधूलिधवलैः गर्भभेदसूचितसूचीसञ्चयशुचिभिः केतकीवाटैः (१००) उद्गलितदलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिः (१) विधुतसितसटाभारभरितदिक्चक्रैः चलितमिव केसरिकुलैः प्रहसित-

---

(९६) उन्मुच्यमानायाः निष्काश्यमानायाः । यस्याः मन्दाकिन्याः । प्रभालेपिनि कान्तिव्यापिनि । लब्धावकाशे प्राप्तावसरे । विषदमहसि उज्ज्वलतेजसि । महीयसि अतिमहति विसर्पति प्रसरति । रश्मिमण्डले किरणनिचये ।

(९७) मुकुलितेति । मुकुलिता विकासोन्मुखा इति भावः लता एव वध्वः तासु उत्कण्ठितैः तत्सङ्गकामिभिरिति भावः । तरुभिः वृक्षैः आमूलात् विकाशितम् इव उल्लासितमिव लताविकासधियेति भावः ।

(९८) धुतेति । धुतैः कम्पितैः विस्तारितैरिति भावः पक्षपुटानां पटलैः समूहैः धवलितं श्वेतीकृतं गगनं यस्मिन् तद् यथा तथा वनसरसीहंसयूथैः अरण्यसरोवरहंसवृन्दैः धावितमिव विद्रुतमिव ।

(९९) भरेति । भरवशेन पुष्टिवशेन विशीर्य्यमाणाभिः विकीर्य्यमाणाभिः धूलिभिः रजोभिः धवलाः तैः । गर्भेति गर्भभेदेन गर्भस्फोटनेन सूचितैः स्फुटितैः सूचीनां शिखानां सञ्चयैः समूहैः शुचयः विशदाः तैः । केतकीवाटैः केतकीवनैः स्फुटितमिव विकसितमिव ।

(१००) उद्गलितेति । उद्गलितैः निर्गतैः दलैः छदैः दन्तुराभिः सञ्जातदन्ताभिरिव लक्ष्यमाणाभिः । प्रबुद्धमिव विकसितमिव ।

(१) विधुतेति । विधुतेन विस्तारितेन सितसटानां श्वेतजटानां भारेण भरितम् आपूरितं दिक्चक्रं दिङ्मण्डलं यैः तथाभूतैः । केसरिकुलैः सिंहवृन्दैः ।

मिव (२) दशनांशुमालालोकलिप्यमानवनं वनदेवताभिः विकसितमिव (३) शिथिलितकुसुमकोशकेसराट्टहासनिरङ्कुशं काशकाननैः भ्रान्तमिव (४) सम्भ्रमभ्रमितबालपल्लवपरिवेशश्वेतायमानैः चमरीकदम्बकैः प्रसृतमिव (५) स्फायमानफेनिलतरलतरतरङ्गोद्गारिणा गिरिनदीपूरेण (६) अपरतारागणलाभमुदितेन उदितमिव (७) विकचमरीचिचक्राक्रान्तककुभा पूर्णचन्द्रेण प्रक्षालित इव दावानलधूलिधूसरितदिगन्तो दिवसः पुनरिव धौतानि अश्रुजलक्लिष्टानि नारीणां मुखानि।

राजा तु (८) मांसलैः तस्याः सम्मुखैः मयूखैः आकुलो-

---

(२) दशनेति। दशनांशूनां दन्तकिरणानां माला समूहः तस्या आलोकेन प्रभया लिप्यमानं वनं यस्मिन् तद् यथा तथा।

(३) शिथिलितेति। शिथिलितानां श्लथीभूतानां कुसुमानां कोशकेसराः कर्णिकारकिञ्जल्का अट्टहासा इव तैः। निरङ्कुशं निर्बाधं यथा यथा।

(४) सम्भ्रमेति। सम्भ्रमेण त्वराविशेषेण भ्रमितैः चालितैः बालपल्लवपरिवेशैः पुच्छलोमकिसलयमण्डलैः श्वेतायमानाः श्वेता इव आचरन्तः तैः। चमरीकदम्बकैः चमरीवृन्दैः। प्रसृतमिव विस्तृतमिव।

(५) स्फायमानेति। स्फायमानाः वर्द्धमानाः फेनिलाः फेनमुद्गिरन्तः तरलतरा अतिचञ्चलाः ये तरङ्गाः ऊर्मयः तान् उद्गिरतीति तथाभूतेन।

(६) अपरेति। अपरे अन्ये आकाशसञ्चारिण्य इति भावः तारागणाः नक्षत्रवृन्दानि तेषां लाभः तेन मुदितः प्रहृष्टः तेन।

(७) विकचेति। विकचैः विकस्वरैः मरीचीनां मयूखानां चक्रैः समूहैः आक्रान्ता आपूरिताः ककुभः दिशः येन तथोक्तेन। प्रक्षालित इव धौत इव। दावानलेति दावानलस्य वनवह्नेः धूलिभिः भस्मभिः धूसरितः दिगन्तः यस्मिन् तथाभूतः। धौतानि क्षालितानि।

(८) मांसलैः प्रभूतैः।

क्रियमाणं मुहुर्मुहुः उन्मीलयन् निमीलयंश्च चक्षुः कथमपि प्रयत्नेन ददर्श (९) सर्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिं (१०) घनमुक्तां शारदीम् इव लेखीकृतां ज्योत्स्नां (११) प्रकटपदकचिह्नां सञ्चारवीथीमिव बालेन्दोः निश्चलीभूतां सप्तर्षिमालामिव (१२) हस्तमुक्ताम् अभिभूतसकलभुवनभूषणभूतिप्रभावाम् ऐशानीमिव शशिकलां धवलतागुणगृहीतां कान्तिमिव निर्गतां क्षीरराशेः (१३) अनेकमहामहीभृत्परम्परागतां गङ्गामिव दुर्गतिहराम् (१४) अनवरतस्फुरिततरलांशुकां (१५) पुरःसरपताकामिव महेश्वरभावागमस्य घनसारशुक्लां दन्तपङ्क्तिम्

---

(९) सर्वाशापूरणीं सर्वदिगुद्भासिनीं सर्वमनोरथसम्पादिनीञ्च। पङ्क्तीकृताम् इव पङ्क्तिक्रमेण स्थापितामिव। दिङ्नागस्य ऐरावतस्य करः शुण्डः तस्य शीकरसंहतिं निर्गलदम्बुबिन्दुधाराम्।

(१०) घनमुक्तां मेघावरणभ्रष्टाम् निरन्तरमुक्ताफलखचिताम्। लेखीकृतां श्रेणीकृतां ज्योत्स्नां चन्द्रिकाम्।

(११) प्रकटेति। प्रकटमुज्ज्वलं पदकं मध्यमणिः पदमेव पदकञ्च चिह्नं यस्याः तां सञ्चारवीथीमिव सञ्चरणपद्धतिमिव। बालेन्दोः नवोदितस्य चन्द्रस्य।

(१२) हस्तमुक्तां हस्तात् करात् भिन्नोरिति भावः हस्तो नाम नक्षत्रं तस्मात् निर्गताम्। अभिभूतेति अभिभूतः निर्जितः सकलानां भुवनानां भूषणभूतेः अलङ्कारसम्पदः प्रभावः यया ताम् ऐशानीमिव शैवीमिव। धवलतागुणेन श्वैत्यधर्मेण श्वेतवर्णतन्तुना च गृहीता ताम्।

(१३) अनेकेति। अनेके महान्तः महीभृतः पर्वता राजानश्च तेषां परम्परा धारा तया आगता उपस्थिता ताम्। दुर्गतिहरां दारिद्र्यहारिणीं नरकनिवारिणीञ्च।

(१४) अनवरतेति। अनवरतं स्फुरिताः तरलस्य मध्यमणेः अंशुका यस्याः तरला अंशुकाः किरणाः अंशुकानि पटाश्च यस्याः तथोक्ताम्।

(१५) पुरःसरेति। पुरोऽग्रतः सरतीति पुरःसरी सा चासौ पताका वैज-

इव अभिमुखस्य ईश्वरस्य (१६) वरमनोरथपूरणसमर्थां स्वयम्वरस्रजमिव भुवनश्रियः (१७) निजकरपल्लवावरणदुर्लक्ष्यां (१८) चक्षूरागविहसतिकामिव वसुधायाः मन्त्रकोषसाधनप्रवृत्तस्य (१९) अक्षमालामिव राजधर्मस्य (२०) समुद्रालङ्कारभूतां सङ्ख्यालेख्यपट्टिकामिव कुवेरकोशस्य। पश्यन् च एतां विस्मयम् आजगाम मनसा सुचिरम्। आचार्य्यस्तु ताम् (२१) उद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः। अथ नरपतिरपि प्रीतिम् उपदर्शयन् प्रत्यवादीत् आर्य्य! रत्नानाम् ईदृशानाम् अनर्घ्याः प्रायेण पुरुषाः। तपःसिद्धिः इयमार्य्यस्य देवताप्रसादो वा। के च वयम् इदानीम् आत्मनोऽपि किमुत ग्रहणस्य प्रत्याख्यानस्य वा। दर्शनात्

---

यन्ती चेति तामिव। महेश्वरभावागमस्य साम्राज्यलाभस्य। घनसारशुभ्रां चन्दनधवलाम् अभिमुखस्य अनुकूलस्य ईश्वरस्य दैवस्येति यावत्।

(१६) वरमनोरथपूरणसमर्थां वरः श्रेष्ठः मनोरथः कामः वरस्य जामातुः मनोरथस्य तस्य पूरणे साधने समर्था ताम्।

(१७) निजेति। निजाः स्वीयाः करा रश्मय एव पल्लवाः निजः स्वीयः करपल्लवः हस्तकिसलयस्च तैः तेन च आवरणेन आच्छादनेन दुर्लक्ष्यां दुर्दर्शाम्।

(१८) चक्षूरागेति। चक्षुषः रागः प्रीतिः तेन विहसतिका नर्महासः ताम् इव। मन्त्रेति मन्त्रः कर्त्तव्याकर्त्तव्यावधारणं कोषो धनं तस्य साधनं हस्तगतादिकरणं तत्र प्रवृत्तः तस्य।

(१९) अक्षमालामिव जपमालिकामिव।

(२०) समुद्रेति। समुद्रः सागरः तस्य अलङ्कारः समुद्रः मुद्रया सहितश्च योऽलङ्कारः तद्भूतां तत्स्वरूपां सङ्ख्यालेख्यपट्टिकामिव सङ्ख्या एतावन्ति रत्नानि अस्मिन् सन्तीति गणना तस्या लेख्यपट्टिका लिपिपटी तामिव कुवेरकोशस्य धनेश्वरभाण्डागारस्य।

(२१) उद्धृत्य उत्तोल्य। बन्धुरे नतानते रूढे वा। के च वयम् आत्मनः स्वस्य स्वदेहस्य इत्यर्थः न केऽपि वयमित्यर्थः। दर्शनात् भवत इति शेषः।

प्रभृति (२२) प्रभूतगुरुगुणगणहृतेन हृदयेन परवन्तो वयम्। (२३) सङ्कल्पितमिदम् आमरणात् आर्य्योपयोगाय शरीरम्। अत्र कामचारो वः कर्त्तव्यानामिति।

(२४) समतिक्रान्ते च कियत्यपि काले गते च एकावलीवर्णनालापे लोकस्य अनन्तरं लब्धविस्रम्भा राज्यश्रीः ताम्बूलवाहिनीं पत्रलताम् आहूय (२५) उपांशु किमपि कर्णमूले शनैः आदिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत् देव! देवी विज्ञापयति न स्मरामि आर्य्यस्य पुरः कदाचिदुच्चैः वचनमपि कुतो विज्ञापनम्। इयं हि (२६) शुचाम् असह्यता व्यापारयन्ती हतदैवदत्तादेशा (२७) शिथिलयति विनयम्। अबलानां हि पतिरपत्यं वा (२८) अवलम्बनम्। उभयविकलानान्तु (२९) दुःखानलेन्धनाय-

---

(२२) प्रभूतेति। प्रभूतानां गुरुगुणानाम् आचार्य्यगुणानां गणेन हृतं तेन।

(२३) सङ्कल्पितं मनसा निर्द्धारितम् आर्य्योपयोगाय आर्य्यस्य मान्यस्य भवतः उपयोगः उपकारः तस्मै। अत्र शरीरे इत्यर्थः वः युष्माकं कर्त्तव्यानां कार्य्याणां कामचारः यथेच्छवृत्तित्वम् अहं मदीयेन शरीरेण भवतः यावदिष्टं मनोरथं सम्पादयिष्यामीति भावः।

(२४) समतिक्रान्ते गते। एकावलीवर्णनालापे एकावल्या मन्दाकिन्या वर्णनमेव आलापः प्रसङ्गः तस्मिन्। लोकस्य तत्रस्थस्य जनस्य एकावलीवर्णनालापे इत्यनेन सम्बन्धः।

(२५) उपांशु सुगूढम्।

(२६) शुचां शोकानाम् असह्यता दुःसहता। व्यापारयन्ती विज्ञापयितुं नियोजयन्तीत्यर्थः। हतेति हतेन दैवेन भाग्येन दत्त आदेशोऽनुमतिर्यस्याः तथाभूता।

(२७) शिथिलयति। शिथिलं करोति ह्रासयति इत्यर्थः।

(२८) अवलम्बनम् आश्रयः। उभयविकलानान्तु पतिरापत्यानाम्।

मानं प्राणितम् अश्लीलत्वमेव केवलम्। (३०) आर्य्यागमनेन च क्षतोऽपि प्रतिहतो मरणप्रयत्न:। अत: (३१) काषायग्रहणाभ्यनुज्ञया अनुगृह्यतामयम् अपुण्यभाजनं जन इति। जनाधिपस्तु तदाकर्ण्य तूष्णीमेव अतिष्ठत्।

अथ आचार्य्य: सुधीरम् अभ्यधात् आयुष्मति! शोको हि नाम (३२) पर्य्याय: पिशाचस्य रूपान्तरम् आक्षेपस्य तारुण्यं (३३) तमस: विशेषणं विषस्य (३४) अनन्तक: प्रेतनगरनायक:। अयम् अनिर्वृतिधर्मा दहन:। अयमक्षयो राजयक्ष्मा। अयम् अलक्ष्मीनिवासो (३५) जनार्द्दन:। अयम् अपुण्यप्रवृत्त: (३६) क्षपणक:। अयम् अप्रतिबोधो

(२९) दु:खेति। दु:खमेव अनल: तस्य इन्धनं काष्ठं तदिवाचरत् दु:खानलेन्धनायमानम्। प्राणितं प्राणधारणम् अश्लीलत्वमेव धार्ष्ट्यमेव निर्लज्जत्वमेव इत्यर्थ:।

(३०) आर्य्यागमनेन आर्य्यस्य भवत: आगमनेन उपस्थित्या। प्रतिहत: व्याहत:।

(३१) काषायेति कषायेण रक्तं काषायं वस्त्रमिति भाव: तस्य ग्रहणं धारणं प्रव्रज्यावलम्बनमित्यर्थ: तत्र अभ्यनुज्ञा अनुमति: तया।

(३२) पर्य्याय: नामान्तरं पिशाचस्य नीचाधमस्य देवयोनिविशेषस्य। रूपान्तरम् अन्यविधं रूपम् आक्षेपस्य अपस्माररोगस्य अचेतनतया भूविलुण्ठनलक्षणस्य इति भाव: तारुण्यं यौवनम्।

(३३) तमस: अन्धकारस्य विशेषणं विशेष: भेदमात्रमित्यर्थ:।

(३४) अनन्तक: नास्ति अन्तो यस्य स: अनन्तक: अशेष: यावता वर्द्धते तावदेव वृद्धिं गच्छति न विरमतीति भाव: प्रेतनगरनायक: यमपुरीप्रभु:। अनिर्वृति: अध्रुति: अनिर्वाणस्य धर्मो यस्य तथाभूत:। दहन: अग्नि:। राजयक्ष्मा क्षयरोगविशेष:। अक्षय: नास्ति क्षयो यस्मात् तथोक्त: अविनश्वरश्च।

(३५) जनार्दन: जनान् अर्दयति पीडयतीति तथोक्त: विष्णुश्च। अपुण्यप्रवृत्त: पापप्रवृत्त: पापरत इत्यर्थ: पापजातश्च।

निद्राप्रकार:। अयम् अनलसधर्मा सन्निपात:। अयम् (३७) अशिवसहचरो विनायक:। अयम् अबुधसेवितो (३८) ग्रहवर्ग:। अयम् अयोगसमुत्थो ज्योतिष्प्रकार:। अयं स्नेहात् (३९) वायुप्रकोप: मानसात् अग्निसम्भव: (४०) आर्द्रभावात् रज:क्षोभ: रसात् अभिशोष: रागात् कालपरिणाम:। (४१) तत्

---

(३६) क्षपणक: नग्नाटक: देहनाशकश्च। अप्रतिबोध: प्रबोधाप्रतिविधेय: अपुनर्जागरश्च। निद्राप्रकार: निद्रां प्रकिरति निरस्यतीति तथोक्त: निद्राभेदश्च। अनलसधर्मा अनलेन अग्निना समान: धर्मो यस्य तथोक्त: अन्तर्दाहकत्वात् इति भाव; अनलस: आलस्यलक्षणवर्जित: गात्रलुण्ठनादिरूप इत्यर्थ: धर्मो यस्य तथाभूतस्य सन्निपात: सम्यक् निपातयतीति तथोक्त: वातपित्तकफानां विकृतानां दोषाणां सम्यक् निपात: उपस्थिति:।

(३७) अशिवसहचर: अशिवम् अमङ्गलं तस्य सहचर:। विनायक: विशेषेण नयति नाशयतीति तथोक्त: विघ्न: गणपतिश्च। अबुधसेवित: बुधै: पण्डितै: बुधेन सौम्येन ग्रहेण च न सेवित: नावलम्बित:।

(३८) ग्रहवर्ग: ग्रहा: व्यसनानि सूर्यादयश्च तेषां वर्ग: पक्ष: गणश्च। अयोगेति योगे समाधौ चित्तनिरोधव्यापारे इति भाव: अनुकूले दैवे च न समुत्तिष्ठति न उदेतीति तथोक्त:। ज्योतिष्प्रकार: अग्निभेद: परं ज्ञानञ्च। स्नेहात् प्रणयात् पुष्टिहेतुभूताद् घृतादेश्च।

(३९) वायुप्रकोप: उन्माद: औद्धत्यञ्च। मानसात् चेतस: तदाख्यात् देवसरसश्च।

(४०) आर्द्रभावात् वात्सल्यात् सरसत्वाच्च रज:क्षोभ: रजसो गुणविशेषस्य क्षोभ: विजृम्भितं धूलिप्रसरश्च। रसात् अनुरागात् रसायनाच्च अभिशोष: आत्मशोषणं दुष्टशारीरक्लेदशमनञ्च रागात् अत्यासङ्गात् लौहित्याच्च कालपरिणाम: कालो यम: कृष्णवर्णश्च परिणामो यस्य तथोक्त: जीवननाश: कृष्णवर्णताप्राप्तिश्च चरमं फलमस्येति भाव:।

(४१) अस्य शोकस्य आपातम् आपतनमित्यनेन सम्बन्ध:। अजस्रास्रस्राविण: अजस्रम् अनवरतम् अस्रं वाष्पं रक्तञ्च स्रवत:। हृदयेति हृदयस्य महत् व्रणं तस्य।

अस्य अजस्रास्रस्राविणो हृदयमहाव्रणस्य (४२) बहुलदोषान्ध-कारलब्धप्रवेशप्रसरस्य प्राणतस्करस्य (४३) शून्यताहेतोः महाभूतग्रामघातकस्य (४४) सकलविग्रहक्षपणदक्षस्य दोषचक्रवर्त्तिनः (४५) कार्श्यश्वासप्रलापोपद्रवबहुलस्य दीर्घ-रोगस्य असद्ग्रहस्य (४६) सकललोकक्षयधूमकेतोः जीविता-पहारदक्षस्य अक्षणरुचेः अनभ्रवज्रपातस्य (४७) स्फुर-दनवद्यविद्याविद्युदुद्योतमानानि गहनग्रन्थग्रन्थिगूढगर्भ-

---

(४२) बहुलेति। बहुलदोषा बहवः अपगुणाः कृष्णपक्षरात्रयश्च तेषु तासु च ये अन्धकाराः मोहाः तमांसि च तैः लब्धः प्रवेशप्रसरः येन तथाभूतस्य। प्राणतस्करस्य जीवनापहारिण इत्यर्थः।

(४३) शून्यताहेतोः किं कर्त्तव्यतामूढ़ताकारणस्य। महेति महाभूतानां महतां प्राणिनां मानवानामित्यर्थः नतु अन्येषामिति भावः घातकः नाशकः तस्य।

(४४) सकलेति सकलानां सकला वा विग्रहाः शरीराणि विरोधाश्च तेषां क्षपणं क्षयकरणं तत्र दक्षः निपुणः तस्य। दोषचक्रवर्त्तिनः दोषाणां काम-क्रोधादिरिपूणां चक्रे मण्डले वर्त्तते मुख्यतया तिष्ठतीति तथोक्तस्य दोषाधि राजस्य च।

(४५) कार्श्येति। कार्श्यं कृशता श्वासः दीर्घ इति भावः प्रलापोऽनर्थकं वचनं प्रलापोऽनर्थकं वच इत्यमरः। त एव उपद्रवाः उत्पाताः तैः बहुलः पूर्णः तस्य उपद्रवलक्षणमुक्तं वैद्यके। व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः। उपक्रम-विरोधित्वात् स उपद्रव उच्यते इति। दीर्घरोगस्य दीर्घकालभोग्यरोगविशेषस्य क्षयादितुल्यस्येति भावः। असद्ग्रहस्य असति अनर्थे मरणादौ ग्रहः आवेशः यस्मात् तथाभूतस्य दुष्टग्रहस्य रव्यादेश्च।

(४६) सकलेति। सकलानां लोकानां क्षये धूमकेतुः उपग्रहविशेषः अग्निश्च तस्य। उपप्लवाय लोकानां धूमकेतुरिवोत्थित इति कुमारसम्भवे कालिदासः। जीवितापहारदक्षस्य जीवनक्षयकरणपटोः। अक्षणरुचेः नास्ति क्षणमपि रुचिः अनुरागः करणीयविषयेषु इति भावः यस्मिन् तथोक्तस्य अविद्युतश्च। अनभ्र-वज्रपातस्य अवृष्टिवज्रनिपतनस्य।

(४७) स्फुरदिति। स्फुरन्ती राजमाना अनवद्या अनिन्द्या विद्या एव

ग्रहणगम्भीराणि (४८) भूरिकाव्यकथाकठोराणि बहुशास्त्रो-द्वहनव्रहन्ति विदुषामपि हृदयानि न अलं सोढुम् आपातं किमुत (४९) नवनवमालिकाकुसुमकोमलानां सरसविस-तन्तुदुर्बलकम् अबलानां हृदयम्।

एवं सति (५०) सत्यव्रते! वद किमत्र क्रियते कतम उपालभ्यते कस्य पुर उच्चैः आक्रन्द्यते हृदयदाहि दुःखं वा ख्याप्यते? सर्वम् अक्षिणी निमील्य सोढव्यम् (५१) अमूढेन मर्त्यधर्मणा। पुण्यवति! पुरातन्यः स्थितय एताः केन शक्यन्ते-ऽन्यथाकर्तुम्? (५२) संसरन्त्यो नक्तन्दिवं द्राघीयस्यो (५३) जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः पञ्चजनानाम्।

---

विद्युत् तथा उद्योतमानानि उद्भासमानानि। गहनेति गहनानां निविडानां कठिनानामित्यर्थः ग्रन्थानां ये ग्रन्थयः कूटांशाः तेषां गूढा रहस्या ये गर्भाः अन्त-र्गता भावा इत्यर्थः तेषां ग्रहणेन अवबोधेन गम्भीराणि भाववन्तीत्यर्थः।

(४८) भूरीति। भूरिभिः बह्वीभिः काव्यकथाभिः कठोराणि कठिनानि बहुशोचनीयव्यापारश्रवणपठनाभ्यामिति भावः। बह्विति बहूनां शास्त्राणां दर्शनादीनाम् उद्वहनेन धारणेन व्रहन्ति प्रशस्तानीत्यर्थः। सोढुं न अलं न क्षमाणीत्यर्थः।

(४९) नवेति। नवा या नवमालिका तस्याः कुसुमानि इव कोमलाः तासाम्। सरसेति सरस आर्द्रः यः विसतन्तुः मृणालसूत्रं तद्वत् दुर्बलकम् अतीव दुर्बलमित्यर्थः।

(५०) सत्यव्रते! सत्यम् अखण्डितमिति भावः व्रतं चारित्रमिति भावः यस्याः तत्सम्बुद्धौ। उपालभ्यते तिरस्क्रियते।, अक्षिणी नेत्रे।

(५१) अमूढेन शोकाविह्वलेनेत्यर्थः मर्त्यधर्मणा मरणधर्मिणा मानवेन इत्यर्थः। स्थितयः मर्य्यादाः।

(५२) संसरन्त्यः प्रवहन्त्यः। द्राघीयस्यः अतिदीर्घाः।

(५३) जन्मेति। जन्मेति जन्म च जरा च मरणञ्च तानि घटनानि एव

(५४) पञ्चमहाभूत-पञ्चकुलाधिष्ठितान्तः-करण-व्यवहारदर्शन-निपुणाः सर्वङ्कषा विषमा धर्मराजस्थितयः। क्षणमपि (५५) क्षममाणा गलन्ति आयुष्कालाकलनकुशला निलये निलये कालनाडिकाः। जगति (५६) सर्वजन्तुजीवितोपहार-पातिनी सञ्चरति झटिति चण्डिका यमाज्ञा। (५७) रटन्ति अनवरतम् अखिलप्राणिप्रयाणप्रकटनपटवः प्रेतपतिपटहाः। प्रतिदिशं पर्य्यटन्ति (५८) पेटकैः प्रतप्तलोहलोहिताक्षाः (५९) कालकूटकान्तिकालकायाः कालपाशपाणयः

---

घटीयन्त्राणां राजयः श्रेणयः तासां रज्जवः सूत्राणि। पञ्चजनानां मानवानां स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नर इत्यमरः।

(५४) पञ्चेति। पञ्चानां महाभूतानां क्षित्यादीनां तद्विकाराणामित्यर्थः मानवानामिति भावः पञ्चकुलानि चक्षुरादीनि ज्ञानेन्द्रियाणि तेषु अधिष्ठितम् अध्यक्षतया स्थितम् अन्तःकरणं मनः तस्य व्यवहारः चेष्टितं तस्य दर्शने अवलोकने निपुणाः तत्पराः सर्वं कषतीति सर्वङ्कषा सर्वाकर्षिणः विषमाः दारुणाः धर्मराजस्थितयः अन्तकव्यापाराः।

(५५) क्षममाणाः सहमानाः। गलन्ति अतिगच्छन्ति आयुष्कालस्य जीवितकालस्य आकलनं संख्यानं तत्र कुशलाः पटवः कालस्य अन्तकस्य नाडिकाः क्षीराः। निलये निलये गृहे गृहे।

(५६) सर्वेति। सर्वेषां जन्तूनां जीवितमेव उपहारः उपढौकनं तत्र पतति ग्रहणार्थं धावतीति तथाभूता। चण्डिका भीषणा रौद्रा देवी च। यमाज्ञा अन्तकनिदेशः।

(५७) रटन्ति नदन्ति। अखिलेति अखिलानां समस्तानां प्राणिनां जीवानां प्रयाणं स्वनगरे गमनं तस्य प्रकटनम् आघोषणं तत्र पटवः कुशलाः। प्रेतपति-पटहाः प्रेतपतेः यमस्य पटहा वाद्यभेदाः।

(३८) पेटकैः दलैः दलैरित्यर्थः। प्रतप्तेति प्रतप्तं यत् लोहं तद्वत् लोहिते रक्ते अक्षिणी नेत्रे येषां ते।

(५९) कालेति। कालकूटस्य विषस्य कान्तिरिव कान्तिः येषां तथाविधाः

कालपुरुषाः। प्रतिभवनं भ्रमन्ति (६०) भीषणकिङ्करकरघट्टितयमघण्टापुटपटुटाङ्कारभयङ्कराः (६१) सर्वसत्त्वसङ्घसंहरणाय घोराघातघोषणाः। दिशि दिशि वहन्ति (६२) बहुचिताधूमधूसरितप्रेतपतिपताकापतितग्टध्रदृष्टयः (६३) शोककृतकोलाहलाकुलकुटुम्बिनीविकीर्णकेशकलापशवलशवशिविकासहस्रसङ्कुलाः (६४) किलकिलायमानश्मशानशिविरशिवाशावकाः (६५) परलोकावसथपथिकसार्थप्रस्थानविशिखावीथयः। (६६) सकललोककवलावलेहलम्पटा वहला वहंलिहा (६७) लेढ़ि लोहिताचिता चिता-

---

काला कृष्णवर्णाः काया देहा येषां तथोक्ताः। कालपाशः यमपाशः पाणौ येषां तथाविधाः।

(६०) भीषणेति। भीषणानां भयङ्कराणां किङ्कराणां यमदूतानां करैः घट्टिता धृता या यमघण्टा तस्याः पुटस्य कान्दुकस्य पटुना उत्कटेन टाङ्कारेण भयङ्कराः भीषणाः।

(६१) सर्वेति। सर्वेषां सत्त्वानां प्राणिनां सङ्घस्य समूहस्य संहरणं तस्मै। घोरा दारुणाः आघाताः ताड़नानि यासु तथाविधा घोषणा राजाज्ञाप्रचाराः।

(६२) बह्विति। बहुभिः चिताधूमैः धूसरिता याः प्रेतपतेः अन्तकस्य पताकाः तासु पतिता ग्टध्राणां श्मशानपक्षिणां दृष्टयः यासु तथोक्ताः।

(६३) शोकेति। शोकेन कृतः यः कोलाहलः करुणरवः तेन आकुलानां कुटुम्बिनीनां कुलाङ्गनानां विकीर्णैः विच्छिन्नैः केशकलापैः शवलाः या शवानां मृतानां शिविकाः खट्टाविशेषाः तासां सहस्रैः सङ्कुलाः आकीर्णाः।

(६४) किलेति। किलकिलायमानाः श्मशानशिविरस्य प्रेतावासस्य शिवाशावकाः शृगालशिशवः यासु तथाविधाः।

(६५) परलोकेति। परलोक एव आवसथः आलयः तस्य ये पथिकसार्थाः पान्थनिवहाः तेषां प्रस्थानस्य विशिखावीथयः रथ्याश्रेणयः। रथ्या प्रतोली विशिखेत्यमरः।

(६६) सकलेति। सकलानां लोकानामेव कवलानां ग्रासानाम् अवलेहः आस्वादः तत्र लम्पटा लुब्धा। बहला दीर्घा। वहं लिहा छिद्रान्वेषी।

ङ्गारकाली कालरात्रिजिह्वा जीवितानि जीविनाम्। तृप्तिमशिक्षिता च भगवतः (६८) सर्वभूतभुजो बुभुक्षा मृत्योः। (६९) अतिद्रुतवाहिनी च अनित्यतानदी। (७०) क्षणिकाश्च महाभूतग्रामगोष्ठ्यः। रात्रिषु भङ्गुराणि (७१) गात्रयन्त्रपञ्जरदारूणि देहिनाम्। (७२) अशुभशुभावेशविवशा विशरारवः शरीरनिर्माणपरमाणवः। (७३) छिदुरा जीवबन्धनपाशतन्त्रीतन्तवः। सर्वमात्मनोऽनीश्वरं विश्वं नश्वरम्। एवम् अवधृत्य नात्यर्थम् एव अर्हसि मेधाविनि मृदुनि मनसि (७४) तमसः प्रसरं दातुम्। एको हि (७५) प्रतिसङ्ख्यानचक्षुषः आधारीभवति धृतेः। अपिच दूरगतेऽपि हि

---

(६७) लेढि आस्वादयति। लोहिताचिता रक्तव्याप्ता। चिताङ्गारवत् काली कृष्णवर्णा।

(६८) सर्वभूतभुजः सर्वप्राणिभक्षकस्य मृत्योः बुभुक्षा तृप्तिम् अशिक्षिता न शिक्षिता कर्त्तरि क्तप्रत्ययः तृप्तिं न शिक्षितवतीत्यर्थः न कथमपि केनापि तृप्तिं लभते इति भावः।

(६९) अतिद्रुतेति। अतिद्रुतं वहतीति तथोक्ता अनित्यता क्षयशीलता।

(७०) क्षणिकाः क्षणस्थायिन्यः महाभूतानां क्षित्यादीनां पञ्चानां ग्रामस्य समूहस्य गोष्ठ्यः समाजाः सङ्घा इत्यर्थः। रात्रिषु रजनीषु प्रतिरात्रमित्यर्थः भङ्गुराणि भङ्गप्रवणानि।

(७१) गात्रेति। गात्रं शरीरमेव यन्त्रं तस्य पञ्जरा एव दारूणि काष्ठानि।

(७२) अशुभेति। अशुभानां शुभानाञ्च दुष्कृतानां सुकृतानाञ्च आवेशेन अधिष्ठानेन विवशाः परायत्ताः विशरारवः परस्परसंश्लेषेण चिरस्थायिन इत्यर्थः।

(७३) छिदुराः विच्छेदप्रवणाः। जीवेति जीवानां बन्धनस्य संसारबन्धनस्य पाशानां रज्जूनां तन्त्रीतन्तवः तन्त्रीरूपाणि सूत्राणि। आत्मनः स्वस्य अनीश्वरम् अनायत्तम्।

(७४) तमसः मोहस्य प्रसरम् अवसरम्।

(७५) प्रतिसंख्यानचक्षुषेति विवेकरूपचक्षुषा मतिः प्रतिसंख्यानं तस्य चक्षुः

शोके ननु इदानीम् अपेक्षणीय एव अयं ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुः । (७६) इतरथा को न बहु मन्येत कल्याणरूपम् ईदृशं सङ्कल्पम् अत्रभवत्याः काषायग्रहणकृतम् । (७७) अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या । ज्यायः खलु इदं पदम् आत्मवताम् । (७८) महाभागस्तु भिनत्ति मनोरथम् अधुना । यत् अयम् आदिशति तदेव अनुष्ठेयम् । (७९) यदि भ्राता इति यदि ज्येष्ठ इति यदि वत्सल इति यदि गुणवान् इति यदि राजा इति सर्वथा स्थातव्यम् अस्य नियोगे । इति उक्ता (८०) व्यरंसीत् ।

उपरतवचसि च तस्मिन् निजगाद नरपतिः आर्य्यम् अपहाय कोऽन्य एवम् अभिदध्यात् । (८१) अनभ्यर्थितदैवनिर्मिता हि विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य । (८२) स्नेहा-

---

समयः तथाविर्भावकाल इत्यर्थः धृतेः धैर्य्यस्य आधारीभवति आश्रयतामापद्यते । दूरगते दूरम् अतिवृद्धिं गतः तस्मिन् । नन्विति सम्बोधनम् । अपेक्षणीयः द्रष्टव्यः एतादृशस्य भ्रातुर्मुखं प्रति दृष्टिपातः कर्त्तव्य इत्यर्थः ।

(७६) इतरथा अन्यथा । कल्याणरूपं मङ्गलरूपं सङ्कल्पम् अभिलाषम् ।

(७७) अखिलेति । अखिलस्य समग्रस्य मनोज्वरस्य मनःपीड़ायाः प्रशमनम् अपनयनं तस्य कारणं हेतुः । भगवती सर्वशक्तिमती । ज्यायः श्रेष्ठमित्यर्थः इदं पदं काषायग्रहणमित्यर्थः आत्मवतां मनस्विनाम् ।

(७८) महाभागः श्रीमान् हर्षः । मनोरथं सङ्कल्पमिमम् ।

(७९) यदि भ्रातेत्यादि अयं मान्य इति शेषः तदा सर्वथा सर्वैः प्रकारैः नियोगे आज्ञायाम् ।

(८०) व्यरंसीत् विरराम ।

(८१) अनभ्यर्थितेति । न अभ्यर्थिता न याचिताः अथच दैवेन अनुकूलेन इति भावः निर्मिताः सृष्टाः प्रचोदिता इत्यर्थः । विषमेति विषमा दारुणा विपद् तत्र अवलम्बनस्तम्भाः आश्रयस्थानानीत्यर्थः ।

र्द्रमूर्त्तयो मोहान्धकारध्वंसिनश्च (८३) धर्मप्रदीपाः। किन्तु प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथम् (८४) अतिप्रीतिः अभिलषति। धीरस्यापि धार्ष्ट्यम् आरोपयति (८५) हृदयलघिमलङ्घितम् अतिवल्लभत्वम्। (८६) युक्तायुक्तविचारशून्यत्वाच्च शालीनम् अपि शिक्षयन्ति स्वार्थतृष्णाः प्रागल्भ्यम्। (८७) अभ्यर्थनाया रक्षन्ति च जलनिधय इव मर्य्यादाम् आर्य्याः। दत्तमेव च शरीरमिदम् (८८) अनभ्यर्थितेन प्रथममेव आतिथ्याय माननीयेन भवता मह्यम्। अतः किञ्चित् अर्थये भदन्तम् इयं नः स्वसा बाला च बहुदुःखखेदिता च (८९) सर्वकार्य्यावधीरणोपरोधेनापि यावत् लालनीया

---

(८२) स्नेहेति। स्नेहेन प्रीत्या तैलादिना च आर्द्रा सरसा मूर्त्तिः येषां तथोक्ताः। मोहेति मोह एव अन्धकारः तिमिरं तस्य ध्वंसिनः नाशिनः उपदेशदानेन आलोकदानेन च।

(८३) धर्मप्रदीपाः धर्ममयाः दीपाः। प्रणयेति प्रणयस्य स्नेहस्य प्रदानेन दुर्ललिता जनितस्पर्द्धेत्यर्थः।

(८४) मनोरथम् अभिप्रेतम्। अतिप्रीतिः अतिप्रणयः। अभिलषति आकाङ्क्षति। धार्ष्ट्यम् उद्धतत्वम् आरोपयति जनयति।

(८५) हृदयेति। हृदयस्य लघिम्ना लघुत्वेन लङ्घितम् अतिक्रान्तम् अतिवल्लभत्वम् अतिप्रियत्वम्।

(८६) युक्तेति। युक्तायुक्तयोः कार्य्याकार्य्ययोः विचारे शून्यः अक्षमः तस्य भावः तस्मात्। शालीनं धीरं विनीतमित्यर्थः। स्वार्थतृष्णाः स्वकार्य्यसिद्ध्यभिलाषाः। प्रागल्भ्यम् उद्धतताम्।

(८७) अभ्यर्थनायाः प्रार्थनायाः मर्य्यादामित्यनेन सम्बन्धः। मर्य्यादां सीमामित्यर्थः।

(८८) अनभ्यर्थितेन अयाचितेन।

(८९) सर्वकार्य्येति। सर्वेषां कार्य्याणाम् अवधीरणम् अवहेलनं तदेव उपरोधः क्षतिः तेन लालनीया यत्नेन पालनीया।

नित्यम्। अस्माभिश्च (८०) भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैः भूत्वा सकललोकप्रत्यक्षं प्रतिज्ञा कृता। (८१) पूर्वावमाननाभिभवम् असहमानैः अर्पित आत्मा कोपस्य। अतो (८२) नियुङ्क्तां कियन्तमपि कालम् आत्मानम् आर्य्योऽपि कार्य्ये मदीये। दीयताम् (८३) अतिथये शरीरम् इदम्। अद्य प्रभृति यावदयं जनो (८४) लवयति प्रतिज्ञाभारम् आश्वासयति च तातविनाशदुःखविक्लवाः प्रजाः तावत् इमाम् अत्रभवतः कथाभिश्च धर्म्याभिः (८५) कुशलप्रतिबोधविधायिभिः उपदेशैश्च (८६) अरजोभिः शीलोपशमदायिनीभिश्च देशनाभिः (८७) क्लेशप्रहाणहेतु-

---

(८०) भ्रातृवधेति। भ्रातुर्वधेन अपकारिणः द्रोहिणः ये रिपवः शत्रवः तेषां कुलस्य वंशस्य प्रलयकरणं विध्वंसनं तत्र उद्यतः तस्य बाहो भुंजस्य। विधेयैः वशंवदैः।

(८१) पूर्वेति। पूर्वया प्रथमया अकृतपूर्वयेति भावः मुख्यया वा अवमाननया भ्रातृवधरूपेण यः अभिभवः तिरस्कारः तम्। कोपस्य आत्मा अर्पितः कोपाकुलोऽस्मीति भावः।

(८२) नियुङ्क्तां नियुक्तं करोतु। मदीये कार्य्ये यथा सुमङ्गलं स्यात् तथा भवता आचारितव्यमिति भावः।

(८३) अतिथये मह्यमिति शेषः।

(८४) लवयति। अवतारयति प्रतिज्ञां निस्तरतीति भावः। आश्वासयति सान्त्वयति। इमां मत्स्वसारम्।

(८५) कुशलेति। कुशलानां मङ्गलानां प्रतिबोधः विज्ञानं तं विदधतीति तथोक्तैः।

(८६) अरजोभिः रजोगुणवर्जितैः सत्वोद्रेककरैः इति भावः। शीलोपशमदायिनीभिः चरित्रशान्तिजननीभिः देशनाभिः कथाभिः।

भूतैश्च तथागतैः दर्शनैः (९८) अस्मत्पार्श्वोपयायिनीमिव प्रतिबोध्यमानाम् इच्छामि। इयन्तु ग्रहीष्यति मयैव समं (९९) समाप्तकृत्येन काषायाणि। अर्थिजने च किमिव न अतिसृजन्ति महान्तः। (१००) सुरनाथम् आत्मास्थिभिः अपि यावत् कृतार्थम् अकरोत् धैर्य्योदधिः दधीचः। (१) मुनिनाथोऽपि अनपेक्षितात्मस्थितिः अनुकम्पा इति कृत्वा कृपावान् आत्मानं (२) वठरसत्त्वेभ्यः कतिकृत्वो न दत्तवान्। अतः परं भवन्त एव बहुतरं जानन्ति। इत्युक्त्वा तूष्णीम्बभूव भूपतिः।

भूयस्तु बभाषे भदन्तः (३) भव्या न द्विः उच्चारयन्ति

---

(९७) क्लेशस्य संसारसन्तापस्य प्रशमनं क्षयः तस्य हेतुभूतानि तैः। तथागतैः तादृशैः दर्शनैः ज्ञानैः दृष्टान्तैः वा।

(९८) अस्मदिति। अस्माकं पार्श्वम् उपयातीति तथोक्ताम् अस्मत् पार्श्ववर्त्तिनीम्। प्रतिबोध्यमानाम् अस्मत्पार्श्वस्थितमात्मानं यथा बुध्यते तथा क्रियमाणाम्।

(९९) समाप्तकृत्येन कार्य्यं समाप्तवता। समं सह। अतिसृजन्ति ददति।

(१००) सुरनाथम् इन्द्रम् आत्मास्थिभिः आत्मनः स्वस्य अस्थिभिः कङ्कालैः। धैर्य्योदधिः धैर्य्यसागरः।

(१) मुनिनाथः सुगतः। अनपेक्षितेति न अपेक्षिता न विवेचिता आत्मनः स्वशरीरस्य स्थितिः रक्षणं येन तथाभूतः स्वशरीरमनपेक्षमाण इत्यर्थः अनुकम्पा दया।

(२) वठरसत्त्वेभ्यः जड़प्राणिभ्यः सिंहादिभ्य इति भावः कतिकृत्वः कतिवारान्। श्रूयते हि पुरा कामपि सिंहीं सद्यः प्रसूतां बुभुक्षया स्वशावकान् भक्षयितुं प्रवृत्तां दृष्ट्वा बुद्धदेवः करुणापारतन्त्र्यात् तस्यै स्वमांसप्रदानेन तान् शावकान् अरक्षदिति।

(३) भव्याः साधवः। द्विः द्विवारं द्विप्रकारं वा। गुणाः भवदीया इति

वाचम्। चेतसा प्रथममेव प्रतिग्राहिता गुणाः कायबलिम् इमाम् (४) अमुना जनेन। उपयोगस्तु निरुपयोगस्य अस्य लघुनि गुरुणि वा कृत्ये गुणवदायत्त इति। अथ तथा तस्मिन् (५) अभिनन्दितप्रणये प्रीयमाणः पार्थिवः तत्र ताम् उषित्वा विभावरीम् (६) उषसि वसनालङ्कारादि-प्रदानपरितोषितं विसर्ज्य निर्घातम् (७) आचार्य्येण सह स्वसारम् आदाय प्रयाणकैः कतिपयैः एव कटकम् अनु-जाह्नवि निविष्टं प्रत्याजगाम।

तत्र च राज्यश्रीप्राप्तिव्यतिकरकथां कथयन् एव (८) प्रणयिभ्यो रविरपि ततार गगनतलम्। (९) बहलमधु-पङ्कपिङ्गलः पङ्कजाकर इव सञ्चुकोच चक्रवाकवल्लभो वासरः।

---

भावः इमां कायबलिं शरीररूपमुपहारं बलिः पूजोपहारयोरित्यमरः। अत्र बलिशब्दः स्त्रीलिङ्गः। प्रतिग्राहिताः कृतप्रतिग्रहाः कृता इत्यर्थः अहं भवद्गुणेभ्यः शरीरमिदमुपहारीकृतवान् इति निष्कर्षः।

(४) अमुना जनेन मयेति भावः उपयोगः उपकारः। निरुपयोगस्य निष्प्रयोजनस्य परस्मादुपयोगमनपेक्षमाणस्य इति भावः अस्य भवत इति शेषः। गुणवत् सम्यक् इत्यर्थः आयत्तः अधीनः। मया यावच्छक्यमनेन कायेन भवतः उपकरिष्यामीति तात्पर्य्यम्।

(५) अभिनन्दितप्रणये आदरेण गृहीताभ्यर्थने इत्यर्थः।

(६) उषसि प्रभाते। वसनेति वसनानि अलङ्काराश्च आदयो येषां तानि वसनालङ्कारादीनि तेषां प्रदानेन परितोषितः प्रीणितः तं निर्घातं शबरयुवानम्।

(७) आचार्य्येण श्रमणगुरुणा दिवाकरमित्रेण। प्रयाणकैः यात्राभिः। कटकं शिविरम् अनुजाह्नवि जाह्नवी गङ्गा तस्याः तटसमीपे इत्यर्थः।

(८) प्रणयिभ्यः सुहृद्भ्यः। ततार अलङ्घयत्।

(९) बहलेति। बहलेन प्रभूतेन मधूनां पङ्केन द्रवेण पिङ्गलः कपिशः।

(१०) प्रकीर्णानि नवरुधिररसारुणवर्णानि लोकालोकजूंषि (११) यजूंषि इव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि (१२) पूषा पापमुषि पुनरपि संजहार जालकानि रोचिषाम्। क्रमेण च (१३) समुपोह्यमानमांसलरागरोचिष्णुः उष्णांशुः उष्णीषबन्धसहजचूडामणिरिव वृकोदरकरपुटोत्पाटितः (१५) प्रत्यग्रशोणितशोणाङ्गरागरौद्रो द्रौणायनस्य

---

पङ्कजाकर इव पद्माकर इव चक्रवाकाणां वल्लभः प्रियः अविच्छेदकत्वादिति भावः वासरः दिवसः सञ्चुकोच सङ्कुचितवान् शेषता मयासीत् इत्यर्थः।

(१०) प्रकीर्णानि विसारितानि। नवेति नवः रुधिररसः रक्तद्रवः तद्वत् अरुणः लोहितः वर्णो येषां तानि। लोकालोकजूंषि लोकानां जनानाम् आलोकं दर्शनम् आलोकौ दर्शनोद्योतावित्यमरः जुषन्ते सेवन्ते इति तथोक्तानि लोकदृष्टिप्रीतिकराणि इति भावः।

(११) यजूंषीव यजुर्वेदानिव। कुपितेति कुपितेन गुरुं प्रतीति भावः याज्ञवल्क्येन वक्त्रात् वान्तानि उद्गीर्णानि।

(१२) पूषा सूर्यः। पापमुषि पापक्षयकारिणि। जालकानि निचयान्। रोचिषां तेजसां किरणानामित्यर्थः। पुरा याज्ञवल्क्यः गुरोः सकाशात् वेदानधीत्य तदाज्ञामकुर्वन् तेन वेदान् मत्परिगृहीतान् परित्यजेति समुपालब्धः सर्वानेवाधीतान् वेदभागानुद्ववाम। उद्वान्तांश्च तान् पूषा: स्ववपुषि संजहार। ततः एते वेदभागाः कृष्णयजुर्वेदा इति उच्यन्ते।

(१३) समुपोह्यमानेति। समुपोह्यमानेन संगृह्यमाणेन मांसलेन सान्द्रेण रागेण लौहित्येन रोचिष्णुः राजमानः। उष्णांशुः सूर्यः।

(१४) उष्णीषेति। उष्णीषो बध्यतेऽत्रेति उष्णीषबन्धो मस्तकः तत्र सहजः स्वभावोत्पन्नः चूडामणिः शिरोरत्नं स इव। वृकोदरस्य भीमसेनस्य करपुटेन उत्पाटितः उन्मूलितः।

(१५) प्रत्यग्रेति प्रत्यग्रम् अभिनवं शोणितं रक्तं तेन तद्वद् वा शोणः लोहितः यः अङ्गरागः अङ्गप्रभा तेन रौद्रः भीषणः। द्रौणायनस्य द्रोणतनयस्य अश्वत्थाम्न इत्यर्थः। पुरा अश्वत्थाम्ना सौप्तिके हतपुत्रया द्रौपद्या भीमसेनोऽभिहितः यद्-

(१६) रुद्रभिक्षादानशौण्डपुरमथनमुक्तमुण्डशिरानाडीरुधिरपूरणकपिलः कपालकर्पर इव च पैतामहः (१७) पितृवधकुपितरामरागरचितः पृथुविकटकार्त्तवीर्य्यांसकूटकुट्टाककुठारतुण्डतष्टदुष्टक्षत्रिय-कण्ठकुहररुधिर-कुल्याप्रणाल-सहस्रपूरितो ह्रद इव दूररोधी रौधिरो (१८) भयनिगूढकरचरणमुण्ड-

---

श्वत्थामः शिरः छित्वा नानीयते तदा अहं जीवितं त्यक्ष्यामीति। ततोऽहं तथा करिष्यामीति प्रतिज्ञाय आयान्तं भीमं दृष्ट्वा व्यासाश्रमे वदरिकावने स्थितो रणश्रान्तः हृताश्वकोऽश्वत्थामा शस्त्रसामर्थ्यादीषिकाः अभिमन्त्र्य ब्रह्मास्त्रं विधाय भीमवधाय प्रायुङ्क्त। तदा च एकाकिनो भ्रातुर्भीमसेनस्य गमनात् भीतेनार्जुनेन कृष्णसारथिना तमेवानुसरता ब्रह्मशिरोऽस्त्रं मुमुचे। अत्रान्तरे समागतैश्च नारदाद्यैर्मुनिभिः मध्यस्थैरुक्तः द्रौणेरस्त्रमभिमन्त्रितं वध्वा गर्भे पततु। अर्जुनेनापि ब्रह्मवधो न कर्त्तव्य इति स्वमस्त्रं संक्रियतामिति तत्तेषां वचनगौरवात् अर्जुनेनास्त्रे संहृते भीमोऽश्वत्थाम्नः सहजं शिरोमणिं बलादुज्जहारेति भारतीयकथा अत्रानुसन्धेया।

(१६) रुद्रेति। रुद्रः भीषणः भिक्षाया आदाने ग्रहणे शौण्डः तत्परः यः पुरमथनः पुरारिः हरः तेन मुक्तं परित्यक्तं यत् मुण्डं शिरः ब्राह्ममिति भावः तस्य शिराणां नाडीनां धमनीनाञ्च रुधिरैः पूरणेन कपिलः पिङ्गलः आरक्त इत्यर्थः कपालकर्पर इव कपालः शिरः कङ्काल एव कर्परः शरावाकारपात्रभेदः स इव। पैतामहः ब्राह्मः। पुरा कन्यामभिकामयमानं पितामहं दृष्ट्वा कोपात् पुरारिः तदीयमेकं शिरो जहार। तच्च शिरः कालेन कङ्कालशेषतां व्रजत् तस्य भिक्षाकर्परमेवाभवदिति पुराणकथा।

(१७) पित्रिति। पितुः जमदग्नेः वधेन कार्त्तवीर्य्यकृतेन इति भावः रुषितः कुपितः यः रामः परशुरामः तस्य रागेण वीररसोत्साहेन रचितः सृष्टः। पृथ्विति पृथुर्महान् यः कार्त्तवीर्य्यस्य अंसकूटः स्कन्धशिखरं तस्य कुट्टाकः छेदकः कुठारः परशुः तस्य तुण्डं मुखं धारेत्यर्थः तेन तष्टाः निकृत्ता ये दुष्टाः दुर्वृत्ताः क्षत्रियाः तेषां कण्ठकुहराणां गलरन्ध्राणां रुधिराण्येव कुल्या अल्पा कृत्रिमा सरित् कुल्याल्पा कृत्रिमा सरिदित्यमरः। तासां प्रणालसहस्रैः प्रवाहसहस्रैः पूरितः भरितः दूररोधी दूरदेशव्यापी रौधिरः रुधिरमयः।

मण्डलाकृतिः गुरुगरुड़नखपञ्जराक्षेपक्षपणक्षिप्तक्षतजोक्षितो व्यसुः विभावसुः कमठ इव च (१८) लोठ्यमानो नभसि अरुणगर्भमांसपिण्डाण्ड इव च खण्डिमानमानीतो (२०) नियतकालातिपातदूयमानदाक्षायणीक्षिप्तो धातुतट इव च सुमेरोः (२१) असुरवधाभिचारचरुपचनपिशुनः शोणितक्वाथकषायितकुक्षिः अतिविसङ्कटः कटाह इव च वार्हस्पत्यः (२२) सद्योगलितगजदानवदेहलोहितोपलेपभीषणो मुखमण्डलाभोग इव

---

(१८) भयेति। भयेन गरुड़दर्शनादिति भावः निगूढ़ाः सङ्कोचिताः करचरणमुखमण्डलान्येव आकृतयः अवयवा येन तथोक्तः। गुर्विति गुरुणा महता गरुडस्य नखपञ्जरेण नखनिचयेन इत्यर्थः यः आक्षेपः आक्रमणम् उत्क्षेपणम् इत्यर्थः ततश्च क्षपणं भूमौ प्रक्षेपः तेन क्षिप्तैः निर्गलितैः देहादिति भावः क्षतजैः रक्तैः उक्षितः सिक्तः संसिक्त इत्यर्थः व्यसुः गतजीवितः विभावसुः तदाख्यः।

(१९) लोठ्यमानः परिभ्राम्यमाणः नभसि आकाशे। अरुणेति अरुणं रक्तं गर्भस्थ मांसपिण्डं यस्य तथाभूतः अण्ड इव डिम्ब इव। खण्डिमानं खण्डताम् आनीतः प्रापितः।

(२०) नियतेति। नियतकालस्य कल्पान्तस्य अतिपातेन आगमेन दूयमाना सन्तप्यमाना सृष्टिध्वंसकरणादिति भावः दाक्षायणी दक्षकन्या कालीत्यर्थः संहाररात्रिरिति भावः तया क्षिप्तः विध्वंसितः धातुतटः गैरिकप्रस्थ इव।

(२१) असुरेति। असुराणां वधार्थम् अभिचारः आथर्वणिकमारणादिक्रियाविशेषः तस्य चरुः पायसविशेषः तस्य पचनं पाकः तस्य पिशुनः सूचकः। शोणितेति शोणितस्य रक्तस्य क्वाथेन तापेन घनीकरणेन कषायितः रक्तीकृतः कुक्षिः अभ्यन्तरं यस्य तथाभूतः अतिविसङ्कटः अतिभीषणः। कटाह इव स्थालीविशेष इव वार्हस्पत्यः वृहस्पतेरयं वार्हस्पत्यः।

(२२) सद्य इति। सद्यः तत्क्षणं निपातक्षण एव इत्यर्थः गलितं निःसृतं गजदानवस्य गजासुरस्य देहात् यत् लोहितं रक्तं तस्य उपलेपेन अनुलेपनेन

महाभैरवस्य मुहूर्त्तम् अदृश्यत (२३) जलनिधिजलप्रतिविम्बित-रविविम्बराजिभास्वराभ्रावलम्बिनी गृहीतार्द्रमांसभारा इव च बभासे वासरावसानवेला वेतालनिभा (२४) ज्वलत्सन्ध्या-रागरज्यमानजलप्रवाहः पुनरिव (२५) पुराणपुरुषपीव-रोरुसम्पुटपिष्टमधुकैटभरुधिरपटलपाटलवपुः अभवत् अधि-पतिः अर्णसाम्। (२६) अवसिते सन्ध्यासमये समनन्तरम् (२७) अपरिमितयशःपानतृषिताय मुक्ताशैलशिलाचषक

---

भीषणः उग्रः। मुखेति मुखमण्डलस्य वदनमण्डलस्य आभोग इव आयतनमिव महाभैरवस्य महारुद्रस्य। अदृश्यत पूर्वोक्तविध उष्णरश्मिरिति पूर्वेण सम्बन्धः।

(२३) जलनिधीति। जलनिधेः समुद्रस्य जलेषु प्रतिविम्बिता प्रतिफलिता या रविविम्बराजिः सूर्य्यविम्बश्रेणिः तया भास्वरं दीप्यमानं यत् अभ्रम् आकाशं तदवलम्बिनी तदाश्रयिणी अतएव गृहीतः आर्द्रः सरसः मांसभारः यया तथा-भूतेव वासरावसानवेला सन्ध्याकालः। वेतालनिभा वेतालसदृशी आबभासे शुशुभे वेतालोऽपि आर्द्रमांसभारं वहतीति भावः।

(२४) ज्वलदिति ज्वलता राजमानेन सन्ध्यारागेण रज्यमानः जलप्रवाहः जलराशिः यस्य तथाभूतः।

(२५) पुराणेति। पुराणः पुरुषः नारायण इत्यर्थः तस्य पीवरे स्थूले ऊरु-सम्पुटे पिष्टयोः निकृत्तयोः सुदर्शनेन इति भावः मधुकैटभयोः रुधिरपटलेन रक्तसमूहेन पाटलम् आरक्तं वपुः शरीरं यस्य तथाभूतः। अर्णसां जलानाम् अधिपतिः समुद्रः। सृष्टिप्रारम्भे जलनिधौ शयानस्य भगवतो नारायणस्य नाभिकमलाद् ब्रह्मा समुदभवत्। तदानीञ्च तस्यैव भगवतः कर्णमलात् दावसुरौ मधुः कैटभश्च समुत्पद्य बुभुक्षया नाभिकमलस्थितं ब्रह्माणम् अत्तुम् उद्यतौ तदवलोक्य भीतेन ब्रह्मणा स्तुता योगनिद्रा विष्णोः शरीरं तत्याज। ततश्च समु-त्थाय भगवान् तौ तथाविधौ दृष्ट्वा पञ्चवर्षसहस्रं ताभ्यां बाहुयुद्धं कृत्वा तयोरेव सन्तुष्टयोर्वरं लब्ध्वा ऊरुदेशे निधाय चक्रेण तौ निहतवानिति मार्कण्डेयपुराणे देवीमाहात्म्यम् अत्र अनुसन्धेयम्।

(२६) अवसिते समाप्तिं गते।

इव निजकुलकीर्त्त्या (२८) कृतयुगकरणोद्यताय आदिराजराजतशासनमुद्रानिवेश इव राज्यश्रिया सकलद्वीपजिगीषाचलिताय श्वेतद्वीपदूत इव च (२९) आयत्या श्वेतभानुः उपानीयत निशया नरेन्द्राय इति।

इति श्रीवाणभट्टकृते हर्षचरिते अष्टम: उच्छ्वास:।

---

(२७) अपरिमितेति। अपरिमितानि यशांसि तेषां पानाय तृषित: तृष्णार्त्त: तस्मै सर्वदिग्विजयेन इति भाव:। मुक्ताशैलशिलाचषक इव मुक्तागिरिशिलाखण्डरूपपानपात्रमिव।

(२८) कृतेति। कृतं सत्यं युगं तस्य करणे उद्यत: तस्मै। आदिराजेति आदिराजस्य मनो: वैवस्वतस्य वैन्यस्य पृथोर्वा राजती रजतनिर्मिता शासनमुद्रा राज्याधिकारमुद्रा तस्या: निवेश इव मुद्रितावयव इव। सकलेति सकलानां सर्वेषां द्वीपानां जिगीषया चलित: प्रस्थित: तस्मै।

(२९) आयत्या आगामिन्या शुभया नियत्या। श्वेतभानु: चन्द्र: निशया नरेन्द्राय हर्षाय उपानीयत। निशा श्वेतभानुं चन्द्रं श्वेतद्वीपदूतमिव नरेन्द्रसमीपमानयदित्यर्थ:। चन्द्रोदयोऽभूदिति भाव:।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता हर्षचरितस्य अष्टमोच्छ्वासव्याख्या समाप्ता।

* समाप्तोऽयं ग्रन्थ:। *

---